॥ श्री ॥

# ॥ विज्ञप्तिः ॥



विदितचरमेवेदं यत्किल श्रीमत्या भगवद्गीतायाः कैश्चित् द्वैतं, कैश्चिदद्वैतं कैश्चिद्विशिष्टाद्वैतं वानुसृत्य संस्कृतभाषायां तदितरभाषायां च व्याख्याः कृता बहवो दरीदृश्यन्ते. तासु च काश्चिन्नातीव पुष्टा न वाऽसाधारणविषयोपेताः, असाधारणविषयोपेता अपि काश्चिदत्यंतदुरवबोधाश्च वर्तन्ते । किं च तत्तद्व्याख्यया तत्तन्मतानुसार्यर्थ एव केवलं ज्ञातुं शक्येत । अत एकयैव व्याख्ययामतत्रयाऽसाधारणमप्यर्थमवगन्तुमिच्छावतामास्तिकवर्याणामपेक्षामवलंब्य "**गीतोपन्यासदर्पण**"मित्येयं व्याख्या मया निरमायि ॥ अनयैकयैव व्याख्यया द्वैतिनः अद्वैतिनः विशिष्टाद्वैतिनश्च स्वस्वमतानुसारिणमर्थं इतरमतद्वयार्थं च सुखेन सम्यक् ज्ञातुं प्रभवन्ति । अपि च सुललितया सरसमंजुलया सहृदयहृदयंगमया धोरण्या विरचितायाः सुलभावबोधाया अस्य व्याख्यायाः परममिदं प्रयोजनं यत् संस्कृतभाषायामनितरसाधारणपाण्डित्यसंपादनं । मूलसमनन्तरलिखितोऽर्थः द्वैतमतानुसारी । अनन्तर 'अ' चिह्नितः **अद्वैतानुसारी** । 'वि' चिह्नितस्तु विशिष्टाद्वैतानुसारी । इत्थं द्वैते मध्वभाष्यगीतातात्पर्ये, तट्टीकाटिप्पणीविवृतीः, अद्वैते, शंकरभाष्यतट्टीके श्रीधरीयमधुसूदनीयशंकरानन्दीयप्रभृतीनि, विशिष्टाद्वैते, रामानुजीयतट्टीकाप्रभृतीनि च, संगृह्य सुखेन तत्तदर्थमवगमयितुमिच्छता मया प्रमाणपुरस्सरं यथामति रचितेयं व्याख्या विपश्चितामपश्चिमैः सहृदयधुरीणैरास्तिकवर्यैरादरणीयेति सप्रश्रयमभ्यर्थये.

इत्थं,

व्याख्याता, **लक्ष्मणाचार्यः**.

॥ श्री ॥



॥ श्रीगुरुभ्यो नमः ॥

# ॥ श्रीभगवद्गीताव्याख्या श्रीभगवद्गीतोपन्यासदर्पणम् ॥

# ॥ मङ्गळाचरणम् ॥

॥ श्लोक ॥

(1) स्वपादपंकजं रसादुपाश्रिताय योऽददा-
दपायवर्जितां श्रियं कृपाघनः किरिटिने ।
अपारसद्गुणार्णवः प्रपात्वघाटवीतनू-
नपादमुं जनं सदा स पार्थसारथिः प्रभुः ॥

(2) अव्यादजस्रं सकलामरेन्द्र-
सेव्याङ्घ्रिपद्मः प्रणतार्तिहारी ।
अव्याजभक्तैकवशंवदो यो
भव्याय बोभोतिरमासहायः ॥

(3) कौन्तेयभक्तिभुजगेन्द्रपरीत नैज-
कारुण्यमन्दरगरीन्द्रविलोड्यमानात् ।

यच्चेतसः कलशवारिनिधेरुदीतं
गीतामृतं शरणमेमि किरिटिसूतम् ॥

(4) येनेयं ग्रथिता मध्यभारतं भीष्मपर्वणि ।
समेऽस्तु शरणं वेदव्यासो दासेष्टकामधुक् ॥

(5) येन श्रीभगवद्गीताप्रकाशाय विनिर्मितौ ।
सूर्याचन्द्रमसौ भाष्यतात्पर्याख्यौ सतांमुदे ॥

(6) श्रीमदानन्दतीर्थार्यगुरुराडस्तु संविदे ।
चञ्चरीकाति यच्चेतः सततं श्रीहरेः पदे ॥

(7) टीकासमीरनिर्धूतकाठिन्याभ्रौ कृताविमौ ।
सूर्याचन्द्रमसौ येन तं जयार्यमहं श्रये ॥

(8) येनास्मदादिमन्दानामुद्धाराय विनिर्मिता :
गीताया विवृतिस्तं श्रीराघवेन्द्रगुरुं श्रये ॥

(9) श्रीसत्यविक्रमयतीन्द्रकराब्जजातः
श्रीमूलरामपदपंकजचञ्चरीकः ।

श्रीसत्यबोधकरुणादिमसद्गुणाब्धिः
श्रीसत्यवीरगुरुराण्मुदमातनोतु ॥

(10) ये दर्शयन्ति गीतापेटीमुद्घाट्य तद्गतानर्थान् ।
स्वव्याख्याकुञ्चिकया तेषामयमञ्जलिर्मया रचितः ॥

---

## ॥ कर्तृनामादि ॥

——: oo ——

॥ श्लोक ॥

(1) श्रीमत्पञ्चनदाभिधदिव्यक्षेत्रं किलास्ति भुवि विदितम् ।
तञ्जानगरीसविधेकावेरीसान्निधानपरिपूतम् ॥

(2) स्थलपौराणिककृष्णाचार्यस्तत्रावसत्खलु विपश्चित् ।
तस्य सुतो भागीरथ्यंबाया गर्भजः कश्चित् ॥

(3) तेन मया गीताया व्याख्योपन्यासदर्पणाभिख्या ।
क्रियते मयाऽर्थविततिः स्फुटतरमवभाति करगतमख्या ॥

(4) यं मां विचित्रगुशतावधानिवनपाठिलक्ष्मणाचार्यम् ।
विद्वन्मणिमहाभागवतं हरिदासमामनन्ति बुधाः ॥

(5) ईर्ष्यावन्तो विनिन्दन्तु तेन कापि न मे क्षतिः ।
मधुरा किं न रसने सिता तिक्तापि पित्तिनः ॥

————

॥ श्री ॥

॥ श्रीगुरुभ्योनमः ॥

अथ

श्रीभगवद्गीतोपन्यासदर्पणाख्यव्याख्यासहितायाः

# श्रीमद्भगवद्गीतायाः

## प्रथमोऽध्यायः

श्रीश्रीशचरणांभोजमभिवन्द्य यथामति ॥
वितन्यते श्रीभगवद्गीतोपन्यासदर्पणः ॥

वैशंपायनः

जनमेजय महाराज सम्यगवधानेन शृणु

श्रीभगवद्गीतापर्वमर्म

तत्र कौरवपाण्डवसेनयोरुभयोर्महते युद्धाय संनद्धयोः भगवान् वेदव्यासः १मातुर्दोषाद्बहिरिव २पुत्रदोषादन्तरप्यंधतामुपगतं पुत्रवात्सल्यात् पुत्रनाशशङ्कया विषीदन्तं स्वपुत्रं धृतराष्ट्रमभ्युपेत्य राजन् पुत्रास्ते भाविनि संग्रामे नियतं विनंक्ष्यन्ति॥ यदि तं संग्रामं द्रष्टुमिच्छसि तर्हि तद्दर्शनाय चक्षुस्ते ददानीत्युक्त्वा नाहं द्रष्टुमिच्छामि किंतु श्रोतुमिच्छामि श्रावय युद्धमशेषेण इति तेन प्रार्थितः स्वशिष्यं धृतराष्ट्रसारथिं गवल्गणसुतं सञ्जयं समाहूय तस्मै युद्धविषये सार्वज्ञमनुगृह्य कथयास्मै युद्धमखिलमादित आरभ्येति तमादिश्य स्वावासमगमत् ॥ उक्तं हि ऽ मया ॥ 'ततः

१. धृतराष्ट्रजननी अंबिका विचित्रवीर्यभार्या भगवता वेदव्यासेन सङ्गमे न्यमीलयदक्षिणी तेन दोषेण तस्याः सुनो धृतराष्ट्रश्चक्षुषांऽधो बभूव ॥ २. विवेकिनामग्रेसरोऽपि अपवित्रपुत्रवात्सल्यादन्तर्विवेकदृष्टिरहितोऽभूत् ॥ अत्र, 'मातुर्दोषादिव बहिरगादन्तरप्यंधभावम् ॥ इति श्लोकोऽनुसन्धेयः ॥

पूर्वापरे सैन्ये समीक्ष्य भगवानृषिः ॥ सर्ववेदविदां श्रेष्ठो व्यासः सत्यवतीसुतः ॥ भवि-ष्यति रणे घोरे भरतानां पितामहः । प्रत्यक्षदर्शी भगवान् भूतभव्यभविष्यवित् ॥ वैचि-त्रवीर्यं राजानं रहस्यमिदमब्रवीत् ॥ शोचन्तमार्तं ध्यायन्तं पुत्राणामनयं तदा ॥ रा-जन् परीतकालास्ते पुत्राश्चान्ये च पार्थिवा ॥ ते हिंसन्तीव संग्रामे समासाद्येतरेतरम्॥ तेषु कालपरीतेषु विनश्यत्स्वेव भारत॥ कालपर्यायमाज्ञाय मा स्म शोके मनः कृथाः॥ यदि चेच्छसि संग्रामं द्रष्टुमेनं विशांपते ॥ चक्षुर्ददानि ते पुत्र युद्धमेतन्निशामय ॥ न रोचये ज्ञातिवधं द्रष्टुं ब्रह्मर्षिसत्तम ॥ युद्धमेतदशेषेण शृणुयां तव तेजसा ॥ तस्मिन्न-निच्छति द्रष्टुं सङ्ग्रामं श्रोतुमिच्छति ॥ वराणामीश्वरो व्यासः संजयाय वरं ददौ ॥ एष ते संजयो राजन् युद्धमेतद्वदिष्यति ॥ एतस्य सर्वं संग्रामे न परोक्षं भविष्यति॥ प्रकाशं वाऽप्रकाशं वा दिवा वा यदि वा निशि ॥ मनसा चिन्तितमपि सर्वं वेत्स्यति संजयः ॥ नैनं शस्त्राणि भेत्स्यन्ति नैनं बाधिष्यते श्रमः ॥ गावल्गणिरयं जीवन् युद्धा-दस्माद्विमोक्ष्यते ॥ एवमुक्त्वा ययौ व्यासो धृतराष्ट्राय धीमते ॥ इति ॥ गते तस्मिन् संजयः सङ्गररङ्गमेत्य पार्थाय गीतां कथयत कृष्णस्य मुखात् गीतां साक्षाच्छ्रुत्वा वेदव्यासानुग्रहलब्धदिव्यज्ञानेन करतलामलकीभूतविविधविचित्रयुद्धसङ्गताखिलो-दन्तः सङ्गररङ्गादेत्य युद्धमेव ध्यायते धृतराष्ट्राय युद्धमादित आरभ्य कथयन् दुर्यो-धनादयः एकादशाक्षौहिणीमितेन सैन्येन साहाय्यकसमाचरणाय समुपागतैः राजभी राजपुत्रैश्च संयुताः युद्धाय संनद्धाः कुरुक्षेत्रमभजन् इत्यकथयत् ॥ उक्तं हि मया ॥ 'अथ गावल्गणिर्विद्वान् संयुगादेत्य भारत ॥ प्रत्यक्षदर्शी सर्वस्य भूतभव्यभविष्यत ॥ ध्यायते धृतराष्ट्राय समुपेत्यैवमब्रवी'दिति ॥ श्रुतवांश्चतद्वचनं धृतराष्ट्रः पुत्रवात्सल्येन स्वपुत्राणां विना युद्धं राज्यलाभमाशंसमान तथा शङ्कमानश्च गूढाशयस्संजयम प्राक्षीत् ॥

धृतराष्ट्र उवाच ॥

धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः ॥
मामकाः पाण्डवाश्चैव किमकुर्वत सञ्जय ॥ १ ॥

धर्मक्षेत्र इति॥ सम्यक् जयतीति सञ्जयः हे सञ्जय योद्धुं इच्छवः युयुत्सवः धर्म-स्य क्षेत्रं स्थानं धर्मप्रधानं क्षेत्रं इति धर्मप्रदं क्षेत्रं इति वा धर्मक्षेत्रम् ॥ धर्मक्षयात् त्रायत

इति धर्मस्य क्षेत्रमिव इति वा धर्मक्षेत्रम् ॥ धर्मस्य धारकत्वात्धर्मशब्दवाच्यस्य भगवतः क्षेत्रं निवासस्थानं इति वा धर्मक्षेत्रं ॥ तादृशे कुरोः राज्ञः क्षेत्रं कुरुक्षेत्रं तस्मिन् समवेताः सङ्गताः मम इमे मामकाः दुर्योधनादयः पाण्डवाश्चैव किं अकुर्वत ॥ १ ॥

कुरुक्षेत्रे मिलिताः मदीयाः दुर्योधनादयः पाण्डवाश्च किं अकुर्वन् ॥ युद्धाय संनद्धाः कुरुक्षेत्रमभजन्निति त्वुक्तं मया ॥ युद्धाय कुरुक्षेत्रगता स्तत्र युद्धमेव खलु कुर्युः ॥ तत्प्रकारजिज्ञासया कथमकुर्वतेति प्रष्टव्ये १ किमकुर्वतेति प्रश्नो न युक्त इति चेत् ॥ क्षत्रियत्वात् दायादभावाच्च योद्धुमिच्छवोऽभूवन् ॥ यदि युद्धाय किमप्यन्यदेव खलं गतवन्तः स्युः । तर्हि ते तत्र मिथोऽयुध्यंतैवेति निश्चीयेत ॥ कुरुक्षेत्रं हि गतास्ते अतो मे संशय· किं यथाऽभिलषितं युद्धमकुर्वन् उत युद्धान्निवृत्ताः सन्धिमकुर्वन्निति ॥ कुतोऽयं संशय इति चेत् ॥ तादृशं हि तत् कुरुक्षेत्रम् ॥ कीदृशमिति चेत् ॥ धर्मस्य क्षेत्रं स्वसंस्पर्शमात्रेण धर्मतत्फलप्रदत्वेन धर्मस्थानम् ॥ किंच धर्मे कदाऽप्यप्रवृत्तोऽपि कुरुक्षेत्रं गतश्चेत् तस्य धर्मे बुद्धिरुदेति अतो धर्मबुध्युत्पादकत्वेन धर्मस्य स्थानम् ॥ किंच धर्मस्य अनुष्ठेयस्य अनुष्ठानोचितं सिद्धिप्रदं स्थानम् ॥ किंच क्षत्रियधर्मस्य समराध्वरस्य समुचितं स्थानम् ॥ किंच धर्मस्य क्षयो नाशोऽधर्मः तस्मात् तं त्याजयित्वा धर्ममार्गे प्रवर्तनेन त्रायते स्वाश्रितं अतो धर्मक्षेत्रम् ॥ किंच धर्मस्य क्षेत्रमिवेद कुरुक्षेत्रं अनुष्ठितं स्वल्पमपि धर्मं स्वस्मिन्नुप्त बीजं गुणवत् क्षेत्रमिव बहुलीकृत्य फलममितं ददाति अतो धर्मस्य क्षेत्रतुल्यम् ॥ किंच एतादृशमहामहिमवत्वात् धारकत्वेन धर्मस्य भगवतो विशेषसंनिधानस्थानम् ॥ कुरुक्षेत्रं हि तत् कौरवाणां पाण्डवानां स्वकुलकूटस्थकुरुमहाराजसंबन्धसूचकतन्नामसाहित्येन परममाननार्हं हि तत्क्षेत्रम् ॥ अस्मत्कुलकूटस्थ· कुरुमहाराजः कुरुक्षेत्रे वर्णाश्रमोचितानि विहितानि महितानि कर्माण्यकार्षीत् ॥ अतो हि तन्नामोपपदमभूत्तत्क्षेत्रम् ॥ कुरुक्षेत्रं अत एव धर्मक्षेत्रं धर्मक्षेत्रं अत एव कुरुक्षेत्रम् ॥ तादृशे तस्मिन् क्षेत्रे हि मिलि·

१ कर्तृगामिनि क्रियाफले विहितेन आत्मनेपदेन स्वस्वप्रयोजनार्थं किं कृतवन्त इति सूच्यते ॥

ताः १ मामकाः २ पाण्डवाश्चैव ॥ अतः युयुत्सवोऽपि धर्मक्षेत्रे कुरुक्षेत्रे समवेतत्वात् उक्तमहामहिममहितस्य.तद्विशेषगुणेन विहाय युद्धबुद्धिं मिथः कृतसन्धयः स्युरिति मे समुन्मिषति शङ्का ॥ अत. किमकुर्वन्निति ममायं प्रश्न. ॥ हे सञ्जय ब्रूहि॥ त्वं तु अन्तः शत्रून् कामक्रोधादीन् जितवानसि ॥ अतो यथार्थमेव त्वया वाच्यम् ॥ न तु मन्म नस्तोषाय किमपि ॥ यदि क्षेत्रमहिम्ना पूर्वमेव धार्मिका. पाण्डवा माऽस्तु युद्धमिति युद्धान्निवृत्य यथागतं यत्र कुत्रापि गच्छन्तु ॥ तर्हि मामकैः विनैव युद्धमुपलब्धमखिलं राज्यमिति महदिदं हर्षस्थानम् ॥ यदि पापिनोऽपि मामकाः क्षेत्रमहिम्ना माऽस्तु युद्धमिति युद्धान्निवृत्य पाण्डवेभ्यो विभज्य राज्यार्धं दद्यु ॥ तर्हि विनष्टप्रायास्ते इति महदिदं शोकस्थानम् ॥ अतः पृच्छामि इति सञ्जयं धृतराष्ट्र उवाच ॥ न केवलं मामकानां पाण्डवानां चैव युद्धवृत्तं त्वया वाच्यम् ॥ किंतु ३ मामकानां संबन्धिनो ये भीष्मद्रोणकृपाश्वत्थामकर्णसौमदत्तिजयद्रथभगदत्तप्रभृतय. ये च पाण्डवानां संबन्धिनो वासुदेवसात्यकिधृष्टद्युम्नविराटद्रुपदप्रभृतय तेषामपि युद्धवृत्तं त्वया वाच्यम् ॥ अतो यथावदखिलं ४ कथय ॥ १ ॥

१ पाण्डवानां पृथक् निर्देशात्तेषु ममकाराभावप्रदर्शनेन तेषु द्वेषो व्यज्यते ॥ २. च एव इति निपातसमुदाय' समुच्चयार्थकः ॥ चकारः समुच्चयार्थक एवकारस्तु अनेकेषां राज्ञां तत्र समवायेऽपि वर्गद्वयमेवाभूत् ॥ नान्यस्तृतीयो वर्ग इत्यवधारणार्थ इति वा ॥ ३ इद चकारेण लक्षणया वा ॥ मम इमे मामकाः पाण्डोरिमे पाण्डवाः इति विवक्षणेन वा लभ्यते ॥ विवक्षणीयं चेदम् ॥ अन्यथा सञ्जयस्य भीष्मादिसर्ववीरवृत्तकथनमपृष्टप्रतिवचनं स्यात् ॥ ४. अत्र, मङ्गलाचरणाभावादमाङ्गलिकमिदमिति न मन्तव्यम् ॥ मङ्गलाचरणे हि आशीर्नमस्कियावस्तुनिर्देशान्यतमेन तेन प्रारिप्सितग्रन्थपरिसमाप्त्यादिकमेव जायेत न तु उपायोपेयबोधनम् ॥ धर्मशब्दप्रयोगेण तु उपेयो भगवान् उपायो निवृत्तिकर्मशब्दितो धर्मश्चेत्युभयं उक्तं भवति ॥ परमप्राप्यस्य भगवतो नामसङ्कीर्तनादन्यत्किमस्ति मङ्गलं नाम ॥ अत. इदमेव मङ्गलाचरणं अतः परममाङ्गलिकमिदम् ॥ किंच आदौ धर्मशब्दप्रयोगेण शास्त्रेऽस्मिन् धर्मो भगवान् तत्प्रापको निवृत्तिधर्मश्चेत्युभयं प्राधान्येन प्रतिपाद्यं इति सूच्यते ॥ किंच धर्माणां क्षेत्रे कुरूणां नरकदानेन हिंसकानां दोषाणां क्षेत्रे शरीरे समवेता मिथो युयुत्सव दुरिन्द्रियवृत्तय सदिन्द्रियवृत्तयश्च किं कुर्वन्तीति प्रश्न. ॥ दुरिन्द्रियवृत्तय. सदिन्द्रियवृत्तीरध. पातयितुमुद्युञ्जते ॥ भगवद्भागवताश्रयणेन सदिन्द्रियवृत्तयो दुरिन्द्रियवृत्तीर्नाशयित्वा स्वाश्रयं सकलभोगभागिनं कुर्वन्तीत्यादि-ध्यार्थव्यञ्जनपरिपाटी यथायथमूहनीया ॥

जनमेजयः ॥ एवं धृतराष्ट्रेण पृष्टः सञ्जय किमाह धृतराष्ट्रम् ॥ ब्रूत ॥

वैशंपायनः ॥ एवं पृष्ट सञ्जय. त्वत्पुत्राः परमपापत्वात् परमपवित्रकुरुक्षेत्र. महिम्ना न युद्धान्निवृत्ता ॥ पाण्डवास्तु युद्धस्य स्वधर्मत्वबुद्ध्या भगवदाशयानु. रोधेन च न युद्धान्निवृत्ता. ॥ किंतु उभयेऽपि युद्ध एव प्रावर्तिषत ॥ युद्धे च पाण्डवा व्यजयन्त ॥ त्वत्पुत्रा. पराऽभूवन् इति कथयिष्यन् युद्धारंभात् पूर्वतनवृत्तांतमाह ॥

॥ सञ्जय उवाच ॥

दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा ॥
आचार्यमुपसङ्गम्य राजा वचनमब्रवीत ॥ २ ॥

दृष्ट्वेति ॥ राजा दुर्योधनस्तु तदा व्यूढं व्यूहशः स्थापित पाण्डवानां अनीकं सैन्यं पाण्डवानीकं दृष्ट्वा आचार्यं गुरु द्रोण उपसगम्य सविनयमुपसृत्य वचन अब्रवीत् ॥ १ ॥

न पापा. तावका पापाशयतया युद्धान्निवृत्ता ॥ किन्तु उभयेऽपि युद्ध एव प्रावर्तिषत ॥ तत्र युद्धारंभात्पूर्वतन त्वत्पुत्ररत्नवृत्तं शृणु ॥ पाण्डवेषु चिरतरप्रवासेन प्रजाः जातविरागा चिरतरानुवृत्त्या जातानुरागाश्चास्मासु ॥ अतः पाण्डवानां सेनासंभारसंभरणमशक्यम् ॥ अतस्ते सहायहीना पञ्चैव सङ्गररङ्गमागच्छेयु. ॥ ततस्ते विनैवायासं मशकनिर्विशेषं शक्या परामावयितुमिति मन्वानोऽवर्तत ताव. कानामादिमो राजा दुर्योधन. ॥ स च समररङ्गे सेनापतिना द्रुपदपुत्रेण धृष्टद्युम्नेन व्यूहशः स्थापितं पाण्डवानां सैन्यमवलोक्य यद्यमि सह सेनया युद्धायागच्छेयुरिति पूर्वमेव मम भानं स्यात् तर्हि मया नैव युद्धे प्रवृत्तं स्यात् ॥ प्रवृत्तश्चास्मि युद्धे ॥ आगतश्चास्मि सहाखिलपरीवारो युद्धाय ॥ किमिदानीं पाण्डवसैन्यदर्शनेन किं कर्तव्यमिति धैर्यभ्रंशरूपं अवस्था १ विशेषं प्राप्त भयेन विषादेन भीष्मो जरठत्वात् पाण्डवपक्षपातित्वाच्च पाण्डवैरन्तरेणायासमभिभूतः स्यात् ॥ अतोऽयं अप्रमादेन रक्षणीय इति कथाप्याप्ततमे पुंसि स्वीयं व्यसनं विवक्षु धनुर्वेदाचार्यतया परममान्यं

१. तुशब्दार्थोऽयम् ॥

ब्राह्मणतया निग्रहानुग्रहकरणचणं द्रोणं हन्तायमास्माकीनोऽपि भूत्वा अस्मद्विपक्षान् पाण्डवान् तत्सेनापतिं धृष्टद्युम्नं च धनुर्विद्यापारगानकरोत् न तथाऽस्मान् इति सरोषं साकूतमालोक्य तस्मिन् विवक्षु भीत्या तमनानाय्य स्वाभ्याशं स्वयमेव सप्रश्रयं तत्सविधमाप्य स्वाशयावेदकं वचनमवादीत् ॥ व्यूहशः स्थापितस्य सैन्यस्य दर्शनादेवाबिभेत् ॥ किमुत ततत्र युद्धाय विभज्य स्थापितस्य तस्य॥ पाण्डवसैन्यस्य दर्शनादेवाबिभेत् किमुत पाण्डवानाम् ॥ १ वचनमेवाब्रवीत् न तु कश्चिदप्यर्थम् ॥ अवचनमिति च्छेदे राजभावविरुद्धं अगौरवावहं वचनमब्रवीत् ॥ आवयोः संवादे वत्सो दुर्योधन इति वक्तव्ये राजा दुर्योधन इत्युक्तिः कुत इति चेत् ॥ यदि दुर्योधन आत्मानं वत्सं अस्मांश्च मान्यान्मन्यमान आस्माकीनं वचनमाद्रियेत तर्हि नैवं युद्धमारब्धं स्यात् ॥ किन्तु राजानं आत्मानं मत्वा अस्मान् तृणाय मनुते ॥ अतोऽयमनर्थोद्भेदः इति सूचयितुं राजेत्युक्तम् ॥ २ इति धृतराष्ट्रं सञ्जय उवाच ॥ २ ॥

धृतराष्ट्रः ॥ मम पुत्रो दुर्योधनः किं वचनमब्रवीत् ॥ तद्वद ॥

सञ्जयः ॥ दुर्योधनेनोक्तं वचनं ब्रवीमि ॥ अवधारय तदवधानेन ॥

दुर्योधनः ॥ पश्यैतां पाण्डुपुत्राणामाचार्य महतीं चमूम् ॥

व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता ॥

पश्येति ॥ हे आचार्य द्रुपदस्य पुत्रः द्रुपदपुत्रः तेन द्रुपदपुत्रेण धीः बुद्धिः अस्यास्तीति धीमान् तेन धीमता तव शिष्येण धृष्टद्युम्नेन व्यूढां व्यूहशः स्थापिता एतां पुरोवर्तिनी महतीं पाण्डोः पुत्राः पाण्डुपुत्राः तेषां चमूम् सेनां पश्य ॥ ३ ॥

अहो महदिदमन्याय्यं अद्भुतं च हन्त मदीयोऽपि भूत्वा त्वं मम दायादान् अत एव मद्विरोधिनोऽर्जुनादीन् एतादृशानकरोः अतस्त्वं ३ पाण्डवानामाचार्योऽसि

१. संक्षिप्तबह्वर्थत्वादिगुणविशिष्टं वचनमब्रवीत् इति वचनमेवाब्रवीत् न तु कश्चिदप्यर्थमिति वा सूचयितुं वचनमब्रवीदित्युक्तम् ॥ अन्यथा अब्रवीदित्येवालम् ॥ २. अत्र तुशब्दस्य एवकारार्थत्वमभ्युपेत्य तस्य दृष्ट्वैव पाण्डवानीकमेव व्यूढमेव दुर्योधन एव तदैव आचार्यमेव उपसङ्गम्यैव राजैव वचनमेव अब्रवीदेवेति प्रतिपदं योजनेन यथायथमर्थविशेषा ऊहनीयाः॥ एवमन्यत्राप्यूह्यम् ॥ ३ पाण्डुपुत्राणामाचार्येति योजनेन सूचितोऽयमर्थः ॥

न त्वस्माकम् ॥ द्रुपदेन राज्ञा याजोपयाजपरमानुग्रहात्त्वां हन्तुमुत्पादितोऽयं पाण्डव चमूपतिर्धृष्टद्युम्न त्वया शिष्यत्वेन स्वीकृत्य धीमत्तामादितः॥ अहो ते बुद्धिमांद्यम् ॥ सञ्जिहीर्षितस्यापि तव सकाशात् स विद्यामग्रहीष्ट ॥ त्वं तु तेन वञ्चितः ॥ तथाऽपि आचार्यत्वात् त्वमेव शरणीकरणीयोऽसि ॥ तव शिष्येण अत एव धीमता धीमता अतस्तव शिष्येण द्रुपदस्य पुत्रेण धृष्टद्युम्नेन सेनापतिना व्यूहशः स्थापितां पुरोवर्त्तिनीं पाण्डुपुत्राणां महतीं सेनां १ पश्य ॥ किमिमे पितृव्यस्य पाण्डोः पुत्राः न किन्तु तस्य २ क्षेत्रे पुरुषांतरैरुत्पादिताः कथं ज्येष्ठस्य धृतराष्ट्रस्य औरसपुत्रानस्मानुपेक्ष्य कनिष्ठस्य क्षेत्रजपुत्रेषु एषु तवैतावान् पक्षपातः ॥ तव शिष्येण धृष्टद्युम्नेन व्यूढां चमूं दृष्ट्वा अहं बिभेमि ॥ अस्तु का गतिः प्रकृतमनुसरामः ॥ ३ ॥

द्रोणः ॥ किमत्र द्रष्टव्यम् ॥ वर्ततां नाम द्रुपदपुत्र एको वीरः तं यः कश्चिदास्माकीनो हनिष्यति कुतो बिभेषि ॥

दुर्योधनः ॥ अत्र शूरा महेष्वासाः भीमार्जुनसमा युधि ॥
युयुधानो विराटश्च द्रुपदश्च महारथः ॥ ४ ॥

धृष्टकेतुश्चेकितानः काशिराजश्च वीर्यवान् ॥
पुरुजित्कुन्तिभोजश्च शैब्यश्च नरपुङ्गवः ॥ ५ ॥

युधामन्युश्च विक्रांत उत्तमौजाश्च वीर्यवान् ॥
सौभद्रो द्रौपदेयाश्च सर्व एव महारथाः ॥ ६ ॥

अत्रेति ॥ इषवः बाणाः अस्यन्ते क्षिप्यन्ते अनेनेति इष्वासः धनुः महान् इष्वासः येषां ते महेष्वासाः भीमश्च अर्जुनश्च भीमार्जुनौ ताभ्यां समाः सदृशाः भीमार्जुनसमाः युधि शूराः अत्र पाण्डवसेनायां सन्ति ॥ महारथः युयुधानः सात्यकिः विराटश्च द्रुपदश्च वीर्यं अस्यास्तीति वीर्यवान् धृष्टकेतुः चेकितानः काश्याः राजा काशिराजश्च

१. हर्षशोकभयविस्मयादिषु पश्य शृणु इति क्रियाया एव प्रथममुक्तिर्लोके दृष्टा ॥ अतः पश्य इत्यस्य प्रथममुक्तिः ॥ पश्येत्यस्य एतामित्यादिषु अन्वयकल्पनाद्बुद्धिच्छात्तिविशेषा ऊह्याः ॥ आदुर्योधनवचनसमाप्ति पश्येत्यस्य प्रतिवाक्यमन्वयो बोध्यः ॥ २. पाण्डुपुत्राणामिति साकूतवचनस्याशयोऽयम् ॥

नराणां पुङ्गवः श्रेष्ठः नरपुङ्गवः पुरुजित् कुन्तिभोजश्च शैब्यः शिबिवंशजः स च विक्रान्तः विक्रमवान् युधामन्युश्च वीर्यं अस्यास्तीति वीर्यवान् उत्तमौजाश्च सुभद्राया अपत्यं सौभद्रः अभिमन्युः द्रौपद्याः अपत्यानि द्रौपदेयाश्च एते सप्तदश सन्ति ॥ सर्व महारथा एव सर्व एव महारथाः इति वा ॥ ४ ॥ ५ ॥ ६ ॥

इममेवैकं दृष्ट्वा नाहं बिभेमि ॥ किन्तु अत्र पाण्डवसेनायां महाधनुरादिसाधनसंपन्नाः युद्धे भीमार्जुनाभ्यां तुल्याः सप्तदश शूराः वर्तन्ते ॥ ते के इति चेत् ॥ युयुधान सात्यकिः विराटश्च द्रुपदश्च महारथाः एते ॥ धृष्टकेतुः चेकितानः १काशिराजश्च वीर्यवन्त एते ॥ पुरुजित् कुन्तिभोजः कुन्तीपिता च शैब्यश्च नरपुङ्गवाः एते ॥ विक्रमवान् युधामन्युः वीर्यवान् उत्तमौजाश्च पाञ्चालौ एतौ सौभद्रः परमात्मनः कृष्णस्य भागिनेयतया महनीयतमः अभिमन्युः द्रौपदीपुत्राश्च क्रमाद्युधिष्ठिरादिभ्यो जाताः प्रतिविन्ध्यसुतसोमश्रुतकर्मशतानीकश्रुतसेननामानः पञ्च च एते सप्तदश वर्तन्ते ॥ चशब्दादन्ये घटोत्कचप्रभृतयो वा ॥ सर्व एव महारथाः सर्वे महारथा एव ॥ महारथादिलक्षणमुक्तमभियुक्तैः ॥ 'एको दशसहस्राणि योधयेद्यस्तु धन्विनाम् ॥ शस्त्रशास्त्रप्रवीणश्च महारथ इति स्मृतः ॥ अमितान् योधयेद्यस्तु संप्रोक्तोऽतिरथस्तु सः ॥ रथस्त्वेकेन योद्धा स्यात् तन्न्यूनोऽर्धरथः स्मृतः' ॥ इति ॥ नेमे अस्मिन् युद्धे इव युद्धान्तरे त्वया त्वादृशैर्वा श्लाघिता इति चेत् ॥ अस्मिन् युद्धे भीमार्जुनाभ्यां समाः मा श्रीः तत्र काः भीमः शत्रूणां अर्जुनः येन सः अर्जुनस्य अनितरसाधारणमुत्कर्षमादधानो २ वासुदेवः तेन कृष्णेन सश्रीकाः ॥ किं मम पुरतः एतान् श्लाघसे किं न मां श्लाघनीयं मन्यसे इति चेत् शूर आमहेष्वास आभीम अर्जुन समाः इति छेदः ॥ हे शूर नितरां महता धनुषा युक्त शत्रूणां अतिशयेन भीकर तथाऽपि विशुद्धकर्मकारिन् आचार्य युधि समाः परस्परं तुल्याः युयुधानादयः सन्ति ॥ अतोऽहं बिभेमि ॥ ४ ॥ ५ ॥ ६ ॥

१. काशीराजश्चेति पाठान्तरम् ॥ काशिः काशी इति पर्यायौ ॥ २. अत एव वक्ष्यते ॥ 'पाण्डवानां धनञ्जयः' इति भगवता (१० ३७) ॥

**द्रोणः** ॥ न जानासि त्वं त्वत्पक्षवर्तिनो मदादीन् शूरान् तद्गतान् अनितरसाधारणान् विशेषांश्च ॥ अतः परपक्षगतानेतान् दृष्ट्वा बिभेषि ॥

**दुर्योधनः** ॥ अस्माकं तु विशिष्टा ये तान्निबोध द्विजोत्तम ॥
नायका मम सैन्यस्य संज्ञार्थं तान् ब्रवीमि ते ॥ ७ ॥

भवान् भीष्मश्च कर्णश्च कृपश्च समितिंजयः ॥
अश्वत्थामा विकर्णश्च सौमदत्ति स्तथैवच ॥ ८ ॥

अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः ॥
नानाशस्त्रप्रहरणाः सर्वे युद्धविशारदाः ॥ ९ ॥

अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम् ॥
पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम् ॥ १० ॥

**अस्माकमिति**॥ द्विजानां द्विजेषु वा उत्तमः द्विजोत्तमः हे द्विजोत्तम द्रोण अस्माकं संबन्धिनस्तु तुशब्दो विशेषसूचकः ॥ ये विशिष्टाः श्रेष्ठाः अतः मम सैन्यस्य नायकाः तान् ते तुभ्यं संज्ञार्थे इदं संज्ञार्थं ज्ञापनार्थं ब्रवीमि तान् त्वं निबोध शृणु जानीहि वा ॥७॥

**भवानिति** ॥ भवान् त्वं भीष्मश्च कर्णश्च समितिं युद्धं जयतीति समितिंजयः कृपः अश्वत्थामा च विकर्णश्च सोमदत्तस्य अपत्यं सौमदत्तिः भूरिश्रवाः जयद्रथः ॥ 'सौमदत्तिस्तथैव च' इति पाठान्तरम् ॥ ८ ॥

**अन्येचेति** ॥ अन्ये बहवः शूराश्च वर्तन्ते ॥ ते मह्यं इदं मदर्थं तस्मिन् मदर्थे त्यक्तं जीवितं प्राणः यैस्ते त्यक्तजीविताः नाना नानाविधानि शस्त्राणि च प्रहरणानि च शस्त्रप्रहरणानि येषां ते नानाशस्त्रप्रहरणाः सर्वे ते युद्धे विशारदाः समर्थाः युद्धविशारदाः ॥ ९ ॥

१. 'सौमदत्तिर्जयद्रथः' इति पाठान्तरम् ॥

अपर्याप्तमिति ॥ भीष्मेण अभि सम्यक् रक्षित भीष्माभिरक्षितं अस्माकं बलं सैन्यं कर्तृ तत् कर्म पाण्डवः यं प्रति न पर्याप्तं समर्थम् अपर्याप्तं ॥ भीमेन भीमसेनेन अभिरक्षितं एतेषां पाण्डवानां बलं तु कर्तृ इदं कर्म अस्मत्सैन्यं प्रति पर्याप्तम्॥१०॥

यूयं च अहं च वयं अस्माकं संबन्धिनो ये श्रेष्ठाः शूराः ॥ अत एव मम सैन्यस्य नायकाः एवं कर्तव्यं एवं योद्धव्यं एवं गन्तव्यं एवमागन्तव्यम् इति नियमनाधिकारं प्रापिताः तान् तद्गतान् १ विशेषांश्च सम्यगहं जानामि ॥ तान् तुभ्यं अहं जानाम्येवाहमेतान् एतदीयान् विशेषांश्चेति ज्ञापनार्थं ब्रवीमि तान् त्वं निबोध शृणु जानात्वेवायमिति २ जानीहि इति वा ॥ क्षत्रियतेजोऽपेक्षया ब्राह्मणतेजसो ३ बलवत्वात् ब्राह्मणतेजसा तेजिष्ठो भवानेव गतिर्मम ॥ ब्राह्मणोत्तमत्वात् त्वं मामनुग्रहीतुमर्होऽसि ॥ ७ ॥

ते के इति चेत् भवान् महावीरस्य द्रोणस्य पुरतः वीरजनगणनप्रसक्तौ अन्यस्य प्रथमं निर्देशोऽनुचितः इति स एव प्रथमतो निर्दिष्ट ॥ धनुर्विद्याविशारदः ब्राह्मणतेजसा तेजिष्ठश्च त्वमेकः ॥ भीष्मश्च आजानब्रह्मचारी पितुः शन्तनोर्लब्धस्वच्छन्दमरणवरः पितामह एकः ॥ कर्णश्च ४इन्द्राल्लब्धया अमोघया शक्त्या अर्जुनं हन्तुं समर्थः कर्णश्चैकः॥ कृपः भवतः स्यालः अश्वत्थामा त्वत्पुत्रः ब्राह्मणत्वात् स्यालत्वात् पुत्रत्वा-

१ विशेषसूचकतुशब्दार्थोऽयम् ॥ २. प्रियशिष्यपाण्डवतत्सेनातच्चमूपतिदर्शनजनितामन्दानन्दपारवश्यात् स्वपक्षगतवीरान् विस्मृतवान् स्याः अत संज्ञार्थं स्मरणार्थं तानहं ब्रवीमि ॥ श्रुत्वा जानीहीति सूच्यते ॥ ३. 'न बलं क्षत्रियस्याहुः ब्राह्मणो बलवत्तरः ॥ ब्रह्मन् ब्रह्मबलं दिव्यं क्षात्रात्तु बलवत्तर'मिति ॥ रामा बा ५४ सर्गश्लोकः 'धिग्बलं क्षत्रियबलं ब्रह्मतेजोबलं बल'मिति रामा बा. ५६ सर्गश्लोकश्चानुसन्धेय ॥ ४ अत्र, 'तत्रार्थिनाम प्रथितेऽपि शब्दे ममाऽऽर्य मेत्यर्थिजनेषु दानम्॥ निषेधरूपे निदधाति मार्गे पदं कथं वा भवदीयजिह्वा' ॥ १ ॥ वाञ्छामनाप्तेन वनीपकेन सहासवो दातृजनस्य यान्ति ॥ तदद्य शक्रार्चनया धृतासो भावी वधो मे परमो हि लाभः ॥ २ ॥ यद्गेहप्रतिहारभूतलशिला चिन्तामणिः कल्पकाः यस्यारामनृतिद्रुमाश्च सुरभि सा होमधेनुः पुन ॥ तादृग्याचति चेदुपेत्य मघवा सपूर्य तत्कामना त्रैलोक्यस्थवदान्यससदुपरि स्यामेव मे निश्चयः ॥ ३ ॥ इति श्लोका ५ यः कामयेत दानकामा मे प्रजा स्युरित्यसौ वा आदित्योऽर्यमा यः खलु वै ददाति सोऽर्यमा' इति (तै. सं २. ३ ४ ) श्रुतिश्च अनुसन्धेया ॥

च भवतस्तुल्यौ द्वाविमौ १सर्वेषु युद्धेषु जयशीलौ॥ विकर्णो मम भ्राता नीतिकुशलोऽयमेकः ॥ सोमदत्तस्य राज्ञः पुत्रः भूरिश्रवाः शिवाल्लब्धजयवरोऽयमेकः ॥ जयद्रथः मम भगिन्याः दुश्शलायाः पतिः सिन्धुराजः शिवाल्लब्धपाण्डवजयवरोऽयमेकः ॥ ८ ॥

अन्ये बहवः शूराश्च वर्तन्ते शल्यकृतवर्मभगदत्तप्रभृतयः ते तु मदर्थे मन्निमित्तं त्यक्तजीविताः प्राणत्यागे कृतनिश्चयाः ॥ 'एष्यत्तु निश्चितं यत्तदतीतत्वेन भण्यत' इति न्यायः ॥ मयि स्नेहातिशयेन युद्धे प्राणानपि त्यक्तुं कृतनिश्चयाः ॥ नानाविधानि शस्त्राणि खड्गादीनि प्रहरणानि च गदादीनि एषां सन्ति ॥ युद्धोपकरणपौष्कल्यमप्येषामस्ति ॥ सर्वेऽप्येते युद्धे समर्थाः इतरविलक्षणयुद्धसामर्थ्यमप्येतेषामस्ति ॥ एतादृशाः भवदादयो वीरा मदीये सैन्ये वर्तन्ते ॥ ९ ॥

अत भीष्मेण सेनापतिना सम्यक् रक्षितं अस्माकं २ बलं प्रति ३ तत् पाण्डवसैन्यं अपर्याप्तं असमर्थम् ॥ ४ इदं अस्मत्सैन्यं तु भीमेन अभिरक्षितं एतेषां पाण्डवानां बलं ५ प्रति पर्याप्तं समर्थम् ॥ तुशब्दो विशेषसूचकः ॥ भीष्मः अभिरक्षितः यस्मै यद्धननार्थं तत् पाण्डवानां बलं अस्माकं विषये अपर्याप्तं असमर्थम् ॥ भीमः अभिरक्षितः यस्मै यद्धननार्थं तत् इदं अस्माकं बलं तु एतेषां विषये पर्याप्तं समर्थमिति वा ॥ भीष्मोपलक्षितभवदादिवीराभिरक्षितत्वादस्मत्सैन्यस्य ममैव जयः स्यात् ॥ पाण्डवसैन्यस्य भीमादिवीररक्षितत्वेऽपि न पाण्डवानां जयः स्यात् ॥ इत्यहं जानाम्येव ॥ अत एव भवदादिभिर्वारितोऽपि युद्धे प्रावर्तिषि॥ प्रवृत्तश्चाहमिदानीं पाण्डवसैन्यस्थप्रवीरजनदर्शनेन नाहं तान् जयेयं त एव मां जयेयुरिति बिभेमि ॥ अनुग्रहणीयो रक्षणीयश्चाहं भवतेति सविनयमिदमावेदये ॥ १० ॥

द्रोणः ॥ यद्येवं भवान् मदादीन् वीरान् तद्गतान् विशेषांश्च सम्यगज्ञास्यत् ॥ तर्हि पाण्डवसैन्यदर्शनादेव नाभेष्यत् ॥ बिभेति च भवान् कुतः तत् ॥

१. समितिजयइत्यस्य मध्यममणिन्यायेन पूर्वोत्तराभ्यामन्वयः ॥ कर्णादिपश्चात् परिगणनेन कोपः स्यादिति मत्वा द्वयोरनयोः समितिजय इति विशेषणं दत्तम् ॥ २ द्वितीयान्तम् ॥ ३ प्रथमान्तम् ॥ ४. प्रथमान्तम् ॥ ५ द्वितीयान्तम् ॥

दुर्योधनः ॥ १अस्माकं संबन्धिनो ये वीराः मम सैन्यस्य नायकाः कृताः तान् तद्गतान् २ दोषरूपविशेषांश्चाहं जानामि ॥ इदानीं तदनुसन्धानादहं बिभेमि ॥ यान् यद्गतविशेषांश्चानुसन्धाय बिभेमि तान् ज्ञापयामि शृणु ॥ ब्राह्मणत्वात् त्वं निमंत्रणार्होऽसि न तु युद्धार्होऽसि ॥ ७ ॥

भवान् ब्राह्मणत्वेन युद्धानर्हः पाण्डवेषु गूढपक्षपाती स्वपुत्रादश्वत्थाम्नोऽपि धनञ्जयमधिकं कृतवान गुरुभक्त्या लब्धधनुर्विद्यावैशारद्यस्य पार्थमप्यतिशयानस्य इदानीं मम सहायभूतस्य एकलव्यस्य दक्षिणहस्तांगुष्ठं गुरुदक्षिणात्वेन गृहीत्वा तं वञ्चनया पार्थात् न्यूनीकृतवान् भवानेकः ॥ भीष्मश्च ३ 'सर्वांस्त्वन्यान् हनिष्यामि पार्थिवान् भरतर्षभ ॥ यान् समेष्यामि समरे न तु कुन्तीसुतान् नृप '॥ इति पाण्डवानामहिंसनं प्रतिज्ञायैव सेनाधिपत्यमभ्युपगतवान् सेनापतिः पितामहो जरठो भीष्मश्चैकः ॥ कर्णश्च परशुरामेण त्वं न क्षत्रियसंस्कारैस्संस्कृत अतस्ते नाहं शस्त्रविद्यामुपदिशेयमिति प्रथम प्रत्यादिष्टवता पश्चाद्वञ्चनामज्ञात्वा शस्त्रास्त्रविद्यामुपदिष्टवता अन्ततो वञ्चनां तां ज्ञातवता मयोपदिष्टं शस्त्रास्त्रमखिलं समये विस्मृतं सत् न प्रतिभातु इति शप्तः कर्णश्चैकः ॥ कृपश्च समितिंजयोऽपि ब्राह्मणस्त्वत्पक्षपाती त्वत्पथानुयायी तव स्यालः कृपाचार्यश्चैकः ॥ अश्वत्थामा समितिंजयोऽपि त्वया वञ्चनया पार्थात् न्यूनीकृतस्त्वत्पुत्रः एकः॥ विकर्णश्च नीतिनिरततया प्रतिकलमस्मदीयदोषोद्घाटनेन सततहृदयारुन्तुदो मम भ्राता विकर्णश्चैकः ॥ सौमदत्तिः सोमदत्तराजसुतः शिवाद्वरग्रहणकाले उत्सेकादनुपचरितेन तेन युद्धे करुणमवस्थान्तरं ते भविष्यतीति शप्तः भूरिश्रवाश्चैकः ॥ विनाऽर्जुनमन्यान् पाण्डवान् जयेति शिवाल्लब्धवरः अतोऽर्जुनं जेतुमसमर्थः भगिनीपतिः जयद्रथश्चैकः ॥ ८ ॥

अन्ये च वर्तन्ते ते च बहवश्चेत् शूराः न तु प्रत्येकं ते तु युद्धे परान् जित्वा मां रक्षितुं नागताः किंतु मदर्थं युध्वा युद्धे प्राणांस्त्यक्तुमेवागताः ॥ यदि पाण्डवानां पाण्डवबन्धोश्च वयं विरोधिनो न भवेम॥ अतो युद्धे तव साहाय्यकमाचरितुं नागच्छेम इति तैः प्रतिषिद्धं स्यात् ॥ तर्हि युद्धमेव नारब्धं स्यात् न ते तथा प्रत्यषेधन्

१ 'अस्माकं 'मित्यादिचतुःश्लोक्या आत्मना दूषणपरमर्थान्तरम् ॥ २. तुशब्दार्थोऽयम् ॥
३. भार. उद्यो १७२ अ ॥

किंतु सद्य एव समागताः किमर्थमिति चेत् मम अर्थो १ निवृत्ति तस्मिन् तन्निमित्तं मन्नाशायागताः॥ सर्वे अयुद्धेति च्छेद ॥ युद्धे असमर्थाः अतः नानाशस्त्रप्रहरणाः॥ कुशलानां नाधिकसामग्र्यपेक्षा इमे तु अकुशलाः अत अधिकसामग्र्यपेक्षा एवं ॥ नानाशस्त्रप्रहरणाः तथाऽपि अयुद्धविशारदाः एकमप्यस्त्रं शस्त्रं वा यथावत् प्रयोक्तुं न जानन्ति ॥ राजत्वाद्राजपुत्रत्वाच्च २ सकलविधकुसुमशरसमरचतुराः एतादृश दोषरूपविशेषवन्तो भवदादयो मदीयसैन्ये वर्तन्ते इति इदानीमहमनुसन्दधामि ॥९॥

भवदादिवीराणां ईदृशदोषदुष्टत्वात् भीष्माभिरक्षितमपि अस्माकं १ बलं २ तत् पाण्डवसैन्यं प्रति अपर्याप्तं असमर्थम् ॥ भीमाभिरक्षितं एतेषां पाण्डवानां बलं तु इदं अस्माकं बलं प्रति पर्याप्तं समर्थमिति निश्चिनोमि ॥ अतो बिभेमि ॥ पाण्डवाः असहायाः दीना योद्धुमागच्छेयु अतः तज्जयः सुकरो मम इति धैर्यावष्टंभकाले भवदादिषु विद्यमानान् गुणरूपान् उक्तान् विशेषान् अनुसन्धाय द्रोणभीष्मादिप्रवीरतमभुजबलावष्टंभेन युद्धे प्रवृत्तस्य मम जयो नियत इति निश्चित्य युद्धे प्रावर्तिषि ॥ ससहायानां सप्ताक्षौहिणीमितसेनासमेतानां पार्थसारथिना भगवता वासुदेवेन सन्धुक्षितसकलप्रतिपक्षिपक्षशिक्षणदक्षधैर्याणां पाण्डवानां तत्सेनायाः तच्चमूपतेश्च दर्शनेनकथमहमीदृशानेतान् जयेयं इति धैर्यभ्रंशात्मनोऽवसादकाले भवदादिषु विद्यमानान् दोषरूपान् उक्तान् विशेषान् अनुसन्धाय भीतभीतोऽहं भवन्तमुपागमम् ॥ रक्षणीयोऽहं भवता इत्यभ्यर्थये ॥ पाण्डवसेनापतेर्धृष्टद्युम्नस्य राज्ञो युधिष्ठिरस्य त्रैलोक्यैकवीरस्यार्जुनस्य सर्वकार्यनिर्वहणधुरीणस्य श्रीकृष्णस्य च सत्वेन तान् विहाय भीष्मस्य प्रतिनिर्देश्यतया भीमस्योक्तिः कुत इति चेत् ॥ मम भयावहप्रतिज्ञाकर्तृत्वेन भीष्मसाम्यात् भीमस्योक्ति ॥ भीष्मो 'न तु कुन्तीसुता 'निति पाण्डवाहिंसनं प्रतिजज्ञे ॥ प्रतिजज्ञे च भीमः सर्वकौरववधम् ॥ अत ईदृशप्रतिज्ञाकारिभीष्माभिरक्षितत्वादस्मत्सैन्यस्य तदपर्याप्तम् ॥ तादृशप्रतिज्ञाकारिभीमाभिरक्षितत्वात्पाण्डवसैन्यस्य तत्पर्याप्तं इति निश्चित्य भयादहमुपागमं भवन्तम् ॥ १० ॥

१. 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु' ॥ इत्यमर ॥ २ सर्वं इयुध इति विवक्षणादिदम् ॥ ३ मन्मथ ॥

द्रोणः ॥ अस्तु इदानीं अस्माभिः किं कार्यं तद्वद ॥

दुर्योधनः ॥ अयनेषु च सर्वेषु यथाभागमवस्थिताः ॥
भीष्ममेवाभिरक्षन्तु भवन्तः सर्व एव हि ॥ ११ ॥

अयनेष्विति ॥ हि यस्मादेवं तस्मात् भवन्तः सर्वे एव सर्वेषु अयनेषु व्यूह-प्रवेशमार्गेषु च एव भागं अनतिक्रम्य यथाभागं अवस्थिताः सम्यक् स्थिताः सन्तः भीष्म-मेव अभि अभितः सर्वतः रक्षन्तु ॥ ११ ॥

भवदादिषु विद्यमानान् गुणरूपान् विशेषाननुसन्धाय सङ्ग्रामोद्योगकरणावसरे-भवदादिप्रवीरतमाधिष्ठितमस्मद्बलं पर्याप्तमित्यभात् ॥ संप्रति पाण्डवतत्सैन्यतत्प-तिदर्शनसमुपजातसाध्वसादवसन्नचेतसः अत एव भवदादिषु विद्यमानान् दोष-रूपान् विशेषानेवानुसन्दधानस्य मम बलमस्मदीयमपर्याप्तं तदीयं तु बलं पर्याप्तं इति प्रतिभाति ॥ अतः भवन्तः सर्वे एव तत्तदाकारविरचितसैन्यव्यूहप्रवेशमार्गेषु सर्वेषु सेनापतिना परिकल्पितं स्वीयं भागमनतिक्रम्य परेषां व्यूहप्रवेशमार्गेषु यथा प्रवेशो न स्यात् तथा कुर्वन्तोऽप्रमादेन स्थिताः सन्तः भीष्ममेव सर्वतः सर्वथा रक्षन्तु ॥ यान् गुणरूपान् विशेषान् अनुसन्धाय युद्धे प्रावर्तिषि तानेव गुणान् प्रकाशयन्तः यथाभागमवस्थाय युद्धस्य सम्यक्करणेन मम मनसः सन्तोषमापादयन्त भवन्तः सेनापतिं भीष्मं सर्वतः सर्वथा रक्षन्तु ॥ प्रतिज्ञातपाण्डवाहननः पितामहो भीष्मः स्वहननाय पाण्डवेषु तदीयेषु च नानोपायानाचरत्स्वपि तत्प्रतीकारमकुर्वाणः तैस्त-दीयैश्च हिंस्येत ॥ ततश्चासहमानो हिंसां स्वच्छन्दमरणोऽपि मृतिमीप्सेत् ॥ अतः यथा तैरयं न हिंस्येत तथा रक्षतैनमप्रमत्ता यूयमिति सविनयमावेदये इति राजा वचनमब्रवीदिति संबन्धः ॥ ११ ॥

धृतराष्ट्रः ॥ ततः किमासीत् ॥ वद ॥

सञ्जयः ॥ तस्य सञ्जनयन् हर्षं कुरुवृद्धः पितामहः ॥
सिंहनादं विनद्योच्चैः शङ्खं दध्मौ प्रतापवान् ॥ १२ ॥

तस्येति ॥ कुरूणां कुरुषु वा वृद्धः कुरुवृद्धः प्रतापः अस्यास्तीति प्रतापवान्

पितामहः भीष्मः तस्य दुर्योधनस्य हर्षं तोषं सञ्जनयन् सम्यक् जनयितुं उच्चैः गम्भीरं सिंहस्य नादः सिंहनादः तं सिंहनादं विनद्य कृत्वा शङ्खं दध्मौ पूरयामास ॥ १२ ॥

कुरुवृद्धत्वात् प्रतापवत्वात् पितामहत्वाच्च सेनाधिपत्यं प्रापितो भीष्मः, जरठ पाण्डवपक्षपाती चायं भीष्मः किं करिष्यति ममेत्यालोच्य बिभेतीदानीं दुर्योधन इति ज्ञात्वा जरठोऽपि यथाप्रतिज्ञं अन्तरेण पाण्डवान् सर्वानन्यान् हन्यां इति सूचयन् तस्य दुर्योधनस्य सन्तोषं जनयितुं गम्भीरं सिंहनादं कृत्वा १ सिंहवद्विनद्य वा शङ्खं दध्मौ॥ सिंहनादेन शङ्खपूरणेन च दुर्योधनस्य पराणुद्य साध्वसं हर्षमुत्पादयामास ॥ १२ ॥

ततः शंखाश्च भेर्यश्च पणवानकगोमुखाः ॥
सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् ॥ १३ ॥

तत इति ॥ ततः तदनन्तरं शङ्खाः भेर्यश्च पणवश्च आनकश्च गोमुखश्च पणवानकगोमुखाः वाद्यविशेषाः सहसैव युगपदेव अभ्यहन्यन्त ताडिताः वादिताः सः तज्जनितः शब्दः तुमुलः व्याप्तः भयङ्करो वा अभवत् ॥ १३ ॥

भीष्मस्य सिंहनादकरणशंखपूरणाभ्यामनन्तरं तदीयसङ्केतानुसारेण त्वत्सुतसेनासमवेतसैनिकैः शंखभेरीपणवानकगोमुखनामानो वाद्यविशेषाः युगपदेव वादिताः॥ शङ्खाः पूरिताः भेर्यादीनि वाद्यानि वादितानि ॥ शंखादिवादनजनितः शब्दः तुमुलः सर्वत्र व्याप्तः भयङ्करो वा अभवत् ॥ पाण्डवेषु गांभीर्यात् स्तिमिततया महानदीप्रवाहवदवस्थितेषु कौरवाः काननदीप्रवाहवत् महान्तमाडंबरमकार्षुः ॥ १३ ॥

धृतराष्ट्रः ॥ अस्त्वेतत् पाण्डवसैन्ये किं वृत्तम् तद्वद ॥

सञ्जयः ॥ ततः श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ ॥
माधवः पाण्डवश्चैव दिव्यौ शङ्खौ प्रदध्मतुः ॥ १४ ॥

तत इति ॥ तत इति ॥ ततः अनन्तरम् श्वेतैः हयैः अश्वैः युक्ते महति स्यन्दने रथे स्थितौ मा लक्ष्मीः तस्याः धवः माधवः कृष्णः पाण्डवः अर्जुनश्चैव दिव्यौ विलक्षणौ शंखौ प्र सम्यक् दध्मतुः पूरयामासतुः ॥ १४ ॥

१. सिंहनादमिति णमुलन्तम् ॥ सिंह इव विनद्येत्यर्थः ॥

कौरवसैन्यकोलाहलोपरमानन्तरं श्वेतैः हयैः युक्ते उन्नते महनीये रथे स्थितौ कृष्णः अर्जुनश्चैव दिव्यौ शंखौ सम्यक् पूरयामासतुः॥ अहो भाग्यमर्जुनस्य यदयं सारथिः मधुनामकयादवकुलोत्पन्नः कृष्णः १लक्ष्मीपतिः २स्वयं सर्वेश्वरः ईश्वरान्तररहितश्च एतत्सूचनायैव माधव इत्युक्तम्॥ सारथितया रथस्य पुरोभागे स्थितत्वेन द्वयोर्मध्ये अभ्यर्हितत्वेन च माधवः प्रथममुक्तः॥ कोऽसौ पाण्डव इति चेत् पञ्चानां पाण्डवत्वाविशेषेऽपि अत्र पाण्डवोऽर्जुन एव॥ माधवः पाण्डवश्चेति कृष्णासाहित्येनोक्तेः॥ कृष्णसाहित्यमप्यन्येषां पाण्डवानां कुतो न स्यात् ॥ ३ 'मम प्राणा हि पाण्डवाः' इति ह्युक्तं कृष्णेन इति चेत् स्यन्दने स्थितौ शंखौ प्रदध्मतुः इत्युक्त्या सारथिरथिभावः प्रतीयते ॥ न ह्यर्जुनस्यैवान्यस्य पाण्डवस्य सारथिरभूत्कृष्ण ॥ अतः अत्र पाण्डवोऽर्जुन एव॥ वक्ष्यते चानुपदं 'देवदत्तं धनञ्जयः' इति'॥ यस्मिन् रथे उपविश्यागतौ तस्मिन् रथे ४स्थितावेव शंखौ दध्मतुः ॥ न तु त्वत्पुत्रवत् साध्वसेन रथादवतीर्य यङ्कमपि शरणमभजताम् ॥ नैताभ्यां पूरितौ शंखौ साधारणौ अपितु दिव्यौ ॥ पूरणमपि नेतरसाधारणं किंतु इतरसर्वविलक्षणम् ॥ महाराज सम्यगवधारयेदम् ॥ किमयं रथो भगवतः उत पार्थस्य इति चेत् नायं भगवतो रथः तद्रथाश्वानां चित्रवर्णत्वप्रसिद्धेः ॥ अयं तु रथः श्वेतैः हयैः युक्तः ५अतः कृशानुना दत्तः नन्दिघोषाख्योऽर्जुनरथः ॥ अत्रेममपरं च कमपि विशेषमवधेहि ॥ सङ्कल्पमात्रेण कृत्स्नं जगत् संहारकाले संहरतो भगवतः कृष्णस्य कुरूणां पाण्डवानां च युद्धप्रवृत्तिमुत्पाद्य तन्मुखेन भूभारपरिहरणकरणेच्छा विडंबनमात्रमेव ॥ वस्तुतस्तु उपवेश्य रथे पार्थं सारथीभूय भगवतः कुरुक्षेत्रागमनं, लोकोद्धारार्थं कृत्वा हृदयेऽवस्थापितस्य गीताशास्त्रस्य समये पार्थं व्याजीकृत्य लोकोद्धारार्थमुपदेशायैव ॥ ततः श्वेतैः शुद्धैः अपौरुषेयनित्यतया निर्दोषैः हयैः हयगताविति धातुः ॥ गत्यर्थाः ज्ञानार्थाः ॥ ज्ञानसाधनैः चतुर्भिः वेदैः युक्ते तदर्थप्रतिपादके महति सर्वेभ्यः पौरुषेयग्रन्थेभ्यः उत्तमे स्यन्दने स्यन्दू प्रस्रवणे इति धातुः ॥ प्रस्रवणं गतिविशेषः ॥ ज्ञानसाधने गीताशास्त्रे गुरुशिष्यभावेन स्थितौ कृष्णः अर्जुनश्चैव दिव्यौ शंखौ आकृतिसाम्यात् लक्षणया प्रणवौ तदर्थाविति यावत् ॥ प्र

१. मा लक्ष्माः तस्याः पातः॥ २. मा न विद्यते धव ईश्वरो यस्य सः ॥ ३. भार उ. ९१. ४ स्थितावेवेत्यन्वयादिदम् ॥ ५. वक्ष्यते च कर्णपर्वणि ॥ 'कृशानुदत्तं च रथं च धिक्ते'॥ इति (७१)॥

ग्भ्यक् दध्मतु ॥ प्रश्नोत्तराभ्यां प्रकाशयामासतुः ॥ कावेनाविति चेत् श्वेतैः शुद्धैः हयैः इन्द्रियैः १ 'इन्द्रियाणि हयानाहुः' इति श्रुतेः ॥ युक्ते महति ऐहिकामुष्मिकस-कलसुखसाधनत्वात् महनीये स्यन्दने देहे २ 'शरीरं रथमेव तु' इति श्रुतेः ॥ स्थितौ मुख्यामुख्यक्षेत्रज्ञतया वर्तमानौ वक्ष्यते च ॥ ३ 'क्षेत्रज्ञं चापि मां विद्धि' इति ॥ माधव परमात्मा पाण्डव उत्तमजीव पांडुशब्द शुभ्रपर्याय ॥ एतौ दिव्यौ शंखौ प्रदध्मतु उक्तरीत्या प्रणवार्थौ उपदेशतद्ग्रहणाभ्यां प्रकाशयामासतुः॥ तावेव नरनारा-यणावेतौ ॥ १४ ॥

धृतराष्ट्रः ॥ कृष्णार्जुनौ किंनामानौ शङ्खौ प्रदध्मतुः ॥

सञ्जयः ॥ पाञ्चजन्यं हृषीकेशो देवदत्तं धनञ्जयः ॥ १५॥ ॥

पाञ्चजन्यमिति ॥ हृषीकाणां इन्द्रियाणां ईशः हृषीकेशः कृष्णः पञ्चजने भवः पाञ्चजन्यः तं दध्मौ॥ धनञ्जयतीति धनञ्जयः पार्थः देवैः दत्तं देवदत्तं दध्मौ ॥ १४॥ ॥

माधवपदेनोक्त कृष्ण हृष्यन्ति हर्षयन्ति वा हृषीकाणि इन्द्रियाणि तेषां ईशः इति ४ सृष्ट्यादिरूपया क्रीडया हृष्यतीति हृषीकः स चासौ ईशश्च इति वा हृषीकेशः स पाञ्चजन्यनामानं शखं दध्मौ ॥ ५ धनं जयतीति धनञ्जयः पार्थः देवदत्त नामानं शङ्खं दध्मौ ॥ कृष्णशङ्खः समुद्रे तिमिरूपेण संचरमाणस्य पञ्चजना-सुरस्य मृतगुरुपुत्रानयनाय समुद्रं गतेन कृष्णेन हतस्य अस्थ्ना निर्मितः ॥ अत ६ पाञ्चजन्यनामा ॥ पार्थशङ्खस्तु निवातकवचादिहननाय देवैरनुगृह्य स्वर्गे ७दत्त पार्थाय ॥ अतो देवदत्तनामा ॥ अत्र हृषीकेशपदेन श्रीकृष्णस्य प्रेरणसामर्थ्यं धनञ्ज

१ का ३ ४ २ का ३ ३. ३. १३. ३. ४ अत्र, 'क्रीडया हृष्यति व्यक्तं ईशः ... छान्द्रूपया ॥ हृषीकत्व तथेशत्व देवस्यास्य ततः स्फुटम्'॥ इ यहिर्बुध्न्यसंहितावचनमनुसन्धेयम् ॥ ५. 'सर्वान् जनपदान् जित्वा वित्तमादाय केवलम् ॥ धनस्य मध्ये तिष्ठामि तेनाहुर्मां धनञ्जयम्' ॥ इति भार वि ४३ श्लोकोऽनुसन्धेय ॥ ६ पञ्चजने भव पाञ्चजन्यः इति निरुक्त. ॥ 'बाहिर्देव-पञ्चजनेभ्यश्चेति वक्तव्यं' इति वार्तिकात् ञ्य ॥ 'स तु पञ्जनं हत्वा शङ्खं लेभे जनार्दनः॥ य स देवमनुष्येषु पाञ्चजन्य इति स्मृत.'॥इति हरिवंशे विष्णुपर्वणि (३३ अ) श्लोकोऽनुसन्धेयः॥'इत्युक्तोऽन्त-र्जलं गत्वा हत्वा पञ्चजन च तम् ॥ कृष्णो जग्राह तस्यास्थिप्रभवं शङ्खमुत्तमं' ॥ इति श्रीविष्णुपुराणे ५ अंश अ २१ श्लोकश्च ॥ ७. 'प्रदीयमानं देवैस्तं देवदत्तं बलोद्भवम्॥ प्रत्यगृह्णं जयाय ... स्तदाऽमरं' ॥ इति भार वनपर्व, १७० अ श्लोकोऽनुसन्धेय. ॥

एतेन पार्थस्य श्रीकृष्णप्रेरणानुगुणयुत्थकस्य सामर्थ्यं च सूच्यते ॥ सकलप्राणिसकलेन्द्रियमनःप्रेरकः जगज्जन्मस्थेमप्रलयरचनाचातुरीधुरीणः उपनिषदेकवेद्यः लक्ष्मीपतिः स्वयं सर्वेश्वरः ईश्वरान्तररहितश्च परमात्मा श्रीकृष्ण सौहार्देन वात्सल्याद् सारथिरभूदर्जुनस्येत्यहो धन्यताऽर्जुनस्य ॥ १४॥ ॥

धृतराष्ट्रः ॥ किं कृष्णार्जुनौ द्वावेव शंखौ दध्मतु उत तदीया इतरेऽपि ॥

सञ्जयः ॥ पौण्ड्रं दध्मौ महाशंखं भीमकर्मा वृकोदरः ॥ १५ ॥

पौण्ड्रमिति ॥ भीमानि भयङ्कराणि कर्माणि यस्य स भीमकर्मा ॥ वृक उदरे यस्य सः वृकस्य उदरमिव उदर यस्य स इति वा वृकोदरः भीमः पौण्ड्रं तन्नामानं महांश्चासौ शंखश्च महाशंख तं दध्मौ ॥ १५ ॥

भीमादयोऽपि शंखान् दध्मु ॥ तत्र भीमस्य शंख शत्रूणां खण्डनात् १ पौण्ड्रनामा महान् ॥ कुतोऽस्य शंखो महानिति चेत् २ वृकः सर्वभक्षकः ३ वृकनामा जाठराग्निरस्योदरे तिष्ठति ॥ अतोऽत्यन्नभक्षणाद्बलिष्ठ ॥ अत वृक इव स्थूलोदरः ॥ अत एव कर्माण्यस्य हिडिंबबकवधादीनि भयङ्कराणि ॥ तादृशो भीम पौण्ड्रं नाम महान्तं शंखं दध्मौ ॥ १५ ॥

अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः ॥
नकुल सहदेवश्च सुघोषमणिपुष्पकौ ॥ १६ ॥

अनन्तेति ॥ कुन्त्याः पुत्रः कुन्तीपुत्रः युधि स्थिरः युधिष्ठिर राजा धर्मात्मजः न विद्यते अन्त यस्य सः अनन्तः विजयो येन स अनन्तविजयः तं तन्नामानं शंखं दध्मौ ॥ नकुलः सहदेवश्च शोभनो घोषो यस्य स सुघोषः मणयः पुष्पाणीव यस्मिन् सः मणिपुष्पकः सुघोषश्च मणिपुष्पकश्च सुघोषमणिपुष्पकौ तन्नामानौ शंखौ दध्मतुः॥१६॥

१ पुड खण्डन इति धातुः ॥ २ द्वे अत्र, 'अङ्गुष्ठमात्रं जठरे प्रतिष्ठितं जाज्वल्यमानं मम जातवेदसम् ॥ नित्यं हितं विश्वदहं च वित्त तं विश्वशचेता इति सोऽब्रवीत्सदा' ॥ इति श्रीमदाचार्यविषयः श्लोकोऽनुसन्धेयः ॥ ३. 'भक्तिर्ज्ञानं सवैराग्यं प्रज्ञा मेधा धृतिः स्थितिः॥ योगः प्राणो बलं चैव वृकोदर इति स्मृत ॥ एतद्दशात्मको वायु तस्माद्भीमस्तदात्मक.' ॥ इति गीतामृततरङ्गिण्याम् ॥

कुन्तीपुत्रो राजा युधिष्ठिर अनन्तविजयनामानं शंखं दध्मौ ॥ युधिष्ठिरस्य परमधार्मिकत्वात् तेन पूर्यमाणः शंखो नियमेन महान्तं विजयमावहति अतोऽनन्तविजयनामा सः ॥ नकुलः सहदेवश्च सुघोषमणिपुष्पकनामानौ शंखौ दध्मतुः॥ नकुलः सौन्दर्यप्रधानत्वात् रूपानुरूपं सुस्वरं ध्मायति शंखम् ॥ अतः सुघोषनामा नकुलस्य शंखः ॥ सहदेवस्तु पञ्चस्ववरत्वेन वस्तुसौष्ठवप्रियत्वात् अग्रे पुष्पस्तबकवद्दोलायमानमणिमञ्जरीविभूषितं शंखं ध्मायति ॥ अतः मणिपुष्पकनामा सहदेवस्य शङ्खः ॥ कुन्त्यां धर्मादुत्पन्नत्वेन स्वयं साक्षाद्धर्मांशत्वेन च परमधार्मिकः परमकारुणिकः परममृदुतरस्वभावः स्वयमजातशत्रुः युधिष्ठिरः कथं भीष्मद्रोणादिपरमपूज्यतमाधिष्ठितसेनाभ्यमित्रीणतानिर्वहणपूर्वकं कृष्णार्जुनप्रोत्साहनाय शंखं दध्मौ इति चेत् हन्त तादृशोऽपि स युधि स्थिरोऽभूत् ॥ वनवासाय प्रस्थितानां पाण्डवानां व्यतीतेषु त्रयोदशसु मासेषु वनवासक्लेशमसहमानेषु द्रौपदीभीमार्जुनादिषु मासस्य संवत्सरप्रतिनिधितां मत्वा वनवासाज्ञातवासाभ्यां यापनीयानि त्रयोदश वर्षाणि यापितप्रायाणीति निश्चित्य ‘अस्माभिरुषिताः सम्यग्वने मासास्त्रयोदश ॥ परिमाणेन तान् पश्य तावतः परिवत्सरान् ॥ अस्ति मास प्रतिनिधिः यथा प्राहुर्मनीषिणः ॥ पूतिका इव सोमस्य तथेदं क्रियतामिति’ ॥ इति ( भार. वन. पर्व. ३५ ) उक्तरीत्या गच्छेमेदानीमेव हास्तिनपुरं कुर्याम च कौरवैर्युद्धं प्राप्नुयाम चाकण्टकं राज्यं अनुभवेम च सुखमतिशयितं इति नानागमार्थोपन्यासपूर्वकमर्थयमानेषु तदीयनिर्बन्धेन व्यतियान्तु त्रयोदश समाः चतुर्दशे हायने अवश्यमेव भवदभिलषितमाचरेत न लेशतोऽपि तदा वः प्रतिबध्नीयां इति द्वैतवने कृतप्रतिज्ञतया कुन्तीपुत्रत्वेन सत्यसन्धतया च तदानीं वनवास इव इदानीं युधि स्थिरप्रतिज्ञोऽभूत् ॥ अत एव शङ्खं दध्मौ ॥ अहो सत्यैकशरणता तस्य ॥ राजा हि सः ॥ तस्य राजत्वात् तदभ्युपगम एव कृष्णार्जुनभीमादीनां युद्धकथाप्रसक्तिः अन्यथा तु न॥ अत एव शङ्खं दध्मौ ॥ इतरसर्वशङ्खेभ्यो वैलक्षण्यसूचनाय पाञ्चजन्यादिशङ्खानां नामनिर्देशः कृतः ॥ १६ ॥

धृतराष्ट्रः ॥ किं कृष्णः पाण्डवाश्चैव शङ्खान् दध्मुः उत तदीया इतरेऽपि ॥

सञ्जयः ॥ काश्यश्च परमेष्वासः शिखण्डी च महारथः ॥
धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः ॥ १७ ॥

द्रुपदो द्रौपदेयाश्च सर्वशः पृथिवीपते ॥
सौभद्रश्च महाबाहुः शंखान् दध्मुः पृथक् पृथक् ॥ १८ ॥

**काश्यश्चेति** ॥ मह्याः पतिः महीपतिः हे महीपते परमः इष्वासः धनुः यस्य सः परमेष्वासः काश्यां भवः काश्यः काशिराजः स च महारथः शिखण्डी च ॥ धृष्टद्युम्नः विराटश्च न पराजितः अपराजितः न जितः अजितः अपरैः अजितः अपराजितः इति वा सत्यकस्य अपत्यं सात्यकिः स च ॥ द्रुपदः द्रौपद्याः अपत्यानि द्रौपदेयाः ते च महान्तौ बाहू यस्य सः महाबाहुः सुभद्रायाः अपत्यं सौभद्रः अभिमन्युः स च एते सर्वशः सर्वे पृथक् पृथक् प्रत्येकं शङ्खान् दध्मुः ॥ १७ ॥ १८ ॥

**१ त्वमिदानीं पृथिवीपतिरसि ॥ अन्यायेन पाण्डवानामपि भागमपहृत्य अखिल पृथिवीपतिर्जातोऽसि ॥ विनङ्क्ष्यन्ति च त्वदीया नियतं युद्धे ॥ गमिष्यति पृथिवीपतित्वं तव ॥ इदमेवं संबोधनं अद्यैव न तु युद्धानन्तरम् ॥ परमेष्वासः काशिराजश्च महारथः शिखण्डी च अपराजितः धृष्टद्युम्नः विराटश्च सात्यकिश्च द्रुपदः द्रौपद्याः पुत्राः पञ्च प्रतिविन्ध्यादयश्च महाबाहुः अभिमन्युश्च चशब्दादन्येऽपि इत्येते २ सर्वेऽपि ३ पृथक् पृथक् शंखान् दध्मुः ॥ १७ ॥ १८ ॥**

**धृतराष्ट्रः ॥ पाण्डवानां तदीयानां च शंखघोषेण मदीयानां किं जातम् ॥ वद ॥**

**सञ्जयः ॥ स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत् ॥**
**नभश्च पृथिवीं चैव तुमुलो व्यनुनादयन् ॥ १९ ॥**

**स घोष इति** ॥ तुमुलः व्याप्तः भयङ्करो वा सः घोषः नभः अन्तरिक्षं च पृथिवीं

---

१ पृथिवीपते इति संबोधनस्याशयोऽयम् ॥ एवमुत्तरत्रापि ॥ २ सर्वशः इत्यस्यार्थः ॥ केचन शङ्खान् दध्मुः केचन न तथाऽपि छत्रिन्यायेन शङ्खान् दध्मुः इति इति शङ्काऽपाकरणाय सर्वश इत्युक्तम् ॥ स्वस्वपराक्रमातिशयप्रकाशनाय क्रमाद्धर्मगति सूचनाय पृथक् पृथक् इत्युक्तम् ॥ अत एव एतत्प्रतिनिर्देश्यतया तत्र (१३) सहसैवेत्युक्तम् ॥ स घोषः पृथक् पृथक् धार्तराष्ट्राणां हृदयानि व्यदारयदित्युत्तरश्लोकेनैकवाक्यता वा ॥ ३ एकैकशंखध्वनिरेव धार्तराष्ट्रहृदयभेदायालमिति भावः ॥

भूमिं चैव वि विशेषेण अनुनादयन् प्रतिध्वनिना नादयुक्तं कुर्वन् सन् धृतराष्ट्रस्य अपत्या-नि धार्तराष्ट्राः तेषां हृदयानि मनांसि वक्षस्स्थलानि वा विशेषेण अदारयत् ॥ १९ ॥

स पाण्डवतदीयशंखघोषः १त्वदीयानां हृदयानि व्यदारयत् ॥ कीदृश स इति चेत् ॥ तुमुल व्याप्तः भयङ्करो वा अत नभश्च पृथिवीं चैव विशेषेण प्रतिध्वनिना मुखरयन् ॥ अतएव धार्तराष्ट्राणां हृदयानि मनांसि व्यदारयत् ॥ दारणजन्यदुःखस्य हृदादुःखमनीनयत् ॥ हृदयानि वक्षस्स्थलानि व्यदारयत् ॥ अत्र पातायत्व. वक्षसां विदारणेन यादृशी व्यथा जायेत तादृशी व्यथामापादयामास ॥ पाण्डवानां तदीयानां च शंखघोषं श्रुत्वा त्वदीया दुर्योधनादयः कथं धर्ममेभिर्युध्येमहि कथङ्कारं वाऽस्माकं जयो घटेत भवेम च वयं पराभूता एव मृताश्च अतोऽस्माकं कुलं अत्रैव नष्ट इति मेनिरे ॥ किं पाण्डवानां तदीयानां च शंखघोषं श्रुत्वा धार्तराष्ट्राणामिव धार्तराष्ट्राणां शंखादिघोषं श्रुत्वा पाण्डवानामपि व्यथोदपद्यत इति चेत् धार्तराष्ट्राणां दुर्योधनादीनां धृतराष्ट्रसंबन्धिनां भीष्मादीनां च स 'तस्य सञ्जनयन् हर्ष'मित्यादिना 'स शब्दस्तुमुलोऽभवत्' इत्यन्तेन उक्तः घोषः अधार्तराष्ट्राणां धार्तराष्ट्रविरोधिनां पाण्डवानां तदीयानां च हृदयानि व्यदारयदिति काकु ॥ २न व्यदारयदित्यर्थः ॥ पाण्डवानां शंखघोषः धार्तराष्ट्राणां तत्सदृशानामसतां असुराणां च हृदयानि व्यदारयत् ॥ अधार्तराष्ट्राणां तद्भिन्नानां सतां भीष्मादीनां सुराणां च हृदयानि न व्यदारयत् ॥ ३ दुर्योधनादीनां तत्पक्षपातिनामसतामसुराणां च व्यथां सतां भीष्मद्रोणादीनां ब्रह्मेन्द्रादीनां देवानां च महान्तम् हर्षं चोत्पादयामास ॥ १९ ॥

१. त्वदीयानामिति वक्तव्ये धार्तराष्ट्राणामित्युक्तिः धृतराष्ट्रे स्वस्य कोपसूचनाय ॥ बहुवचनेन त्वत्पुत्रेषु तदा न कोऽपि धीरोऽवर्तत इति व्यज्यते ॥ २. तत्र 'स शब्दस्तुमुलोऽभव'दिति केवलमुक्त्वा अत्र 'स घोषो धार्तराष्ट्राणां हृदयानि व्यदारय'दित्युक्त्या अयमित्यप्ययमर्थः 'घोषोऽयं' इत्यनुक्त्वा 'स घोषः' इति विप्रकृष्टपूर्वोक्तपरामर्शितच्छब्दप्रयोगेण 'घोषः स धार्तराष्ट्राणां' इति वक्तव्ये 'स घोषोऽधार्तराष्ट्राणा'मित्यकारप्रश्लेषौपयिकप्रयोगेण च शब्दारूढो वाच्योऽपि भवतीत्यहो प्रा-दिमा शब्दप्रयोगस्य ॥ ३. अयमर्थः 'देवा अर्जुनतोऽभवन्' 'असुराः कर्णतोऽभवन्' इति तत्तत्पक्षपातवचनानुरोधात् अधार्तराष्ट्राणामित्यकारप्रश्लेषौपयिकप्रयोगानुरोधाच्च कल्पितः ॥ शब्दार्थप्रातिभमात्मना अर्थान्तरव्यञ्जनं हि महानुत्कर्षः प्रयोगस्य ॥ एवं तत्रतत्र शब्दार्थप्रतिभावशादर्थान्तरव्यञ्जनमूह्यम् ॥

धृतराष्ट्रः ॥ उभयसैन्यकोलाहलापरमानन्तरं किमासीत् ॥

सञ्जयः ॥ अथ व्यवस्थितान् दृष्ट्वा धार्तराष्ट्रान् कपिध्वज ॥

प्रवृत्ते शस्त्रसंपाते धनुरुद्यम्य पाण्डवः ॥ २० ॥

हृषीकेश तदा वाक्यमिदमाह महीपते ॥ २० ॥

अथेति ॥ हे महीपते अथ अनन्तरं कपि हनुमान् ध्वजे यस्य सः कपिध्वजः पाण्डोः अपत्यं पाण्डवः पार्थः वि विशेषेण अवस्थिताः व्यवस्थिताः तान् धार्तराष्ट्रान् दृष्ट्वा धनुः उद्यम्य शस्त्राणां संपातः शस्त्रसंपातः तस्मिन् शस्त्राणां संपातो यस्मिन् तत् शस्त्रसंपातं युद्धं तस्मिन्वा प्रवृत्ते सति तदा हृषीकेशं कृष्णं इदं वाक्यं आह॥२०॥२०॥

लोकोद्धारार्थं कृत्वा हृदयेऽवस्थापितस्य गीताशास्त्रस्य समये पार्थं व्याजीकृत्य लोकोद्धारार्थमुपदेशाय श्रीकृष्णस्य पार्थेन सह कुरुक्षेत्रागमन इति 'तत श्वेतैर्हयैः' इत्यत्र व्यञ्जनया सूचितं हि मया ॥ न हि नरांशादिन्द्रांशात् पैतृष्वसेयात् भगिनीपतित्वेन जामातृतामुपगतात् १ परमभक्तात् परममित्रात् पाण्डुपुत्रात् पार्थादृते भगवतः कृष्णस्य सकाशात् गीताशास्त्रोपदेशमाप्तुमर्हति कश्चिदन्यः ॥ स च पार्थः 'अतिपरिचयादवज्ञा सन्ततगमनादनादरो भवति ॥ मलये भिल्लपुरन्ध्री चन्दनतरुकाष्ठमिन्धनं कुरुते' इति न्यायेन २ सावज्ञतया न मम शिष्यतामुपगच्छेत् ॥ न च शिष्यभावावलंबनमन्तरेण युक्तः कर्तुमुपदेशः ॥ अतः शिष्योऽस्मि भोः उपदिश मे तत्वमिति यदा प्रार्थयेत तदाऽस्मै गीताशास्त्रमुपदेक्ष्यम् ॥ न हि वैराग्यभाग्योदयादृते शिष्यतामुपेत्य तत्वोपदेशमर्थयेत ॥ न च शोकविषादव्याकुलतामन्तरेण वैराग्यं जायतीति ॥ शोकविषादौ च म प्रियविप्रयोगदुःखदर्शनात् तदनुसन्धानाद्वा विना संभवतः ॥ अत एतं पार्थं बन्धुजनवियोगजदुःखानुसन्धानसञ्जातशोकविषादमूलकवैराग्यभाग्यवन्तमाधाय तेन शिष्यतामुपेत्यतत्वोपदेशमर्थयमानायास्मै गीताशास्त्रमुपदेक्ष्यामिति तादृशं समय प्रतीक्षमाणोऽवर्तत भगवान्

१. वक्ष्यते च ॥ 'भक्तोऽसि मे सखा चे'ति (४. ३.) ॥ २ वक्ष्यति च पार्थः 'सखेति मत्वा प्रसभं इत्यादि' 'देव सोढु'मित्यन्तं (११. ४१. ४२ ४३. ४४)

वासुदेवः ॥ सति चैवं द्वनवासाज्ञातवासनिर्वहणानन्तरं उपेत्य भगवति विराटनगरीं निर्वर्त्य चोत्तराकल्याणमहोत्सवं समये पुनरागमिष्यामि इत्युक्त्वा यथागतं गते साहाय्यकमभ्यर्थयितुं सुयोधनधनञ्जयौ द्वारवतीमेत्य भगवता कृष्णेन कुमाराणां कद्वेन केन चिदंशेन स्वेनापि केनचिदंशेन परिपूरितमनोरथौ स्वावासमुपागमताम् ॥ ततो भगवान् माधव उपेत्य पाण्डवान् सन्धिकरणव्याजेन युद्धमेव दृढीकृत्य समये गीताशास्त्रोपदेशसौकर्याय पार्थेन सामानाधिकरण्यं संपादयितुं तद्रथेऽवस्थानाय सारथ्यकरणमुररीकृत्य सह तेन तदीयैश्च कुरुक्षेत्रमेत्य पाञ्चजन्यशंखपूरणेन शंखपूरणप्रेरणेन च युद्धोत्साहमभिवर्ध्य. युद्धारंभात्पूर्वं बंधुदर्शनान्मोहमुत्पाद्य तेन च शोकविषादावुत्पाद्य तेषामपाकरणाय गीताशास्त्रमुपदिश्य तेन च विगतमोहशोकविषादमाधाय तादृशेन पार्थेन युद्धनिर्वर्तनं श्रुतगीताशास्त्राः सम्यक् ज्ञानमाप्य तेन विधूतमोहशोकविषादा भूत्वा वर्णाश्रमोचितविहितकर्मानुष्ठानेन शुद्धया बुध्या ज्ञानद्वारा मोक्षमाप्नुवन्तीति ज्ञात्वा बहवो गीताशास्त्रशुश्रूषवो भवेयुः ततश्च गीताशास्त्रस्य सर्वत्र सम्यक् प्रचारेण लोकोद्धारः स्यात् इत्यालोच्य युद्धारंभात्पूर्वमेव गीताशास्त्रमुपदिदिक्षुः उपदेशग्रहणयोग्यतोत्पादनाय मोहशोकविषादानुत्पिपादयिषु हृषीकेशत्वात्स्वस्य स्वीयया प्रेरणाशक्त्या युद्धायोपागतबन्धुजनदिदृक्षामुत्पादयामास ॥ प्रेरितश्चैवं हरिणा सद्यएव युद्धाडंबरे प्रवर्तयितव्ये तमप्रवर्त्य सारथितयाऽवस्थितं भगवन्तं उभयसैन्यस्थितबन्धुजनदर्शनाय रथमिमं किञ्चित्पुरतो नीत्वा द्वयो सेनयोर्मध्ये स्थापयेत्याह पार्थः ॥ लोके तावत् व्यवहारविमर्शस्थानेषु वादिप्रतिवादिनोर्मध्ये कस्यचिदुभयोर्वा असौकर्यानुरोधेन अवध्यन्तरकल्पनं दृश्यते ॥ तद्वत् मदीयानां स्वस्य वा असौकर्यानुरोधेन नार्जुनो युद्धाडंबरं प्रावर्तयत् इति किं न स्यात् इति चेत् उभयसैन्यकोलाहलोपरमानन्तरं त्वदीयाः भीष्मादयश्च सम्यक् युद्धसन्नद्धतयाऽवस्थिताः अतस्तेषां असौकर्यानुरोधान्न प्रावर्तयदिति वक्तु न शक्यम ॥ पार्थस्तु तादृशान् तावकान् दृष्ट्वा धनुरुदयच्छत् ॥ उद्यम्य च तद्वनमध्य सज्जीकृत्य शरमपि तत्र [१]सन्धायसमनह्यत ॥ कुतस्तस्य तादृशं धैर्यं इति चेत् परमशूरस्य त्वदनुजस्य पाण्डोः पुत्रः खलु सः ॥ किंच

१. अत एव 'विसृज्य सशरं चापं' इति वक्ष्यते (१.४७)

सारथिनया पुर स्थितेन भगवता उपरि ध्वजेऽवस्थितेन १ हनुमता च सन्धुक्ष्यमाणत्वत्पक्षशिक्षणदक्षश्चेव ॥ अत्र स्वस्य असौकर्यानुरोधेन न प्रावर्तयदित्यपि न वक्तुं युक्तम् ॥ किंतु भगवत. प्रेरणादेव न प्रावर्तयदिति वक्तव्यम् ॥ अतो भगवत्प्रेरणया शस्त्राणां तदुपलक्षितानामस्त्राणां बाणानां च सम्यक् पाते तद्युक्ते युद्धे वा प्रवृत्ते अव्यवधानेन २ प्रवर्तयितव्ये यत्थाङ्गस्य शंखपूरणादेरारब्धत्वेन युद्धे आरब्धे इति वा यद्योद्योगं विहाय युद्धोद्यमकरणकाले हृषीकेशत्वात्सर्वप्राणिसकलेन्द्रियप्रेरकं भगवन्त हरिं वक्ष्यमाण वाक्यमाह ॥ महीपते सम्यगवधेहीदम् ॥ आयास्यन्तीम इमे उत्थाय योद्धव्य च मया क्यादिभिर्गभिरिति ज्ञातसकलोदन्तः गाण्डीवसज्यीकरणपूर्वकशरसन्धानपर्यन्तं प्रवृत्त प्रवीरतमः पार्थ. कुत प्रवर्तयितव्य सङ्गराडंबरं विहाय योद्धुमागतजनजिज्ञासावानभूदिति चेत् न स स्वयं तथा जातः किंतु सकलेन्द्रियप्रेरकश्रीकृष्णप्रेरणया ॥ अन्यादृशी हि प्रेरणाशक्तिस्तस्य ॥ तस्य तथा प्रेरणा च विषादमर्जुनस्यापाद्य तदपनोदनाय तत्वमुपदिश्य तेन लोकोद्धारकरणाय ॥ २० ॥ २०॥ ॥

धृतराष्ट्र: ॥ किं तद्वाक्यम् ॥ यद ॥

सञ्जय. ॥ सेनयोरुभयोर्मध्ये रथ स्थापय मेऽच्युत ॥ २१ ॥

सेनयोरिति ॥ न विद्यते च्युतं यस्य सः अच्युत. हे अच्युत कृष्ण उभयो द्वयोः सेनयोः मध्ये मे रथं स्थापय ॥ २१ ॥

उभयो सेनयोर्मध्ये मे रथं स्थापय ॥ यतस्त्वमच्युतोऽपि आश्रितवात्सल्यान्मम सारथिरभू ॥ न विद्यते च्युतं च्युति स्वपदात् देशकालगुणेभ्यश्च यस्य सः तादृशोऽसि त्वम् ॥ अतात् विष्णोः च्युतः तदवतारभूतः तादृशस्त्वमसि ॥ न विद्यते च्युतं च्युति. यस्मात् यं प्राप्य स. अनपायनित्यपदप्रद. तादृशस्त्वमसि ॥ न विद्यते च्युत च्युति येन संनिहितेन सः स्वसन्निधानमात्रेण जयप्रदः तादृशोऽसि त्वम् ॥ न विद्यते च्युत च्युतिः सारथिकर्माणे यस्य स. यथेष्टं स्थापने प्रेरणे च समर्थः तादृशस्त्वमसि ॥ अतो नेदं तवाशक्यम् ॥ अत एवैवमुच्यते मध्ये स्थापयेति ॥ २१ ॥

१. हरिर्गुर्वनुप्रदद्वतः किमसाध्यं इति भाव. ॥

कृष्णः ॥ किमर्थं मध्ये रथस्थापनम् ॥ ब्रूहि ॥

अर्जुनः ॥ यावदेतान्निरीक्षेऽहं योद्धुकामानवस्थितान् ॥
कैर्मया सह योद्धव्यं अस्मिन् रणसमुद्यमे ॥ २२ ॥

यावदिति ॥ अहं अस्मिन् रणस्य समुद्यमः रणसमुद्यमः तस्मिन् कैः सह मया योद्धव्यं मया सह कैः योद्धव्य इति ज्ञातुं योद्धुं कामः येषां ते योद्धुकामाः तान् अवस्थितान् व्यवस्थितान् एतान् यावत् निरीक्षे निरीक्षिष्ये ॥ २१ ॥

योद्धुमिच्छयाऽवस्थितान् एतान् अहं [1] निरीक्षिष्ये ॥ किमर्थं निरीक्षितव्यम् इति चेत् कैः सह मया योद्धव्यं मया सह कैः योद्धव्यं इति ज्ञातुं निरीक्षितव्यम् ॥ कैः सह मया योद्धव्यं कैः सह मया अ योद्धव्यं इति ज्ञातुं इति वा ॥ मया अ सह इति च्छेद ॥ के योद्धव्या [2] के पूज्यतया युद्धात्परिहर्तव्याः इति ज्ञातुं इति वा ॥ कैः सहायभूत [illegible] चक्ररक्षादिभिस्सहितेन मया अन्यैर्योद्धव्यं इति ज्ञातुं इति वा ॥ [illegible] वा ॥ यावति देशे स्थित्वा निरीक्षे तावति देशे स्थापय ॥ [illegible] तावन्तं कालं स्थापय ॥ इत्यर्थः ॥ यदि कैः शत्रुभि सह मया यो[illegible] विवक्षित तर्हि उभयो सेनयोर्मध्ये रथं स्थापयेत्युक्ति- [illegible] पुरोऽवस्थितानां शत्रूणां दर्शनसंभवात्॥ पुर[illegible] पृष्ठ[illegible] स्वकीयानां च दर्शनार्थं किल मध्ये रथं स्थापयेत्याह ॥ अत [illegible] परकीयैः सह मया योद्धव्यं कैः स्वकीयैस्सह स[ह]ितेन मया योद्धव्यं इत्युभयमपि [3] विवक्षणीयम् ॥ २२ ॥

कृष्णः ॥ सेनयोरुभयोर्मध्ये रथं स्थापयिष्यामि ॥ किमर्थं त्वरसे ॥

१ निरीक्ष [illegible] तत्पदमहिम्ना निरीक्षिष्ये इत्यर्थः ॥ 'यावत्पुरानिपातयोर्लट्॥ इति (३. ३. ४.) सूत्रेन ॥ [illegible] च ॥ आचार्याः पितरः (१ ३४.) ॥ 'धार्तराष्ट्रान् सबान्धवान्' (१. ३७.)॥ 'कथं भीष्ममहं सङ्ख्ये द्रोणं च' (२. ४) ॥ 'गुरूनहत्वा' (२. ५.) ॥ इत्यादि ॥ ३ वक्ष्यते च ॥ 'सेनयोरुभयोरपि ॥ तान् समीक्ष्य स कौन्तेयः सर्वान् बन्धूनवस्थितान्' (१. २७) इति ॥

**अर्जुनः ॥ योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः ॥**
**धार्तराष्ट्रस्य दुर्बुद्धेः युद्धे प्रियचिकीर्षवः ॥ २३ ॥**

**योत्स्यमानानिति ॥** ये एते दुष्टा बुद्धिः यस्य सः दुर्बुद्धिः तस्य दुर्बुद्धेः धृतराष्ट्रस्यापत्यं धार्तराष्ट्रः तस्य धार्तराष्ट्रस्य दुर्योधनस्य युद्धे कर्तुमिच्छवः चिकीर्षवः प्रियं चिकीर्षवः प्रियचिकीर्षवः सन्तः अत्र परसेनायां समागताः योत्स्यमानान् युद्धं करिष्यतः तान् अहं अवेक्षे अवेक्षिष्ये ॥ २३ ॥

ये एते दुर्बुद्धेः धार्तराष्ट्रस्य दुर्योधनस्य युद्धे प्रियं चिकीर्षवः सन्तः अत्र परसेनायां समागताः ये एते तस्य युद्धे १अप्रियं चिकीर्षवः सन्तः अत्र अस्मत्सेनायां समागताः योत्स्यमानान् अव्यवहितोत्तरकाले युद्धं करिष्यतः तान् एतान् उभयोः सेनयोः स्थितान् २ परकीयान् स्वकीयांश्च अवेक्षिष्ये॥ उक्तरीत्या ज्ञातुं अवेक्षिष्ये॥ ये समागताः तान् योत्स्यमानान् अवेक्षे पश्यामि ॥ अव्यवहितोत्तरकाले युद्धारंभं कुर्युरिति भाति इत्यर्थः ॥ जाते युद्धारंभे तदनन्तरं अवेक्षणे किं कर्तुं शक्यम् ॥ प्रागेवावेक्षणे यैर्योद्धव्यं तैर्योद्धुं यैर्न योद्धव्यं तान् युद्धात्परिहर्तुं च शक्यम् ॥ अतोऽहं त्वरे ॥ किं पूज्यानवेक्ष्य युद्धात्परिहरणीयास्ते योद्धुमुपागतत्वेन संहरणीया एव हि ते इति चेत् दुर्योधने दाक्षिण्यात् तस्य प्रियं कर्तुमागताः नास्मासु द्वेषस्तेषां अतोऽवेक्षणीया एव ते ॥ दुर्योधन एव दुर्बुद्धिः न तु ते दुर्बुद्धयः ॥ दुर्योधनस्य दुर्बुद्ध्यैव एतावतोऽनर्थस्योद्भेदः ॥ एवमवेक्षणार्थं मध्ये रथं स्थापय इति भगवन्तमाह पार्थः ॥ २३ ॥

धृतराष्ट्रः ॥ एवमुक्तो भगवान् किमयं साधारणसारथिबुद्ध्या एवमेवं कुर्विति प्रेरयति इत्यकुप्यत् ॥ उत तस्मिन् वत्सलतया यथोक्तमकरोत् ॥ वद मे सञ्जय ॥

१. युद्धे प्रियेत्यत्र युद्धे अप्रियेति च्छेदादिदं॥ २ पूर्वश्लोकः योद्धुमागतस्वीयविषय ॥ कैः सहितेन मया योद्धव्यं इत्येव तत्र विवक्षा ॥ उत्तरश्लोकस्तु योद्धुमुपागतपरकीयविषयः ॥ 'युद्धे प्रिये' त्यत्र युद्धे प्रियेत्येव च्छेदः ॥ इति केचित् ॥

सञ्जय उवाच ॥

एवमुक्तो हृषीकेशो गुडाकेशेन भारत ॥
सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम् ॥ २४ ॥

भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षिताम् ॥
उवाच पार्थ पश्यैतान् समवेतान् कुरूनिति ॥ २५ ॥

एवमिति ॥ हे भारत धृतराष्ट्र गुडाका निद्रा तस्या ईशः गुडाकेशः अर्जुनः तेन एवं उक्तः हृषीकेशः कृष्णः उभयोः सेनयोर्मध्ये रथानां रथेषु वा उत्तमः रथोत्तमः तं स्थापयित्वा भीष्मश्च द्रोणश्च भीष्मद्रोणौ तयोः प्रमुखं समक्षं भीष्मद्रोणप्रमुखं तस्मिन् भीष्मद्रोणप्रमुखतः सर्वेषां मही क्षियन्ति मह्यां क्षयन्ति वा महीक्षितः राजानः तेषां महीक्षितां च प्रमुखतः हे पार्थ समवेतान् सङ्गतान् एतान् कुरून् कुरून् प्रति समवेतान् एतान् अस्मदीयांश्च पश्य इति उवाच ॥ २४ ॥ २५ ॥

हे शकुन्तलापुत्रभरतचक्रवर्तिकुलोत्पन्न धृतराष्ट्र तादृशस्य तव नैवमपवित्रे पुत्रे वात्सल्यात्परमपवित्रेषु पाण्डुपुत्रेषु द्वेष उचित ॥ शृणु तेषु भगवतो वात्सल्यातिशयम् ॥ गुडाकेश अर्जुन गुडवत् रक्ताः स्निग्धाश्च आ समन्तात् केशाः यस्य स इति गुडाका निद्रा उपलक्षणया तन्द्रादिदोषान्तराणि च तस्याः ईश इति गुडाका निद्रा अविद्या तस्या ईश इति गुडः ब्रह्माण्डगोलः तं अकति अन्तर्बहिश्च व्याप्नोतीति गुडवत् मधुरः सन् अकति भक्तान् प्राप्नोतीति वा गुडाकः शिवः सः ईशो यस्य स इति गुडा अङ्गुष्ठतर्जन्योर्योगरूपा मुद्रा तत्परिमिता केशाः यस्य स इति च निरुक्ति ॥ तेन प्रशस्तकेशहस्तेन दोषगन्धविधुरेण धृताविद्येन तपोविशेषाधिगतमहादेवप्रसादेन अर्जुनेन एवमुक्त हृषीकेश उक्तरीत्या सर्वप्राणिसकलेन्द्रियप्रेरकः कृष्णः भीष्मद्रोणयो प्रमुखतः प्रमुखे समक्षे सर्वेषां राज्ञां च [1]प्रमुखतः उभयो सेनयोर्मध्ये रथोत्तमं स्थापयित्वा भीष्मद्रोणप्रमुखतः इतरेषां सर्वेषां च राज्ञां समक्षे हे पार्थ युद्धार्थं सङ्गतान् एतान् कुरून् कुरून् प्रति समवेतान् एतान् अस्मदीयांश्च पश्य इति उवाच॥ प्रमुखत इति षष्ठ्यर्थे तसिल्प्रत्यय ॥ [2]भीष्मद्रोणादीनामित्यर्थः ॥ अनादरे

१ प्रमुखत इत्येकदेशस्यानुवृत्तिः ॥ २. भीष्मद्रोणौ प्रमुखे आदौ येषां इति विग्रहः ॥

षष्ठीयम्॥ भीष्मद्रोणादीन् शूरान् सर्वान् राज्ञश्च अनादृत्य मध्ये रथं स्थापयित्वा निर्भय उवाच इति वा ॥' भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षिताम् ॥ इत्यस्य पूर्वोक्तरीत्या येन उभयत्रान्वयः ॥ अर्जुन अज्ञः अतः भगवन्तं पामरसारथिमिवाज्ञापयन्नेवमेवं कुर्विति प्रेरयति यदि ज्ञाता स्यात् तर्हि नैवं प्रेरयेत् इति चेत् स गुडाकेशः धृताविद्यः तथापि स्वसकलेन्द्रियप्रेरकश्रीकृष्णप्रेरणया तथोवाच अतो नायं दोषस्तस्य॥ भगवानपि स्वप्रेरणया पार्थेन नियोजितः न तु पारतन्त्र्येण अतो नायं दोषस्तस्य ॥ हृषीकेशत्वात्सर्वप्राणिसकलेन्द्रियप्रेरकस्य भगवतः पार्थरथपार्श्वनहयमनोनियमनं क्रियते ॥ अतः यथाऽभिलषितं मध्ये रथं स्थापयित्वा दिदृक्षितान् पश्यत्याह पार्थ वासुदेवः ॥ २४ ॥ २५ ॥

धृतराष्ट्रः ॥ पश्येत्युक्तोऽर्जुनः किमकार्षीत् ॥ वद ॥

सञ्जयः ॥ तत्रापश्यत् स्थितान् पार्थः पितॄनथ पितामहान् ॥

आचार्यान्मातुलान् भ्रातॄन्पुत्रान् पौत्रान् सखींस्तथा॥२६॥
श्वशुरान् सुहृदश्चैव सेनयोरुभयोरपि ॥ २६॥ ॥

तत्रेति ॥ अथ अनन्तरं पृथा कुन्ती तस्याः अपत्यं पार्थः अर्जुनः तत्र तयोः उभयोः द्वयोः सेनयोरपि स्थितान् पितॄन् पितॄणां पितरः पितामहाः तान् आचार्यान् मातुः भ्रातरः मातुलाः तान् भ्रातॄन् पुत्रान् पुत्राणां पुत्राः पौत्राः तान् तथा सखीन् मित्राणि श्वशुरान् सुहृदः अनिमित्तस्नेहवन्तः तान् चैव अपश्यत् ॥ २६ ॥ २६॥ ॥

कृष्णवचनश्रवणानन्तरं भगवतः पितृष्वसुः पृथायाः कुन्त्याः पुत्रत्वेन भगवता उक्तरीत्या अनुगृह्यमाणः अर्जुनः तत्र स्थितानपश्यत् ॥ कुत्र स्थितान् कानपश्यत् इति चेत् तत्रेत्यस्य विवरणं उभयोः सेनयोरपीति ॥ तत्र तयोः उभयोः सेनयोरिति वा ॥ तत्र तेषु समवेतेषु कुरुषु कुरून् प्रति समवेतेषु स्वकीयेषु च स्थितान् इति वा ॥ तत्र पक्षद्वये इति वा ॥ उभयोः सेनयोरपीत्येतस्य तु उभयोः सेनयोरपि अत्र स्थितान् इत्युत्तरेणान्वयः ॥ पितुः पाण्डोस्तत्राभावात्पितॄनिति कथम् ॥ एकः खलु पिता स्यात् कथं पितॄनिति बहुवचनम् ॥ इति चेत् पितृत्वतुल्यस्य पितृव्यत्वादेरत्र विव-

क्षणात् पितॄनित्युपपद्यते ॥ एवं पितामहान् इत्यत्रापि ॥ आचार्यानित्यादौ आचार्यत्वादिकं तत्तुल्यत्वं चेत्युभयं ग्राह्यम् ॥ सखायः मित्राणि सुहृदस्तु अनिमित्तस्नेहयन्त ॥ उभयोः सेनयोरपि स्थितान् पित्रादीनपश्यत् ॥ २६ ॥ २६॥ ॥

सञ्जयः ॥ तान् समीक्ष्य स कौन्तेयः सर्वान् बन्धूनवस्थितान् ॥२७॥
कृपया परयाऽऽविष्टो विषीदन्निदमब्रवीत् ॥ २७॥ ॥

तानिति ॥ कुंत्याः पुत्रः कौन्तेयः सः अर्जुनः अवस्थितान् तान सर्वान् बन्धून समीक्ष्य परया अतिशयितया कृपया आविष्टः सन् विषीदन् विषादं प्राप्नुवन् सन् इदं अब्रवीत् ॥ २७ ॥ २७॥ ॥

उभयोः सेनयोरपि तुल्यसन्नद्धतया स्थितान् [illegible] सर्वान् [illegible] समीक्ष्य स पार्थः अपरिहार्यया कृपया आविष्टोऽभूत् ॥ कृपा परदुःख[illegible] ॥ अतएव विषादं प्राप्तः ॥ विषादो नाम मोहनिमित्तकशोकजन्य १ [illegible] यस्मिन् सति सर्वव्यापारोपरमो भवति ॥ विषीदन् सन् वक्ष्यमाणं वचनमब्रव[illegible] कृपया व्याप्त-युक्तः इत्यनुक्त्वा आविष्ट इत्युक्तया भूतप्रेतपिशाचाद्यावेशयु[illegible] विवशः किमपि किमपि असंबद्धमब्रवीदिति सूच्यते ॥ कृपामाविष्ट इत्यनुक्त्वा [illegible] कृपया आविष्ट इत्युक्तया शत्रुषु तत्संबन्धिषु च कृपा न युक्तेति जान[illegible] [illegible]चिकेव कृपा बलात्कारेण प्राविशदिति सूच्यते ॥ परममृदुस्वभावाया कुन्त्या [illegible]दर्शनमात्रेण कृपाविष्टोऽभूत् ॥ कृपया अपरया इति छेदः ॥ स्वसैन्ये पुराऽपि कृपाऽभूत् तस्मिन् समये तु परसैन्येऽपि अपरा कृपाऽभूत् ॥ तया आविष्टः सन् अतः विषीदन् सन् २ इदमब्रवीदिति वा ॥ २७ ॥ २७॥ ॥

धृतराष्ट्रः ॥ किं तद्वचनं वद ॥

सञ्जयः ॥ दृष्ट्वेमान् स्वजनान् कृष्ण युयुत्सून् समुपस्थितान् ॥ २८ ॥

---

१. अत एव वक्ष्यते ॥ 'क्षुद्रं हृदयदौर्बल्य' ( २ ३.) मिति ॥ २. विषीदन्नब्रवीदिति विषादवचनयोः समकालतोक्त्या वचनकाले सगद्गदकंठत्वाश्रुपातादिविषादकार्यसद्भावः सूच्यते ॥

सीदन्ति मम गात्राणि मुखं च परिशुष्यति ॥
वेपथुश्च शरीरे मे रोमहर्षश्च जायते ॥ २९ ॥

गाण्डीवं स्रंसते हस्तात् त्वक् चैव परिदह्यते ॥
न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः ॥ ३० ॥

दृष्ट्वेति ॥ कर्षतीति कृष्णः हे कृष्ण योद्धुं इच्छवः युयुत्सवः । तान् युयुत्सून् सं सम्यक् उप समीपे स्थिताः उपस्थिताः तान् इमान् स्वे च ते जनाश्च स्वजनाः तान् स्वजनान् बन्धून् दृष्ट्वा मम गात्राणि सीदन्ति दुर्बलीभवन्ति मुखं च परिशुष्यति मे शरीरे वेपथुः कंपश्च रोम्णां हर्षः रोमहर्षः रोमाञ्चः स च जायते ॥ हस्तात् गाण्डीवं स्रंसते त्वक् परि सम्यक् परितो वा दह्यते चैव अवस्थातुं च अपि न शक्नोमि मे मनः भ्रमतीव च ॥ २८ ॥ २९ ॥ ३० ॥

हे कृष्ण योद्धुं इच्छया युत्थसन्नद्धतया आगत्य पुरतः समीपेऽवस्थितान् इमान् सर्वान् बन्धून् दृष्ट्वा स्थितस्य मम करचरणाद्यवयवाः विशीर्यन्ते दुर्बलीभवन्ति मुखं च नितरां शुष्यति ॥ मम शरीरे कंपश्च जायते रोमाञ्चश्च जायते ॥ हस्तात् १ गाण्डीवं धनुः स्रंसते त्वक् नितरां दह्यते चैव ॥ अवस्थातुमपि न शक्नोमि ॥ कुत इति चेत् मम मनः भ्रमतीव ॥ इव शब्दो वाक्यालङ्कारे ॥ भ्रमात्मकविपरीतज्ञानयुक्तम् भवति ॥ किमपि किमप्यसंबद्धं मम मनसि स्फुरति ॥ भ्रमणं परिभ्रमणं तत्करोतीव ॥ भ्रमणकर्तृ इवेति यावत् ॥ परिभ्रमत्कुलालचक्रादौ क्षिप्तः पदार्थ इव नैकोऽपि विषयः क्षणमपि मे मनस्यवतिष्ठते ॥ भ्रमत् इति शतृप्रत्ययान्तं ॥ सप्तमी ॥ भ्रमति कुलालचक्रादौ क्षिप्तं वस्त्विव तत् नैकस्मिन्नपि विषये क्षणमप्यवतिष्ठते॥ २ त्वं तु पूर्णानन्दं परब्रह्मासि ॥ अतो दुःखापरिज्ञानादेव युद्धे प्रवर्तयसि ॥ ३ पुण्यं पापं

१. गाण्डीवशब्दो ह्रस्वमध्यो दीर्घमध्यश्च ॥ 'गाण्डीवमेतेन मुहुर्विकृष्टं ह्रस्वं च दीर्घं च बभूव युद्धे ॥ तुलामिवर्णेन तदाऽधिरोढुं स्वनामधेयस्थितिशालिनेव' ॥ इति श्लोकोऽनुसन्धेयः ॥

२. 'कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ॥ विष्णुस्तद्भावयोगाच्च कृष्णो भवति सात्वतः' ॥ इति (भार. उ. ६९ अ) वचनमनुसन्धेयम् ॥

३. 'यतः कर्षसि देवेश नियम्य सकलं जगत् ॥ अतो वदन्ति मुनयः कृष्णं त्वां ब्रह्मवादिनः' ॥ इति कूर्मपुराणवचनमनुसन्धेयम् ॥

च कारयित्वा स्वर्गं नरकं च प्रति नरकान् कर्षसि अतः कृष्णोऽसि ॥ भीष्मादीन् हनन पापमवश्यं स्यात् ॥ कृतपापांश्च त्वं नरकान् प्रति कर्षसि ॥ न युक्तं नव प्रवर्त्य युद्धे तेन पापमापाद्य तत्फलानुभवाय नरकान प्रति मम कर्षणम्॥ अप्राकृतातिरुचिर [1]कृष्ण-वर्णवत्वाच्च कृष्णोऽसि ॥ परमसौन्दर्यराशे तव सारथ्येन शरीरायासजननमनुचितम् ॥ [2]भक्तजनदुःखकर्षणाच्च कृष्णोऽसि ॥ भक्तजनदुःखासहिष्णोस्तवदुःखजनके कार्ये मम प्रेरणमनुचितम् ॥ युद्धाय युद्धाङ्गणमागतान् बन्धून्दृष्ट्वा भावितन्नाशपर्यालोचनया मोहशोकविषादव्याकुलचेतसो मे माऽस्तु युद्धकथा ॥ अनुजानीहि मामवरुह्यसदनगमनाय ॥ २८ ॥ २९ ॥ ३० ॥

कृष्णः ॥ किमस्थाने तवेदमवस्थान्तरं धैर्यमवलंब्य युद्ध्वा श्रेयो लभस्व ॥

**अर्जुनः ॥ निमित्तानि च पश्यामि विपरीतानि केशव ॥ ३०॥ ॥**

**निमित्तानीति** ॥ हे केशव कृष्ण विपरीतानि निमित्तानि शकुनानि पश्यामि च ॥ ३०॥ ॥

अशुभसूचकापशकुनानि पश्यामि च ॥ दुर्निमित्तदर्शनसंजातभाव्यशुभसंभावनया युद्धे अवश्यं कुलनाशो भवेदिति बिभेमि ॥ [3]परमप्रशस्तकेशोपेत सर्वावयवोऽसि ॥ प्रशस्ताः केशाः अस्य सन्तीति केशव इति निरुक्तिः ॥ परमसुन्दरस्य ते दुर्निमित्ताकुलतया परमभयानके युद्धरङ्गे विनैव स्वस्वकीयप्रयोजनं अवस्थानमनुचितम् ॥ लक्ष्मीब्रह्मरुद्रादिप्रवर्तकोऽसि ॥ कश्च ई लक्ष्मीः सा च ईशश्च केशाः लक्ष्मीब्रह्मरुद्राः तान् वर्तयति प्रवर्तयति इति केशव इति निरुक्ति ॥ स्वयं सुखरूपः भक्तानां सुखप्रदश्चासि ॥ कानां सुखानां ईशं श्रेष्ठं केशं तत् वहति प्रापयति च केशवः इति निरुक्तिः ॥ प्रशस्तकेशशब्दितमत्स्यकूर्माद्यनेकांशोऽसि ॥ प्रशस्ताः केशाः अस्य सन्तीति केशवः इति निरुक्तिः ॥ समुद्रशायित्वात्केशवोऽसि ॥ कानां

1. 'अप्राकृतातिरुचिरमेचकः कृष्ण ईरितः'॥ इति सहस्रनामभाष्ये॥ 2. 'कर्षणाद्भक्तदुःखानां कृष्णं त्वां कवयो विदुः' ॥ इति कूर्मपुराणवचनमनुसन्धेयम् ॥ 3. 'प्रशस्तनीलकेशत्वात् केशवः परिकीर्तितः' इति सहस्रनामभाष्ये ॥

जलानां ईशः केशः समुद्रः केशे वर्तते इति केशवः इति निरुक्तिः ॥ उक्तरीत्या लक्ष्मीब्रह्मरुद्रादिप्रवर्तकस्य सुखरूपस्य सुखप्रदस्य मत्स्यकूर्माद्यैरनेकैरवतारैरुद्धृतसकललोकशल्यस्य महोदधिशयस्य परमात्मनस्तव दुर्योधनाद्यशिष्टदुष्टभ्रष्टजनानिरवशेषनिरसनेन भूभारपरिहरणं अनायाससाध्यम् ॥ कुतस्तदर्थं मां निर्बध्नासि ॥ ३० ॥ ॥

कृष्ण ॥ किं करिष्यन्तीमान्यपशकुनानि लभ्यते च युद्धे नियतं श्रेयः दुर्निमित्तोदयफलानुभवस्तु शत्रूणां भविष्यति इति धीरेण मन्तव्यम् ॥ कुत एवं विषीदसि ॥

अर्जुनः ॥ न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे ॥ ३१ ॥

न चेति ॥ आहवे युद्धे स्वश्चासौ जनश्चेति वा स्वस्य जनः इति वा स्वजनः तं हत्वा श्रेयः प्रयोजनं नानुपश्यामि च ॥ ३१ ॥

लभ्यते च युद्धे नियतं श्रेयः इति मन्तव्यमेव धीरेण ॥ शत्रूणां हननाच्छ्रेयो लभ्येत ॥ समवेताश्चास्मिन् युद्धे सर्वे बन्धवः बंधूनां हननं तु दुःखापकीर्त्योर्हेतुः ॥ अतो युद्धे स्वजनं हत्वा प्रयोजनं नानुपश्यामि च ॥ विचारय सम्यगनुं विषयम् ॥ ततः प्रयोजनं ज्ञायेत ॥ इति चेत् अनु विचारणात्पश्चादपि न पश्यामि ॥ ३१ ॥

कृष्णः ॥ श्रेयो नानुपश्यामीति कथमिदमुच्यते ॥ न च जयो निरर्थकः ॥ राज्यसुखकीर्तिरूपप्रयोजनसद्भावात् ॥ वद ॥

अर्जुनः ॥ न काङ्क्षे विजयं कृष्ण न च राज्यं सुखानि च ॥
किं नो राज्येन गोविन्द किं भोगैर्जीवितेन वा ॥ ३२ ॥

नेति ॥ हे कृष्ण विजयं न काङ्क्षे ॥ राज्यं च न काङ्क्षे ॥ सुखानि च न काङ्क्षे ॥ हे गोविन्द कृष्ण नः अस्माकं राज्येन किं ॥ भुज्यते सुखं एभिरिति भोगाः सुखसाधनानि तैः किं ॥ जीवितेन प्राणधारणेन वा किं ॥ ३२ ॥

निरर्थकत्वाज्जयं न कांक्षे ॥ न च राज्यसुखादीनि प्रयोजनानि ॥ मम तेषु कांक्षाया अभावात् ॥ यो हि यत् कांक्षति तत् तस्य प्रयोजनम् ॥ यदि जयं न कांक्षसि तर्हि 'अर्जुनः फल्गुनो जिष्णुः किरीटी श्वेतवाहनः ॥ बीभत्सुर्विजयः कृष्णः सव्यसाची धनञ्जयः' ॥ इति (भार. वि ४३. अ) त्वया परिगणितेषु स्वनामसु 'नाजित्वा विनिवर्तामि तेन मां विजयं विदुः' इति त्वया निरुक्तं विजय इति नाम तवापगच्छेत्

इति चेत् १ विजय इति नाम च न कांक्षे ॥ जयहेतुकं राज्यं च तद्धेतुकानि सुखानि च न कांक्षे ॥ हे २ कृष्ण न मां त्वम् निर्बधान ॥ राज्यं न कांक्षे इति कुत उच्यते ॥ स्पृहणीयं हि तत् इति चेत् न अस्माकं राज्येन किं प्रयोजनम् ॥ सुखसाधनभूतपदार्थलाभः प्रयोजनमिति चेत् किं भोगै ॥ भुज्यते सुखमेभिरिति व्युत्पत्त्या भोगाः सुखसाधनानि तै किं प्रयोजनम् ॥ तदनुभवजनितसुखमेव प्रयोजनमिति चेत् सुखे कांक्षाऽभावात् न तत् प्रयोजनम् ॥ सुखानि च न कांक्षे इति ह्युक्तं मया ॥ सुखसाधनतत्साध्यसुखयोरनपेक्षायां कथं जीवितुं शक्यं इति चेत् जीवितेन वा किं प्रयोजनम् ॥ अन्यायेन जीवनापेक्षया मरणं वरम् ॥ तव केवलमेवमाशय स्यात् युधिष्ठिरभीमनकुलसहदेवास्तु युयुत्सयाऽवतिष्ठन्ते ॥ अतः कथं तव युद्धान्निवृत्तिमनुमन्येय ॥ इति चेत् अहमिव युद्धान्निवृत्तिं तेऽप्यभ्युपगच्छेयु. ॥ न पञ्चानामस्माकमभिप्रायो भिद्येत ॥ अत एव न इति बहुवचनम् ॥ एवं वयं अस्मान् अस्माभि. इत्यादावप्यूह्यम् ॥ गा. ज्ञानगभस्तीन् विन्दति प्राप्नोतीति गोभिः वेदैः वेद्यते ज्ञायते इति वा गाः वेदान् विन्दति लभते जानाति इति वा गा वेदवाचः विन्दति प्रतिपादकत्वेन प्राप्नोतीति वा गां नष्टां भूमिं वराहरूपेण विन्दति लभते इति वा गवा वाचा विं विष्णुं ददातीति वा गोरूपान् अविरूपान् असुरान् द्यति खण्डयतीति वा गोविन्दोऽसि॥ एतादृशमहामाहात्म्योपेतं त्वां सर्वात्मना संश्रितस्य मम न राज्यादिनिहीनप्रयोजनेषु ३ कांक्षोदेति ॥ बहिरेवं वदसि अन्तस्तु स्पृहणीयेषु राज्यादिषु कांक्षा स्यादेवेति चेत् सर्वप्राणिसर्वेन्द्रियमनोवृत्तिसाक्षितया गोविन्दोऽसि ॥ गा इन्द्रियाणि अधिष्ठानतया विन्दतीति व्युत्पत्तिः ॥ अतो जानास्येव ममाशयं त्वम् ॥ अतो युद्धान्निवृत्तिमनुमन्यस्व ॥ ३२ ॥

कृष्णः ॥ राज्यादीनां स्पृहणीयत्वेऽपि तेषु कांक्षाभावात् न तानि प्रयोजनानि इति त्वयाऽभिहितम् ॥ कांक्षणीयेषु कांक्षाऽभावस्य को हेतुः ॥ ब्रूहि ॥

१. अर्थपरस्यापि विजयपदस्य शब्दपरत्वं विवक्षया प्रयोगप्रौढिवशादवगन्तव्यम् ॥ विजयत्वं इति भावप्रधानं वा ॥ विजयशब्दप्रवृत्तिनिमित्तस्य विजयस्यापगमे तत्प्रवृत्तिनिमित्तकविजयशब्दोऽप्यपगच्छेत् इत्यर्थलब्धं वेदम् ॥ २. उक्तार्थं (२८) ॥ ३ वक्ष्यते च 'कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुं' इति ॥ अत्र, सद्यस्त्यजन्ति वरद त्वयि बद्धभावाः पैतामहादिषु पदेष्वपि भावबन्धम् ॥ कस्मै स्वदेत सुखसञ्चरणोत्सुकाय कारागृहे कनकशृङ्खलयाऽपि बन्धः'॥ इति श्लोकोऽनुसन्धेयः

**अर्जुनः ॥ येषामर्थे कांक्षितं नो राज्यं भोगाः सुखानि च ॥**

**त इमेऽवस्थिता युध्दे प्राणांस्त्यक्त्वा धनानि च ॥३३॥**

**येषामिति** ॥ येषां अर्थे निमित्ते नः अस्माकं राज्यं भोगाः सुखानि च इत्येतत् कांक्षितं ते इमे प्राणान् धनानि च त्यक्त्वा युध्दे अवस्थिताः ॥ ३३ ॥

लोके सुखसाधनानि स्वयं केवलं सुखमनुभवितुं न कांक्ष्यन्ते ॥ किंतु पुत्रपौत्र मित्रबन्धुवर्गादिभिस्सह सुखमनुभवितुम् ॥ इति प्रसिध्दम् ॥ येषां अर्थे निमित्ते राज्य भोगाः सुखानि च इत्येतत् अस्माकं[1] कांक्षितम् ॥ ते इमे प्राणान् त्यक्त्वा धनानि च-त्यक्त्वा तत्त्यागपर्यन्त निश्चयं कृत्वा युध्दे अवस्थिताः ॥ कृते च युध्दे नियतमेव मरिष्यन्ति ॥ तानन्तरेण सुखसाधनानुभवो न सुखं साधयेत् ॥ प्रत्युत दुःखमेव साधयेत् ॥ अतो राज्यादिकं सुखं च नकांक्षे ॥ ३३ ॥

कृष्णः ॥ येषामर्थे राज्यादिकांक्षा त इमे मर्तुमवस्थिताः इत्युक्तं के ते ब्रूहि ॥

**अर्जुनः ॥ आचार्याः पितरः पुत्राः तथैव च पितामहाः ॥**

**मातुलाः श्वशुराः पौत्राः स्यालाः संबन्धिनस्तथा ॥ ३४ ॥**

**आचार्या इति** ॥ आचार्याः पितरः पुत्राः तथा पितामहाश्चैव मातुलाः श्वशुराः स्यालाः पत्नीभ्रातरः तथा नानाविधसंबन्धान्तरवन्तः ॥ ३४ ॥

आचार्यादयः ते इमे इति पूर्वेणान्वयः ॥ ३४ ॥

**कृष्णः** ॥ यदि त्वं कृपावेशेन युध्दादुपरमसे तर्हि निवृत्तं युध्दात्त्वां एते निहन्युः ॥ तवैव एतेषां कृपाऽनुदयात् ॥ अतो युध्यस्व युध्दे चैतान् जहि किं ब्रवीषि ॥

**अर्जुनः ॥ एतन्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन ॥**

**अपि त्रैलोक्यराज्यस्य हेतोः किन्नु महीकृते ॥ ३५ ॥**

१. राज्यं कांक्षितं भोगाः कांक्षिताः सुखानि च कांक्षितानि ॥ कांक्षितं च कांक्षिताश्च कांक्षितानि च कांक्षितं इति वा ॥

एतानिति ॥ मधुं सूदयतीति मधुसूदनः हे मधुसूदन कृष्ण त्रयो लोकाः त्रैलोक्यं त्रैलोक्यं च तत् राज्यं च इति वा राज्ञः भावः राज्यं त्रैलोक्यस्य राज्यं इति वा त्रैलोक्यराज्यं तस्य हेतोरपि घ्नतोऽपि एतान् हन्तुं नेच्छामि ॥ मह्याः भूमेः कृते महीकृते एतान् हन्तुं इच्छामि किन्नु ॥ ३९ ॥

त्वदुक्तरीत्या युद्धान्निवृत्त मां १हन्युरेव हन्ति चेत् घ्नन्तु घ्नतोऽपि एतान् अहं २हन्तुं नेच्छामि ॥ महत चतुस्समुद्रान्तमहीराज्याख्यप्रयोजनस्य सत्वात्कर्तव्यमेव त्वया युद्धमिति चेत त्रैलोक्यराज्यस्य हेतोरपि हन्तुं नेच्छामि ॥ ३ त्रैलोक्यराज्या-पेक्षया अत्यल्पकेवलमहीमात्रनिमित्तं हन्तुमिच्छामि किन्नु ॥ हन्तुं नैवेच्छामि ॥ ४ मधु तन्नामानं असुरं सूदयति हन्ति इति मधु विद्वज्जनानामिन्द्रियं सूदयति आत्मनि प्रापयति इति वा मधु सुख सुखलेशोपेतं संसारं सूदयति इति वा मधुसूदनोऽसि ॥ सूदः पाचकः मधुसूदः स्वादुपाचक तं भीमसेनं नयति प्रेरयतीति मधुसूदनोऽसि॥ मा मां निर्बध्नान भीमसेनं युद्धे प्रवर्त्य तेन कार्यं निर्वह शत्रुसूदनशी-लत्वात्त्वं मां युद्धे प्रेरयसि॥ स्वस्मिन् मनःप्रवर्तनेन संसारनाशनशीलस्य तव संसारे प्रवर्तनमनुचितम् ॥ भीमसेनोपलक्षितसर्वपाण्डवसुखापादनशीलस्य तव बन्धुना-शेन महादुःखहेतौ समितौ तेषां प्रवर्तनमनुचितम् ॥ वेदापहारिमधुनामकदैत्यसंहर्तृ-त्वेन वैदिकमार्गप्रवर्तकस्य तव अवैदिके वेदविरुद्धे आचार्यहननादौ प्रेरणमनुचितम् ॥ अतो मामनुजानीहि युद्धान्निवृत्य गमनाय ॥ ३९ ॥

कृष्णः ॥ 'अपि त्रैलोक्यराज्यस्य हेतोः किन्नु महीकृते '॥ इति कथमुच्यते ॥ राज्यादिलाभे ऐहिकं सुखमनुभवितुं शक्यम् ॥ राज्यादिलाभस्तु युद्धेनैव ॥ अत ऐहिकसुखानुभवाय युध्यस्व ॥ 'न च राज्य सुखानि च ' इत्युक्तं हि मया इति चेत् अनिषिद्धन्याय्यसुखाननुभवे आत्मद्रोही खलु स्याः ॥ 'अनिषिद्धसुखत्यागी पशुरेव न संशयः ॥ इति हि वदन्ति ॥ किंच आविवाहात् स्वसुभम सुभद्राया

१ वक्ष्यते च ॥ यद्यप्येते न पश्यन्ति लोभोपहतचेतसः' ॥ इति ॥ २. 'यदि मामप्रतीकारम-शस्त्रं शस्त्रपाणयः ॥ धार्तराष्ट्रा रणे हन्युः तन्मे क्षेमतरं भवेत् ' ॥ इति वक्ष्यते॥ ३. अवाप्य भूमावसपत्न-मृद्धं राज्यं सुराणामपि चाधिपत्य ' ॥ इति वक्ष्यते ॥ ४. मध्वाख्यमसुरं हन्ति सूरीणां करणं च वा ॥ उपसंहरति सर्वस्मिन् मधुसूदन इष्यते'॥ इति सहस्रनामसु निरुक्तिः ॥

न त्वया सुखगन्धोऽपि ॥ अतस्तया सह विविधभोगानुभवेन ऐहिकसुखावाप्तये तद्धेतुभूतराज्यादिप्रापकं युद्धमाचर ॥

अर्जुनः ॥ निहत्य धार्तराष्ट्रान्नः का प्रीतिः स्याज्जनार्दन ॥ ३५॥ ॥

निहत्येति ॥ हे जनार्दन कृष्ण धार्तराष्ट्रान् निहत्य नःअस्माक का प्रीतिः किं ऐहिकसुखं स्यात् ॥ ३५॥ ॥

धृतराष्ट्रस्य पुत्राः दुर्योधनादय धृतराष्ट्रसंबन्धिनो भीष्मद्रोणादयश्च धार्तराष्ट्रा ते हि युद्धे हन्तव्याः तैस्सह सुखानुभवार्थं राज्यादिलाभाय हि युद्धं कार्यं ॥ ते च युद्धे मरणोन्मुखा अवस्थिता । उक्तमेवेदं मया 'तइमेऽवस्थिता' इति ॥ तान्निहत्य अस्माकं किमैहिकसुखं स्यात् ॥ न किमपि ॥ युद्धेन राज्यादिलाभे लभ्येरन् किल गृहारामवसनवाहनभूषणादीनि सुखसाधनानि लब्धैस्तै सुखमवश्यं स्यादेवेति चेत् आचार्यादिनाशेन दुर्योधनादिबन्धुनाशेन च समुपजातेन बलवता दुःखेन प्रतिबन्धान्न सुखमुत्पद्येत ॥ दुर्योधनादिबन्धूनां दुष्टत्वेन तद्वधात्कथ दुःखोत्पत्ति इति चेत् दौष्ट्यानुसन्धानेन दुष्टबन्धुजनमरणस्य तदानीमिष्टत्वेऽपि सबन्धगुणाद्यनुसन्धानेन पश्चाद्दुःखहेतुत्वानुभवाद् दुःखोत्पत्तिवचनं युक्तम् ॥ अशोचन् किल विभीषणसुग्रीवादयो रावणवाल्यादिदुष्टबन्धुजनमरणेन तदीयदौष्ट्यानुसन्धानेन तन्मृतिं कांक्षमाणाः तदर्थं विविधं प्रयतमाना अपि तदीयगुणाद्यनुसन्धानेन ॥ अतः कृतेऽपि युद्धे ऐहिकसुखस्य उक्तरीत्या असंभवान्न तदर्थं युद्धं कुर्यां ॥ तर्हि दुर्योधनादिदुष्टजनविनाशः कथं स्यादिति चेत् त्वं जनार्दनोऽसि अतः त्वमेवैतान् संहर ॥ १ जननमरणादिरहितस्य भक्तजनसंसारदुःखनिरसनशीलस्य २ सदसज्जनानां सदसद्गतिप्रापकस्य ३ ब्रह्मादिभिर्याच्यमानस्य ४ स्वसंकल्पमात्रेण सकललोकसंहरणशीलस्य परमात्मनस्तव भूभारायमाणदुर्योधनाद्यसज्जनसंहरण कियत् ॥ अतस्त्वमेवमान् दुष्टान् संहर ॥ मा मां निर्बधान ॥ इति त्वामहं याचे ॥ ३५॥ ॥

कृष्णः ॥ माऽस्तु युद्धादैहिकं सुखं भविष्यत्येव नियतमामुष्मिकं सुखं अतः पारत्रिकसुखार्थं युध्यस्व ॥

१ न जायत इति जनः अर्दयतीत्यर्दनः जनश्चासौ अर्दनश्च जनार्दनः । २ जनान् अर्दयति प्रापयतीति जनार्दनः॥ ३ जनैः अर्द्यते याच्यते इति जनार्दनः॥ ४ जनान् अर्दयति संहरतीति जनार्दन ॥

अर्जुनः ॥ पापमेवाश्रयेदस्मान् हत्वैतानाततायिनः ॥ ३६ ॥
तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान् सबान्धवान् ॥ ३६॥ ॥

पापमेवेति ॥ आततायिनः एतान् हत्वा स्थितान् अस्मान् पापमेवाश्रयेत् ॥ तस्मात् वयं बान्धवैः सहिताः सबान्धवाः तान् धार्तराष्ट्रान् हन्तुं नार्हाः ॥ ३६ ॥ ३६॥ ॥

१आततायिनः अस्मान् हन्तुमुद्यतान् एतान् धार्तराष्ट्रान् हत्वा अस्मान् पापमेवाश्रयेत् न तु पुण्यम् ॥ पापं आश्रयेदेव ॥ न तत्र संशयः ॥ पापग्रस्तानां तु पारत्रिकसुखं दूरतोऽपास्तं प्रत्युत पारत्रिकं दुःखं नियतम् ॥ आततायिनः हत्वा अस्मान् पापमाश्रयेदिति न वक्तु युक्तम् ॥ 'अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः ॥ क्षेत्रदारापहारी च षडेते आततायिनः ॥ आततायिनमायान्तं हन्यादेवाविचारयन् ॥ नाततायिवधे दोषो हन्तुर्भवति कश्चन ' ॥ इति मनुस्मृतौ आततायिवधाभ्यनुज्ञानात् ॥ इति चेत् आततायिवधाभ्यनुज्ञानं आचार्यादिव्यतिरिक्तविषयं अतः आततायित्वेऽपि भीष्मद्रोणादयो न हन्तव्याः ॥ यद्यपि दुर्योधनादयः आततायित्वेन हन्तव्याः तथाऽपि तदन्यानाततायिबन्धुजनसाहित्यात्तद्धनने बन्धुजनहननस्यापि प्रसक्त्या आततायिनोऽपि दुर्योधनादयो न हन्तव्याः ॥ तस्मात् सबान्धवान् धार्तराष्ट्रान् दुर्योधनादीन् भीष्मादींश्च हन्तुं वयं नार्हाः ॥ आततायिनां सहायीभूय अस्मान् हन्तुमुद्यततया आततायिबन्धवोऽप्याततायिन एव ॥ अत बन्धुसहिता अपि दुर्योधनादयो हन्तव्या एव ॥ अग्निदत्वादिषु षट्सु दोषेषु अन्यतमेन एकेन दोषेण युक्ता अपि आततायित्वाद्धन्तव्याः किमुत षड्भिरप्येतैरुक्तैर्दोषैर्युक्ता इमे इति चेत् आततायिवधो मन्वादिभिरभ्यनुज्ञायते न तु विधीयते ॥ यस्याकरणे प्रत्यवायः तद्विधायकं शास्त्रं धर्मशास्त्रं यस्याकरणे न प्रत्यवायः किंतु करणे अभ्युदयः तद्विधायकं शास्त्रमर्थशास्त्रम् ॥ अतः न हिंस्यात्सर्वाभूतानी ' ति शास्त्रं धर्मशास्त्रं आततायिनं हन्यादिति शास्त्रं तु अर्थशास्त्रम् ॥ अर्थशास्त्रधर्मशास्त्रयोर्विरोधे अर्थशास्त्राद्धर्मशास्त्रं बलवत् ॥ अर्थशास्त्रं तु प्रयोजनार्थत्वाद्दुर्बलम् ॥ ' अर्थशास्त्रात्तु बलवत् धर्मशास्त्रमिति स्थितिः ' ॥ इति याज्ञ-

१ आततं आधिकं यथा तथा अयते हन्तुं प्रवर्तन्ते इति आतत अधिकं पापं यन्ति प्राप्नुवन्ति इति आतं पं गयमान गात्रं तयन्ते जिघांसया गच्छन्ति इति वा आततायिनः ॥ आततायाः ' अग्निदो गरद ' इत्यादिनोक्ताः षड्विधा दोषाः एषां सन्तीति आततायिनः इति शङ्करानन्दीये ॥

वल्क्यस्मरणात् ॥ न हि लोके परं हिंसितवानिव स्वं हन्तुमुपागतं आततायिनं अहतवान् तेन दोषेण दण्ड्यते ॥ अतः आततायिनं हन्यादिति शास्त्रमर्थशास्त्रत्वा-न्नानुरुन्धीय ॥ अनुरुन्धीय च 'न हिंस्यात्' 'न हन्यात्' इत्यादि धर्मशास्त्रम् ॥ अत. अर्थशास्त्रानुरोधेन आततायिनोऽपि दुर्योधनादीन् न हन्यां ॥ आततायिवधा-भ्यनुज्ञानस्य आचार्यातिव्यतिरिक्तविषयतया भीष्मद्रोणादीनामाततायित्वेऽप्यहन्तव्य-त्वात् दुर्योधनादीनां अनाततायिबन्धुजनसाहित्येन आततायिवधाभ्यनुज्ञानशास्त्रस्य अर्थशास्त्रतया दुर्बलस्य प्रबलेन 'न हन्यात्' 'न हिंस्यात्' इत्यादिधर्मशास्त्रेण बाधितस्य दुर्योधनादिहननाप्रवर्तकत्वेन च तेषामप्यहन्तव्यत्वात् युद्धे च तेषां हननसं-भवात् अहन्तव्यानां तेषां हनने च पापावश्यंभावात् कृतपापानां च परलोके सुखाप्रा-प्तिदुःखप्राप्त्योर्नियतत्वात् नाहं पारत्रिकसुखार्थं युध्येय ॥ एतान् धार्तराष्ट्रान् हत्वा आततायिन आततायित्वं प्राप्तान् अस्मान् पापं आश्रयेदेव ॥ यदि महोपकारिणः पूज्यान् भीष्मादीन् उक्तरीत्या अहन्तव्यान् दुर्योधनादींश्च वयं हन्याम तर्हि वयमात-तायिन स्याम तादृशांश्चास्मान् पापमाश्रयेदेव ॥ तस्माद्वयं धार्तराष्ट्रान् हन्तुं नार्हाः ॥ इति. निरपराधान् युद्धान्निवृत्तान् अस्मान् हत्वा आततायित्वं प्राप्तान् एतान् धार्तरा-ष्ट्रानेव पापमाश्रयेत् आश्रयतु ॥ एतएवास्मद्वधेन पापिनो भूत्वा नश्यन्तु न तु वय-मेतद्वधेन नश्याम ॥ तस्मात् एते अस्मान् हन्तुमर्हाः ॥ वयं तु एतान् हन्तुं नार्हाः ॥ इति च योजनायां नोक्तशङ्कावकाशः विमृश्येदम् ॥ ३६ ॥ ३६॥ ॥

कृष्णः ॥ राज्यादिलाभादैहिकसुखस्य स्वधर्मानुष्ठानात्पारत्रिकसुखस्य च संभवात् कथं ऐहिकं पारत्रिकं च सुखं नेत्युच्यते ॥ वद ॥

अर्जुनः ॥ स्वजनं हि कथं हत्वा सुखिनः स्याम माधव ॥ ३७ ॥

स्वजनमिति ॥ हे माधव कृष्ण स्वश्चासौ जनश्च स्वस्य जनो वा स्वजनः तं हत्वा सुखं एषां अस्तीति सुखिनः सुखवन्तः कथं स्याम भवेम ॥ ३७ ॥

स्वजनव्यतिरिक्तशत्रुवधेन राज्यादिलाभा दैहिकसुखं स्यात्॥ हन्तव्यशत्रुहनना-त्पारत्रिकसुखं स्यात् ॥ हन्तव्यानां स्वजनत्वात् आततायित्वेऽपि उक्तरीत्या बन्धूनाम-हन्तव्यत्वात् अनाततायित्वे सुतरामहन्तव्यत्वात् न सुखमैहिकं नाप्यामुष्मिकं सुखम्॥ अतः स्वजनं हत्वा कथं उभयविधसुखवन्तः स्याम ॥ लोके पुराणादिषु च प्रसिद्धमे-

तत् मधुनामकयादवषवंशप्रसूतोऽसि ॥ यादवानां हननं नव हितं स्याद्वा मा परवि द्या तद्विषयत्वेन तत्प्रवर्तकत्वेन तत्फलप्रदत्वेन च तत्पतित्वान्माधवोऽसि॥ अतस्तत्सा धने समीचीने कर्मणि मम प्रेरणमुचितम्॥ लक्ष्मीपतिरसि ॥ अत सङ्कल्पमात्रेण विनैव युत्धादिकं सर्वसाम्राज्यलक्ष्मीवितरणसमर्थस्य नव परमाल्पमहीराज्यमात्रप्रापणाय बन्धुजनहनने प्रवर्तनमनुचितम्॥ अतो मामनुजानीहि विहाय युत्धोद्योगं गमनाय॥३७॥

कृष्ण ॥ किं त्वमेवमात्मान पण्डितं मन्यमान किमपि किमप्यसंबत्ध भाषसे॥ सन्ति च परपक्षे शास्त्रार्थवेत्तारो दुर्योधनादय महानुभावा भीष्मद्रोणादयश्च ॥ न किं ते शास्त्रार्थ जानन्ति यदि त्वयोच्यमानं शास्त्राभिमतम स्यात् तर्हि त्वमिव तेऽपि न कुतो युत्धान्निवर्तन्ते॥ अतो युत्धकरणस्य तैरङ्गीकृतत्वात् त्वयोच्यमानमिदमसङ्गतं॥ किं ब्रवीषि ॥

अर्जुनः ॥ यद्यप्येते न पश्यन्ति लोभोपहतचेतसः ॥
कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम् ॥ ३८ ॥

यद्यपीति ॥ एते दुर्योधनादयः भीष्मादयश्च कुलस्य क्षय. कुलक्षयः तेन कृतः कुलक्षयकृतः तं दोषं मित्राणां द्रोह. मित्रद्रोह. तस्मिन् मित्रद्रोहे पातकं पाप च पश्यन्ति यद्यपि जानन्त्येव ॥ लोभेन उपहतं लोभोपहतं चेत मन येषा ते लोभेन उपहतः लो· भोपहतः तस्मिन् चेतः येषां ते तादृशाः सन्त. कुलक्षयकृत दोषं मित्रद्रोहे पातकं च न पश्यन्ति नानुसन्दधते ॥ ३८ ॥

एते दुर्योधनादय· भीष्मादयश्च युत्धेन संभाव्यमानं कुलनाशकृते दोषं मित्रद्रो· हे पातकं च जानन्त्येव ॥ तथाऽपि इदानीं दुर्योधनादय· लोभेन राज्याभिलाषेण भीष्मादयस्तु लोभेन दुर्योधनस्य राज्यलाभो यथास्यात्तथा करणीयं इत्यभिलाषेण-विदूषितमनसः सन्तः तदुभयं १ नानुसन्दधते ॥ भीष्मादयः लोभेन उपहतो दुर्योधनः तस्मिन् चेतः येषां ते तादृशाः इति वा ॥ अतः एते न युत्धान्निवर्तन्ते ॥ ३८ ॥

कृष्णः ॥ दुर्योधनादय इव तदीया इव च यूयं भवदीयाश्च लोभोपहतचेतस एव ॥ ययं लोभेन उपहतं चेतः येषां ते तादृशा ॥ भवदीयास्तु लोभेन उपहता.

१ वक्ष्यते च ॥ ‘संमोहात्स्मृति विभ्रमः’ ॥ इति (२. ६३.)

पाण्डवाः तेषु चेतः येषां ते नादृशाः ॥ अन्यथा माऽस्तु युद्धमिति प्रागेव प्रतिषिद्धं स्यात् ॥ लोभोपहतचेतस्त्वेन युद्धे प्रवृत्य किमेवमकाण्डे प्रलपसि ॥ ब्रूहि ॥

अर्जुन ॥ कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम् ॥
कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्दन ॥ ३९ ॥

कथमिति ॥ हे जनार्दन कृष्ण कुलस्य क्षयः कुलक्षयः तेन कृतः कुलक्षयकृतः तं दोषं प्र सम्यक् पश्यन्तो जानंतः प्रपश्यन्तः तैः अस्माभिः अस्मात् पापात् निवर्तितुं कथं न ज्ञेयम् ॥ ३९ ॥

१ कुलक्षयकृतं दोषं सम्यक् पश्यामो वयं सम्यक् जानद्भिः त्वां सर्वदा सर्वथा ऽऽश्रितैरस्माभि अस्मात् युद्धरूपात् पापात् निवर्तितव्यम् हि । कथं निवर्तितुं न ज्ञेयम् ॥ आलोच्य निवर्तितुं प्रयतनीयमिति यावत् ॥ यद्येवं तर्हि कुतो प्रावर्तिढं इति चेत् त्वदुक्तरीत्या वयमस्मदीयाश्च लोभोपहतचेतसः अत एव २ युद्धे प्रावर्तिष्महि ॥ तथाऽपि न कुलनाशपर्यन्तमस्माभिस्तैरिवाविवेकेन स्थातव्यम् ॥ तथासति ३ त्वच्चरणैकशरणानां अस्माकं अस्मदीयानां च त्वच्चरणविमुखेभ्यस्तेभ्यस्तदीयेभ्यश्च को विशेषः ॥ अतः युद्धान्निवर्तितव्यमेव ॥ सर्वप्राणिसाधारणेन लोभेन युद्धप्रवृत्तानामप्यस्माकं त्वत्सन्निधानमहिम्ना त्वदनुग्रहमहिम्ना च बुद्धिः शुध्यति॥ अतो दोषमनुसन्दध्म ॥ अतो युद्धान्निवर्तनं माशास्महे ॥ ४ भक्तजनानां अपुनर्भवं साधयतस्तव त्वच्चरणैकशरणानामस्माकं नरकसाधने नानायोनिषु पुनःपुनर्जननसाधनं च युद्धे प्रवर्तनं अनुचितम् ॥ अतो दयस्व ॥ ३९ ॥

कृष्ण ॥ कोऽसौ कुलक्षयकृतो दोषः ॥ यमेते नानुसन्दधते॥ अनुसन्धध्वं च यूयम् ॥ तं विविच्य ब्रूहि ॥

अर्जुनः ॥ कुलक्षये प्रणश्यन्ति कुलधर्मास्सनातनाः ॥
धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत ॥ ४० ॥

१ उपलक्षणया मित्रद्रोहे पातकञ्च ॥ २. इद निवर्तितमित्यनेन लभ्यते ॥ ३. अस्माभिरिति गौरवसूचकबहुवचनादिदम् ॥ ४ जनं जननं अर्दयति नाशयतीति जनार्दनः इति निरुच्यमानजनार्दनपदलभ्यमिदम् ॥

अधर्माभिभवात्कृष्ण प्रदुष्यन्ति कुलस्त्रियः ॥
स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसंकरः ॥ ४१ ॥

सङ्करो नरकायैव कुलघ्नानां कुलस्य च ॥
पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रिया ॥ ४२ ॥

दोषैरेतैः कुलघ्नानां वर्णसङ्करकारकैः ॥
उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः ॥ ४३ ॥

उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन ॥
नरके नियतं वासो भवतीत्यनुशुश्रुम ॥ ४४ ॥

कुलक्षय इति ॥ कुलस्य क्षयः कुलक्षयः तस्मिन् कुलक्षये सति सना चिरं भवाः सनातनाः कुलस्य धर्माः कुलधर्माः प्र अधिकं नश्यन्ति नाशं प्राप्नुवन्ति ॥ धर्मे नष्टे नाशं प्राप्ते सति कृत्स्नं सर्वं उत अपि कुलं कृत्स्नं कुलमपि इति वा धर्मस्याभावः अधर्मः न धर्मः अधर्मः स च अभिभवति आक्रम्य निन्दितं करोति ॥ ४० ॥

अधर्मेति ॥ हे कृष्ण अधर्मेण अभिभवः अधर्माभिभवः तस्मात् कुलस्य स्त्रियः कुलस्त्रियः प्र अधिकं दुष्यन्ति दोषयुक्ता भवन्ति॥ हे वार्ष्णेय वृष्णयो यादवाः तत्कुलोद्भव कृष्ण स्त्रीषु दुष्टासु सतीषु वर्णस्य जातेः सङ्करः जात्यन्तरमेलनं जायते ॥ ४१ ॥

सङ्कर इति॥ सङ्करः, कुलस्य कुलं घ्नन्तीति कुलघ्नाः तेषां च नरकाय भवत्येव॥ एषां कुलस्य कुलघ्नानां च पितरः पिण्डश्च उदकं च पिण्डोदके पिण्डोदकयोः क्रिया पिण्डोदकक्रिया लुप्ता पिण्डोदकक्रिया येषां ते लुप्तपिण्डोदकक्रियाः सन्तः पतन्ति ॥ हि. प्रसिद्धम् ॥ ४२ ॥

दोषैरिति ॥ वर्णस्य सङ्करः वर्णसङ्करः तस्य कारकाः वर्णसङ्करकारकाः तैः एतैः कुलं घ्नन्तीति कुलघ्नाः तेषां कुलघ्नानां दोषैः शश्वत् चिरकालं भवाः शाश्वताः जातेः धर्माः जातिधर्माः कुलस्य धर्माः कुलधर्माश्च उत्साद्यन्ते नाश्यन्ते ॥ ४३ ॥

उत्सन्नेति ॥ हे जनार्दन कृष्ण उत्सन्नाः कुलधर्मा यैः ते उत्सन्नाः कुलधर्माः येषा ते च उत्सन्नकुलधर्मा. तेषा उत्सन्नकुलधर्माणां मनुष्याणा नरके वासः नियतं नियमेन भवति ॥ इति अनुशुश्रुम श्रुतवन्तः ॥ ४४ ॥

प्रायशोऽत्राखिलजगतीतलनिवासिनो राजानो राजपुत्राश्च युद्धार्थमागता वर्तन्ते ॥ यदि युद्धं क्रियेत तर्हि युद्धे सर्वेऽपि म्रियेरन् ॥ मृतेषु च तेषु तत्तत्कुले प्रवर्तकानां नियामकानां चाभावात् परंपराप्राप्ता कुलधर्मा· नश्येयु ॥ तदा अधर्मे प्रवर्तेरन्नखिला पुमांसः स्त्रियश्च तत्तत्कुलस्था ॥ इति सुमहाननर्थोद्रेद· ॥ कुत इति चेत् तत्तत्कुलनियामकानां युद्धे नाशे सति तत्तत्कुलं क्षीयते ॥ कुलक्षये सति परंपराप्राप्ता कुलधर्मा निश्शेषं नश्यन्ति॥ कुलधर्मे नाशं प्राप्ते १कृत्स्नमपि तत्कुलं अधर्म. धर्माभाव· धर्मविरुद्धं पापं च अभिभवति स्वयमुत्पद्य कुलमाक्रम्य गर्हित करोति ॥ अत उक्तरीत्या अनर्थोद्रेद ॥ ४० ॥

यदि सनातनं कुलधर्मं विहाय पापे प्रवर्तेरन् तर्हि तत्तत्कुलस्थाः स्त्रिय अधिकं दुष्येयु ॥ कुत इति चेत् अधर्मेण कुलस्याभिभवे स्त्रियो बलवता दोषेण युक्ता भवन्ति ॥ स्त्रीणां बलवान् दोषो व्यभिचार ॥ लोके हि स्त्रिय· श्वशुरात् पत्यु देवरादिभ्य· परिजनाच्च भिया तदुपरोधेन च व्यभिचारोपायकोचितदेशकालालाभेन चैव साध्व्यो दृश्यन्ते ॥ अत यद्युपरोधका श्वशुरादयो न स्यु· तर्हि स्त्रियो निर्निरोधं व्यभिचारे प्रवर्तेरन् ॥ २ निसर्गश्चायं स्त्रीणां ॥ कथमुच्यते निसर्गश्चायं स्त्रीणां इति इति चेत् प्राय स्त्रीणामेवंविधत्वादेवमुक्तम् ॥ अत एव दृश्यमानस्य पितु· अयं पिता वा न वा इति संशयग्रस्तत्वात् निषेक्तु· पितुर्निश्चेतुमशक्यत्वात् वयं यजामह इत्यर्थे ३ 'ये यजामहे ' इति श्रुति·॥ ४ योऽहमस्मि स सन् यजे॥ यस्यास्मि न तमन्तरेमि ॥ इति च ॥ दुष्यन्ति चेत् दुष्यन्तु का हानिस्तेन इति चेत् स्त्रीषु दुष्टासु सतीषु ब्राह्म-

१. उतशब्दोऽप्यर्थे ॥ कुलक्षय एव प्रणश्यन्त्येव कुलधर्मा एव नष्ट एव अधर्म एव अभिभवत्येव इति एवार्थकस्य तस्य तत्रतत्रान्वयो वा ॥ २. अत्र 'अनर्थित्वान्मनुष्याणां भयात्परिजनस्य च ॥ मयादायाममर्यादाः स्त्रियस्तिष्ठन्ति भर्तृषु ॥ अलाभात्पुरुषाणां हि भयात्परिजनस्य च ॥ वधबन्धभयाच्चापि स्वय गुप्ता भवन्ति ताः' इति (भार अनु ३८ अ) श्लोकावनुसन्धेयौ ॥ ३ तै सं. १. ६ ११. ॥ ४. तै· ब्रा. ३ ७ ५. ॥

णादि वर्णानां परस्परं मेलनं जायेत ॥ कुत इति चेत् लोके स्त्रीणां व्यभिचारदोषेण वर्णसङ्करो जायते ॥ अत सङ्करो जायेत ॥ स्वैरं प्रवृत्तानां स्त्रीणां व्यभिचारे जाति भेदनियमाभावात् स्त्रीपुंसजातिव्यत्यासेन ब्राह्मणादिजाते. क्षत्रियजातेश्च मिथः साङ्कर्यं जायेत ॥ अशनिपातोऽय क्षत्रियजाते यदेवं जात्यन्तरसाङ्कर्येणस्वयमशुद्धं भवति ॥ त्वं वृष्णिकुलजातोऽसि यदि त्वदीये कुले सङ्करो जायेत तर्हि तत्किं त्वं सहेथाः ॥ कुरूणां वृष्णीनां च परस्परं संबन्धितया कुरुकुलसाङ्कर्यं वृष्णिकुलजातस्य तव किमि ष्टं स्यात् ॥ जायतां नामैवं वर्णसङ्कर ॥ व्यभिचारे प्रवृत्तानां स्त्रीणां का हानिस्तेन इति चेत् सर्वसाक्षित्वेन सर्वं जानन् त्वं तदीयपापकर्मानुसारेण नरके पातये ॥ पुण्यपापे सदसतां ज्ञात्वा तदनुसारेण स्वर्गनरकौ प्रति तेषामाकर्षणात् कृष्णोऽसि ॥ कर्षणशक्तिमत्वाद्युद्धे प्रवृत्तानामस्माकं युद्धादपकर्षणं कुरु ॥ ४१ ॥

जायतां नाम वर्णसङ्कर यस्मिन् कुले स जातः तस्य कुलस्य हि स बाधक किं तेन युष्माक इति चेत् वर्णसङ्करो जात. कुलस्यैव कुलघ्नानां च नरकाय भवत्येव ॥ प्रवर्ततां नाम युद्धं कुलक्षयकारिणि युद्धे प्रवृत्य कुलघ्ना भूत्वा नरके पतथ चेत् पतत कुलं तत् पतति चेत् पततु इति चेत् न केवल कुलस्य कुलघ्नानामेव च नरक-पात किंतु तत्पितृणामेतत्पितृणामपि ॥ कुलघ्नानां कुलस्थानां च पितरोपि लुप्तपि ण्डोदकक्रिया सन्त पतन्ति ॥ पिण्डोदकयो क्रिया च तेषां लुप्येत ॥ कुलपितृणां कर्तुरभावात् तल्लोप ॥ कुलघ्नपितृणां तु कर्तृसत्वेऽपि कर्तॄणां कुलघ्नतया पतितत्वेन पिण्डोदकक्रियाकरणानर्हत्वात् तल्लोप इति विवेक ॥ प्रसिद्धमिदं पुराणादौ ॥ अत पितृणां पातभयाद्युद्धादुपरम्यते ॥ ४२ ॥

न केवलमेतावदेव किंतु वर्णसङ्करस्य हेतुभूतैः कुलघ्नानाम् एतै उक्तै. दोषै कुलनाशनधर्मनाशनाधर्मप्रवर्तनादिभिः चिरकालभवा वर्णप्रयुक्ता. साधारण-धर्मा तत्तद्वंशतत्तद्गृहासाधारणधर्माः ततदाश्रमधर्माश्च नाश्यन्ते ॥ ४३ ॥

येषां कुलधर्मा जातिधर्माश्च नाशिताः यैस्ते नाशिताः तेषां कुलस्थानां कुलघ्नानां च मनुष्याणां रौरवादौ नरके वासः नियमेन भवति ॥ किमहो नरके नियतं वासो

भवतीति विहाय साध्वसमसंशयमुच्यते किं त्वं सर्वज्ञ इति चेत् इत्यनुशुश्रुम ॥ किमहं जाने मन्दबुद्धिः ॥ भवादृशानां महतां मुखाच्छ्रुतोऽयमर्थः ॥ उक्तानर्थपरंपरैव कुलक्षयकृतो दोष ॥ एतमेते नानुसन्दधते ॥ अनुसन्दध्महे च वयम् ॥ अतोऽस्माभिर्युद्धान्निवर्तितव्यम् ॥ अतः सर्वं स्वस्वकार्यनिर्वर्तनाय याच्यमानं त्वामहं याचे ॥ मयि सति कथं तव नरकपातः संभवेदिति चेत् त्वमेव हि शास्ता पापिनो जनान् नरकयातनाभिर्दर्दयसि ॥ अतो नरकपातभिया माऽस्तु युद्धमिति त्वामहमर्थयामि ॥ ४४ ॥

कृष्ण ॥ लोभोपहतचेतस्कतया त इव वयमपि युद्धे प्रावर्तिष्महि ॥ तथाऽपि त्वदीयतया आन्तमगत्वा निवर्तनमुचितमित्युक्त त्वया ॥ महदिदमद्भुतं मम भाति ॥ यद्येवं तर्हि विनैव युद्धकथां वर्तितव्य शान्तिपथे ॥ प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वर इति हि न्याय ॥ युद्धचिकीर्षया समाक्षौहिणीमितां सेनां मेलयित्वा मामप्यानीय मां सारथीकृत्य स्वयमपि रथी भूत्वा शंखपूरणादिना युद्धचिकीर्षां प्रकाश्य सहसा युद्धान्निवृत्त्यर्थनमनुचितम ॥ पूर्वापरविरुद्धं हीदम । अतो महदद्भुतम् ॥ किं ब्रवीषि ॥

अर्जुनः ॥ अहो बत महत्पाप कर्तुं व्यवसिता वयम् ॥
यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यता ॥ ४५ ॥

अहो इति ॥ यत् यस्मात् राज्यस्य सुखं राज्यसुखं तस्मिन् लोभः राज्यसुखलोभः तेन वयं स्वस्य जन स्वश्चासौ जनश्च वा स्वजनः तं हन्तुं उद्यताः उद्यमं कृतवन्तः ॥ तस्मात् महत् पापं कर्तुं व्यवसिताः निश्चितवन्त ॥ अहो आश्चर्यम बत कष्टम ॥४५॥

राज्यसुखलोभेन स्वजनं हंतुं प्रवृत्ता वयम् ॥ अत महत्पाप कर्तुं कृतनिश्चयाः वयम् आश्चर्यमिदम् ॥ अस्माभिः वय इति बहुवचननिर्देशसूचितत्वदीयतातिशयरूपविशेषवतामप्यस्माकं एतावत्पर्यन्तमीदृशी प्रवृत्तिरुदितेति ममाप्याश्चर्यमुत्पद्यते ॥ किमहो ममाद्भुत भातीति मयोक्ते ममाप्यद्भुत भातीति परिहससि माम् ॥ कारण हि युद्धप्रवृत्तौ वाच्यं त्वया इति चेत् बत कष्टम् ॥ कष्टकालत्वात् त्वदीयानामप्यस्माकं तदानीं द्यूत इवेदानीं युद्धे प्रवृत्तिरुदपद्यत ॥ त्वं किं कुर्याः अस्मदीयकालकर्मानु-

सारेण त्वं प्रेरयसि ॥ न ते तावता दोषगन्धोऽपि ॥ न हि मे स्वः परः इति १भेदबुद्धिः ॥ ४६ ॥

कृष्णः ॥ २'एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन' ॥ इति मम युद्धान्निवृत्तिरुक्ता ॥ ३'यद्यप्येते न पश्यन्ति लोभोपहतचेतसः' ॥ इति प्रतिपक्षाणां युद्धादनिवृत्तिरुक्ता ॥ सति चैव निवृत्ते युद्धात् त्वां युद्धादनिवृत्तास्ते हन्युः किं करोषि ॥

अर्जुन ॥ यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः ॥
धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत् ॥ ४६ ॥

यदीति ॥ धृतराष्ट्रस्य अपत्यानि संबन्धिनश्च धार्तराष्ट्राः शस्त्रं पाणौ येषां ते शस्त्रपाणयः सन्तः न विद्यते प्रतीकारो यस्य सः अप्रतीकारः तं अप्रतीकारं न विद्यन्ते शस्त्राणि यस्य सः अशस्त्रः तं अशस्त्रम् ॥ मां रणे हन्युर्यदि तत् मे मम अत्यन्तं क्षेमं क्षेमतरं भवेत् ॥ ४६ ॥

प्रतीकारमकुर्वाणं त्यक्तशस्त्रं मां धार्तराष्ट्राः शस्त्रपाणयः सन्तो यदि युद्धे हन्युः तर्हि घ्नंतु न तेन मम हानिः ॥ किंतु तत् तथा हननं मे क्षेमतरं भवेत् ॥ बन्धुनाशजन्यपापस्य तज्जन्यदुःखस्य चाभावात् ४शत्रुभिर्युद्धे शस्त्रैर्हतस्य परलोकस्मरणेन सद्गतिसंभवाच्च अत्यन्तहितं हि तत् ॥ अतएव तदिष्टं मम॥ युद्ध्वा कांश्चित् हत्वा मरणं क्षेमं तत् परहिंसादोषसहितत्वादवरम् ॥ अकृत्वैव युद्धं मरणं परहिंसादोषसंस्पर्शाभावात् क्षेमतरम् ॥ अतस्तन्नितरां वरम् ॥ कुलनाशनादिपातकराहित्येन

१ अतएव वक्ष्यते ॥ 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ॥ मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ इति (४. ११) 'न वै स्वपक्षोऽस्य विपक्ष एव वा' इति (भाग. ४. ११.)॥ 'नह्यस्यातिप्रियः कश्चित् नाप्रियः स्वः परोऽपि वा' ॥ इति (भाग. ६ १६.) ॥ २. १. ३५ ३ १. ३७ ४. अत्र, 'तस्य शस्त्राणि यावन्ति त्वचं भिन्दन्ति मद्युगे ॥ तावतः सोऽश्नुते लोकान् सर्वकामदुहोऽक्षयान् ॥ यदस्य रुधिरं गात्रादाहवे संप्रवर्तते ॥ सह तेनैव पापेन सर्वपापैः प्रमुच्यते' इति, 'अविक्षतेन देहेन प्रलयं योऽधिगच्छति ॥ क्षत्रियो नास्य तत्कर्म प्रशंसन्ति पुराविदः'॥ इति, तीक्ष्णैः शस्त्रैरभिक्लिष्टः क्षत्रियो मृत्युमर्हति' ॥ इति च (भाग. शां ९७) 'शस्त्रपूता दिवं गताः' इति तत्रैव (२९.) श्लोका अनुसन्धेया ॥

पूर्वकृतपुण्यक्षत्यभाव क्षेम क्षेमस्तु स्थितरक्षण' इति हि स्मरन्ति ॥ परलोकगति-सद्भावात्तु स क्षेमतर ॥ अशत्रुभिर्मरणं शत्रुभिर्गृहादौ मरणं रणे भयादिना मरणं चाश्रेयस्करम् ॥ शत्रुभि रणे शस्त्रै मरणं तु निश्रेयसकरम् ॥ अतो हन्ति चेत् घ्नन्तु ॥ इतीदं विषीदन्नब्रवीदिति पूर्वेण संबन्ध ॥ ४७ ॥

धृतराष्ट्र: ॥ कुरुक्षेत्रे समवेता किमकुर्वतेति पृष्टस्त्व उभयसेनासमवेत-सकलकौरवपाण्डवतदीययोधविविधयुध्याडंबरं अर्जुनस्य विषाद चोक्तवानसि ॥ तत किमासीत् ॥ वद ॥

## सञ्जय उवाच ॥

एवमुक्त्वार्जुनः सङ्ख्ये रथोपस्थ उपाविशत् ॥
विसृज्य सशरं चाप शोकसंविग्नमानसः ॥ ४७ ॥

एवमिति ॥ अर्जुन सङ्ख्ये युध्दे एवं उक्त्वा शोकेन संविग्नं भीतं चलित वा मानस यस्य स शोकसंविग्नमानस: सन् शरेण सह वर्तत इति सशर तं सशर चापं विसृज्य रथस्य उपस्थ मध्यप्रदेश रथोपस्थ तस्मिन् रथोपस्थे उपाविशत् उपविष्टो ऽभूत ॥ ४७ ॥

अर्जुनः ॥ उक्तरीत्या भगवन्तमुक्त्वा यदि हस्ते सशर चाप स्यात् यदि चाहं रथे सारथे समीपे उपविष्ट स्यां तर्हि कृष्णोऽयं पुन पुन मां युध्यस्व युध्यस्वेति युध्दे प्रेरयेत् पुन पुन प्रेरणे मम युध्दे प्रवृत्तिरुत्पद्येत तच्च ममानिष्टं अत एवं कार्यं इत्यालोच्य सशरं चापं त्यक्त्वा शोकेन भीतचेता कंपितमानसश्च अत्यर्थंच-लितयुध्दाध्यवसायश्च सन रथस्य मध्यदेशे उपाविशत् ॥ सारथिं प्रति समये वक्तव्य वक्तुम् परसैन्यं तदाडंबरं च द्रष्टुं सारथे समीपे उपविष्टोऽयमर्जुन तत् रथिनः स्थानं विहाय विवाहादावुत्सवे रथमारोपितो जामातेव रथस्य मध्यदेशे उपविष्टो ऽभूत ॥ इति धृतराष्ट्रं सञ्जय उवाच ॥ ४७ ॥

**इति १श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे कृष्णार्जुनसंवादे अर्जुनविषादयोगोनाम प्रथमोऽध्याय ॥ १ ॥ ओं तत् सत् ॥**

इतीति॥ श्रीः अस्यास्तीति श्रीमान् श्रीमांश्चासौ भगवांश्च श्रीमद्भगवान् श्रीमद्भगवता गीतासु ललितैः महितैः इष्टैः पुष्टैः शब्दैः उपदिष्टासु उपनिषत्सु तद्रूपे ब्रह्मणः परब्रह्मणः विद्या ब्रह्मविद्या तस्या ब्रह्मविद्यारूपे योगानां कर्मयोगादीनां शास्त्रं विधायकं योगशास्त्रं तस्मिन् योगशास्त्रे कृष्णश्च अर्जुनश्च कृष्णार्जुनौ तयोः संवादः प्रश्नोत्तररूपो वादः कृष्णार्जुनसंवादः तस्मिन् कृष्णार्जुनसंवादे तद्रूपे अस्मिन् गीताशास्त्रे विषादस्य योगः संबन्धः विषादयोगः अर्जुनस्य विषादयोगः यस्मिन् सः अर्जुनविषादयोग इति नाम प्रसिद्धः प्रथमः अध्यायः इति समाप्तः ॥

इति श्रीमद्भगवद्गीतोपन्यासदर्पणे लक्ष्मणाचार्यविरचिते अर्जुनविषादयोगाध्यायार्थप्रदर्शकं प्रथमं प्रतिबिंबं ॥ १ ॥ ओं तत् सत् ॥

१ भगवद्गीतामूलभूतोपनिषदा आनन्त्याद्बहुवचनम् ॥

---

॥ श्रीगुरुभ्योनमः ॥

## ॥ अथ द्वितीयोध्यायः ॥

धृतराष्ट्रः ॥ १' सीदन्ति मम गात्राणी 'त्यादिना उक्तविधया परमशोकाकुलतां पार्थस्य दृष्ट्वा किं श्रीकृष्णो माऽस्तु युद्धमिति युद्धादुपरममेवान्वमोदत उत विविध-मुपन्यस्य समाधाय चार्जुनं युद्धे प्रावर्तयत् ॥ वद ॥

' सञ्जय उवाच ॥

तं तथा कृपयाऽऽविष्टमश्रुपूर्णाकुलेक्षणम् ॥
विषीदन्तमिदं वाक्यमुवाच मधुसूदनः ॥ १ ॥

तमिति ॥ मधुसूदन. कृष्णः, तथा कृपया आविष्टं अश्रुभि. नेत्रजलैः पूर्णे अश्रुपूर्णे च ते आकुले च अश्रुपूर्णाकुले ईक्षणे लोचने यस्य स अश्रुपूर्णाकुलेक्षणः तं विषीदन्तं तं अर्जुन इदं वाक्यं उवाच ॥ १ ॥

श्रीकृष्णप्रेरणया पार्थोयुद्धान्निवृत्तिं कांक्षमाण सशरं चापं त्यक्त्वा रथोपस्थे उपाविशत् ॥ कृष्णस्तु भूभारपरिहारार्थमवतीर्णत्वेन तामननुमोदमानः तं युद्धे प्रवर्तयितुं किमप्युवाच ॥ कुतो रथोपस्थे उपाविशदिति चेत् तथा कृपया आविष्टः कृपया तथा आविष्ट इति वा अत एव विषादं प्राप्त अत एव रथोपस्थे उपविष्टः ॥ उपविश्य च तत्र रोदिति ॥ अश्रुभि. पूरितत्वात्तस्याक्षिणी आकुले जाते ॥ यदि युद्धं क्रियेत तर्हि नियतं म्रियेरन्निमे भीष्मद्रोणादय अत एतानेकदा सम्यगापादमस्तकं दृग्भ्यामवलोकयेयमिति तान् द्रष्टुं प्रवृत्तोऽर्जुन न शक्नोति द्रष्टुम् कुत इति चेत् तस्याक्षिणी अश्रुभिः पूर्णत्वात् स्वग्राह्यरूपग्रहणासमर्थे जाते अतो द्रष्टुं न शक्यते ॥ कुतस्तथा ॥ विषीदति हि स. ॥ विषीदति कुत. ॥ तथा कृपया आविष्टः ॥ यथा

१ १.२९.२ यद्यपि 'एवमुक्त्वे'ति पूर्वाध्यायान्तिमश्लोकोक्तसञ्जयवाक्यस्य वाक्यान्तरेणाविच्छेदादिदमनावश्यकम् ॥ तथाऽपि अध्यायान्तरप्रारंभादन्यवाक्यत्वशङ्काऽपनोदायेदमिति बोध्यम् ॥

भूहस्तादिसंज्ञाभिर्युद्धे प्रवर्तयितुं न शक्यः किंतु विविधमान्तमुपःपश्यैव [१]तथा कृपया आविष्ट ॥ अत एव वचनमुवाच ॥ विषीदन्तमुवाचेति वर्तमाननिर्देशेन [२] 'विषीदन्निदमब्रवी'दित्युपाक्षिप्तो विषादो नापगत किंतु इदानीमपि वर्तते इति विषादानुवृत्तिस्सूच्यते ॥ कुत कृष्णो युद्धान्निवृत्तिमर्जुनस्य नान्वमोदतेति चेत् मधुसूदनो हि सः मधुमुखसकलदुष्टनिरसनशीलत्वाद्दुष्टजननिरसनार्थं युद्धे तं प्रवर्तयितुमुवाच ॥ दुर्योधनादीनां स्वकीयत्वात्कथं तन्नाशने प्रवृत्ति इति चेत् मधुसूदनो हि सः ॥ भूभारपरिहाराय स्वकीयमपि मधुनामकयादवकुलोत्पन्नानां बृन्दं संहरिष्यन् सः भूभारायमाणानां दुर्योधनादीनां स्थितिं किमनुमन्येत ॥ 'अश्रुपूर्णाकुलेक्षणं' इत्यत्र अश्रुपूर्णाकुले अक्षणं इति छेद ॥ अश्रुपूर्णे अत आकुले कलुषे रथोपस्थे विषीदन्तं अक्षणं न विद्यते क्षणः हर्ष यस्य तं निरानन्दं तं इति वा ॥ अनेन यथा रथोपस्थोऽश्रुभिः पूर्णः कलुषः स्यात् तथाऽश्रूणि प्रवहन्तीति धारावाहित्वमश्रूणां प्रतीयते ॥ तेन च विषादातिशय सूच्यते ॥ अक्षणमित्यनेन चिरकालाभिलषितस्य युद्धस्य प्रारंभात् सङ्कल्पमात्रेण सकलप्रपञ्चनिग्रहानुग्रहशक्तस्य श्रीकृष्णस्य सारथ्यकरणोररीकरणाच्च नितरां सन्तोषव्ये तदभावानुभवादहो महिमा मोहस्येति सूच्यते ॥ उदैदर्जुनस्यापि कृपा ॥ करुणावरुणालयस्य भगवतः कृष्णस्य कृपा कुतो नोदैत् इति चेत् अकृपया इति छेदः॥ अर्जुन, कृपाया पात्रापात्रविवेकराहित्येन कृपाऽनर्हेषु कृपां कुर्वन् विषीदति ॥ श्रीकृष्णस्तु सर्वज्ञत्वात् कृपाया अनर्हा इमे इति निश्चित्य अकृपया कृपाऽभावेन संहारयितुमरीन् तत्पक्षपातिनश्च वक्ष्यमाणमुवाच । मोहावेशपरवशतयाऽयंरोदिति गच्छतु जाल्म किं ममेति कृष्णः कुतो नार्जुनमुपेक्षिष्ट इति चेत् तथा आविष्टं तं कृपया उवाच ॥ स्वकीयकृपापात्रत्वादुपेक्षामकृत्वा तमुद्धर्तुमुवाच ॥ अकृपया अकृपायै इत्यर्थः ॥ अध्ययनेन वसतीति वत् ॥ कृपानर्हेषु जातां अर्जुनस्य कृपां व्यपोहितुमुवाच ॥ यदि सर्वात्मना युद्धादुपरमेत तर्हि स्वधर्महानात् भगवत्कृपापात्र न स्यात् अतः स्वधर्मं युद्धमनुष्ठाप्य [३] भगवत्कृपापात्रतामापादयितुमुवाच ॥ इत्या-

१. तथा कृपया इत्येकं पदम् ॥ नाद्दरया कृपया इत्यर्थः॥ इति केचित् ॥ २ १. २८. ३. अस्य भगवत कृपा अकृपा तस्यै ता उत्पादयितुं इत्यर्थः ॥ 'क्रियार्थोपपदस्य कर्मणि स्थानिनः '॥ इति (२. ३. १४.) सूत्रेण तुमुन्प्रत्ययान्तक्रियायाः कर्मणि चतुर्थी ॥

दिकमूह्यम् ॥ अत्र तथाशब्दस्य तथा कृपया तथा आविष्टं तथा अश्रुपूर्णाकुलेक्षणं तथा विषीदन्तं तथा वाक्यं तथा उवाचेत्यन्वयभेदकल्पनादनेके विशेषा ऊह्या· ॥ १ ॥

**कृष्णः** ॥ कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् ॥
अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन ॥ २ ॥

**कुत इति** । हे अर्जुन आर्यैं जुष्टं मेवित आर्यजुष्टं न आर्यजुष्टं न आर्या अनार्याः तै. जुष्ट च अनार्यजुष्टं स्वर्गाय हितं न स्वर्ग· अस्वर्ग· नरक तस्मै इद च अस्वर्ग्यं कीर्तिं करोतीति कीर्तिकरं न कीर्तिकरं अकीर्तिं करोतीति च अकीर्तिकर एता दृशं कश्मल मोहः कुत कस्मात् विषमे सङ्कटे त्वा त्वां समुपस्थितं अतिशयेन प्राप्तम् ॥ २ ॥

कुतो हेतोस्तवायमसमये सङ्कटे मोह प्राप्तः ॥ नेद युक्तं तव॥ मोक्षेच्छानः इति चेत् अनार्यजुष्टं आर्यै [१] मुमुक्षुभिरसेवितं अनार्यैः सेवितं चेदम् । स्वर्गेच्छान इति चेत् अस्वर्ग्यमिदं स्वर्गायेदं स्वर्ग्यं स्वर्गसाधन न भवतीदम् ॥ न स्वर्ग· अस्वर्ग: स्वर्गविरुद्धो नरकः तस्मै इदं नरकप्रापकं चेदम् ॥ कीर्तीच्छानः इति चेत् अकीर्तिकरमिदं कीर्तिकरं नेदं किंतु अकीर्तिकर च ॥ अस्वर्ग्यमिति अप्रत्यक्षबाध अकीर्तिकरमिति प्रत्यक्षबाध ॥ यद्यय अकरणीय करणीयताबुद्धिरूप करणीये अकरणीयताबुद्धिरूप· अनात्मीये आत्मीयताबुद्धिरूपश्च मोह· युद्धारंभात्पूर्वमेव प्राप्तः स्यात् तर्हि वरं तव चायमसमये मोह प्राप्त ॥ अतो न युक्तः ॥ युद्धान्निवृत्तिरूपनिषिद्ध कर्मकरणे ' पृथिव्यां चतुरन्तायां वर्णो मे दुर्लभ सम ॥ करोमि कर्म शुक्लं च तेन मामर्जुनं विदु ॥ इति ( भार वि ४३ त्वयोक्त अर्जुनशब्दप्रवृत्तिनिमित्तं व्याहन्येत॥ ततः परमप्रसिद्धमर्जुननाम तवापगच्छेत् ॥ महदिदमनिष्टम् । परमशुद्धकर्मकारित्वाद्ध्यर्जुनोऽसि॥ अत्र अर्जुनेति परमप्रसिद्धनमतया संभावितत्वमुक्त्वा अकीर्तिकरमित्युक्त्या जायतां नामाकीर्तिः का हानिरिति न वक्तुं युक्तं संभावितस्य पुंसो मरणादप्यपकीर्तेरतिशयितदुःखावहत्वात् इति सूच्यते ॥ ' संभावितस्य पुंसो मरणादतिरिच्यते किलाकीर्तिः' इति हि [२] वदन्ति ॥ २ ॥

१. आरात् दूर याता बुद्धिः येषा ते आर्याः ज्ञानिनः २. वक्ष्यते च ॥ ' संभावितस्य चाकीर्तिर्मरणादतिरिच्यते ' ॥ इति ( २ ३४ ) ॥

**अर्जुनः** ॥ उक्तरूप· अहंममेत्याद्यभिनिवेशरूपो मोहो विदुषामप्यपरिहार्यः भवदीयया बलवत्या मायया ॥ किं कार्यम् ॥ वद ॥

कृष्णः ॥ **क्लैब्यं मा स्म गमः पार्थ नैतत्त्वय्युपपद्यते ॥**
**क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परन्तप ॥ ३ ॥**

**क्लैब्यमिति** ॥ हे पार्थ क्लीबस्य भाव· क्लैब्यं मा स्म गमः ॥ मा प्राप्नुहि ॥ एतत् त्वयि नोपपद्यते न युज्यते ॥ परान् शत्रून् तापयति इति परन्तपः हे परन्तप अर्जुन क्षुद्रं अल्पं दुर्बलस्य भाव· दौर्बल्यं हृदयस्य दौर्बल्यं हृदयदौर्बल्यं तत् त्यक्त्वा उत्तिष्ठ ॥ ३ ॥

हे पार्थ त्वदुक्तरीत्या भवतु नामापरिहार्यो मोह· तथाऽपि विवेकेन तस्य दूरीकरणे प्रयतितव्यम् तत्कार्यभूतकातर्यादिदोषाणामवकाशदानं तु सुतरामयुक्तम् ॥ त्वं क्लीबस्य नपुंसकस्य रीतिमाश्रितोऽसि ॥ क्लीबोऽधीर क्लैब्यं अधैर्यं । तच्च मनोदौर्बल्यरूपं तदाश्रितोऽसि ॥ तत् त्वं मा स्म गम ॥ एतत् क्लैब्याश्रयणं विदितराजधर्ममर्मणि प्रथितकर्मणि त्वयि न युज्यते ॥ ना एतत् इति छेद· ॥ त्वं ना पुरुष· पुरुषधर्मं धैर्यं आश्रित सन् क्लैब्यं मा स्म गम· एतत् क्लैब्यानाश्रयणं त्वयि उपपद्यते ॥ गम· इत्यन्तर्णीतणिच् ॥ गमयेत्यर्थ ॥ क्लैब्यं मा गमय ॥ एतत् मम क्लीबताऽऽपादनं त्वयि नोपपद्यते ॥ यदि त्वं मया बोधितोऽपि युद्धं नाङ्गीकुर्या· तर्हि स्वपक्ष्या· परपक्ष्याश्च हन्तहन्त महतीयं कृष्णस्य क्लीबता यदर्जुनं बहुशो बोधयित्वाऽपि युद्धे प्रवर्तयितुं नाशकत् इति मयि क्लीबतामारोपयेयु· तां च क्लीबतां मा प्रापय ॥ नपुंसकत्वापरपर्यायक्लैब्यपदप्रयोगेण स्वर्गलोके उर्वशीशापसंभूतं नपुंसकत्वं विराटनगरे वर्षमेकमनुभूय परित्यज्य तत् पुंभिराचरणीये युद्धे प्रवृत्य पुनरज्ञातवास इव तस्य क्लैब्यस्योररीकरणं न युक्तं स्पृहयसि वा तस्मै क्लैब्याय इति सूच्यते ॥ त्वं पितृष्वसु· पृथाया· पुत्रोऽसि अत यस्य कस्य वा अन्यस्येव तव क्लैब्यं न मयोपेक्षणीयम् किंतु विविधमुपन्यस्य दूरीकरणीयम् ॥ पृथया मन्त्रबलादाहूतेन स्वयमिन्द्रेण जनितः तदंश नरांशसंभूतश्च त्वं तादृशस्य तव ईदृशक्लैब्याश्रयणमयुक्तम् ॥ त्वं यदेवमभूः तदिदमद्भुतमन्याय्यं च ॥ तर्हि किं कर्तव्यं मया ब्रूहि इति चेत् क्षुद्रं अल्पं अगौरवापादकं विवेकेन सुनिरसनं च मनोदौर्बल्यं क्लैब्यश्र-

च्छितं त्यक्त्वा उत्तिष्ठ ॥ कुतः तत् त्यक्त्वा उत्थातव्यं इति चेत् 'अनार्यजुष्टमस्वर्ग्य-मकीर्तिकरमर्जुन'॥ इति पूर्वश्लोकोत्तरार्धमिहापि संबध्यते॥ तत् अनार्यजष्टं अस्वर्ग्यं अकीर्तिकरं च अतः हे अर्जुन तत् त्यक्त्वा उत्तिष्ठ ॥ यस्मादेवं तस्मात् तत् त्वयि नोपपद्यते अतः त्वं तत् त्यक्त्वा उत्तिष्ठ इति वा ॥ उत्थानं उद्यमः ॥ युद्धसन्नद्धो भव भूभारपरिहारार्थमवतीर्णत्वात्तव भूभारपरिहारहेतोर्युद्धादुपरमोऽनिष्ट एव स्यात् अतः प्रवर्ततां नाम युद्धम् युध्यन्तां नाम भीमादयः बन्धुविनाशनिश्चयजनितशोकजेन विषादेन रुदन्तं मामनुजानीहि विहाय युद्धं सदनगमनाय इति चेत् तथा कर्तुं न युक्तम् कुतः इति चेत् त्वं परन्तपोऽसि । किरातयुद्धेन निवातकवचयुद्धेन उत्तरगोग्रहणयुद्धेन च बहुशः परीक्षितपराक्रमे त्वय्येवाय भूभारपरिहारभार समाहित त्वय्युपरते युद्धमुपरतं अतस्त्वमुत्तिष्ठ॥ त्वमेवैतान् सहरेति वक्तु न युक्तम् कौरवैस्सह मम युद्धप्रसक्तेरभावात् ॥ अतस्त्वयैवेमे युद्धे हन्तव्या ॥ युद्धसन्नद्धो भवेत्युक्तम् युद्धसन्नद्धेन मया किं कर्तव्यम् इति चे१ 'परं तप' पर तप इति च्छेद ॥ परं [१] दुर्योधनादीन् शत्रून् तप तापय ॥ युद्धमधर्मं कुतोऽधर्मे मां प्रेरयसि इति चेत् युद्धसमये पर परब्रह्मभूतं मां तप २स्मर ॥ मां स्मरन् तत्कर्म ब्रह्मणि ३ मय्याधाय युध्यस्व ॥ तथा कृत कर्म न ४ बन्धाय किंतु ज्ञानद्वारा ५ मोक्षाय भवति ॥ ३ ॥

धृतराष्ट्र ॥ एवं भगवता बोधितोऽर्जुन किमकार्षीत् वद ॥

सञ्जयः ॥ अनाततायिस्वजनसमुदायसाहित्येन दुर्योधनादीनामहन्तव्यतया सर्वात्मना युद्धादुपरमस्य प्राशस्त्यमुक्तवान् त्यक्तवांश्च सशरं चापं विषीदन्नर्जुनः कृष्णेनैवं बोधित भीष्मद्रोणादिपूज्यतमव्यतिरिक्तै सर्वैर्युद्धमभ्युपेत्य भीष्मद्रोणादिभिर्युद्धमधर्मं मन्वानो भगवन्तमाह ॥

१ समुदायैकत्वविवक्षणादेकवचनम् ॥ २ वक्ष्यते च ॥ 'मामनुस्मर युध्य च' (८. ७) इति ॥ ३. ब्रह्मण्याधाय कर्माणीति (५. १० 'मयि सर्वाणि कर्माणी'ति (३. ३०) च वक्ष्यते ॥ ४ 'यस्य नाहं कृतो भावो बुद्धिर्यस्य न लिप्यते॥ हत्वाऽपि स इमान् लोकान् न हन्ति न निबध्यते'॥ इति (१८. १७.) ॥ वक्ष्यते ॥ ५ 'असक्तो ह्याचरन् कर्म परमाप्नोति पूरुषः' ॥ (३. १९) ॥ स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' ॥ (१८ ४६) ॥ 'ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ॥ श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः' ॥ (३. ३१.) इत्यादि वक्ष्यते ॥

### अर्जुन उवाच

**कथं भीष्ममहं सङ्ख्ये द्रोणं च मधुसूदन ॥**
**इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन ॥ ४ ॥**

**कथमिति** ॥ मधु सूदयतीति मधुसूदनः अरीन् सूदयतीत्यरिसूदनः हे मधुसूदन अरिसूदन कृष्ण पूजायाः अर्हौ पूजार्हौ भीष्मं द्रोणं च अहं सङ्ख्ये युद्धे इषुभिः बाणैः कथं प्रतियोत्स्यामि प्रहरिष्यामि तौ प्रति प्रतियुद्धं करिष्यामि वा ॥ ४ ॥

त्वद्वचनाद्युद्धमभ्युपगच्छामि किंतु भीष्मद्रोणादिभिर्गुरुभिर्नाहं युध्येय ॥ कुत इति चेत् १ ते हि पुष्पैः पूजार्हाः पूजार्हौ भीष्मं द्रोणं च युद्धे कथं प्रतियोत्स्यामि प्रहरिष्यामि ॥ तौ प्रति कथं प्रतियुद्धं करिष्यामि इति वा॥ गुरुत्वमहानुभावत्वादिना पूजार्हौ पितामहत्वधनुर्विद्याचार्यत्वाभ्यां तु सुतरां पूजार्हौ ॥ पुष्पैः पूजार्हाणां पूजाकरणमुचितं तदकरणमेवानुचितं किमुत मर्मभेदकैर्बाणैः प्रतियोधनम् ॥ 'गुरुं त्वंकृत्य हुंकृत्य नरो नरकमश्नुते' इत्यादिना गुरुषु निष्ठुरवाङ्मात्रमप्यनर्थावहं किमुत मर्मघातिभिर्बाणैः प्राणहरणम् ॥ भीष्ममित्यनेन स्वपितुः शन्तनोर्दाशराजकन्याया योजनगन्धेः परिणयेन महामनस्सन्तोषापादनाय माऽस्तु मम राज्य सन्ततिरेकदा मम कलहायेत राज्यार्थमतः पाणिपीडनमेव मम माऽस्त्विति दारुणां प्रतिज्ञां कृत्वा भयङ्करप्रतिज्ञाश्रवणजनिताश्चर्यैर्देवैः २ भीष्मेति कृतनामधेयो महामहिमा महात्मा हि स इति सूचितम्॥ द्रोणमित्यनेन घृताचीदर्शनात् स्कन्नस्य भरद्वाजरेतसो द्रोणाख्यपात्रमत्रे धृतस्य ३ परिणामत्वादयोनिजो भरद्वाजपुत्रो महात्मा स इति सूचितम् ॥ अहमित्यनेन भीष्मेण पितामहेन अन्नपानादिना वर्धितो द्रोणाचार्येण धनुर्निगमपारदृश्वना तस्य परां काष्ठामवापितो विदितधर्मागममर्मा महाकुलीनोऽहं कथं तादृशौ तावेव

१. उपलक्षणया कृपाचार्यप्रभृतीनां ग्रहणम् ॥ २. 'ततोऽन्तरिक्षेऽप्सरसो देवाः सर्षिगणास्तदा ॥ अभ्यवर्षन्त कुसुमैर्भीष्मभीष्मेति चाब्रुवन्' ॥ इति (भार आदि १००) वचनमनुसन्धेयम् ॥ ३ 'ददर्शाप्सरसं साक्षात् घृताचीमाप्लुतामृषिः ॥ तत्र संसक्तमनसो भरद्वाजस्य धीमतः ॥ तस्य रेतश्च चस्कन्द तदृषिर्द्रोण आदधे ॥ ततः समभवद्द्रोणः' इति (भार आदि १३०) वचनमनुसन्धेयम्॥

प्रतियोग्यस्ये इति सूचितम् ॥ त्वं मधुसूदनोऽसि अतो दुष्टनिग्रहे मां प्रेरयसि ॥ सत्यं कर्तव्यं मयेव त्वयाऽपि प्रतिपक्षिपक्षशिक्षणं इति चेत् अरिसूदनः खल्वसि ॥ अरीणां मध्वादीनां हि संहर्ता त्वं न तु पूज्यानां सान्दीपन्यादीनाम् ॥ अतो ममाचार्यहननादौ प्रेरणं तवानुचितम्॥ कुतः सान्दीपन्यादीनां युद्धे हननप्रसक्तिरिति चेत् यदि द्रोणादय इव सान्दीपन्यादयो युद्धे परिपन्थिपथानुयायिनो युद्धसन्नद्धा भवेयुः तर्हि त्वं किं तान् गुरव इति परित्यजे उत प्रहरे ॥ अरीन् भक्तानां कामादीन् शत्रून् सूदयसि॥ भक्तजनकामादिदोषसूदनस्य तव दुष्टे आचार्यहननादौ मम प्रेरणमनुचितम् ॥ इति वा ॥ मधुसूदनस्त्वं कथमिति चेत् १ अरिणा चक्रेण अरीन् सूदयसि ॥ इति वा ॥ अलमेवं द्विःसंबोधनस्य गतिकल्पनेन ॥ समानार्थकयोः द्वयोः संबोधनपदयोः प्रयोगेण पार्थस्य पूर्वापरपरामर्शवैकल्यं सूच्यते ॥ तेन शोकमोहव्याकुलतायामतिशयः सूच्यते ॥ अतो २ न पुनरुक्तिदोष ॥ किंतु शोकाकुलतायामतिशयसूचकतया प्रकृतार्थपुष्टिहेतुत्वाद्गुण ॥ इति वा ॥ अतो न सङ्ख्ये गुरुभिर्योध्येय ॥ यदि गुरवो युद्धान्निवर्तेरन् तर्हि तदन्यैरमान्यैर्युद्धं करिष्यामि ॥ ४ ॥

**कृष्णः** || भीष्मद्रोणोपलक्षितान् पूज्यतमानहत्वा हन्तव्यानां दुर्योधनादीनां हननं न शक्यम् ॥ तदकरणे च राज्याद्यप्राप्तेः कथं शरीरयात्रानिर्वाहो भवतां स्यात् अतो युध्यस्व भीष्मद्रोणादिभिर्गुरुभिरपि ॥ १ किं नो राज्येन गोविन्द किं भोगैर्जीवितेन वा ॥ इति शरीरयात्रानिर्वाहो माऽस्तु ममेत्युक्तमेव हि मया इति चेत् दुर्लभस्य चिरकालिकपुण्यलभ्यस्य ऐहिकामुष्मिकसकलश्रेयस्साधनस्य मानुषदेहस्य परमप्रशस्यतया तद्यात्रानिर्वाहो माऽस्तु इत्युक्तिरयुक्ता हि तव॥ अतः शरीरयात्रानिर्वाहार्थं युध्यस्व भीष्मादिभिरपि ॥

१. अराणि अस्य सन्तीत्यरि चक्रम् ॥ २ सुभ्रूशब्दे संबोधने सुभ्रूः इति रूप व्यवस्थाप्य तत्र कथं तर्हि 'हापितः क्वासि हे सुभ्रु' इति भट्टिः इति भट्टिकविप्रयोगविरोधमाशङ्क्य प्रमाद एवायमिति बहवः इति भट्टोजिदीक्षितवाक्ये प्रमाद एवायमिति प्रतीकमुपादाय नायं प्रमादः कवेः किन्तु सीताविरहजशोकसन्तापतप्तस्य रामस्य ॥ स च रामस्य प्रमादो विरहशोकपरिपोषहेतुत्वात्काव्यस्य गुणः ॥ इति व्याख्यातं शब्देन्दुशेखरकृता मर्मज्ञसज्ञसार्वभौमेन ॥ तद्वदत्र पार्थस्य प्रमादः प्रकृतार्थपोषकत्वाद्गुणः इति बोध्यम् ॥

**अर्जुनः॥ गुरूनहत्वा हि महानुभावान् श्रेयो भोक्तुं भैक्ष्यमपीह लोके ॥४॥**

**गुरुनिति** ॥ महान् अनुभावः प्रभावः तेजो वा येषां ते महानुभावाः तान् गुरून् अहत्वा इह लोके भिक्षाणां समूहः भिक्षायाः इदं वा भैक्ष तदपि भोक्तुं श्रेयः प्रशस्यतरम् हि प्रसिद्धम ॥ ४॥ ॥

एतस्य शरीरस्य निर्वाहार्थं महानुभावान् गुरून् अहत्वा भैक्ष्यं भिक्षाणां समूहः भिक्षया लब्धं वा भोक्तु अस्मिन् लोके परमप्रशस्तम्॥ यद्यपि राज्ञां निषिद्धं तथाऽपि तद्भोक्तुमुचितम् ॥ प्रबलदोषावहगुरुहननापेक्षया अल्पदोषावहत्वादस्य ॥ प्रसिद्ध मिदम् ॥ अतो न प्रतियोत्स्यामि ॥ 'अकृत्वा परसन्तापं अगत्वा खलमन्दिरम् ॥ अक्लेशयित्वा चात्मानं यदल्पमपि तद्बहु'॥ इति हि वदन्ति ॥ हिमहानुभावान् इत्येकं पदम्॥ हिमं हन्तीति हिमह सूर्य अग्निर्वा तस्य तेज इव तेजो येषां ते हिमहानुभावा तादृशान् इति वा ॥ इह लोके इत्यनेन भैक्षाशनादकीर्तिरिह लोके जायतां नाम परलोके तु न काऽपि हानिरिति सूच्यते ॥ इह लोके एतच्छरीरनिमित्तं इत्यनेन विनाशिनोऽस्य परमजुगुप्सितस्य शरीरस्य कृते को विवेकी गुरुहननादिरूप महत् पापं कुर्यात्॥ 'सर्वाशुचिनिधानस्य कृतघ्नस्य विनाशिन ॥ शरीरकस्यापि कृते मूढा पापानि कुर्वते'॥ इति हि वदन्ति ॥ गुरुहननादिना राज्यादेर्लाभेऽपि न राज्यादिभोगश्चिरं संभवति देहस्य परमनश्वरत्वात् ॥ यावद्देहस्मिन्प्राणा तावत्तस्य रक्षणं तु भिक्षान्नेनापि सुकरम् ॥ अतोऽस्य देहस्य रक्षणार्थं गुरुहननादिरूपं महत् पापं न कुर्या इति सूचितम ॥ भीष्मादीनां गुरुत्वेऽपि तद्धननं कर्तु युक्तं १ 'गुरोरप्यवलिप्तस्य कार्याकार्यमजानत ॥ उत्पथं प्रतिपन्नस्य कार्यं भवति शासनम्' ॥ इत्युक्तेः इति चेत् महानुभावानां हिमहानुभावानां अवलिप्तत्वकार्याकार्यविवेकशून्यत्वादिक्षुद्रदोषसंश्लेषो न संभवति तादृशानां तेषां अतितेजस्वित्वात् अवलिप्तत्वादिक सदपि न दोषाय॥ २'तेजीयसां न दोषाय' इति हि वदन्ति ॥ इति वा ॥ अतो भीष्मद्रोणादिभिर्गुरुभिर्नाहं युध्येय ॥ ४॥ ॥

**कृष्णः ॥** भिक्षान्नाशनेन शरीरयात्रानिर्वाहमात्रं स्यात् ॥ अनुभवितव्यं त्वै

१ (भार आदि १५३) २ (भाग, १०. ३३.)

हिकं सुखम ॥ 'अनिश्चितधर्मत्यागी पशुरेव न संशयः' ॥ इति हि वदन्ति ॥ अतः ऐहिकसुखानुभवार्थं युध्यस्व ॥ १ 'निहत्य धार्तराष्ट्रान्नः का प्रीतिः स्याज्जनार्दन '॥ इति, युद्धादैहिकसुखसाधनराज्यादिभोगलाभेऽपि आचार्यादिनाशेन बन्धुजनविनाशेन च समुपजातेन बलवता दुःखेनोपरोधादैहिकसुखस्यासंभव उक्त इति चेत् युद्धाव्यवहितोत्तरकाले प्रत्यग्रदुःखेनैहिकसुखस्योपरोधेऽपि कतिपयदिवसविगमे मृतजनविस्मरणसंभवेन दुःखस्य शिथिलीभावसंभवादुचितसामग्रीसंपूर्त्या प्रतिबन्धकनिवृत्या च ऐहिकसुखोदयो दुर्निवार ॥ अतस्तदनुभवाय युध्यस्व गुरुभिरपि भीष्मादिभिः॥ किं ब्रवीषि ॥

अर्जुन ॥ हत्वाऽर्थकामांस्तु गुरूनिहैव भुञ्जीय भोगान् रुधिरप्रदिग्धान्॥५॥

हत्वेति ॥ अर्थं कामयन्ते इत्यर्थकामाः तान् गुरून् हत्वा तु रुधिरेण रक्तेन प्र सम्यक् दिग्धान् लिप्तान् भोगान् इहैव भुञ्जीय कथं भुञ्जीय इति वा ॥ ५ ॥

कतिपयदिवसविगमे मृतजनविस्मरणसंभवात्प्रतिबन्धकनिवृत्या ऐहिकसुखोदयो दुर्निवार इत्युक्तम् ॥ तत् सामान्यबन्धुजनविषयम् ॥ युद्धेऽस्मिन् मरिष्यन्तो भीष्मद्रोणादयस्तु महानुभावा ॥ नैषां विनाशाद्दुर्दिनं दुःखं पुरुषायुषेणापि शैथिल्यमाप्नुयात् ॥ किंतु सदा प्रत्यग्रमिवैव स्यात ॥ अतस्तदुपरोधेन सुखं नोत्पद्येत ॥ भोगानामनुभवे कथं सुखं नोत्पद्येत इति चेत् अनुभव एव न संभवति ॥ अर्थं कामयमानान् गुरून हत्वा तु रुधिरसदृशजुगुप्सितदोषैर्निरंतरं व्याप्तान् भोगान् सुखहेतुभूतान् इहैव स्थितान् पदार्थान् भुञ्जीय २ भुञ्जीय वा ३ कथं भुञ्जीयेति वा ॥ गर्हितमेतत् ॥ अतः अननुभवात्सुखं नोत्पद्येत ॥ अतस्तदर्थं न युध्येय ॥ कथंचिदनुभवसंभवेऽपि भोगान् इहैव लोके भुञ्जीय ॥ तेषु नैकोऽपि लोकान्तरं गच्छन्त अनुगच्छति॥ रुधिरप्रदिग्धानेव भुञ्जीय न तु शुद्धान् ॥ रुधिरेण रक्तेन प्र अधिकं दिग्धान् लिप्तान् लक्षणया तत्सदृशान् अत्यन्तजुगुप्सितानेव भुञ्जीय ॥ तान् हत्वा शस्त्रास्त्रविक्षततदीयशरीरस्रवदसृगुपलिप्तानेव भोगान् भुञ्जीय ॥ हत्वा गुरून् महतः अर्थांश्च

१. १ ३५. २. संप्रश्ने लिङ् ॥ ३ 'कथं भीष्ममहं संख्ये ' इत्यतः कथमित्यस्य अनुवृत्तिरिति भावः ॥

कामाश्च अर्थकामाः तदात्मकानेव भोगान् भुञ्जीय ॥ न तु धर्मं मोक्षं वा गुरून् हत्वा अर्थकामात्मकान् भोगानेव भुञ्जीय । गुरून् हत्वा इहैव तदीयभवनशयनवाहनादिष्वेव स्थित्वा भोगान् भुञ्जीय ॥ तच्च प्रतिकलं तत्स्मारकतया दुःखजनकम् ॥ गुरून् हत्वा रुधिरप्रदिग्धान् रक्ताद्यशुद्धपरमजुगुप्सितवस्तुमयान् नरकभोगान् इहैव भुञ्जीय ॥ 'अत्युत्कटैः पुण्यपापैः इहैव फलमश्नुते'॥ इति हि स्मरन्ति ॥ गुरुवधेन लभ्या भोगा यद्यपि गुरवः महनीयाः गुरूंस्तु गुरूनपि रुधिरप्रदिग्धांस्तान् कथं भुञ्जीय ॥ अर्थलोभेन विक्रीतात्मनां तेषां कथं गुरुत्वं इति चेत् अर्थकामानपि गुरून् हत्वा इति वा ॥ अर्थकामत्वेऽपि गुरुत्वं नापगच्छति अर्थान् धर्मादिपुरुषार्थान् शिष्येभ्यः कामयन्ति बोधयन्तीत्यर्थकामाः तत्वोपदेष्टारः तत्वोपदेष्टार एते अर्थकामा अपि गुरव एव ॥ एतत्सूचनार्थमेव पुनर्गुरुपदप्रयोगः ॥ अतस्तान् हत्वा कथं भुञ्जीय ॥ अर्थकामानित्यनेन यद्येते गुरवो भीष्मादयो युद्धान्निवर्तेरन् तर्हि दुर्योधनादीनाततायिनो हत्वा लब्ध्वा च राज्यादिकं ऐहिकं सुखमनुभवेम न चैवं लोभोपहतचेतस्त्वादेते युद्धान्न निवर्तेरन् ततश्चास्माभिरेते हन्येरन् हतवतां च भीष्मादीनस्माकं परम सुखसाधनराज्यादिलाभेऽपि नैहिकं सुखं प्रत्युत राज्यादेरस्मत्धतभीष्मादिस्मारकतया दुःखजनकत्वेन दुःखमेवेति सूचितम् ॥ यद्येते निष्कामाः तर्हि तदीयभोगहरणं कर्तुं युक्तं सकामानामेषां भोगहरणं क्षुधितानामोदनहरणवदतिगर्हितं । अतः कथं भुञ्जीय ॥ तुशब्दो विशेषार्थकः अप्यर्थकः एवार्थकश्च ॥ गुरूनहत्वेति प्रथमपादः हत्वाऽर्थकामानित्युत्तरार्धं च एकं वाक्यं श्रेयोभोक्तुमिति द्वितीयपादोऽपरं वाक्यम्॥ गुरून् अ हत्वा इति च्छेदः॥ हे अ परमात्मन् कृष्ण महानुभावान् गुरून् हत्वा गुरून् अर्थकामात्मकान् भोगान् हत्वाऽपि प्राप्यापि (हन हिंसागत्योः इति धातुः) तान् इहैव न तु परत्र रुधिरप्रदिग्धान् दोषदूषितानेव न तु शुद्धान् भुञ्जीय॥ तस्मान्न प्रतियोत्स्यामि ॥ तर्हि शरीरयात्रानिर्वाहः कथं इति चेत् श्रेयोभोक्तुंभैक्षमपीहलोके ॥ वाक्यमध्ये वाक्यान्तरप्रवेशस्तु कुतो न प्रतियोत्स्यामीति ब्रूषे इति कृष्णेन पृष्टे गुरूनहत्वेत्यर्जुनेन तत्कारणे वक्तुमारभ्यमाणे अनाकर्ण्यैव तद्वचनं समग्रं क्रमसंबन्धं कारणं वक्तुमारभसे यदि केनाप्यसंबद्धेन कारणेन न प्रतियुध्यसे तर्हि शरीरयात्रानिर्वाहासंभव इति कृष्णेनोच्यमाने सद्यएव तदसंभव [१]शङ्काऽपनोदाय इति बोध्यम् ॥ इत्यपि

१ 'उपमानोपमेयत्वं यदेकस्यैव वस्तुनः ॥ इन्दुरिन्दुरिव श्रीमानित्यादौ तदनन्वयः' ॥ इत्यत्र असंभवशङ्कापरिहाराय मध्ये इन्दुरिन्दुरिवेतिवाक्यान्तरप्रवेशवत ॥

व्याख्यानमूह्यम् ॥ शरीरयात्रानिर्वाहस्य अन्यथाऽपि संभवात् न तदर्थं गुरून् प्रति प्रतियोधनमभ्युपगच्छेयम् ॥ ५ ॥

कृष्णः ॥ कथं न प्रतियोत्स्यामीत्युच्यते ॥ युद्धकरणाकरणयोर्मध्ये युद्धकरणस्य १ ज्यायस्त्वात् ॥ भैक्षं भोक्तुं श्रेय इति कथमुच्यते भिक्षाऽशनराज्याद्यनुभवयोर्मध्ये राज्याद्यनुभवस्य ज्यायस्त्वात् ॥ अतो युद्धकरणेन राज्यादिसंपादनमेव श्रेयः ॥ अतो युध्यस्व गुरुभिरपि ॥ किं ब्रवीषि ॥

अर्जुनः॥ न चैतद्विद्मः कतरन्नो गरीयो यद्वा जयेम यदि वा नो जयेयुः॥

यानेव हत्वा न जिजीविषामस्तेऽवस्थिताः प्रमुखे धार्तराष्ट्राः ॥६॥

न चेति ॥ नः अस्माकं कतरत् किं गरीयः अतिशयेन गुरु प्रशस्ततरम् ॥ एतत् न च विद्मः नैव जानीमः ॥ यद्वा किं वा वयं जयेम यदि वा किं वा नः अस्मान् ते जयेयुः ॥ यान् हत्वा नैव जिजीविषामः जीवितुं इच्छामः ते धृतराष्ट्रस्य इमे धार्तराष्ट्राः भीष्मद्रोणादयः प्रमुखे समुखे अवस्थिताः ॥ ६ ॥

युद्धकरणतदकरणयोर्मध्ये किं श्रेयः भिक्षान्नाशनराज्याद्यनुभवयोर्मध्ये किं श्रेयः एतत् नैव जानीमः ॥ धर्मैकशरणैरस्माभिरेतदवश्यं विचार्य ज्ञातव्यम् ॥ किं गुरुहननतज्जनितायशःप्रभृतिदोषगन्धाविधुरत्वात् भिक्षाशनं श्रेयः उत स्वधर्मत्वाद्युद्धकरणं तेन राज्यादिसंपादनं च श्रेयः आहोस्वित् भैक्षं परधर्मत्वान्निषिद्धं, युद्धं तेन राज्यादिसंपादनं च गुरुहननादिदोषदुष्टं भैक्षं हिंसादिदोषराहित्याच्छ्रेयः युद्धं च स्वधर्मत्वाच्छ्रेयः इत्युभयोः साम्यं इतीदं अल्पज्ञमोहावेशपरवशतया सम्मूढचेताश्चाहं न जाने सर्वज्ञेन कदाप्यनुपहतस्वभावेन त्वया वक्तव्यम् ॥ अतस्त्वामिदमहं याचे ॥ युयुत्सया मां सारथीकृत्य कुरुक्षेत्रमेत्य शङ्खपूरणादिना ॥ अहो बत महत्पापं कर्तुं व्यवसिता वयम् ॥ यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः ॥ इत्युक्तरीत्या गुरुवधरूपमहापापकरणोद्यमं च प्रकाश्य किमकाण्डे युद्धकरणतदकरणयोः भिक्षाशनयुद्धकरणयोस्तारतम्यं पृच्छसि ॥ अलम-

१ वक्ष्यते च ॥ 'कर्म ज्यायो ह्यकर्मणः' ॥ ३ ८.) इति ॥ २ १ ४५.

नेन विचारेण॥ युध्यस्व गुरुभिरप्यैहिकसुखानुभवाय॥ युद्धादैहिकसुखस्यासंभव उक्त इति चेत् उक्तरीत्या युद्धादुपलब्धानां भोगानां कथंचिदनुभवे पैहिकसुखोदयो दुर्निवार इति चेत् किं वा वयं जयेम किंवा अस्मान् न जयेयुः अस्माकं जयो वा तेषां जयो वा एतच्च न विद्म ॥ जयनिश्चये भवतु धर्मोऽधर्मो वा कर्तव्यमेव युद्धमैहिकसुखलब्धये इत्यभ्युपगच्छेम स एव न भवति चेत् कथं युद्धे प्रवर्तेमहि ॥ अतस्त्वयापि त्वया वक्तव्यम् ॥ युद्धे जयो न नियतः ॥ 'युद्धे जयपराजयौ' इति हि वदन्ति ॥ अत एषां जय इति निश्चित्य वक्तुं न शक्यते । तथाऽपि प्रवीरेण क्षत्रियेण अहमेव जयेयं इति महतोत्साहेन युद्धे प्रवर्तितव्यं न जये संशयः कार्य इति चेत् अस्त्वस्माकमेव जयः प्राप्तोऽपि स जयः पराजयादप्यधिकदुःखावहः ॥ कुत इति चेत् धृतराष्ट्रसंबन्धिनो भीष्मद्रोणादीन् हत्वा जीवितुमेव नेच्छाम किमुत सुखमनुभवितुं॥ त इमे भीष्मद्रोणादयो युद्धसन्नद्धतया संमुखे अवस्थिताः ॥ एवशब्दस्य यानेवेति हत्वैवेति नैवेति जिजीविषाम एवेति न एवेति अवस्थिता एवेति प्रमुखे एवेति धृतराष्ट्रसंबन्धेन दुर्योधनस्य प्रियं चिकीर्षव सन्त एवेति प्रत्येकमन्वयेन विशेषा ऊह्या ॥ यद्यत्र भीष्मादयो न स्युः यद्वा प्रमुखे न स्युः तर्हि तदन्यैर्युध्वा जित्वा लब्धा च भोगानैहिकसुखमनुभवितुं शक्यम ॥ प्रमुखे एव स्थितत्वेन प्रथमं तद्धनन प्रसङ्गात् पुरुषायुषेणाप्यपरिहार्यदुःखोत्पादकतया पराजयादप्यल्पीयान् जयः ॥ धार्तराष्ट्रा सन्तोऽवस्थिताः इत्यनेन नैतेषामस्मासु प्रद्वेषः तथाऽपि दुर्योधनार्थमेव युद्धाय सन्नद्धाः प्रमुखेऽवस्थिताः इति सूच्यते ॥ उक्तं चेदं मया १ 'धार्तराष्ट्रस्य दुर्बुद्धेः युद्धे प्रियचिकीर्षव '॥ इति ॥ जयानिश्चयात् सत्यपि जये तस्य पराजयादप्यधिकदुःखावहत्वेन चिरेणाप्यैहिकसुखानुदयात् अवश्यंरक्षणीयकतिपयदिवसस्थायि शरीरयात्रानिर्वाहमात्रस्य भिक्षाशनेनाप्यन्यथोपपत्तेश्च भिक्षाऽशनं श्रेय इत्युक्तं मया॥ अतो न गुरुभिर्युध्येय ॥ ६ ॥

कृष्ण । त्वं विदितसकलवेदनीयः पण्डितमौलिमणिरपि भूत्वा कथं न चैतद्विद्म त्वमेव ब्रूहीति ब्रवीषि ॥ स्वयमेवालोच्य सारासारविवेचनं कृत्वा सारमुपादत्स्व ॥

१. १ २३

अर्जुन ॥ कार्पण्यदोषोपहतस्वभावः पृच्छामि त्वां धर्मसंमूढचेताः ॥
यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्॥७॥

**कार्पण्येति** ॥ कृपणस्य दीनस्य भावः कार्पण्यं तद्रूपो दोषः कार्पण्यदोषः तेन उपहतः स्वभावः यस्य सः कार्पण्यदोषोपहतस्वभावः धर्मे संमूढं धर्मसंमूढं चेतः मनः यस्य सः धर्मसंमूढचेताः अहं त्वां पृच्छामि ॥ यत् श्रेयः प्रशस्ततमं स्यात् भवात् तत् निश्चितं यथा तथा मे मह्यं ब्रूहि ॥ अहं ते शिष्यः प्रपन्नं शरणागतं मां शाधि शिक्षय ॥ ७ ॥

कार्पण्यं एतान् हत्वा कथं जीविष्याम इति बन्धुजनविनाशनिश्चयजनितशोकेन दैन्यं तद्रूपो यो दोषः तेन, कार्पण्यं दैन्यं दोषः कुलनाशनादिकृतः ताभ्यां वा उपहतः नष्टः स्वभावः पाण्डित्यशौर्यधैर्यौदार्यगांभीर्यादिलक्षणः यस्य सः तथा तादृशः अतएव धर्मे समूढं किं भिक्षाशनं धर्मः उत युद्धं इति सन्दिहानं भिक्षाशनमेव धर्मः युद्धं त्वधर्मः इति विपरीतज्ञानयुक्तं च चेतः मनः यस्य सः तथा तादृशश्चाहं त्वां पृच्छामि ॥ किमिति इति चेत् ॥ युद्धकरणतदकरणयोः भिक्षाशनयुद्धकरणयोश्च मध्ये यत् श्रेयः इति वेदपुराणादिषु निश्चितं स्यात् [१]अस्ति तत् मे मह्यं ब्रूहि इति पृच्छामि ॥ अत्र यत् श्रेय इति निश्चितमस्ति तत् त्वं मे ब्रूहि ॥ उभयोर्मध्ये यत् मम श्रेयः श्रेष्ठं स्यात् भवति मम श्रेयः पुण्यं कीर्त्यादिकं वा यत् येन स्यात् भवेत् तत् मे निश्चितं यथा तथा अज्ञस्याल्पबुद्धेर्मम निश्चयज्ञानं यथा उत्पद्येत तथा ब्रूहि ॥ यदि संशय-विपर्ययौ स्यातां तर्हि कमपि संशयच्छेददक्षं विचक्षणं विलक्षणं गुरुमुपसृत्य तदु-पदेशेन तौ दूरीकुरु ॥ कुतः सत्वरं मां निर्बध्नासि इति चेत् अहं ते शिष्यो भूत्वा पृच्छामि ॥ शिष्या अपि केचन पण्डितमात्मानं मन्यमानाः इदं कथं इदं कथं इति गुरून् परीक्षितुं पृच्छेयुः त्वं तादृशश्चेत् कथमहं ते धर्मतत्वमुपदिशेयं इति चेत् त्वां प्रति प्रपत्तिशब्दितां शरणागतिं कुर्वाणं मां शाधि ॥ नाहं तादृशः शिष्यः किंतु

१. स्यात् इति तिङन्तप्रतिरूपकमव्ययम् ॥

तत्त्वबुभुत्सया शरणागतं सच्छिष्यं मां मत्वा यत् श्रेय स्यात् तत् निश्चितं यथा-तथा उक्त्वा इदं कुरु इदं मा कुरु इत्यनुशासनं कुरु ॥ न तु सखायं मत्वा परिहासं कुरु ॥ नापि असच्छिष्यं मत्वा अन्यथा ब्रूहि १ 'ब्रूय. स्निग्धस्य शिष्यस्य गुरवो गुह्यमप्युत ॥ इति हि वदन्ति॥ यद्यप्यहं पण्डित तथाऽपि शोकमोहदैन्यावेशेन कर्तव्याकर्तव्यविवेकमूढ सारासारविवेचनशक्तिविधुरश्चाभूवं अतस्त्वां पृच्छामि त्वं तु शरणागतं सच्छिष्य मा मत्वा मां शाधि ॥ शासनीयो हि शिष्य ॥ अत इति त्वामहमर्थये ॥ उक्तयोरुभयोर्मध्ये यच्छ्रेय तदहमुपादिशामि अलं वा ते तन्मात्रोपदेशेन इति चेत् कार्पण्यं आत्मानात्मपरमात्मज्ञानाभावेन ब्रह्मज्ञानाभाव २ 'यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात्प्रैति स कृपण ' इति श्रुति. ॥ तद्रूपो दोष तेन, तेन यो दोष. मदीया एत हन्यन्ते चेमे मया हतेष्वेतेषु किं मम जीवितेन इत्यादिमोहलक्षणः तेन वा उपहतो दूषित स्वस्य भाव. चित्त युद्धोद्योगलक्षण क्षत्रियस्वभावो वा यस्य स तथा तादृश अत एव धर्मे धारकत्वाद्धर्मशब्दवाच्ये परब्रह्मणि संमूढं संशयविपर्ययादियुक्तं चेतः यस्य स तादृशश्चाहं त्वां पृच्छामि ॥ किमिति इति चेत् निश्चितं महर्षिभिः श्रुत्यादिभिर्निर्णीतं ३ ऐकान्तिक ४ आत्यन्तिकं च श्रेय परमप्रशस्यं मोक्षाख्यं पदं यत् येन स्यात् तत् मोक्षजनकं ब्रह्मज्ञानं मे ब्रूहि इति पृच्छामि अत. निश्चितं श्रेयः येन स्यात् तत् ब्रह्मज्ञानं मे ब्रूहि ॥ 'नाशिष्याय नापुत्राय ब्रूया'दिति निषेधात् कथं वक्तु शक्य इति चेत् शिष्यस्तेऽहं त्वां प्रपन्न मां शाधि ॥ ५ कार्पण्यदोषेण उक्तविधेन उपहत नष्ट· विस्मृत. स्वस्य प्रत्यगात्मन भाव· परब्रह्मत्वलक्षण स्वभाव· यस्य स· तथा धर्मे स्वरूपप्रकाशके ज्ञानात्मके समूढ अप्रविष्टं चेत यस्य सः तथा तादृशश्चाहं त्वां पृच्छामि ॥ त्व परमश्रेय साधनं सकलशोकविध्वंसनं च ब्रह्मज्ञानमुपादिश ॥ इति च ॥ न केवलं तन्मात्रोपदेशेन मे श्रेय स्यात् आत्मानात्मपरमात्मज्ञानाभावात्खल्वहमेवं शोचामि अतः आत्मानात्मपरमात्मतत्त्वज्ञानमप्युपादिश्य मामनुगृहाण ॥ इति प्रार्थये परमादरेण भगवन्त भवन्तम् ॥ ७ ॥

१. भाग । १ २ बृ ५ ८ १० ३ साधनानुष्ठानानन्तरमवश्यंभावित्व ऐकान्तिकत्वं ॥ ४. जातस्य अविनाश. आत्यन्तिकत्वं ॥५ अ.॥

कृष्णः ॥ कार्पण्यदोषोपहतस्वभावत्वेन धर्मसंमूढचेतस्त्वादहं त्वां पृच्छामि इत्युक्तं त्वया तथाऽपि बन्धुजनविनाशनिश्चयजनितशोकं तदपनोदोपायावष्टंभेन दूरीकृत्य त्वमेव युद्धकरणतदकरणयोः भिक्षान्नाशनयुद्धकरणयोर्वा मध्ये इदं श्रेयः इदं न श्रेयः इति समालोड्य शास्त्रज्ञो विनिश्चिनु ॥ शोकापनोदोपायः कः इति चेत् युद्धात्संपत्स्यमानराज्यादिभोगानुभवजन्यसुखमनुसन्धेहि तेन शोकापनोदो भविष्यति तेन कार्पण्यदोषापगमात् स्वभावलाभस्संभवेत् सारासारविवेचनशक्तिः समुज्जृंभेत ततश्च योत्स्यसे ॥ किंच शोकापनोदाय तत्त्वज्ञानमुपदेशत्यभ्यर्थितं त्वया शोकापनोदाय किमन्यदन्यदेवान्विष्यते, किं तत्त्वोपदेशप्रार्थनया ॥ किमस्ति वस्तु शोकापनोदकं इति चेत् युद्धादुपनतराज्यादिभोगानुभवजन्यसुखमपनुदच्छोकम् ॥ तदर्थं युध्यस्व ॥ ऐहिकसुखासंभव उक्तो हि मया इति चेत् तत्संभव स्साधित एव मया । अन्यत् अननुभवात्सुखासंभव कथाचिदनुभवेऽपि गुरूणामविषयानुभवाच्चेदसंभवश्च कथं भुञ्जीय रुधिरप्रदिग्धानेव भुञ्जीय इत्यादिना हि मया इति चेत् विषयाणामिन्द्रियाणां च संबन्धसंभवात् विषयाणां अधर्मत्वेन गुरुवधादिपर्यालोचने अनिष्टत्वापगमाच्च गुर्वादिपरिहाराय अतः पर्यालोच्येदं युद्धाय यतस्व ॥ तेन च राज्यादिकं लभ्येत । तेन च सुखं लभ्येत । तेन च शोकापनोदो भविष्यति ॥ अतः किं तदर्थं तत्त्वोपदेशार्थनेन ॥ ब्रूहि ॥

अर्जुन ॥ न हि प्रपश्यामि ममापनुद्याद्यच्छोकमुच्छोषणमिन्द्रियाणाम् ॥
अवाप्य भूमावसपत्नमृद्धं राज्यं सुराणामपि चाधिपत्यम् ॥ ८ ॥

नहीति ॥ भूमौ न विद्यन्ते सपत्नाः शत्रवः यस्मिन् तत् असपत्नं ऋद्धं समृद्धं राज्यं सुराणां देवानां अधिपतेर्भावः आधिपत्यं इन्द्रपदं सुराणां सेन्द्राणां आधिपत्यं ब्रह्मपदं वा प्राप्य स्थितस्यापि मम इन्द्रियाणां उत अधिकं शोषयति शक्तिह्रासं करोतीति उच्छोषणं शोकं यत् अपनुद्यात् परिहरेत् तत् अहं न प्रपश्यामि हि यस्मात् तस्मात् त्वां पृच्छामीति पूर्वेणान्वयः ॥ ८ ॥

केनाप्युपायेन शोकापनोदो यदि जायेत तर्हि स्वभावलाभेन सारासारविवेचनमहं कुर्यां ॥ शोकापनोदोपायं कमप्यहं न पश्यामि ॥ युद्धादुपनतभोगानुभवजनितसु-

खानुसन्धानमेव शोकापनोदकोपाय इति चेत् यदि तत्सुखमिष्टं स्यात् तर्हि तदनुसन्धानं शोकापनोदोपाय स्यात् न हि मम तदिष्टम् । यदि गुरुहननादिना स्वर्गलोकाधिपत्यं सत्यलोकाधिपत्यं च लभ्येयातां तर्हि ते अपि ममानिष्टे किमुत परमाल्पमहीराज्यमात्रम् ॥ अस्तु नाम शोकः तेन सुखोत्पत्तिप्रतिबन्धः कथम् ॥ इन्द्रियैर्विषयाणामनुभवे सुखमुत्पद्यतैव ॥ अनुभवस्यासंभवः कथंचिदनुभवेऽपि विषयाणामनिष्टत्वात्सुखस्यानुदयश्च उक्तो मया इति चेत् विषयेन्द्रियसंबन्धयोगलभ्यात् विषयगौरवपर्यालोचनेन अनिष्टत्वापगमाच्च सुखोदयो दुर्वारः इति मयाऽप्युक्तम् इति चेत् विषये सत्स्वप्यपीन्द्रियाणि न ताननुभवितुं शक्नुवन्ति ॥ शोकेन तेषां विषयग्रहणशक्तेर्नाशात् ॥ न हि भर्जनेन नाशितशक्तिकानि बीजानि अङ्कुरमुत्पादयितुं शक्नुवन्ति ॥ भूमौ निष्कण्टकं समृद्धं राज्यं सुराणामाधिपत्यं च प्राप्यापि स्थितस्य मम इन्द्रियाणां स्वकार्यजननशक्तिनाशकं शोकं यदपनुद्यात् शोकापनोदकं तत् अहं सम्यगालोच्यापि न पश्यामि ॥ अतः शोकेन स्वभावोपहत्या संमूढचेतस्त्वादहं त्वां पृच्छामि ॥ १ब्रह्मपदस्य इन्द्रपदस्य सार्वभौमपदस्य च सर्वेन्द्रियमनोबुद्धिशक्तिह्रासकर्तृत्वात्त्रिविधमर्मान्तारकदुःखनिःशेषोपरसनदायकत्वाभावात् तदर्थं ब्रह्मज्ञानोपदेशमर्थयामि ॥ ब्रह्मज्ञानमेव यत्स ऐकदुःखनिवृत्तिहेतुः । २सोऽहं भगवो मन्त्रविदेवास्मि नात्मवित् श्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति सोऽहं भगवश्शोचामि तं मा भगवान् शोकस्य पारं तारयतु इति श्रुतिः ॥ अतो दयया यतः करणाकरणयो युद्धकरणभिक्षाऽशनयोः मध्ये यच्छ्रेयः तदुपदेशपूर्वकं ब्रह्मज्ञानं मह्यमुपदिश ॥ ८ ॥

धृतराष्ट्रः ॥ एवमुक्त्वा पार्थः किमकरोत् वद मे सञ्जय ॥

## सञ्जय उवाच ॥

एवमुक्त्वा हृषीकेशं गुडाकेशः परन्तप ॥
न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह ॥ ९ ॥

१ अत्र 'सद्यस्त्यजन्ति' इति श्लोकोऽनुसन्धेयः ॥ २ वक्ष्यते च ॥ प्रसादे सर्वदुःखानां हानिरस्योपजायते ॥ प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते ॥ (२. ६५.) इति ३ छां. ७. १. ३.

**एवमिति** ॥ परन्तपः गुडाकेशः हृषीकेशं गोविन्दं कृष्णं एवं इति उक्त्वा न योत्स्ये इति उक्त्वा तूष्णीं बभूव ह आश्चर्यमिदम् ॥ ९ ॥

शत्रुतापनसमर्थोऽपि ज्ञातृत्वात् त्रिदिनधर्माधर्मदर्श्यपि पार्थ ,हृषीकेशत्वात्सर्वप्राणिसकलेन्द्रियप्रेरकश्रीकृष्णप्रेरणया तमेवमुक्त्वा न योत्स्यामीति पुनरुक्त्वा तूष्णीं बभूव ॥ आश्चर्यमिदं यदर्जुनोऽप्येवमासीदिति चेत् ह आश्चर्यमेवेदम् ॥ तादृशी भगवतः प्रेरणाशक्ति ॥ अर्जुनत्याहृतोऽपि, पुनरपि युद्धे मां प्रेरयेदिति मत्वा निरुत्तरोऽभवत् अहो महिमा कृष्णस्य॥ अत्र हृषीकेशपदेन भगवतः सर्वज्ञत्वसकलेन्द्रियप्रेरकत्वादिमहामोहमवत्वादर्जुनाविषादनिरसनसामर्थ्यं सकलोपनिषदर्थसार्थगर्भितगीतार्थग्रहणाय तन्मनोबुद्ध्यो समुत्तेजनसामर्थ्यं यच्छोकमुच्छोषणमिन्द्रियाणामित्युक्तेन्द्रियक्षोभशमनसामर्थ्यं च सूच्यते॥ गोविन्दपदेन सर्वज्ञत्वात् अर्जुनस्य नानाहेतूपजनितविविधदुःखापनोदकादिव्यसुवाक्यप्रयोग [१] कुशलता [२]भूभारपरिहारायावतीर्णत्वाद्विविधमुपन्यस्य कथमप्यर्जुनो युद्धे प्रवर्तयितव्य इत्यभिनिविष्टता च सूच्यते॥९॥

धृतराष्ट्र ॥ न योत्स्ये इति गोविन्दमुक्त्वा तूष्णीभूतमर्जुनं दृष्ट्वा श्रीकृष्ण किमकार्षीत् ॥ वद ॥

**सञ्जयः ॥ तमुवाच हृषीकेशः प्रहसन्निव भारत ॥**
**सेनयोरुभयोर्मध्ये विषीदन्तमिदं वच ॥ १० ॥**

**तमिति** ॥ हे भारत धृतराष्ट्र उभयोः सेनयो मध्ये विषीदन्तं तं अर्जुन हृषीकेशः कृष्णः प्रहसन्निव इदं वचः उवाच ॥ १० ॥

उभयो सेनयोर्मध्ये स्थित्वा विषीदन्तं तं पार्थं प्रति श्रीकृष्ण प्रहसन्निव वक्ष्यमाणं वचनमुवाच ॥ वक्ष्यमाणं वचनं तु गीतारूपं भरतकुलोत्पन्नत्वात् भायां ब्रह्मविद्यायां रतत्वाच्च त्वं तच्छ्रवणयोग्योऽसि । अतः श्रावयामि तदखिलम् ॥ शृणु ॥ मध्ये स्थित्वा उभयो सेनयोर्विषये विषीदन्तं इति वा ॥ कीदृशः सन्

---

१ गा वाच वेदं विन्दति इति, गा वाक्यम् विन्दति जानातीति २ गां भूमिं विन्दति भारपरिहारेण रक्षतीति निरुक्ति ॥

उवाच इति चेत् प्रहसन् सन् उवाच मत्प्रेरणादयं विषीदन् शिष्यो भूत्वा तत्त्वोपदेश मर्थयत इत्यन्तस्तोषेण मन्दहासं कुर्वन् सन् उवाच ॥ इवशब्दो वाक्यालङ्कारे ॥ अनुचिताचरणप्रकाशनेन लज्जोत्पादनं प्रहासः लज्जा च दुःखात्मिका स च प्रहासशब्दितः परिहासः द्विषद्विषय एव मुख्यः अर्जुनविषये तु गौणः इति सूचयितुमिवशब्द इति वा ॥ शोकाकुलतया शिष्यस्तेऽहमिति शिष्यभावमङ्गीकृतवानप्ययं अतिपरिचयादवज्ञया न मयोच्यमानमादरेण शृणुयात् अवजानीयाच्च मां अतः संनिहितबन्धुत्वस्नेहसंबन्धानुगुणं परिहासं कुर्वतेव मया वक्तुमारभ्य तत्प्रसक्तानुप्रसक्तया विवक्षितसकलतत्त्वार्थोपदेशः कर्तव्य इत्यालोच्य परिहासं कुर्वन्निव इदं वचनमुवाच इति वा ॥ तत्र १'अशोच्यानन्वशोचस्त्व'मिति परिहासः ॥ २'न त्वेवाहं' इत्यारभ्य ३'मोक्षयिष्यामि मा शुचः' इत्यन्तमुपदेशः ॥ प्रहसन् पुरुष इव प्रसन्नवदनः सन्नुवाच इति वा ॥ परिहासवाक्यानि ब्रुवन् पुरुषो यथा अनालोचयन्नेव निर्निरोधमालपति तथा सर्वज्ञत्वादनालोचयन्नेव बुद्धिश्रममन्तरेण निर्निरोधं जन्हुकन्याप्रवाहवदविच्छिन्नधारमुवाच इति वा ॥ अत्र हृषीकेश इत्यनेन गुडाकेशतया विदितसकलतत्त्वस्यापि पार्थस्य शिष्यस्तेऽहं धर्मसंमूढचेताः पृच्छामि निश्चितं ब्रूहि इति तत्त्वोपदेशप्रार्थना इन्द्रियप्रेरकश्रीकृष्णेन कारिता इति, विनैवोपदेशमिन्द्रियाधीशत्वादिन्द्रियक्षोभशमनद्वारा इन्द्रियाणां सम्यगवस्थापने शक्तोऽपि श्रीकृष्णः पार्थं व्याजीकृत्य सकललोकोपकारकरणाय वक्ष्यमाणतत्त्वोपदेशे प्रावर्तत इति च व्यज्यते ॥ सेनयोरुभयोर्मध्ये विषीदन्तमित्यनेन नायमुपेक्षाकाल इति सूच्यते ॥ १० ॥

वक्ष्यमाणं वचनमुवाच तच्च वचनं गीतारूपं इत्युक्तम् ॥ यदि 'अशोच्यानन्वशोचः' इत्यारभ्य भगवतोक्तं 'मोक्षयिष्यामि मा शुचः' इत्यन्तं वचनमेव भगवद्गीतास्यात् तर्हि प्रथमोऽध्यायः द्वितीयेऽध्याये आदितो दशश्लोकाः मोक्षयिष्यामि मा शुचः इत्यस्यानन्तरं विद्यमानो ग्रन्थश्च न गीतेत्यापतितमिति चेत् सत्यं तथाऽपि प्रथमाध्यायस्य द्वितीयेऽध्याये उक्तदशश्लोकयोश्च पूर्वाङ्गत्वेन अष्टादशे ४'इदं ते नातपस्काय' इत्यादि ग्रन्थशेषस्य उत्तराङ्गत्वेन च गीतात्वेनैव

१ २. ११. २ २. १२ ३ १८. ६६. ४. १८. ६७

व्यपदेशः ॥ अतएव '१धर्मक्षेत्रे' इत्यादि '२रथोपस्थ उपाविशत्' इत्यन्तो ग्रन्थो गीतायाः प्रथमोऽध्यायः ॥ '३तं तथा' इत्यादि '३विषीदन्तमिदं वचः' इत्यन्ता दशश्लोकी च द्वितीयाध्यायान्तर्गता 'इदं ते नातपस्काय' इत्यादिः '४ध्रुवा नीतिर्मतिर्मम' इत्यन्ता द्वादशश्लोकी अष्टादशाध्यायान्तर्गता ॥ लोके देवस्य पीठं छत्रादिकं च पूर्वोत्तराङ्गत्वेन देवत्वेनैव व्यवह्रियते ॥ आराध्यते च देवेन सह नीराजनपरिक्रमणप्रणमनादिभिरुपचारैरिति प्रसिद्धम् ॥ अस्तु नामैवं किं प्रयोजनमस्याः पीठिकायाः इति चेत् पार्थं व्याजीकृत्य लोकात्थाराथमवतारिताध्यात्मशास्त्रावतरणक्रमबोधनार्थमियं पीठिका ॥ अध्यात्मशास्त्रावतरणक्रमश्चेत्थं ज्ञेयः ॥ तथा हि ॥ '५परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात्' इत्याद्युक्तरीत्या विषयेषु निर्विण्णस्यैव अध्यात्मशास्त्रशब्दितवेदान्तशास्त्रे अधिकारः ॥ स च निर्वेदो विषयेषु दोषदर्शनमन्तरेण न संभवति ॥ दोषदर्शनं च विषये शोकोपनिपाते सत्येव सम्भवति॥ मनःप्रसादहेतुभूतदेशाविशेषादिसेवनं च तत्रोपायः ॥ जाते च निर्वेदे विविधोपन्यासैरात्मनिर्वेदो गुरुसन्निधौ निवेद्यः ॥ किमर्थमेवं निर्विद्यसे अनुभवन् विषयान् सुखमनुभव इति परीक्षार्थं गुरुणा विषयेषु प्रवर्तितोऽपि लेशतोऽपि तेषु प्रवृत्तिमलभमानो विषयेषु स्वीयमपरिहार्यं निर्वेदं प्रकाश्य तत्वमुपदिशेति सविनयमभ्यर्थनां गुरोः कुर्यात् ॥ तदनन्तरं सुप्रसन्नेन गुरुणा तत्वोपदेशः कार्यः ॥ इति सूचयितुं पार्थः श्रीकृष्णेन परमपावनं कुरुक्षेत्रमानीतः ॥ तत्र कामक्रोधाद्यभिभवजनितस्वजनगुरुजनहननादिदोषदर्शनेन विषयेषु विरक्तोऽभूत् तां च विरक्तिं '६सीदन्ति मम गात्राणी'त्यादिना प्राकाशयत् ॥ तत्र '७न च श्रेयोऽनुपश्यामी'त्यनेन नित्यानित्यवस्तुविवेकं '८न काङ्क्षे विजय कृष्णे'त्यैहिकफलविरागं '९अपि त्रैलोक्यराज्यस्ये'त्यामुष्मिकफलविरागं '१०नरके नियतं वासः' इत्यात्मानात्मविवेकं '११किं नो राज्यने'ति शमं 'किं भोगैः' इति दमं '१२यद्यप्येते न पश्यन्ती'ति निर्लोभतां '१३यदि मामप्रतीकारम्' इति तितिक्षां च प्रादर्शयत् ॥ '१४कुतस्त्वे'त्यादिना कृष्णेन परीक्षार्थं पुनर्विषयेषु प्रवर्तितः तथाऽपि न लेशेनापि विषयेषु प्रवृत्तिं लभमानः '१५श्रेयो भोक्तुं भैक्ष्यमपीह लोके' इति स्वीयमपरिहार्यं निर्वेदं प्रकाश्य

---

१. १ ४७. २ २. १ ३. २ १० ४. १८ ७८ ५ मुं. १ १२ ६ १. २९ ७. १. ३१. ८. १. ३२. ९ १ ३५ १०. १. ४४. ११. १ ३२ १२. १ ३८ १३ १ ४६ १४ २ २. १५ २. ५.

१ 'कार्पण्यदोषे'त्यादिना, २ 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं' ॥ ३ 'भृगुर्वै वारुणि ॥ वरुणं पितरमुपससार '। इति गुरूपसदनश्रुत्यर्थप्रदर्शनपूर्वकं जिज्ञासितं तत्वमादरेण पप्रच्छ ॥ ततः कृष्णेन सांसारिकदु:खशमनाय किमप्यन्यदन्विष्यतां किमुपदेशेनेति पुन परीक्षार्थमुक्तोऽर्जुनः कस्याप्यन्यस्य दु:खशमनसामर्थ्यं नास्तीति ४ 'न हि प्रपश्यामी'त्यनेनोक्त्वा इहामुत्र भोगविरागकाष्ठां प्रदर्श्य परतत्वजिज्ञासाकाष्ठां स्वनिष्ठां प्राचीकशत् । पुनः कृष्णेन परीक्षार्थं विषयेषु प्रवर्तितोऽर्जुनः 'न योत्स्ये' इत्युक्त्वा तूष्णींभावावलंबनेन स्वीयां निर्वेदस्य परमां काष्ठां प्रादर्शयत् ॥ ततः कृष्णस्तादृशमर्जुनं प्रति अध्यात्मशास्त्रमुपदिदेश ॥ परमकारुणिकतया सकललोकोद्धाराय व्याजीकृत्यार्जुनं परतत्व मशोच्या'नित्यादिना बोधयिष्यन् गुरुशिष्ययोः उक्तरीत्याशास्त्रावतरणक्रमं सप्तपञ्चाशता श्लोकैः पीठिकारूपैः सूचयित्वा हृषीकेशत्वादर्जुनं प्रक्षोभ्य तेन प्रार्थितः सुप्रसन्नः सन् गीतामुपदिदेश॥ विवक्षितप्रमेयभेदादध्यायभेदः॥ उक्तदशश्लोक्याः उपोद्घातरूपत्वादुपोद्घातरूपप्रथमाध्यायान्ते निवेश उचित इति चेत् सत्यं अर्जुनविषादरूपतदपनोदरूपार्थभेदविवक्षया महर्षिरुक्तदशश्लोकीं अर्जुनविषादापनोदके द्वितीयेऽध्याये अर्जुनविषादयोगाख्यव्यवधानेन आदौ न्यवीविशत् ॥ इति बोध्यम् ॥

धृतराष्ट्र ॥ उभयोः सेनयोः महति युद्धाय सन्नद्धयोः कथं गीतोपदेशस्यावसर ॥१॥ कथं वा रथे स्थित्वा शङ्खं चाध्माय ज्यामारोप्य शरं च सन्धाय युद्धे प्रवृत्तोऽर्जुन प्रक्रान्त युद्धं प्रविहाय तत्वोपदेशाधिगमे प्रावर्तत ॥२॥ कथं वा कृष्णस्तादृशे समये प्रवृत्त एव युद्धे बलात्कारेण स्वीयचातुर्येण वा प्रवृत्तिमनुत्पादयन् उपदेशसमय इव गीतोपदेशं प्रावर्तिष्ट ॥३॥ कथकारं वा रुक्षा विपक्षाः सपक्षाश्च परस्परक्रोधान्धतया क्षणविलंबमप्यसहमाना यावद्गीतोपदेशसमाप्ति युद्धमनारभ्य तूष्णीमतिष्ठन् ॥ ४ ॥ कथं वा विचित्रविविधबह्वर्थगर्भितायाः श्रीभगवद्गीतायाः परमरूक्षे तस्मिन् समये परिमित एव काले उपदेशनं ग्रहणं वा कृष्णार्जुनयोः सुशकम् ॥५॥ कथं

१ २ ७. २. मं. २ १२ ३. तै. ३. १.४ २ ८.

वा ईदृशस्य भगवद्गीतारूपस्याध्यात्मशास्त्रस्य सारथ्यकरणयुद्धकरणोचितवेषभूषितयोः कृष्णार्जुनयोः स्थित्वा रथे उपदेशनं ग्रहणं वा युक्तं स्यात् ॥ ६ ॥ कथं वा अर्जुनोद्धाराय वा अर्जुनं व्याजीकृत्य लोकोद्धाराय वा अर्जुनाय गीताशास्त्रमुपदेष्टुं प्रवृत्त अन्यस्मिन्नेव कस्मिंश्चन सुसमये समुचितदेशे समुचितासने स्वयमुपविश्य तमपि यथावदुपवेश्य नोपादिक्षत् ॥ ७ ॥ कथं वा युद्धाय पार्थं कुरुक्षेत्रे प्रवेश्य तं युद्धे प्रवर्त्य मोहावेशपरवशतया युद्धादुपरममर्थयन्तं १ 'सीदन्ति मम गात्राणी' त्यादिना स्वीयं विषादं निवेदयन्तं सशरं चापं त्यक्तवन्तं न पुनः प्रोत्साह्य युद्धे प्रवर्त्य भैक्षाशनेन शरीरयात्रानिर्वाहनिश्चयपूर्वकं युद्धकरणतदकरणयोः भैक्षाशनयुद्धकरणयोश्च मध्ये यच्छ्रेय तन्मे ब्रूहीति पृष्ट्वा ततो 'न योत्स्ये' इत्युक्त्वा तूष्णींभावावलंबनेन सर्वात्मना युद्धादुपरतं तं प्रति कृष्णस्य 'अशोच्यानन्वशोचस्त्वं' इत्यध्यात्मशास्त्रोपदेशो युज्येत॥ न हि स्वेनैव युद्धे प्रवर्तिते अकस्मादुपरते भूयोऽपि स्वेनैव युद्धे प्रोत्साहितं अर्जुनं प्रति विविधमुपन्यस्य स्वाभिलषितं युद्धे प्रवर्तयितव्ये प्रत्युत तद्विरुद्धसर्वनिर्वेदावहवेदान्तशास्त्रोपदेशो युक्तः स्यात ॥ ८ ॥ कथं वा सर्वज्ञशिरोमणेः कृष्णस्य प्रकृतविरुद्धोपदेशः सङ्गच्छेत ॥ ९॥ कथं वा अर्जुनेनापृष्टस्य अध्यात्मतत्वस्य महता प्रबन्धेनोपदेशो जाघटीति ॥ 'नापृष्टः कस्यचिद्ब्रूया' दिति निषधात् ॥ १० ॥ तस्मादियं श्रीभगवद्गीता कुरुक्षेत्रे कुरुपाण्डवयुद्धारंभे श्रीकृष्णेनार्जुनायोपदिष्टेत्यश्रद्धेयमेतदिति नास्तिकाः प्रमाणरहितकुयुक्तिमात्रशरणाः प्रत्यवतिष्ठन्ते ॥

सञ्जयः ॥ आस्तिकास्त्वेवं समादधते॥ श्रीकृष्णेनार्जुनाय गीताया उपदेशस्तावदावश्यकः ॥ द्वापरान्तेऽवतीर्णत्वेन कंससंहारादियावदवतारकार्यनिर्वहणानन्तरं आगामिष्यत्कलौ माभूत्सर्वात्मनाज्ञानादिलोप इति कृत्वाऽध्यात्मशास्त्रं कस्मैचन सच्छिष्याय परमाप्ततमाय उपदेशावश्यंभावात्॥ न हि पार्थादन्य कृष्णस्याऽऽप्ततम ॥ न हि ब्रह्मसूत्रादेरिव वेदव्यासेनैव प्रणयनमस्त्विति वाच्यम् ॥ तस्य तादर्थ्येन ज्ञानकार्यार्थमवतीर्णत्वात्तत्प्रणयनापेक्षया तादर्थ्येन बलकार्यार्थमवतीर्णेन श्रीकृष्णेन प्रणयनस्यैव सर्वसाधारण्येन विश्वासजननसौकर्यात् ॥ तादर्थ्येन गुरुशिष्यभावावलंबनेन युद्धसमयान्यसमये गीताया उपदेशस्य न प्रसक्तिः ॥ क्षत्रियत्वेन बलकार्यार्थमवती

र्णत्वेन समानवयस्कत्वेन मातुलेयत्वेन सखित्वेन अत्यन्तबन्धुत्वेन च गुरुशिष्यभावावलंबनसौलभ्याभावात् ॥ एतेन सप्तमी कक्ष्या प्रत्युक्ता ॥ अत एव क्षत्रियत्वाद्यनुसारेण महति युद्धे प्रवर्त्य हृषीकेशत्वात्स्वयं त प्रक्षोभ्य अध्यात्मतत्त्वोपदेशग्रहणयोग्यतामापाद्य स्वयमुपदिदेश ॥ अनेन आद्यात्तम्यः कक्ष्या निरस्ता ॥ धृष्टद्युम्नो हि पाण्डवसैन्यसेनापति स च सेनापति सन्नपि श्रीकृष्णस्य भ्रुकुटिभटकल्प ॥ कृष्णो हि पाण्डवानां सर्वस्वम् ॥ अतएव कौरवसेनाकोलाहलाकर्णनावसरे '१ तस्य सञ्जनयन् हर्ष ' इति प्रथमोक्तस्य भीष्मस्य प्रतिनिर्देश्यतया पाण्डवसैन्यकोलाहलोक्त्यवसरे धृष्टद्युम्नस्य प्रथमं निर्देशे कर्तव्येऽपि श्रीकृष्ण एव प्रथमं निर्दिष्ट ॥ २ ' माधव पाण्डवश्चै ति ३ पाञ्चजन्यं हृषीकेश ' इति च ॥ पाण्डवसैन्यं च सेनापते धृष्टद्युम्नस्य निर्देशमन्तरेण न युद्धे प्रवर्तेत ॥ सेनापतिधृष्टद्युम्नस्तु विना श्रीकृष्णस्य प्रेरणां न सैन्यमादिशेत ॥ कौरवसैन्य तु कौरवसेनापतेर्भीष्मस्य निर्देशमन्तरेण न युद्धे प्रवर्तेत ॥ स च भीष्म परमास्तिकतया पाण्डवपक्षपातितया श्रीकृष्णचरणैकशरणतया च तत्त्वमुपदिशति पार्थाय श्रीकृष्णे तदुपरोधेन न सैन्यं युद्धायाऽऽदिशेत् ॥ किं बहुना हृषीकेशत्वात्सर्वप्राणिसकलेन्द्रियप्रेरकस्य श्रीकृष्णस्य प्रेरणामन्तरेण न चतुर्मुखोऽपि स्पन्दितुमलं किमुत कौरवा पाण्डवास्तदीयाश्च॥ अतो यावदुपदेशसमाप्ति न कोऽपि कस्मिन्नपि युद्धकर्मणि प्रावर्तत ॥ एतेन चतुर्थी कक्ष्या निराकृता ॥ यदनुग्रहलेशेन मन्दोऽपि बृहस्पते समो भवति एडमूकोऽपि वाग्मी भवति सा सरस्वती, यदीयपरमानुग्रहलेशेन ब्रह्मादयो देवा तत्तत्पदानि लभन्तेस्म सा श्रीरपि यदीयचरणरज उपास्ते ॥ यच्चरणसेवाबलेन हनूमानतिगंभीरमप्यपांनिधिमतरत् ॥ पपौ च कुंभसंभवः॥ बबन्धुश्च कपय ॥ ममन्थुश्चासुरैस्सह सुरा ॥ यश्च सङ्कल्पमात्रेण सकलजगदुदयस्थितिविलयनियमनज्ञानाज्ञानबन्धमोक्षानातनोति ॥ तस्य सर्वज्ञशिखामणे अघटितघटनापटीयसो विष्वक्स्रवसो हृषीकेशतया सकलेन्द्रियप्रेरकस्य श्रीकृष्णस्य परिमित एव काले श्रीगीताशास्त्रस्य ततोऽधिकस्य वाऽन्यस्य प्रणयनमुपदेशनं च, पार्थस्य तदनुग्रहादुपदेशग्रहणं च न चित्रम् ॥ एतेन पञ्चमी

१ १ १२ २ १ १४ ३ १ १५.

कक्ष्या प्रत्याख्याता ॥ वक्तृश्रोतृप्रसक्तीनामानुकूल्ये सति भवितव्यमेव वेदान्तशास्त्रोपदेशादिना । तदानीं नायमवसरो वेदान्तशास्त्रश्रवणादे तदुचितदेशवेषाऽऽसनादेरभावादिति नालोचनीयम ॥ देशवेषादेर्मनःप्रसादैकफलत्वेन सति मनःप्रसादे तदनपेक्षणात ॥ स्मरन्ति च । १ 'तमेव देशं सेवेत तं कालं तामवस्थितिम् ॥ तानेव भोगान् भुञ्जीत मनो यत्र प्रसीदति ॥ न हि देशादिभिः कश्चिद्विशेषः समुदीरितः ॥ मनःप्रसादनार्थं हि देशकालादिचिन्तना'॥ इति॥ यद्येवं तर्हि उपदेशादौ गुरुशिष्ययोरुक्तस्य नियमस्य वैयर्थ्यापत्ति इति चेत् नियमपूर्वकानुष्ठानस्य महाफलार्थत्वादतिशयितफलार्थत्वेन सार्थक्यं नियमोपदेशस्य ॥ अनेन षष्ठी कक्ष्या निराकृता ॥ युद्धकरणतदकरणयोर्वा भैक्षाशनयुद्धकरणयोर्वा मध्ये यच्छ्रेय तन्मे ब्रूहीति पृष्टेन श्रीकृष्णेन तदेव वक्तव्यम नाध्यात्मशास्त्रम तस्य तेनापृष्टत्वात् 'नापृष्टः कस्यचिद्ब्रूयादिति निषेधात इति चेत् 'यच्छ्रेय स्यान्निश्चितं ब्रूहि तन्मे' इति सामान्यत प्रश्नकरणेन युद्धकरणस्येवाध्यात्मतत्वस्यापि उपदेशौचित्यात्तदुपदेशः ॥ किंच सर्वस्याप्यमारानित्यतया परमश्रेयस्त्वमुपादिशेति अध्यात्मतत्वविषयोऽपि प्रश्न पार्थस्याभिमत ॥ अर्थस्तूक्तस्तथा तस्य श्लोकस्य ॥ किंच अपृष्टोऽप्यर्थं पुत्राय शिष्याय च पित्रा गुरुणा परमानुग्रहेणोपदेष्टव्य एव॥ २ 'ब्रूयु स्निग्धस्य शिष्यस्य गुरवो गुह्यमप्युत' इति हि स्मरन्ति ॥ 'नापृष्ट कस्यचिद्ब्रूया' दिति निषेधस्तु पुत्रशिष्यादिव्यतिरिक्तविषय ॥ एतेन दशमी कक्ष्या निराकृता ॥ प्रकृतं युद्धे प्रवर्तनं विहाय कुतोऽध्यात्मतत्वमुपादिशदिति चेत् ३ 'तस्माद्युध्यस्व भारत ॥ इति, ४ 'धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते'॥ इति, ५ तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चय' ॥ इति ६ 'ततो युद्धाय युज्यस्व नैव पापमवाप्स्यसि'॥ इति ७ 'निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वर' ॥ इति, ८ आतिष्ठोत्तिष्ठ भारत ॥ इति, ९ 'तस्मात्सर्वेषु कालेषु मामनुस्मर युध्य च '॥ इति, १० तस्मात्त्वमुत्तिष्ठ यशो लभस्व जित्वा शत्रून् भुङ्क्ष्व राज्यं समृद्धं'॥ इति ११ 'युध्यस्व जेतासि रणे सपत्नान्'॥

१ वाराहे ॥ २ भाग १ ९ ३ २ १८ ४. २ ३१. ५ २ ३७ ६ २ ३८ ७. ३. ३०. ८ ४. ४२. ९. ८ ७ १०. ११ ३३ ११. ११ ३४.

इति च तत्र तत्र बहुषु स्थलेषु प्रकृते युद्ध एव प्रवर्तनेन न प्रकृतासंगतिः ॥ यद्येवं तर्हि अस्य शास्त्रस्य युद्धे प्रवर्तनपरत्वेन अध्यात्मशास्त्रता न स्यात् ॥ ततश्च उपादेयता न स्यात् इति चेत् प्रत्यध्यायमध्यात्मतत्त्वप्रतिपादनपरत्वं स्पष्टमवगम्यत एव ॥ अध्यात्मतत्त्वप्रतिपादनपरत्वे त्वस्य शास्त्रस्य युद्धे प्रवर्तनमत्रानुचितमिति चेत् स्वधर्मतया निवृत्तिकर्मतया भगवत्सेवारूपतया चानुष्ठितस्य युद्धस्य मोक्षाङ्गत्वेन तत्र प्रवर्तनं अध्यात्मशास्त्रमर्हति ॥ निवरां निर्विण्णस्यार्जुनस्य महता प्रबन्धेन मोक्षशास्त्रमुपदिश्य तदनन्तरमङ्गसाधनतया युद्धकरणोपदेश एव युद्धे प्रवर्तनं सुकरम् ॥ अत एवानुपदेश ॥ एतेन अष्टमी नवमी च कक्ष्या समर्थिता ॥ तस्मादियं श्रीभगवद्गीता कुरुक्षेत्रे कुरुपाण्डवयुद्धारंभे श्रीकृष्णेनार्जुनायोपदिष्टेति श्रद्धेयमेव नात्र संशयः कार्यः ॥ वक्ष्यते च ॥ [1]'संशयात्मा विनश्यती' ति ॥ इत्यलं पल्लवितेन ॥

यत्प्रमाणं तदेवोपादेयम्॥ अत उपादेयतायै प्रामाण्यमावश्यकम् ॥ सदपि तत् गृहीतमेव प्रवृत्तिं जनयेत् नागृहीतम्॥ अतस्तत्सूचनमावश्यकं कथं तत्सूचनमिति चेत् वक्तृश्रोतृप्रसक्तानामानुकूल्ये सति आप्तमूलकत्वात्प्रामाण्यं भवति ॥ तेषामानुकूल्यसूचने प्रामाण्यमपि सूचितं भवति ॥ कथं तेषामानुकूल्यसूचनमिति चेत् गीतायाः पीठिकारूपे उक्तैः सप्तपंचाशता श्लोकैः वक्ष्यमाणस्य गीताशास्त्रस्यास्य वक्ता करुणावरुणालयो नीलनीरदसमकायो निखिलकल्याणसुगुणगणनिकायो नित्यनिरस्ताशेषहेयो निर्गुणसुमतिमयो निर्धूतमायो निरस्तापायो नित्यसुखापायो निखिलनिगमगेयो निखिलशब्दाभिधेयो देवकीतनयो भगवान् वासुदेवः॥ श्रोता च पितृष्वसेयत्वेन भगवतः परमप्रेमास्पदतया परममान्यो धनुष्मतामग्रसरो लोकैकवीरः पाण्डुनन्दनः पार्थः ॥ प्रसक्तशब्देन समयस्तु प्राणसंशयावहत्वात्परिहासानर्हः ॥ इति वक्तृश्रोतृप्रसक्तीनां प्रतिपादनेन तेषामानुकूल्यस्य प्रसिद्धत्वात्प्रमाणतममिदं गीताशास्त्रमिति प्रतिपादितं भवति॥ अतः सार्थकमिदं पीठिकारूपं प्रकरणमिति बोध्यम्॥

किं पार्थाय कृष्णेन गीतारूपाः श्लोका उपदिष्टाः उत गीतार्था एव कृष्णेनोपदिष्टाः तत्प्रतिपादकश्लोका व्यासेन विरचिता वद मे तत्त्वं संजय इति चेत् अत्र केचित् गीताख्याः सर्वेऽप्यर्थाः कुरुपाण्डवयुद्धप्रारंभसमये तत्तदर्थाभिधायकैर्वाक्यैः श्रीकृष्णेनार्जुनायोप-

---

[1] ४. ४०

दिष्टाः पठनपाठनग्रहणधारणसौकर्याय पुनः भगवता बादरायणेन तत्तदर्थावबोधकाः श्लोका विरचय्य मध्येमहाभारतं भीष्मपर्वणि योजिताः ॥ न हि श्लोकानामिव वाक्यानां ग्रहणं धारणं वा सुकरम् ॥ अत एव तं धर्मं भगवता यथोपदिष्टं वेदव्यासः सर्वज्ञो भगवान् गीताख्यैः सप्तभिः श्लोकशतैरुपनिबबन्ध' इत्युक्तं १ अभियुक्तैः ॥ 'वासुदेवार्जुनसंवादरूपां गीतामुपनिबबन्ध'॥ २ इत्यन्यैरपि ॥ संवादं रूपयति प्रतिपादयतीति संवादरूपा तां इति तट्टीकायाम् ॥ इति मन्यन्ते ॥ ३ अन्ये तु तत्तदर्थप्रतिपादका श्लोका एव भगवता श्रीकृष्णेनार्जुनायोपदिष्टा ग्रथिताश्च भारते बादरायणेन ॥ वाक्यानां निर्माणं सुकरं श्लोकानां निर्माणं तु न सुकरं कालस्तु अतितरामल्पीयान् सति चैवं श्लोकनिर्माणं कथं तदा कृष्णस्य घटते स्म इति चेत् उक्तरीत्या अघटितघटनापटीयसः प्रभोः श्रीकृष्णस्य निमेषकालमात्रे श्लोककोटिनिर्माणसंभवे न बाधकाभावात् न तदनुपपत्तिः ॥ किमर्थं श्लोकान्विरचय्योपदेशः इति चेत् अर्जुनं व्याजीकृत्य लोकोपकारार्थमुपदेश इति सिद्धान्तः ॥ श्लोकरूपतयोपदेश एव ग्रहणधारणसौकर्यसंभवेन लोकोपकारः सुकरः ॥ अत एव कृष्णावतारमुखेन गीताया ४ अवतरणमुक्तम् ॥ तत्र च प्रायशः श्रीकृष्णमुखनिस्सृतानेव श्लोकान् व्यलिखत् ॥ कांश्चित्तत्सङ्गतये स्वयं व्यरचयत् ॥ उक्तं च भगवता बादरायणेन ॥ 'गीता सुगीता कर्तव्या किमन्यैः शास्त्रविस्तरैः ॥ या स्वयं पद्मनाभस्य मुखपद्माद्विनिस्सृता'॥ इति ॥ पद्मनाभशब्दार्थतो वेदव्यास एवेति कुतो न स्यात् ॥ तथा सति कृत्स्नस्य भारतस्य भागवतस्य पुराणान्तराणां च वेदव्यासमुखनिस्सृतत्वाविशेषात्तेभ्यो गीतायास्तेन हेतुना विशेषोक्त्यनुपपत्त्या पद्मनाभोऽत्र कृष्ण एव ॥ दृश्यते च वेदव्यासरचितत्वेन सम्प्रतिपन्नेभ्यो भारतभागवतादिभ्योऽस्या गीताया शैलीभेदः ॥ किंचिदधिकप्रथमाध्यायशैलीसाम्यं तु तस्य गीतोपोद्घातरूपत्वेन गीतान्तर्भावादुपपन्नम्॥ अत एव हि कृष्णो गीताचार्य इति व्यपदिश्यते न तु गीतार्थाचार्य इति ॥ इदानीं तत्रतत्र पठनपाठनादिना सैवोपास्यमाना श्लोकरूपा संहितैव गीतेति ह्यविवादम्॥ किंच उपदेशस्य वाक्यरूपत्वे तथैव व्यासो भारते ग्रथ्नीयात् ॥ श्लोकात्मके भारते वाक्यग्रथनमनुपपन्नमिति चेत् भारते भागवतादौ च बहुषु स्थलेषु वाक्यरूपाणामध्यायानामुपलंभेन तथावचनमनुचितं ॥ एवं सति अन्यत्रापि तत्तद्वाक्यानुवादस्थले तत्तद्वाक्यमेव लेखनीयं स्यात् इति चेत् लाघवात्तत्तद-

१. अद्वैतभाष्ये २. द्वैतभाष्ये ३. विशिष्टाद्वैतेन. ४ विशिष्टाद्वैतभाष्ये

र्थकश्लोकैरन्यथोक्तेः प्रकृते तु यथावदवगाहनाय तथैवानुवाद उचित इति विशेषो-पपत्तेः ॥ तस्मात् श्लोका एव कृष्णेनोपदिष्टा इति भाति ॥ इत्याहुः ॥

अपरे तु॥ श्रीकृष्ण इव वेदव्यासोऽपि भगवतो नारायणस्यावतारः ॥ १ कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुं' इति हि वदन्ति॥ सति चैवं सन्तु गीताश्लोकाः श्रीकृष्णेन वेदव्यासेन वा कृता ॥ उभयथाऽपि सर्वज्ञभगवत्प्रणीतत्वसत्वेन विवक्षितसर्वाति-शायिमहामहिमलाभात् ॥ किंच वेदव्यासस्य विशिष्य ज्ञानकार्यार्थमवतीर्णत्वात्तत्प्र-णीतत्वे गीताया नितरामतिशयसिद्धिः । अतएव २ कैश्चिद्व्यासावतारमुखेन गीता अवतारिता ॥ भगवदवतारद्वयानुगृहीतत्वेन सुतरां प्रामाण्यसिद्धिश्च भवति ॥ अत-एव हि ३ कैश्चिदुक्तावतारद्वयमुखेन गीता अवतारिता ॥ श्रीकृष्णस्य गीताचार्य इति व्यपदेशस्तु तदर्थानां प्रथमोपदेष्टृत्वादुपपन्नः ॥ शैलीभेदस्तु गीतायाः सर्वातिशायि-मोक्षशास्त्रत्वेन सर्वेषां स्पृहणीयतया मन्दतमानुग्रहार्थं ॥ तस्मान्नात्र विवादो युक्त इत्याहुः ॥ तस्मात् श्रीकृष्णेनार्जुनायोपदिष्टा श्रीभगवदवतारद्वयानुगृहीता सकलपुम-र्थसाधनभूता श्रीभगवद्गीता मोक्षोपायतया सर्वश्रेयोऽर्थिभिरादरणीयेति सिद्धम् ॥ स्यादनया परमं मङ्गळम् ॥

१ भार. आदि १ ॥ २ आनन्दतीर्थैः ॥ ३. अद्वैतिभिः ॥

## ॥ अथ श्रीमद्भगवद्गीता प्रारभ्यते ॥

---

धृतराष्ट्रः ॥ हृषीकेशः पार्थं प्रति तन्मोह १परिहाराय इदं गीतारूपं वचनमुवाचेत्युक्तम् ॥ किं तद्वचनम् ॥ ब्रूहि ॥

सञ्जयः ॥ अशोच्यानित्यादिकं उपदेशात्मकं वचनं

श्री भगवानुवाच ॥

अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ॥
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥ ११ ॥

अशोच्यानिति । त्वं शोचितुं अर्हाः शोच्याः न शोच्याः अशोच्याः तान् प्रति अन्वशोच, अनुशोचितवानसि ॥ प्रज्ञया वादाः वचनानि प्रज्ञावादाः तान् भाषसे च ॥ पण्डा विलक्षणा बुद्धिः एषामस्तीति पण्डिताः गताः असवः प्राणा येभ्यः ते गतासवः मृताः, तान् न गतासवः अगतासवः जीवन्तः तांश्च प्रति नानुशोचन्ति ॥ ११ ॥

हे अर्जुन त्वं मूढोऽसि ॥ कोऽयमस्थाने तव मोहः ॥ अत एव ह्युक्तं मया ॥ २ 'कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम्' इत्यादि ॥ कुत इति चेत् ॥ त्वं यान्

१ अर्जुनस्य द्वौ मोहौ ॥ तत्रैकः अनात्मनि अनात्मीये अशोच्ये आत्मत्वाऽऽत्मीयत्वशोच्यत्वप्रतिभासरूपः सर्वप्राणिसाधारणः ॥ अपरस्तु युद्धाख्ये स्वधर्मे हिंसादिदोषबाहुल्यादधर्मत्वप्रतिभासरूपः अस्थानकरुणादिदोषनिमित्तकोऽसाधारणः ॥ तत्राद्यस्य 'नत्वेवाह'मित्यादिभिरेकोनविंशत्या श्लोकैर्निरासः ॥ द्वितीयस्य तु 'स्वधर्ममपि चावेक्ष्य (२. ३१.) इत्यादिभिरष्टाभिः श्लोकैः' इति विवेकः ॥

भीष्मादीन् प्रति १ 'येषामर्थे कांक्षितं नो राज्यं भोगाः सुखानि च' ॥ २ 'कथं भीष्ममहं संख्ये' ३ 'यानेव हत्वा न जिजीविषामः' इत्याद्युक्तरीत्या शोचसि ते अशोच्याः शोचितुमनर्हाः ॥ तान् प्रति न त्वया शोकः कार्यः ॥ करोषि च शोकम् ॥ अतस्त्वं मूढोऽसि॥ अशोच्यान् अन्वशोच इत्युच्यते ॥ केचिदशोच्याः शोचन्ति ताननुसृत्य त्वमपि शोचसीति ह्यर्थः स्यात् ॥ न च तद्युक्तम् ॥ न मया शोचन्तः कांश्चिदशोच्याननुसृत्य शोच्यते इति चेत् प्रतीत्यध्याहृत्य अशोच्यान् प्रति त्वमन्वशोच इति मयोच्यत इति गृहाण॥ अनुना शोकस्य चिरानुवृत्तिः सूच्यते ॥ अशोच्यान् अ । लक्षीकृत्य उद्दिश्य त्वमशोच इत्यर्थग्रहणे नैवावकाशश्चोद्यस्य ॥ अशोच इति कथं भूतार्थकस्य लङः प्रयोगः ४ 'पार्थ पश्यैतान् समवेतान् कुरून्' निति त्वयोक्तोऽहं सर्वान् बन्धून् समीक्ष्य मदीया इमे सर्वेऽपि नियतं युद्धे मरिष्यन्तीति य शोकमाप्य तेन उपहतस्वभावः सन् ५ 'दृष्ट्वेमान् स्वजनान् कृष्ण' त्यादिक वचनमवोचः स शोको नाद्याप्युपरतः इदानीमपि ६ शोचन खलु वर्तेऽहम् इति चेत् अशोच इति ७ उक्तं ७ शोचसीति लडन्ततया विपरिणम्यताम् सति चैवं न चोद्यावकाशः ॥ अद्यतने जातस्यापि शोकस्य अनद्यतने जातस्य चिरानुवृत्तस्येव विविधविचित्रानेककुत्सकार्यकरणादसह्यत्वं सूचयितुं अनद्यतनभूतार्थकलङः प्रयोगः ॥ अशोच्यान प्रति शोचतां मूढत्वे पुत्रान् प्रति शोचितवान् वासिष्ठोऽपि मूढः स्यात् इति चेत् प्रज्ञावादांश्च भाषसे॥ न केवलं अज्ञवदशोच्यान प्रत्यनुशोचनम् ॥ किंतु अज्ञवद्भाषणं च ॥ नातः परं अनुचितमस्तीति चशब्देन सूच्यते॥ यानि वचनानि तानि च स्वबुद्धिमात्रपरिकल्पितानि अप्रामाणिकानि सतामसंमतानि प्राज्ञानां विरुद्धानि वचनानि तानि च भाषसे ॥ वासिष्ठादयोऽप्यशोच्यान् प्रत्यशोचन् ॥ तथाऽपि तेन न तेषां मौढ्यमापादयितुं शक्यम् ॥ कुत इति चेत् ॥ सतामसंमतानि वचनानि भाषमाणा नाशोचन किंतु यान प्रति अहं शोचामि ते अशोच्या तान् प्रति शोककरणमनुचितमिति जानन् अशोच्यान् प्रति शोककरणमनुचितमिति ज्ञापयंश्चाहं बलवत्या दुर्जयया भगवतो मायया शोचामि अहो मायाया शोककारित्वमिति ... तथा बोधयन्तश्च शोचन् ॥ शोचन्ति चैवमेव तादृशा इतरेऽपि ॥ त्वं तु ८ 'यद्यप्येते न

१. १ ३३. २. २. ४. ३ २ ६. ४ १. २५ ५. १ २८ ६ अत एव पूर्वश्लोके 'सेनयोरुभयोर्मध्ये विषीदन्त'मित्युक्तम् ॥ ७. तेन पूर्वश्लोकस्थेन विषीन्तमित्यनेन न विरोधः ॥ ८. १. ३८

पश्यन्ति ' १ 'कथं न ज्ञेयमस्माभिः' २ 'नरके नियतं वासो भवति' ३ 'श्रेयो भोक्तुं भैक्ष्यमपीह लोके' इत्याद्युक्तरीत्या शोककरणमुचितमिति प्रदर्शयन्नेव प्राज्ञवद् प्राज्ञवादानेवाभाषथाः अतस्त्वं मूढः ॥ न तु तथा वदन्तो महान्तः ॥ प्रज्ञया वादाः प्रज्ञायाः वादाः प्रकर्षेण जानन्तीति प्रज्ञाः तेषां प्राज्ञानां अवादाः विरुद्धवादाः ॥ अभ्रभक्षन्यायेन स्वप्रज्ञामात्रहेतुकाः प्रमाणरहिता वादाः त्वदीया इमे वादाः ॥ माऽस्तु तेषां मौढ्यम् ॥ अशोच्यान् प्रत्यनुशोचनस्य शिष्टानुष्ठितत्वादनुष्ठानं युक्तमिति चेत् शिष्टैर्धर्मबुद्ध्या अनुष्ठितस्यैवानुष्ठेयत्वं न सर्वेषाम् ॥ अन्यथा शिष्टानुष्ठितनिष्ठीवनादेरप्यनुष्ठानापत्तेः ॥ अत एव ४ 'यद्यदाचरति श्रेष्ठः तत्तदेवेतरो जनः॥ स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ' इति वक्ष्यते ॥ प्रज्ञया प्रज्ञाया वा वादाः प्रज्ञानां आवादाः स्वबुद्धिशुद्धिपूर्वकाः सतां समताः प्राज्ञानां अविरुद्धाश्च वादाः तान् भाषसे ॥ तदेतत् मौढ्यं पाण्डित्यं चेत्युभयं विरुद्धम् ॥ अतस्त्वं प्राज्ञवत् भाषसे न तु जानासि ॥ शोकः सिद्धः प्रज्ञा तु वादमात्रस्था न सिद्धा ॥ वसिष्ठादयस्तु यथा भाषन्ते तथा जानते च इति वा ॥ न योत्स्य इत्युक्त्वा तूष्णीं अवतिष्ठमानं मां प्रति कथं भाषसे इति वचनं युज्यते इति चेत् भाषसे इति लडन्तं ५ अभाषथा इति लङन्ततया विपरिणम्यताम् सति चैव न चोद्यावकाशः ॥ भूतस्यापि भाषणस्य वर्तमानसामीप्याद्वा किमेवमसंबद्धं प्रलपतीति पुनःपुनर्विमृश्यमानतया वर्तमानतुल्यत्वाद्वा वर्तमानार्थकलटः प्रयोगः ॥ अशोच्यान् प्रतीति प्रज्ञावादानिति च अनूद्य शोचनं भाषणं चोच्यते ॥ अयुक्तं चेद् असिद्धानुवादासिद्धबोधनरूपदोषापत्तेः ॥ उभयवादिसंप्रतिपन्नस्य सिद्धस्यानुवादः असिद्धस्य बोधनं च हि युक्तम् ॥ असिद्धस्य सिद्धवदनुवादः नेदं सिद्धमिति प्रतिवादी ब्रूयात् ॥ वादिप्रतिवादिनोरन्यतरस्येदं क्षेत्रादिकमित्यसिद्धिदशायां प्राड्विवाकेन त्वं वादिनः स्वमन्यायेनाक्रामसि इत्युक्ते प्रतिवादी नेदं वादिनः स्वमिति साधितं सति चैव वादिनः स्वमिति कथं सिद्धवदनूद्यते इति ब्रवीति ॥ अतः सिद्धान् भीष्मादीन् अनूद्य असिद्धं शोच्यत्वं विधेयम् ॥ अतः कथमिदमिति चेत् यान् ते इत्यध्याहृत्य

१. १ ३९ २. १ ४४ ३. २ ५ ४ ३. २१. ५ तेन तूष्णीं बभूवेत्यनेन (२. ९.) न विरोधः ॥

यान् प्रति त्वमनुशोचसि ते अशोच्याः यान् वादान् भाषसे ते प्रज्ञावादाः इति विभक्तिविपरिणामेन योजनायां असिद्धस्याशोच्यत्वस्य प्रज्ञावादत्वस्य च बोधनमुपपद्यते॥ अभ्याहारविपरिणामौ विना यथाश्रुतेनैव उक्तदोषपरिहारो वरमिति चेत् चशब्द एवार्थे ॥ तस्य अशोच्यांश्च प्रज्ञावादांश्चेत्युभयत्रान्वयः ॥ अशोच्यानेव अन्वशोचः प्रज्ञावादानेव भाषस इति तदर्थः ॥ अग्निमानेव हि धूमवानित्युक्ते यत्राग्निर्न स्यादत्र तर्हि धूमोऽपि न स्यात् अस्ति च धूमः तस्मादस्त्येवाग्निः इत्येवकारसहितेनोक्तस्य वह्नेर्विधेयत्ववत् अत्र एवकारार्थकचशब्दसहितेनोक्तस्य अशोच्यत्वस्य प्रज्ञावादत्वस्य च विधेयत्वं लभ्यते ॥ अतो नोक्तदोषः ॥ दोषमभ्युपेत्य परिहरणापेक्षया यथा अयं दोषो नापद्यते तथा व्याख्यानं वरम् ॥ प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् ॥ इति न्यायात् ॥ इति चेत् अशोच्या ननु अशोच त्वं इति पदच्छेदः ॥ त्वं शोचसि ते अशोच्याः ननु अशोच्याः खलु अशोच्यत्वं श्रुतियुक्त्यादिसिद्धं इति ननुना सूच्यते ॥ प्रज्ञा वादान् इति छेदः । वादान् भाषसे ते च प्रज्ञा एकवचनेन स्वप्रज्ञामात्रहेतुकाः हेतुहेतुमतो [१] रभेदेन व्यपदेशः शास्त्रादौ लोके च प्रसिद्धः ॥ त्वं शोचसि अतो मूढोऽसीत्युक्तम् ॥ पण्डितश्चेन्न शोचेत्ता ॥ मृतान् मरिष्यतश्च प्रति शोचन्ति हि लोके इति चेत् पण्डिताः पण्डा विलक्षणा आत्मानात्मपरमात्मविषया बुद्धिः तद्वन्तः गतासून् गतप्राणान् मृतान् [२] मदर्थे त्यक्तजीविता इत्यत्रानतिरिक्त्या ... निश्चितं यत्तदतीतत्वेन भण्यते । इति न्यायेन गमिष्यत्प्राणान् मरिष्यतः अगतासून् अमृतान् : जीवतश्च प्रति नानुशोचन्ति ॥ जीवतः प्रति पण्डिता नानुशोचन्तीत्युक्तेः अपण्डिताः जीवतः प्रति शोचन्तीति प्रतीयते ॥ न तद्युक्तं जीवतः प्रति अपण्डितानां शोकादर्शनात् इति चेत् अगतासूंश्च इत्यत्र चशब्द इवार्थे गतासून् अगतासूनिव न शोचन्ति इत्युच्यते ॥ अतो नोक्तदोषः ॥ अपण्डिताः मृतान् मरिष्यतश्च प्रति मृता मरिष्यन्तीति शोचन्ति ॥ जीवतः प्रति तु कथमिमे तान् विना जीविष्यन्ति इति, कथमिमे असद्वृत्ता विनक्ष्यन्ति इति च शोचन्ति ॥ पण्डितास्तु मृतान् मरिष्यतो जीवतश्च प्रति

१ हेतुहेतुमतोरभेदेन व्यपदेशं हेत्वलङ्कारमाहुरालङ्कारिकाः ॥ हेतुहेतुमतोरैक्यं हेतुं केचित्प्रचक्षते ॥ लक्ष्मीविलासो विदुषां कटाक्षा वेङ्कटप्रभोः ॥ इति लक्षणं लक्ष्यं च ॥ २. १ १. ३ अगतासून् गमिष्यत्प्राणान् इति केचित् ॥

न शोचन्तीति वा ॥ अविद्वांसो मृतान मरिष्यतश्च प्रति शोचन्ति ॥ विद्वांसस्तु मृता नैवागमिष्यन्ति मरिष्यन्तस्तु नियतं मरिष्यन्ति किं शोकेन कृत्यं अतो मा तान् प्रति शोकं कुरुत पश्यतेमान् जीवतोऽपत्यमित्रकलत्रादीन् कथमिमे जीविष्यन्ति इतः परं इति वा १ इमे पुत्रादय मूढा दुर्वृत्ता इति वा जीवत प्रति शोचन्ति ॥ पण्डाशब्दित-विलक्षणबुद्धियुक्तास्तु मृतान् मरिष्यत जीवतश्च प्रति २ न शोचन्ति ॥ मृतानामपुन रावृत्तिनिश्चयात् मरिष्यतां मरणस्यापरिहार्यत्वनिश्चयात् जीवतां रक्षणार्थं सर्व प्राणियोगक्षेमनिर्वाहकस्य परमात्मनो विद्यमानत्वनिश्चयाच्च ॥ पण्डिता इत्युपरि-तनपर्वकथनात् अविद्वांस विद्वांस पण्डिता इति पर्वभेदोऽयं ज्ञायते ॥ त्वं तु ३ 'कथं भीष्म 'मित्यादिना मरिष्यत प्रति शोचसि ॥ ४ ' यानेव हत्वा न जिजीवि-षाम ' इति जीवत. प्रति शोचसि ॥ अतस्त्वं मूढोऽसि ॥ देहान् आत्मनो वा प्रति शोक क्रियत इति त्वया व कर्तव्यं तानुभयान् प्रत्यपि शोको न कार्य. ॥ देहस्य सर्वथा नशिष्णुत्वात् आत्मनो नित्यत्वात त्वदीयशोकविषयाणां भीष्मादीनां महानुभावत्वेन असद्वृत्तत्वाभावात् ॥ ५ गुरूनहत्वा हि महानुभावा ' निति त्वयैव ह्युक्तम् ॥ नित्यत्वादात्मना नाशाभावेन शोकहेतोरभावात् अशोच्यत्वम् । सर्वथा नश्यतां देहानां नाशस्यापरिहार्यत्वेन शोके प्रयोजनाभावादशोच्यत्वम् ॥ अत पण्डिता गतासून् देहान् अगतासून तद्भिन्नानात्मनश्च प्रति नानुशोचन्ति ॥ त्वं तु 'कथं-भीष्म मित्याद्युक्तरीत्या भीष्मादीन् प्रति शोचसि ॥ तत्र देहा आत्मेत्युभयमेव वर्तते न ताभ्यामन्यत्किमपि ॥ देहात्मानौ त्वशोच्यौ ॥ त्वं तु शोचसि ॥ अतो मूढोऽसि ॥ ११ ॥

१ 'कृत्वा पापान्यपि खलु मया पोषिता' शैशवे ये निद्राऽऽहारावपि विजहता शिक्षिता ये कला-सु ॥ प्रादुर्भूता स्वयमिव हि ते प्राक्तनादृष्टलब्धप्रज्ञोन्मेषा इव च तनया न स्मरन्त्यात्मनोऽपि '॥ इत्यय श्लोक उदाहर्तव्यः ॥ २. अ मिथ्यात्वनिश्चयात् ॥ न हि शुक्तिरजततत्त्वज्ञानेन रजतसर्पभ्रमाप-नयनानन्तरमपि तन्निमित्तकहर्षभयकम्पादिक सम्भवति ॥ नापि हि पित्तविकारवत कदाचिद्गुडे तिक्तता प्रतिभासेऽपि पित्तदोषापगमेन गुडे मधुरत्वनिश्चयानन्तरमपि तिक्तार्थं गुडे प्रवृत्तिः संभवति ॥ तद्वत् आत्मस्वरूपज्ञानेन तदज्ञानेऽपनीते तत्कार्यभूतोऽशोच्ये शोच्यत्वभ्रमो नावतिष्ठते इति भाव ॥ ३ २.४. ४. २. ६ ५ २ ५

अर्जुनः ॥ अशोच्यान् प्रत्यनुशोचनात्त्वं मूढोसीत्युक्तम् ॥ कथमशोच्यास्ते ॥ युद्धस्य प्रारप्स्यमानत्वादात्मनश्च विनाशाः शोच्या एव हि ते ॥ शोचन्ति ह्यासन्नावनाशान् प्रति लोके ॥ नित्यत्वादात्मनां सर्वथा नश्वरत्वाच्च देहानां अशोच्यता इत्युक्तमिति चेत् आत्मनां नित्यत्वं कथम् ॥ दृश्यते हि जनिर्मृतिश्चात्मनां ब्रूहि ॥

कृष्ण ॥ न त्वेवाहं जातु नाऽऽसं न त्वं नेमे जनाधिपाः ॥
न चैव न भविष्यामः सर्वे वयमतः परम् ॥ १२ ॥

नेति ॥ अहं तु जातु कदाचिदपि न आसं इति नैव त्वं न आसीः इति नैव इमे जनानां अधिपाः जनाधिपा राजानः न आसन् इति नैव ॥ अहं आसमेव त्वं आसीरेव इमे आसन्नेव ॥ सर्वे वयं अतः अस्मात् कालात् परं भविष्यत्कालेऽपि न भविष्यामः इति च नैव ॥ अहं भविष्याम्येव त्वं भविष्यस्येव इमे भविष्यन्त्येव ॥ १२ ॥

यत् पूर्वं नासीत् यत् इदानीं नास्ति यत् इतः परं न भविष्यति तानि त्रीण्यनित्यानि ॥ कथं भीष्ममित्यादिना त्वं यान् प्रति शोचसि इमे जनाधिपा राजरूपाः आत्मानः नित्याः ॥ इमे नित्या इत्युक्ते अहं त्वं च कथमिति चेत् त्वमपि नित्यः अहमपि नित्यः ॥ कथमिति चेत् पूर्वमिदानीं इतः परं च विद्यमानत्वात् ॥ अहं पूर्वं जातु कदाचिदपि नाऽऽसमिति न किंतु आसमेव ॥ नात्र संशयः निश्चितमेवतत् ॥ अत एव नाऽऽसमिति नेति द्विर्नञ्प्रयोगः ॥ 'द्वौ नञौ प्रकृतमर्थं सातिशयं गमयतः' इति न्यायात् ॥ एवंति तु प्रमाणप्रसिद्धिद्योतनाय॥ देहेभ्य आत्मनां जीवेभ्यः स्वस्य च विशेषसूचनाय तुशब्दः ॥ त्वं पूर्वं नाऽऽसीरिति न॥ किंतु आसीरेव॥ इमे जनाधिपाः नाऽऽसन्निति न ॥ किंतु आसन्नेव ॥ अस्मात्कालात्परमपि अहं त्वं इमे वयं सर्वे न भविष्याम इति च नैव ॥ किंतु भविष्याम एव ॥ अहं इदानीमस्मि त्वमिदानीमसि इमे इदानीं सन्ति इति वर्तमानकालसंबन्धस्तु स्फुटत्वान्नोक्त एव कालत्रयेऽपि विद्यमानत्वान्नित्या आत्मानः ॥ जन्ममृती तु देहस्यैव न त्वात्मनाम् ॥ अतो नाशाभावादशोच्याः ॥ 'कथं भीष्ममहं संख्ये' इति शोचन्तं त्वां प्रति 'नेमे जनाधिपा इत्येव वक्तव्यम् ॥ तथाऽपि त्वत्प्रेमास्पदस्य मम मत्प्रेमास्पदस्य तव च युद्धे छेदभेदादिकं स्यात् इति शङ्काऽनुदयाय मम तव च नित्यत्वमुक्तम् ॥ जीवानां खलु नित्य-

त्वं वाच्यं ईश्वरस्य तव किमर्थं अत्र नित्यत्वमुच्यते इति चेत् मामीश्वरं नित्यं ये न जानन्ति तान् प्रति अहं त्व इमे च नित्या इति योजना ॥ ये तु मामीश्वरं नित्यं जानन्ति तान् प्रति तु यथा तथा इत्यध्याहृत्य अहं यथा नाऽऽसमिति न तथा त्वं नाऽऽसीरिति न इमे नाऽऽसन्निति न अहं यथा न भविष्यामि इति न तथा त्वं न भविष्यसीति न इमे न भविष्यन्तीति न इति योजना॥ यथा परमात्माऽहं नित्य तथा त्वदादयो जीवाश्च नित्या इति तदर्थ ॥ अत्र न त्व नेमे इति एकस्य नञ प्रयोगेऽपि एकस्य नञः असधातोश्च प्रथमवाक्यादनुवृत्तिरवर्जनीया प्रथमवाक्यादेव नञद्वयमनुवर्त्यताम् ॥ किमनेन न त्वं नेमे इति नञद्वयेन इति चेत् सत्य यदि त्व इमे इत्येवोच्यत तर्हि नञद्वय सहितधातोरनुवृत्त्या प्रथमवाक्य इव नाऽऽसीरिति न नाऽऽसन्निति न इति निषेधद्वये पर्यवस्यति वा नासामीति नेत्यस्य प्रतिनिर्देश्यतया निर्देशात् अहं नाऽऽसमिति न त्वं तु न तथा कितु नाऽऽसी इमे तु न तथा किंतु नाऽऽसन् इति एकनिषेधे पर्यवस्यति वा इनि शङ्का स्यात् ॥ अतः प्रतिनिर्देश्यतया निर्देशेन पर्यवसितस्य निषेधस्य निषेधाय पुन नञः प्रयोगः ॥ इदं प्रथमयोजनायाम ॥ यथाशब्दाध्याहारपूर्वकद्वितीययोजनायां तु त्वं न इमे न इति नञ्द्वयमनावश्यकमेव ॥ कुत इति चेत् यथा अहं नाऽऽसमिति न तथा त्व इमे इत्युक्तौ सादृश्योक्त्या निषेधद्वय एव पर्यवसानसिद्धेः ॥ एवंसति द्वितीययोजनायां तौ नञौ व्यर्थौ वा इति चेत् न व्यर्थौ किंतु अवश्यबोधयितव्यार्थबोधनेन महाफला ॥ कोऽसाववश्यबोधनीयोऽर्थ इति चेत् अहं यथा नासमिति न तथा त्वं नासीरिति नेत्याद्युक्तौ परमात्मनो मम जीवात्मनां च सादृश्यं प्रतीयेत॥ नच तद्युक्तं॥ अर्जुन व्याजीकृत्य लोकोद्धारार्थं तत्वोपदेशाय प्रवृत्तेऽस्मिन् महाशास्त्रे भगवद्विषये कर्मयोगध्यानयोगभक्तियोगज्ञानयोगा कार्या इत्येवमर्थप्रतिपादके प्रथमकवले मक्षिकापातन्यायेन सर्वयोगमार्गोच्छेदकतया महाऽनर्थाऽऽवहस्य आत्मनां भगवता सादृश्यबोधनस्य परमविरुद्धत्वात् ॥ आत्मनां भगवता सादृश्ये ज्ञाते न कोऽपि भगद्विषये कर्मयोगादिकं कुर्यात् ॥ न हि स्वसदृशतया ज्ञात कञ्चित्प्रति भक्त्या शुश्रूषादिकं कुर्वते ॥ परमात्मानं मां सखायं मत्वा अवमन्यमानस्य तव मया सदृशास्त्व इत्युपदेशे कृते मत्सदृश एव वाऽय कथं मे गुरुर्भवितुमर्हतीति बुद्धिरुन्मिषेत् ॥ अत अहं यथा नाऽऽसमिति न तथा त्वं नाऽऽसीरिति न तथाऽपि अहं यथा त्वं तथा न कुत इति चेत् बहूनां विशेषाणां विद्यमानत्वात् ॥ तुशब्दो विशेषसूचकः ॥ विशेषाश्चोपरिष्टाद्व्यक्तीभविष्यंति ॥ अतो

ऽहं गुरु त्वं शिष्य इति न्याय्यम् ॥ एकत्रैवाधिकृतयोर्द्वयोरन्यतरैकत्राधिकृतत्वेनसाम्ये ऽपि कश्चिद्द्व्यजनेन वीजयति अपरस्तु वीज्यते इति प्रसिद्धं हि लोके ॥ यद्येवं विसदृशौ जीवात्मपरमात्मानौ नहि अहं यथा त्वं तथा इति सादृश्योक्ति कथमिति चेत् ॥ 'गन्धर्वराजप्रतिमं' 'शक्रतुल्यपराक्रम' इत्यादाविव किंचित्सादृश्याभिप्रायेण ॥ अस्ति च किंचित्सादृश्येऽपि सादृश्योक्ति मुखं चन्द्र इवेत्यादौ ॥ न हि मुख चन्द्र-इवेत्युक्तौ सर्वथा सादृश्यं मुखचन्द्रयोर्गृह्यते ॥ सर्वलोकप्रकाशकत्वादीनां गुणानां वृद्धिह्रासराहुग्रासादीनां दोषाणां च मुखे अविद्यमानानां चन्द्रे सत्वात् ॥ किंतु आह्लादकारित्वेन किञ्चित्सादृश्यमेव गृह्यते॥ तद्वदत्र किञ्चित्सादृश्याभिप्रायेण सादृश्योक्ति ॥ १ एवमात्मनां नित्यत्वादशोच्यत्वेन तान् प्रति शोचन् भवान् मूढः त्वद्वादाश्च प्रज्ञावादा ॥ १२ ॥

अर्जुन ॥ अस्त्वात्मनां नित्यत्वं देहा नश्यन्तीति शोच्यते ॥ देहानां सर्वथा नश्वरत्वात्तन्नाशस्यापरिहार्यत्वेन शोके प्रयोजनाभावादशोच्यत्वं इत्युक्त इति चेत् सुखहेतो पदार्थस्य नाश शोकहेतुः तेन हि शोचन्ति लोके ॥ न तत्र अपरिहार्यत्वान्न शोकः कार्य इति समाधानं युक्तम ॥ अतोऽन्यदुचितं समाधानं ब्रूहि ॥

कृष्णः ॥ देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा ॥
तथा देहान्तरप्राप्तिः धीरस्तत्र न मुह्यति ॥ १३ ॥

देहिन इति ॥ देहः अस्यास्तीति देही तस्य देहिन अस्मिन देहे कुमारस्य भावः कौमारं बाल्य यून भावः यौवनं तारुण्य जरा वार्धकं यथा तथा अन्यो देहः देहान्तरं तस्य प्राप्ति. देहान्तरप्राप्तिः ॥ तत्र विषये धीर. न मुह्यति मोह प्राप्नोति ॥ १३ ॥

१ अत्र अहं त्वं इमे इत्युक्त्या आत्मना भेदस्य गताप्तन अगतापन इम वयं इति बहुवचनेन बहुत्वस्य च सूचनात् ऐक्यवाद एकजीववादश्च निरस्तौ बोध्य इति द्वैतिना विशिष्टाद्वैतिनश्चाहु ॥ व्यावहारिकभेदाभिप्रायेण भेदोक्ति ॥ उपाधिबहुत्वाविवक्षया च बहुवचन अतो न विरोध ॥ इत्यद्वैतिन ॥

देहिनः अस्मिन् देहे कौमारं बाल्यावस्था यौवनं यौवनावस्था जरा वार्धकावस्था यथा पूर्वपूर्वापगमे भवति ॥ तथा देहान्तरस्य प्राप्तिरपि भवति ॥ तत्र धीरो न शोचति ॥ यथा कौमारयौवनयोर्नाश अपरिहार्यः यौवनवार्धकयोः प्राप्तिश्चापरिहार्या ॥ तथा पूर्वदेहनाश अपरिहार्य १ उत्तरदेहप्राप्तिश्चापरिहार्या ॥ अपरिहार्ये शोको न युक्त ॥ न ह्यपरिहार्ये पण्डिताः शोचन्ति ॥ वक्ष्यते च ॥ २ 'तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि' ॥ इति ॥ किञ्च न नाशस्यापरिहार्यत्वादेव शोको न कार्य इत्युच्यते ॥ किन्तु प्रतिनिधिलाभसद्भावादपि शोको न कार्य इत्युच्यते ॥ यौवनवार्धकरूपप्रतिनिधिलाभेन यथा कौमारयौवननाशे न शोकः क्रियते तथा ३ उत्तरदेहरूपप्रतिनिधिलाभेन पूर्वदेहनाशे न शोकः कार्यः ॥ न हि लब्धप्रतिनिधय पूर्वस्य नाशे शोचन्ति॥ कौमारादिनाशो नाम अवस्थानाश देहनाशो नाम अवस्थावतो नाश अतो दृष्टान्तवैषम्यमिति चेत् ॥ अवस्थानाश इव अवस्थावतो नाशेऽपि न शोकः कार्य । न हि ग्रैवेयकत्वाद्यवस्थाप्राप्त्या कटककेयूरत्वाद्यवस्थानाश इव लब्धघटपटधान्यादिरूपप्रतिनिधय कटककेयूरग्रैवेयकत्वाद्यवस्थाविशिष्टकनकरजतादिनाशेऽपि शोचन्ति ॥ कथं यौवनाद्यवस्थाप्राप्त्या कौमाराद्यवस्थानाशे समाधानं पूर्वावस्थाऽनुभवजन्यसुखानुभवस्य उत्तरावस्थायामभावात् इति चेत् पूर्वावस्थाऽनुभवजन्यदुःखानुभवाभावेन समाधानसंभवात् उक्तं युक्तम्॥ उत्तमप्रतिनिधिलाभे इदं युक्तम् ॥ अधमप्रतिनिधिलाभे कथमिति चेत् अत्रेदमवधेहि॥ प्रतिनिधिर्हि सरूपो विरूपश्च भवति ॥ द्वावपि कदाचिदुत्तमौ क्वाप्यधमौ क्वचन समानौ ॥ तत्र उत्तमयो समानयोश्च सरूपविरूपयो प्रतिनिध्योर्लाभे शोच्यताया न प्रसक्ति ॥ अधमयो सरूपविरूपयो प्रतिनिध्योर्लाभेऽपि न शोक कार्यः ॥ अधमप्रतिनिधिलाभस्य पापफलतया तदनुभवात्पापपरिहारसंभवेन ४ हिते पर्यव

१ 'मृत्युर्जन्मवतां वीर देहेन सह जायते॥ अद्य वाऽब्दशतान्ते वा मृत्युर्वै प्राणिनां ध्रुवः'॥ इति (भाग १० १ श्लोकोनुसन्धेयः ॥ २ २. २७. ३ देहे पञ्चत्वमापन्ने देही कर्मानुगोऽवशः ॥ देहान्तरमनुप्राप्य प्राक्तनं त्यजते वपुः ॥ व्रजंस्तिष्ठन् पदैकेन यथैवैकेन गच्छति ॥ यथा तृणजलूकैवं देही कर्मगतिं गतः' ॥ (भाग १० १) इत्याद्यनुसन्धेयम् ॥ ४ अत्र स्वप्राणान् यः परप्राणैः प्रपुष्णात्यघृणः खलः ॥ तद्वधस्तस्य हि श्रेयान् यद्दोषाद्यात्यधः पुमान् ॥ इति (भाग. १ ७ वचनमनुसन्धेयम्॥ राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः ॥ निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥ इति स्मृतिश्च ॥

सानात् ॥ अधमः प्रतिनिधिः तं लब्धवतः शोकहेतुः अत न लब्धवतः तदीयान् प्रति शोच्यता इति चेत् ॥ अधमप्रतिनिधिं लब्धवतः किमहमधमप्रतिनिधिमलभे इति ज्ञानमस्ति उत न आद्य[1] गजेन्द्र[2] नलकूबरमणिग्रीवादीनामिव उक्तरीत्या हितपर्यवसानानुसन्धानेन शोकस्य परिहारः द्वितीये आभरणदानेन शर्कराखण्डं लब्धवतः शिशोरिव अधमत्वज्ञानाभावेन शोकस्यैवाप्रसक्तेः ॥ अत प्रतिनिधिलाभस्य नियतत्वेन न भीष्मादीनां शोच्यता ॥ किंच भीष्मादीनां अधमप्रतिनिधिप्राप्तिशङ्कैव न त्वया कार्या। ३ गुरूनहत्वा हि महानुभावानिति त्वयैवोक्तत्वात्॥ धीरः ज्ञानी धैर्यवान्वा तत्र कौमाराद्यवस्थानाश इव देहनाशेऽपि न शोचति ॥ त्वं तु शोचसि ॥ अतो मूढोऽसि त्वं त्वद्वादाश्च प्रज्ञावादाः ॥ नत्वेवाहमित्यादिना जीवानां नित्यत्वं साधितं ॥ तत्कथं ॥ प्रमाणाभावेन जीवस्वरूपस्यैवासिद्धेः इति चेत् तस्यापि इदमेवोत्तरम् ॥ अस्मिन् देहे कौमारं यौवनं जरा लक्षणया तत्तद्ज्ञानं जायते ॥ तच्च देहिनः देहभिन्नस्य ॥ देहः अस्यास्तीति देही इति अस्त्यस्तीत्यर्थेविहितस्य इनिप्रत्ययस्य भेदनियतत्वात् ॥ तस्य जीवस्यैव अभक्षन्यायात् ॥ कुमारोऽस्मि युवाऽस्मि वृद्धोऽस्मीति कौमारादिज्ञानं जायते ॥ तच्च देहस्य न संभवति ॥ देहस्य जडत्वात् ॥ अन्यथा शवशरीरेऽपि ज्ञानोदयापत्तेः ॥ अत अन्वयव्यतिरेकाभ्यां देहभिन्नः कश्चित्सिध्यति ॥ स एवात्मा ॥ अत उक्तरीत्या जीवासिद्ध्या तेषां नित्यत्वं प्रसाध्य तेन तेषामशोच्यता विधीयते इति न कोऽपि दोषः ॥ पूर्वश्लोकोक्तं अनादित्वं अनन्तत्वं च जीवानां कथं सिध्यति तद्वदति चेत् ॥ अस्मिन् देहे देहभिन्नस्यैकस्यैवात्मनः कौमारं यौवनं जरा लक्षणया तद्ज्ञानं, योऽहं कौमारशरीरवानभूवं सोऽहमिदानीं युवशरीरवान् वर्ते इत्यादिरूपेण यथा जायते तथा देहान्तरप्राप्तिः ॥ अन्ये देहाः देहान्तराणि पूर्वोत्तरदेहाः तथा प्राप्तिः ज्ञानं गत्यर्थानां ज्ञानार्थकत्वात् ॥ यथा योऽहं कुमारशरीरवानभूवं सोऽहमिदानीं युवशरीरवान् वर्ते योऽहं युवशरीरवानभूवं सोऽहमिदानीं जराशरीरवान् वर्ते इति प्रत्यभिज्ञाबलादवस्थात्रयेऽप्येक एवास्मीति निश्चीयते तथा उत्तरोत्तरदेहेषु पूर्वपूर्वदेहानुसन्धानदर्शनादनेकेषु पूर्वोत्तरदेहेषु एक एवाऽस्मीति निश्चीयते ॥ प्रत्यग्रजातस्य गोवत्सादेः सद्य

1. 'आपन्नः कौञ्जरीं योनिं आत्मस्मृतावनाशिनीम् ॥ हर्यर्चनानुभावेन यद्गजत्वेऽप्यनुस्मृतिः' ॥ इति (भाग. ८ ४.) ॥ २ 'अतोऽहथ स्थावरता स्यात्! नैवं यथा पुनः ॥ स्मृतिः स्यान्मत्प्रमादेन तत्रापि मदनुग्रहात् '॥ इति (भाग १० १०)

एव स्तन्यपाने प्रवृत्तिदर्शनात् ॥ गजेंद्रादीनां पूर्वदेहानुस्मरणात् सुखदुःखादिवैचित्र्यस्य निर्हेतुकत्वापत्त्या पूर्वजन्मपुण्यपापहेतुकत्वस्यैव वाच्यत्वाच्च उत्तरोत्तरदेहस्थस्यात्मनः पूर्वपूर्वदेहे अवस्थानसिद्धिः ॥ देहांतरानुभाव्यफलकविविधविधिविधान प्रवृत्तिदर्शनादुत्तरोत्तरदेहानुसन्धानसिद्धे ॥ तथाचोत्तरोत्तरदेहेषु पूर्वपूर्वदेहस्थितस्याऽऽत्मनोऽवस्थानसिद्धे. ॥ एवमात्मनामनादित्वादनन्तत्वाच्च नित्यत्वं यदात्मनामुक्तं तद्युक्तम् ॥ धीरः तत्र देहातिरिक्ताऽऽत्मविषये जीवानामनन्तत्वविषये च न मुह्यति ॥ त्वं तु मुह्यन् शोचसि ॥ अतस्त्वं मूढः ॥ त्वद्वादाश्च प्रज्ञावादाः ॥

अ॥ अर्जुनः॥ देहोऽन्यः आत्माऽन्यः इति देहादात्मानं पृथक्कृत्य आत्मनो नत्वेवाहमित्यादिना नित्यत्वं साधितम् ॥ तत्कथं स्थूलोऽहं गौरोऽहं इत्यादिप्रतीत्या देह एवाऽऽत्मेति वक्तव्यत्वात् ॥ अस्तु वा देहादन्य एवाऽऽत्मा तथाऽपि तस्य नित्यत्वं कथम् ॥ जननमरणदर्शनात् जातो मृत इति व्यवहाराच्च ॥ वद ॥

कृष्णः ॥ देहिन अस्मिन् देहे कौमारं यौवनं जरा यथा तथा देहान्तरप्राप्तिः॥ यथा आत्मनः कौमाराद्यवस्थानाशे न नाशः यौवनाद्यवस्थांतरोत्पत्तौ च नोत्पत्तिः तथा पूर्वदेहनाशे न नाशः उत्तरदेहोत्पत्तौ च नोत्पत्तिः ॥ जन्ममरणं तु देहस्यैव न जीवस्य ॥ अतो नित्यत्वोक्तिः देहादन्यत्वोक्तिश्च युक्ता ॥ एवं देहादन्यत्वे नित्यत्वे च सिद्धे स्थूलोऽहं गौरोऽहमित्यादिप्रतीतिव्यवहारौ जन्ममरणप्रतीतिव्यवहारौ च कथमिति चेत् प्रतीतिरियं भ्रान्तिः ॥ व्यवहारश्चायं भ्रान्तिमूलकः ॥ अथवा स्थूलोऽहमित्यादौ अहमित्यादेः मद्देहः इत्यादिरर्थः ॥ जन्ममरणे तु देहसंयोगवियोगौ चात्मनः स्तः ॥ अतो न किंचिदप्यनुपपन्नम् ॥ तत्र एवंसति नित्यत्वे सति धीरः धीमान् न मुह्यति न शोचति ॥ आत्मनो नित्यत्वज्ञानवान् धीरः तत्र नाशे उत्पत्तौ च न मुह्यति मोहं विपरीतज्ञानं न प्राप्नोति॥ देहोत्पत्तिविनाशाभ्यां आत्मन उत्पत्तिं विनाशं च न जानाति ॥ धीरः तत्र आत्मनो नित्यत्वविषये न मुह्यति न भ्रमति ॥ त्वं तु मुह्यसि अतो मूढोऽसि ॥

तथा देहान्तरप्राप्तिरित्युक्त्या देहिनः अस्मिन् वर्तमाने देहे अवस्थाभेद इव देहभेदेऽपि आत्मा एक एव न तस्य देहभेदाद्भेद इत्युक्तं भवति ॥ तत्कथम् ॥ भिन्नयोर्देहयोरेक आत्मा कथं स्यात् इति चेत् कौमारं यौवनं जरा यथा तथा देहांतराणां अत्यन्तविलक्षणानां अन्येषां अनेकेषां स्वाप्नदेहानां

[1]सामर्थ्यादिरिव योगैश्वर्यकल्पितदेहानां च प्राप्ति ॥ अवस्थानां भेद इव अवस्थावतां देहानां भेदेऽपि नाऽऽत्मनो भेदः सोऽहमित्यादिप्रत्यभिज्ञाबलात् ॥ धीरः तत्र देहभेदादात्मभेदे विषये न मुह्यति ॥ उक्तरीत्या स्थूलशरीरादात्मनो भेदोऽस्तु ॥ लिंगशरीरात् कारणशरीराच्चात्मनो भेदः कथं इति चेत् देहिन अस्मिन् देहे यथा कौमारं यौवनं जरा तथा देहान्तरप्राप्ति ॥ कौमाराद्यवस्थाविशिष्टस्थूलदेहस्येव देहांतरस्य स्थूलाच्छरीरादन्यस्य लिङ्गशरीरस्य कारणशरीरस्य च प्राप्ति यथा कौमाराद्यवस्थाभेदेन अनेकरूपात् स्थूलशरीरात् भिन्न आत्मा तथा कर्मभेदात्सुरनरतिर्यगाद्यवस्थाभेदे नानेकरूपात् लिङ्गशरीरात् कारणशरीराच्च भिन्न एवाऽऽत्मा ॥ तथापि ब्रह्मज्ञानादपगमश्रवणात् ॥ वक्ष्यते च ॥ [2]'कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिण ॥ जन्मबन्धविनिर्मुक्ता पदं गच्छन्त्यनामयम् ' इति ॥ स्थूलशरीराद्भिन्नत्वं [3]'वासांसी'त्यत्र, सूक्ष्मकारणशरीराभ्यां भिन्नत्वं च [4]'अव्यक्तोऽयमचिन्त्योऽय'मित्यत्र वक्ष्यते ॥ सत्यम् ॥ एवमेवयं शास्त्रमर्यादा ॥ तथाऽपि मदीया एते म्रियरन् हन्ता चाहमेतेषां स्यामिति वध्यघातुकभावानुसन्धानेन शोचामीति चेत ॥ देहिन एकस्य तव अस्मिन् देहे यथा कौमारं यौवनं जरा तथा देहान्तरप्राप्ति ॥ अन्तरशब्दो विशेषवचनः परिदृश्यमानानां भीष्मद्रोणादिसर्वदेहानां प्राप्ति ॥ एकस्मिन् देहे अवस्थानामिव अवस्थावतां भीष्मद्रोणादिसर्वदेहानां देवनरतिर्यगादिनानाभेदभिन्नानां सर्वेषां देहानां च प्राप्ति तव एकस्यैव ॥ त्वमेक एव सर्वेषु देहेषु आत्माऽसन्नास्से ॥ [5]'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ॥ कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्चे'ति श्रुतिः ॥ तत्र एवंसति धीरः वेदशास्त्रपुराणाद्यवमर्शजनितात्मैकत्वनिश्चयज्ञानवान् तत्र आत्मैकत्वविषये न मुह्यति ॥ त्वं तु आत्मनः सर्वेषु देहेषु एकत्वमजानन् वध्यघातुकभेदानुसन्धानेन शोचसि ॥ अतो मूढोऽसि ॥ नित्यत्वविभुत्वयोः स्थापनादन्ये पक्षा निराकृता वेदितव्याः ॥ १२ ॥

---

१ 'एकस्तपस्व्यहमथाभवं सत्त्वमङ्गात् पञ्चाशताऽऽसमत पञ्चसहस्रमंग ॥ नान्तं व्रजाम्यु भयकृत्यमनोरथानां मायागुणैर्हृतमतिर्विषयेऽर्थभावे ॥ इति भाग ९. ६. ५३. । स्पष्टमेतत् श्रीविष्णुपुराणे ४ अंशे २ अध्याये ॥ २ २. ५१ ३ २. २२ ४ २. २५ ५ श्वे ६. ११

अर्जुनः ॥ अशोच्यान् प्रति शोचन् त्वं मूढोऽसीत्युक्तम् ॥ शोकस्तावत् द्वेधा सम्भवति ॥ भीष्मद्रोणादीनां अहन्तव्यानां हानि भविष्यति इति, तेषां हनने मम सुखहानि तद्दर्शनस्पर्शनसल्लापादि सुखहेतोरभावात ॥ दुःखप्राप्तिश्च छेदभेदादि- विकृतदेहदर्शनादि दुःखहेतो सत्वात्॥ इति च॥ तत्राद्य , अहन्तव्यानां हानिर्भविष्यतीति न त्वया शोक कार्य ॥ तेषां हानेरभावात् ॥ जीवस्य नाशाभावात देहस्य सर्वथा नाशात् तन्नाशेऽपि प्रतिनिधिलाभसद्भावात् देहान्यजीवमिथ्या देहनाशे जीवनाशा- भावात् इति त्वदुक्तया परिहृतः ॥ द्वितीयस्तु मां बाधते ॥ अत शोच्या एव ते ॥ अत अशोच्यान् प्रति शोचन् प्रज्ञावादान् भाषमाणश्च त्व मूढ इति मां प्रति कथ- मुच्यते ॥ वद ॥

कृष्ण ॥ मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः ।
आगमापायिनोऽनित्या स्तांस्तितिक्षस्व भारत ॥ १४ ॥

**मात्रेति** ॥ हे कौन्तेय अर्जुन मीयन्ते ज्ञायन्ते इति मात्राः शब्दादयो विषयाः तासां स्पर्शाः इन्द्रियैः सह सबन्धाः, मीयन्ते ज्ञायन्ते आभि. विषयाः इति मात्राः इन्द्रि- याणि तासां स्पर्शाः विषयैः सह संबन्धाः शीतं च उष्णं च सुखं च दुःखं च शीतोष्ण- सुखदुःखानि तानि ददतीति शीतोष्णसुखदुःखदाः ते एव तथाऽपि ते आगमः उत्पत्तिः अपायः नाश. आगमश्च अपायश्च आगमापायौ तौ एषा स्त इति आगमापायिन न नित्याः अनित्याः अत. तान मात्रास्पर्शान् तितिक्षस्व सहस्व ॥ १४ ॥

सुखहानि दुःखप्राप्तिश्च इति यदुक्त तत्सत्यम ॥ तथाऽपि न त्वया शोक कार्य ॥ कुत इति चेत् मात्राणां मीयते ज्ञायन्ते इति मात्राः इन्द्रियग्राह्या शब्द- स्पर्शरूपरसगन्धाख्या विषया तासां स्पर्शा तत्तद्ग्राहकैः श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणाख्यै- रिन्द्रियैः संबन्धा मीयन्ते ज्ञायन्ते आभिरिति मात्रा. तत्तद्विषयविषयकज्ञानजनकानि इन्द्रियाणि तासां स्पर्शाः तत्तद्ग्राह्यै विषयै संबन्धा इति वा मात्रा इन्द्रियाणि स्पृश्यन्ते ज्ञायन्ते इति स्पर्शा. विषया मात्रासहिता स्पर्शा इति वा मात्रास्पर्शा. ॥ विषयेन्द्रियसंबन्धा इति यावत् ॥ ते मात्रा स्पर्शा. इति भिन्ने पदे ॥ मात्रा इति तृती- यान्तम् ॥ माता प्रमाता ज्ञाता जीव तेन मात्रा जीवेन सह स्पर्शा विषयाणां इन्द्रिय

द्वारा संबन्धाः ते वा ॥ प्रथमं मीयन्ते ज्ञानेन्द्रियैः ज्ञायन्ते इति मात्रा पश्चात् कर्मेन्द्रियैः उपभोगाय स्पृश्यन्ते इति स्पर्शाः मात्राश्च ते स्पर्शाश्च मात्रास्पर्शाः कलत्रपुत्रमित्रादय स्रक्चन्दनवनितादयश्च भोग्यपदार्थाः ते वा अनुभूयमानाः शीतोष्णसुखदुःखदाः ॥ शीतोष्णशब्दो लक्षणया शब्दस्पर्शरूपरसगन्धरूपविषयबोधनद्वारा तदनुभवं बोधयत ॥ शीतोष्णाभ्यां विषयानुभवद्वारेत्यर्थः ॥ सुखं दुःखं वा ददतीति शीतोष्णसुखदुःखदा तादृशा एव ॥ तु शब्द एवार्थे ॥ विषयेन्द्रियसंबन्धा इष्टविषयानुभवद्वारा सुखप्रदा अनिष्टविषयानुभवद्वारा दुःखप्रदाश्चैव ॥ विषयेभ्य पृथक् शीतोष्णयोर्ग्रहणं तु अनुकूल प्रतिकूल वा अध्यात्ममुत्पाद्य तेन सुखं दुःखं वा ददति इत्यर्थबोधनाय ॥ शीतं उष्णं सुखं दुःखं च ददतीति तादृशा वा ॥ शीतोष्णोत सुखदुःखयोर्दृष्टान्त ॥ सलिलसंयोग शीतमिव आतपसंयोग उष्णमिव च इष्टविषयसंयोग सुखं अनिष्टविषसंयोगो दुःखं च ददाति ॥ ते भोग्यपदार्थाश्च शीतं उष्ण सुखं दुःखं च ददतीति तादृशा ॥ यच्छीतप्रद तत्सुखप्रदं इति शीतप्रदस्य सुखप्रदे यदुष्णप्रदं तद्दुःखप्रद इति उष्णप्रदस्य दुःखप्रदे चान्तर्भावात्सुखदुःखाभ्यां पृथक् शीतोष्णयोर्ग्रहणं व्यर्थं इति चेन्न देशकालव्यक्तिभेदेन वैपरीत्याच्छीतोष्णयो सुखदुःखनियमो नास्ति अत पृथग्ग्रहणम ॥ सुखदुःखेत्यत्र क्रमव्युत्क्रमयोरुभयोरपि विवक्षणादनुपपत्त्यभावेन पृथग्ग्रहण व्यर्थमेनेति चेत सुखदुःखाभ्या पृथक् शीतोष्णयोग्रहण त अनुकूल प्रतिकूल वा अध्यात्ममुत्पाद्य ताभ्यां सुख दुःखं च ददतीति सूचनाय ॥ शीतोष्णाभ्यां सुखदुःखदा इति वा ॥ शीतोष्णाविव सुखदुःखप्रदा इति विशिष्टस्य दृष्टान्तो वा ॥ शीत उष्णश्च देशकाल व्यक्तिभेदेन अनुकूलौ प्रतिकूलौ वा सन्तौ यथा सुख दुःखं वा दत्तः तथा मात्रास्पर्शा अपि देशकालव्यक्तिभेदेन अनुकूला प्रतिकूला वा सन्त सुख दुःख च ददति ॥ तथाऽपि तान् तितिक्षस्व विफलीकुरु ॥ सहस्व इति वा ॥ उपेक्षस्व इति वा ॥ सुखदुःखप्रदाश्चेत कथ तेषां तितिक्षणं संभवतीति चेत ॥ तुशब्द एवार्थे ॥ मात्रास्पर्शास्तु मात्रास्पर्शा एव शीतोष्णसुखदुःखप्रदाः किं काकुस्वरेणेदं लभ्यते ॥ न किंतु इष्टेषु स्नेहरूपेण अनिष्टेषु द्वेषरूपेण अनात्मीयेषु आत्मीयताभ्रमरूपेण अनात्म

नि देहादौ आत्मत्वभ्रमरूपेण अस्वतन्त्रे आत्मनि स्वतन्त्रत्वभ्रमरूपेण चाभिमानेन सहिता एव सुखदुःखप्रदा ॥ त्वं तु विवेकादभिमानं परित्यज्य मात्रास्पर्शान् तितिक्षस्व ॥ यथा सुखदुःखदा न स्युः तथा कुरु ॥ अभिमानसहिता एव सुखदुःखप्रदा न केवला" इति कथं ज्ञायते इति चेत् आगमापायिनः खलु ते ॥ आगमः उत्पत्तिः अपायः नाशः उत्पत्तिविनाशवन्तः कादाचित्काः अतः केवला ते न सुखदुःखप्रदा ॥ इदं कथं, कादाचित्कैरपि मात्रास्पर्शैः तदानीं सुखदुःखानुभवदर्शनात् इति चेत् मात्रास्पर्शा आगमापायिन इति मात्रास्पर्शानां कादाचित्कत्वं नोच्यते ॥ प्रयोजनाभावात् ॥ किंतु मात्रास्पर्शानां यत् सुखदुःखप्रदत्वं तत् कादाचित्कं इत्युच्यते ॥ सविशेषणे विधिनिषेधौ विशेष्ये बाधाद्विशेषणमुपसंक्रामतः इति न्यायात् ॥ कदा सुखदुःख" प्रदा कदा तथा न इति चेत् अनुभवानुरोधेन जाग्रत्स्वप्नयोस्सुखदुःखप्रदाः सुप्तिमूर्च्छादौ तु तथा न ॥ तत्कुत इति चेत् जाग्रत्स्वप्नयोरभिमानसत्वात् सुखदुःखप्रदत्व सुप्तिमूर्च्छादावभिमानाभावात्सुखदुःखप्रदत्वं न ॥ अतः अभिमानं परित्यज्य मात्रास्पर्शान् तितिक्षस्व ॥ अभिमानाभावात् सुप्तिमूर्च्छादौ सुखदुःखप्रदत्वं नास्तीति कुत इति चेत् तदानीं विषयेन्द्रियसंबन्धे सत्यपि सुखं वा दुःखं वा नोत्पद्यते ॥ तत्र हेतुर्वाच्यः ॥ न तावद्विषयेन्द्रियसंबन्ध एव नेति युक्तम् ॥ इतरेन्द्रियाणामुपरमेऽपि सर्वशरीरवर्तिनस्त्वगिन्द्रियस्यानुपरमात् ॥ यत्रकुत्रापि शयानस्यैव सुप्तिमूर्च्छादिदर्शनेन तत्तदधिष्ठानस्पर्शस्य त्वगिन्द्रियविषयस्यापि सत्वाच्च त्वगिन्द्रियस्पर्शसंबन्धरूपविषयेन्द्रियसंबन्धस्यावर्जनीयत्वात्॥ त्वगिन्द्रियविषयस्य स्पर्शस्य सदा सत्वसूचनायैव तद्विशेषशीतोष्णग्रहणम् ॥ इन्द्रियमनसोः संबन्धो विषयानुभवे हेतुः ॥ 'आत्मा मनसा संयुज्यते मन इन्द्रियेण इन्द्रियमर्थेन ततः प्रत्यक्षं इति हि स्थितिः ॥ तदानीं त्वगिन्द्रियमनसोः संबन्धाभावादनुभव एव नास्तीति च न युक्तम् ॥ त्वगिन्द्रियस्य सर्वशरीरव्यापित्वेन मनसश्च शरीरे सत्वेन तयोः संबन्धस्य सर्वदा सत्वात् ॥ आत्ममनसोः संबन्धो नास्तीति च न युक्तम ॥ आत्ममनसोः संबन्धस्य सर्वदा सत्वात् ॥ आत्मनो मनसा मनस इन्द्रियेण इन्द्रियस्य विषयेण च संबन्धसत्वेन तदानीमनुभवो जायते ॥ सुखदुःखप्रदत्वं च नास्ति ॥ अतस्तत्र अभिमानाभाव एव हेतुर्वाच्यः ॥ विषयेन्द्रियसंबन्धं अनु-

भव चाभ्युपेत्य अनुभवाभावात्सुखदुःखप्रदत्वं नास्तीति कुतो वक्तव्यम् ॥ सुखदुःख-हेतोः अनुभवस्य सुप्त्यादावभावात् सुखदुःखप्रदत्वं नेति कुतो न स्यात् इति चेत् सुप्त्यादावनुभवाभाव एव कुत इत्याकाङ्क्षायां अभिमानाभावादनुभवाभाव इति वक्तव्यतया अभिमानाभावात् सुखदुःखप्रदत्वं नोच्यते ॥ अभिमानाभावादनुभवाभावः अनुभवाभावात्सुखदुःखप्रदत्वाभाव इति पर्यवसानम् ॥ अभिमानाभावेऽपि विषयेन्द्रियसंनिकर्षे विषयानुभवानुभवात् अभिमाने अनुभवः तदभावे न इति कथं वक्तुं शक्यमिति चेत् अभिमानाभावादनुभवाभाव इत्यत्र अनुभवशब्देन सुखदुःखहेतोः अपेक्षाबुद्धिशब्दितहानोपादानादिबुद्धिरूपानुभवो विवक्षितः ॥ स च अभिमाननियतः॥ असत्यप्यभिमाने जाग्रत्स्वप्नयोरपि सुप्त्यादौ विषयेन्द्रियसंनिकर्षाज्जायमानोऽनुभवस्तु उपेक्षाबुद्धिरूपः न सुखदुःखयोर्हेतुः ॥ विवेकादभिमानत्यागेन विषयेन्द्रियसंनिकर्षेऽपि उक्तरूपस्य सुखदुःखहेतोः अपेक्षाबुद्धिरूपस्यानुभवस्योदयं निरुध्य मात्रास्पर्शानां तितिक्षणं शक्यं कर्तुम् ॥ अतस्त्वं अभिमानं परित्यज्य मात्रास्पर्शान् तितिक्षस्व ॥ जाग्रत्स्वप्नयोरभिमानसत्त्वे सुखदुःखे तदनुभवः तदभावे न स इति अतः विवेकादभिमानं परित्यज्य मात्रास्पर्शान् तितिक्षस्वेत्येवालं वक्तव्यं सुप्तिपर्यन्तमनुधावनं किमर्थम्॥ किंच सुप्ताविव विषयान् नानुभवामीति न निराक्षितम् ॥ किन्तु अनुभवन्नपि विषयान् अभिमानपरित्यागेन तथाऽपि सुखदुःखकारकतां दूरीकृत्य अनुभूयमानास्ते विषयाः यथा सुखदुःखप्रदा न स्युः तथा कर्तव्यमिति निराक्षितम् ॥ अतः कथमिदमिति चेत् सुप्तौ मनसः[1] पुरीतति प्रवेशेन यथा ज्ञानसामान्याभावादनुभवाभावः तथा जाग्रत्यपि मनसः भगवति प्रवेशेन तदन्यविषयकज्ञानाभावादनुभवाभावं संपाद्य [2]'प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नाऽऽन्तरं' इत्याद्युक्तरीत्या सुप्ताविव जाग्रत्यपि परमानन्दं कथमनुभवेयमित्यपि निराक्षितम् ॥ किंच अभिमानं परित्यज्य तितिक्षस्वेत्युक्त्या लब्धोदयायाः केन हेतुना अभिमानाभावः सुलभः इत्याकाङ्क्षायाः पूरणार्थं सुप्तौ प्राज्ञनामकपरमात्मपरिष्वङ्गात् स्वजाग्रत्यपि परमात्मनि मनःप्रवेशनादभिमानाभावः सुलभ इति अभिमानत्यागोपाये कथनमपि चिकीर्षितम् ॥ अतः सुप्तिपर्यन्तमनुधावनमित्यलं अधिकजल्पनेन ॥ अस्त्वेवं मात्रास्पर्शानां सुखदुःखप्रदत्वस्य कादाचित्कत्वम् ॥ तथाऽपि अनित्यस्यापि गङ्गोदकादेः प्रवाहतो नित्यत्वदर्शनात् सुखदु-

१. नाडीविशेषे॥ २ बृ. ६. ३ २१.

खप्रदत्वं प्रवाहतो नित्य इति स्यात् ॥ ततश्च अभिमानाभावदशायामपि तत्सद्भाव आवश्यकः स्यात् ॥ तथासति अभिमाने सति सुखदुःखप्रदत्वं तदभावे नेति वक्तु मशक्यं स्यात् ॥ अतः कथमिद इति चेत मात्रास्पर्शाः अनित्या सर्वथा अनित्या कथमनेनोक्तशंकापरिहारः इति चेत् सिद्धेसत्यारम्भो नियमाय इति न्यायात् आगमापायिन इत्यनेन अनित्यत्वे सिद्धे पुनरनित्या इत्युक्त्या अनित्यत्वस्यास्य सर्वथा अनित्यत्व एव पर्यवसानमित्यदोष ॥ अत सर्वमिद विमृश्य मात्रास्पर्शान् विफलीकुरु ॥ अभिमानरहितकेवलमात्रास्पर्शानां सुखदुःखप्रदत्वाभावः सर्वानुभवसिद्धः ॥ न हि स्वापत्यापेक्षया परमसुन्दरस्यापि परकीयापत्यस्य दर्शनं सुखाय भवति॥ न हि चात्मीयजनापेक्षया गुणाधिकानामप्यन्येषां छेदभेदकार्यादिना विकृतस्य शरीरस्य दर्शनं दुःखाय भवति ॥ कथं तितिक्षितुं शक्यमिति चेत धीरस्तत्र न मुह्यती ति पूर्वश्लोकचतुर्थपादः काकाक्षिन्यायादस्मिन्नपि श्लोके संबध्यते ॥ धीर मात्रास्पर्शविषये न मुह्यति ॥ तत्कृतहर्षविषादो न प्राप्नोति॥ अत त्वं धैर्येण अभिमानं परित्यज्य मात्रास्पर्शान् तितिक्षितुमर्हसि॥ उत्तरश्लोके धीरमित्युक्त्यनुरोधात् धैर्येणेति शेषो वा॥ यद्यभिमानं परित्यज्य मात्रास्पर्शान् तितिक्षितु शक्नोषि तर्हि भीष्मादिनाशे मम सुखहानिर्भविष्यतीति तव शोको न जायेत ॥ अभिमानेन हि सर्वं शोच्यं भवति ॥ अतः अशोच्या एव ते भवन्ति ॥ सतिचैव अकृत्वाऽभिमानत्यागं अशोच्यानेव शोच्यान् मन्यमानस्त्व मूढः त्वद्वादाश्च प्रज्ञावादाः ॥ देवतांशसभूतस्य राजर्षिवंश्यस्य च तव एवमधैर्यादशोच्यान् प्रत्यनुशोचनं प्रज्ञावादभाषणं चानुचितम् ॥

मात्रास्पर्शा सुखदुःखदा एव ॥ तथाऽपि तितिक्षस्व ॥ कुतः इति चेत् ते आगमापायिन मात्रास्पर्शानां आगमापायित्वरूपविशेषणदाने प्रयोजनाभावात तस्य प्रकृतार्थासाधकत्वाच्च सुखदुःखप्रदत्वस्य जाग्रत्स्वप्नयोरागमवन्त सुप्तिमूर्च्छादावपायवन्त. अत. अनित्याः नित्य सुखदुःखरूपकार्यं एषां नास्ति ॥ अनित्य सुखदुःखरूपकार्यं एषामस्तीति वा ॥ कुत एवमिति चत् अभिमानाभावात् सुप्त्यादौ सुखदुःखप्रदत्वाभावः जाग्रत्स्वप्नयोरभिमानसत्वात् सुखदुःखप्रदत्वम् । अत अभिमानत्यागेन तांस्तितिक्षस्व ॥ मात्रास्पर्शा सुखदुःखदा एव ॥ तथाऽपि तांस्तितिक्षस्व ॥ कुत इति चेत् आगमापायिनः अनित्याः आगमापायित्वादनित्याः यदि सर्वदा सुखदुःखप्रदाःस्युः तर्हि तितिक्षणमशक्यम् ॥ न च तथा ॥ कदाचित केषांचित् सुखं दुःखं

वा जनयन्ति केषांचित् न ॥ दृश्यन्ते हि लोके अविवेकिनां सुखदुःखप्रदाः विवेकिनां पुनरनीदृशाः ॥ अतो विवेकालम्बनेन १ तांस्तितिक्षस्व ॥

मात्रास्पर्शाः सुखदुःखदा एव तथाऽपि तांस्तितिक्षस्व॥ कुत इति चेत् आगमापायिनः अतोऽनित्याः अतस्तितिक्षस्व ॥ सुखदुःखप्रदा मात्रास्पर्शाः परस्सहस्राः व्यतीताः भविष्यन्ति च परस्सहस्राः ॥ सति चैवं कुतस्तत्र हर्षः शोको वा ॥ अतो विमृश्य तांस्तितिक्षस्व ॥

अ ॥ अर्जुनः॥ भीष्मादिसर्वशरीरेषु त्वमेक एवाऽऽत्मा सन्नास्स इत्युक्तम् ॥ तत्कथम् ॥ शरीरभेदेन सुखदुःखादिभेदोपलंभात् ॥ ब्रूहि ॥

कृष्णः ॥ यद्यात्मनः सुखदुःखादिकं स्यात् तर्हि तद्भेदादात्मभेदो वक्तव्यः स्यात् ॥ न च तस्य सुखादिकम् ॥ किंतु मात्रास्पर्शाः आगमापायिनः इदं च षष्ठ्यंतम् उत्पत्तिविनाशशालिनः देहभेदेन भिन्नस्य अनात्मनः प्रकृतिपरिणामस्य अन्तःकरणस्यैव शीतोष्णसुखदुःखदाः ॥ नत्वात्मनः ॥ तेऽप्यनित्याः अनियतरूपाः नियमेन सुखस्य वा दुःखस्य वा अहेतवः ॥ देशकालव्यक्तिभेदेन वैपरीत्यात् ॥ अतः मात्रास्पर्शान् तत्कृतशीतोष्णसुखदुःखादींश्च तितिक्षस्व ॥ उपेक्षस्व ॥ सुखदुःखादिरहितं शुद्धमात्मानं सुखदुःखादिमन्तं मा ज्ञासीः अन्तःकरणधर्माणां सुखदुःखादीनां आत्मनि संबन्ध एव नास्ति ॥ आत्मनि सुखदुःखादिप्रतीतिस्तु तत्तदुपाधितादात्म्याध्यासमूला भ्रान्तिः ॥ अतो नानुपपत्तिः ॥ त्वं कौन्तेयत्वात् भारतत्वाच्च उभयकुलविशुद्धोऽसि ॥ तेन च अध्यात्मतत्वोपदेशयोग्यः अज्ञानायोग्यश्चासि ॥ भा तत्वानि भारयन्ती ब्रह्मविद्या तस्यां रतश्चासि ॥ अतएव हि त्वया 'यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे' इति प्रार्थितोऽहम् ॥ अतस्त्वया मात्रास्पर्शानां तितिक्षणं कार्यम् ॥ तितिक्षोरेव हि ब्रह्मविद्याऽधिकारः ॥ २ 'शान्तो दान्त उपरतस्तितिक्षुस्समाहितो भूत्वा आत्मन्येवाऽऽत्मानं पश्येत्' इति श्रुतिः ॥ पूर्वत्रोक्तमखिलमत्राप्यनुसन्धेयम् ॥

१. इति विनैव काकुस्वरं व्याख्यातुं शक्यम् ॥ २. मु १ २ १२

वि ॥ अर्जुनः ॥ आत्मनां नित्यत्वात् देहस्य सर्वथा नाशाच्च न शोकः कार्य इत्युक्तम् ॥ समर्थितं च नित्यत्वमात्मनाम् ॥ अस्तुनाम तत्तथा ॥ शस्त्रास्त्रपातशीतोष्णमृदुपरुषस्पर्शादिना तेषां मम च दुःख भविष्यतीति शोचामि ॥ एवं शोचन्नहं कथं मूढः स्याम् ॥ वद ॥

कृष्णः ॥ मात्रास्पर्शाः विषयेन्द्रियसंबन्धा शीतोष्णसुखदुःखदा एव ॥ १ शीतोष्णमृदुपरुषस्पर्शशस्त्रास्त्रपातादिरूपतया सुखदुःखप्रदा एव ॥ तथाऽपि तान् तितिक्षस्व ॥ क्षमस्व ॥ सुखप्रदानां तितिक्षणं नाम तेषु उपेक्षया अनुत्सेकः ॥ कुत इति चेत् युद्धं अवर्जनीयं किल ते ॥ तुशब्दोऽवर्जनीयत्वरूपविशेषसूचक ॥ यथा तपश्चर्यायां वाताऽऽतपाहिमवर्षक्षुत्पिपासाऽऽदय प्रधानतप फलदृष्ट्या यावत्कर्मसमाप्ति क्षम्यन्ते ॥ यथा च यागे पशुहिंसा उपवासाऽऽदिना स्वपरपीडनं च इत्येवमादिकं यथा क्षम्यते ॥ तथा प्रकृते प्रधानचित्तशुद्धिज्ञानतत्फलमोक्षदृष्ट्या वर्णाश्रमोचिते विहिते युद्धे शस्त्रास्त्रपातादिभि स्वपरपीडनं अवर्जनीयत्वाद्यावद्युद्ध समाप्ति क्षन्तव्यम् ॥ आगमापायिनः अतोऽनित्याः 'सिद्धे सत्यारम्भो नियमाये' ति न्यायात् प्रवाहतोऽप्यनित्या अवर्जनीयत्वात् आगमापायित्वात् सर्वथा अनित्यत्वाच्च मात्रास्पर्शान् धैर्यावलंबनेन तितिक्षस्व ॥ अधैर्येण शोचन् त्वं मूढोऽसि ॥ १४ ॥

अर्जुनः ॥ मम सुखहानिं दुःखप्राप्तिश्च भविष्यतीत्युक्ते अभिमानत्यागेन धैर्याद्यवलंबनेन च दुःखं परिहरेत्युक्तम् ॥ तन्न मे मनसे रोचते ॥ कुत इति चेत् दुःखप्रसञ्जकं युद्ध कृत्वा दुःखं संपाद्य अभिमानत्यागादिना तत्परिहरणापेक्षया दुःखजनकस्य युद्धस्याकरणमेव युक्तम् ॥ 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वर ॥ इति न्यायात् ॥ किं ब्रवीषि ॥

कृष्णः ॥ यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ ।
समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥ १५ ॥

१. शीतोष्णादिकं तेषुतेषु वर्णाऽऽश्रमधर्मेषु यथासंभव ग्राह्यम् ॥

यमिति ॥ पुरुषाणां पुरुषेषु वा ऋषभः पुरुषर्षभः हे पुरुषर्षभ अर्जुन धीरं दुःखं च सुखं च दुःखसुखे समे दुःखसुखे यस्य सः तं समदुःखसुखं यं पुरुषं आत्मानं एते मात्रास्पर्शाः न व्यथयति न विकारयन्ति सः अमृतः मुक्तः तस्य भावः अमृतत्वं तस्मै अमृतत्वाय मोक्षाय कल्पते अर्हो भवति ॥ हि प्रसिद्धमिदं ॥ हि यस्मात् तस्मात् तितिक्षस्व इति वा ॥ १५ ॥

यद्यपि दुःखाभावो मुद्राकरणेनापि संभवति ॥ तथाऽपि अभिमानत्यागादिना भवन् दुःखाभाव एव संपादनीयः ॥ तस्य परमपुरुषार्थरूपमोक्षहेतुत्वात् ॥ हे पार्थ मात्रास्पर्शा धीरं धैर्यवन्तं मनोदौर्बल्यरहितं सुखदुःखप्राप्तौ तत्कृतोत्सेकविषादयोः संस्तंभकप्रयत्नवन्तम् अत एव सः दुःखपुरं विषयसुखं मोक्षविरोधित्वात् दुःखवत् हेयं मन्यमानं च ॥ विषयसुखमेव गृह्यते ॥ मात्रास्पर्शसमभिव्याहारात् ॥ मोक्षसुखं तु न ग्राह्यम् ॥ तस्य परमस्पृहणीयतया हेयत्वाभावेन दुःखसाम्यानुपपत्तेः ॥ दुःखस्य प्रथममुपादानात् दुःखसमसुखं इत्यर्थः ॥ सुखसमदुःखं इति तु न वक्तव्यम् ॥ मात्रास्पर्शैरव्यथमानस्य सुखसमदुःखत्वानुपपत्तेः ॥ मात्रास्पर्शैर्व्यथमाना मूढा हि सांसारिकदुःखं सुखत्वेन मन्यन्ते ॥ यं पुरुषं पूर्षु शरीरेषु शेते इति पुरुषं जीवं तं स्त्रियं पुमांसं वा न व्यथयन्ति न चालयन्ति । अभिमानत्यागेन सुखदुःखकृतविकारं न प्रापयन्ति ॥ न व्यथयन्तीत्यस्य न दुःखदा इत्यर्थस्तु न वक्तव्यः ॥ पूर्वश्लोके अनभिमानिनो धीरस्य विवेकिनः मात्रास्पर्शाः सुखदुःखप्रदा न भवन्तीत्युक्त्वा अत्र दुःखप्रदा न भवन्तीत्युक्तिरसंगता हि स्यात् ॥ किंच मात्रास्पर्शैः यः दुःखरूपं विकारं प्राप्नोति स इव यः सुखरूपं विकारं प्राप्नोति सोऽपि मोक्षाय न कल्पते इति विवक्षितस्यार्थस्य सिद्धिरपि न स्यात् ॥ स जीवः अमृतत्वाय अमृतो मुक्तः तस्य भावः मुक्तत्वं तस्मै मोक्षाय कल्पते अर्हो भवति ॥ बहुप्रमाणप्रमितोऽयमर्थः ॥ अतो मात्रास्पर्शास्तितिक्षस्वेति पूर्वेणान्वयः ॥ अभिमानत्यागादिना भवन् दुःखाभाव एव मोक्षहेतुः ॥ अतः कृत्वा दुःखप्रसञ्जकं युद्धं प्राप्तं दुःखं अभिमानत्यागादिना दूरीकुरु ॥ लोकेऽपि कृत्वा अवश्यकर्तव्यं कर्म तत्कृतं सुखं दुःखं वा अभिमानत्यागादिना

१ । स- इत्येकवचनेन एतादृशस्य दौर्लभ्यमुच्यते ॥

सहते यः स खलु महते फलाय कल्पते दुःखमनेन भवेदिति बिभ्यत् यः कर्तव्यं कर्म त्यजति सः फलाय न कल्पते प्रत्यवैति च अधः पात्यतेच ॥ वक्ष्यते च ॥' १ ' यः सर्वत्रानभिस्नेहः तत्तत्प्राप्य शुभाशुभम् ॥ नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता '॥ इति ॥ इदमेव पुरुषस्य पौरुषम् ॥ पुरुषपुङ्गवत्वात् त्वमेवं कर्तुं शक्तोऽसि ॥ पुरुषमित्यस्य पुमांसमित्यर्थस्तु न ॥ तत्रतत्र स्त्रीणामपि मोक्षश्रवणात् ॥ वक्ष्यते च ॥ २' मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः॥ स्त्रियो वैश्यास्तथा शूद्राः तेऽपि यान्ति परां गतिं ' ॥ इति ॥ मात्रास्पर्शैरव्यथमानोऽमृतत्वाय कल्पत इत्युक्तौ सुप्तिमूर्च्छादौ मात्रास्पर्शैरव्यथमाना सर्वेऽपि अमृतत्वाय कल्पेरन् इति चेत् एतदर्थमेव जीवमित्यनुक्त्वा पुरुषमित्युक्तम् ॥ पुरं देहं सरति गच्छति जानातीति व्युत्पत्त्या शरीरदर्शनवन्तं इति लभ्यते ॥ तेन जाग्रदवस्थायां शरीरादिज्ञानवान् यो न व्यथते स एवामृतत्वाय कल्पते ॥ मात्रास्पर्शैर्व्यथाऽभावो मोक्षहेतुरित्युक्तं भवति ॥ तत्कथं ३ ' नान्यः पन्था अयनाय विद्यते ' इति श्रुतिः ॥ इति चेत् एतदर्थमपि पुरुषं इत्युक्तम्॥ पुरु पूर्णं ब्रह्म सरति गच्छति जानातीति व्युत्पत्त्या ब्रह्मज्ञानिनं इति लभ्यते ॥ तेन मात्रास्पर्शैरव्यथमानो ज्ञानी ज्ञानद्वारा मुक्तो भवति इति सिध्यति ॥ अतो नानुपपत्तिः॥ मुक्तेः प्राक् देहाद्यभिमानस्य निरवशेषं परिहर्तुमशक्यत्वात् अत्यन्तव्यथाऽभाव एवात्र विवक्षितः इति ज्ञातव्यम् ॥ १५ ॥

अ॥ अर्जुनः ॥ तितिक्षुरेव ब्रह्मविद्याऽधिकारी अतस्तितिक्षस्वेत्युक्तम् ॥ किं तितिक्षामात्रेण मोक्षः सिध्यति ॥ ब्रूहि ॥

कृष्णः ॥ समदुःखसुखं धीरं धिया रममाणं यं पुरुषं एते मात्रास्पर्शाः न व्यथयन्ति ॥ सः नित्याऽऽत्मदर्शननिष्ठः शीतोष्णादिद्वन्द्वसहिष्णुः अमृतत्वाय मोक्षाय कल्पते ॥ समे ब्रह्मभावमापन्ने दुःखसुखे यस्य तं तादृशं धियं बुद्धिं विषयेभ्यो राति निगृह्णाति इति धीरः तं पुरुषं ब्रह्मविदं एते न व्यथयन्ति न बाधन्ते निष्ठातो न चालयन्ति॥ सः न विद्यते मृतं मरणं उपलक्षणया जन्म च यस्मात् ज्ञातात् यद्ज्ञानादित्यर्थः ॥ तत्, न विद्यते जन्म मृतिश्च यस्मात् ल्यब्लोपनिमित्ता पञ्चमी यत् प्राप्य

१. २. ५७ २. ९. ३२ ३ तै आ ३. १२.

तत्, स्वविषयकज्ञानेन मोक्षप्रदं स्वं प्राप्तानां पुनर्जनिं परिहरन् परं ब्रह्म अमृतम् ॥ १ 'एतदमृतमभयमेतद्ब्रह्म' इति श्रुतिः ॥ तस्य भावः अमृतत्वं ब्रह्मत्वं तस्मै ब्रह्मत्वाय कल्पते ॥ प्रमाणप्रसिद्धमिदम् ॥ समदुःखसुखमिति शमदमादिसाधनसंपत्तिरुच्यते ॥ धीरमिति नित्यानित्यवस्तुविवेकः ॥ एतदुभयं वैराग्यादेरुपलक्षणम् ॥ तितिक्षुत्वं शमदमादिसामग्रीसहितं ज्ञानद्वारा मोक्षहेतुः अतः तितिक्षस्व ॥

अर्जुनः ॥ आगमापायिन इत्यस्य षष्ठ्यन्ततामाश्रित्य अन्तःकरणस्यैव सुखदुःखाश्रयत्वमुक्तम् ॥ तथा च तस्यैव चेतनत्वं वाच्यम् ॥ न च तद्युक्तम् ॥ भास्यभासकयोरेकत्वानुपपत्तेः ॥ अन्तःकरणं भास्यं आत्मा भासकः ॥ अतः आत्मा अन्यो वाच्यः ॥ तथा च अन्तःकरणस्य बन्धः आत्मनस्तु मोक्षः इति बन्धमोक्षयोः वैयधिकरण्यशङ्किताऽऽश्रयभेद आपद्यते ॥ न च तद्युक्तम् ॥ यस्य बन्धः तस्य हि मोक्षः ॥ अतः कथमिदम् ॥ ब्रूहि ॥

कृष्णः ॥ समदुःखसुखं अनात्मभूतान्तःकरणधर्मतया समे दुःखसुखे यस्य तं तादृशम् ॥ २ 'एष नित्यो महिमा ब्राह्मणस्य ॥ न कर्मणा वर्धते नो कनीयान्' ॥ इति श्रुतिः ॥ वृद्धिः सुखं कनीयस्त्वं दुःखम् ॥ धियं बुद्धिं ईरयति प्रेरयति इति धीरः तं बुद्धिप्रेरकं साक्षिणं यं पुरुषं सर्वासु पूर्षु शरीरेषु शेते इति पुरुषः तम् ॥ ३ 'स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयः' इति श्रुतिः ॥ पूर्षु 'कर्मेन्द्रियाणि खलु पञ्च तथा पराणि ज्ञानेन्द्रियाणि मनआदि चतुष्टयं च॥ प्राणादिपञ्चकमथो वियदादिकं च कामश्च कर्म च तमः पुनरष्टमी पूः ॥ इत्युक्तासु अष्टासु शेते इति पुरुषः तं एते मात्रास्पर्शा न व्यथयन्ति न विकारयन्ति ॥ परमार्थतो निर्विकारत्वात् ॥ सः ब्रह्मात्मैक्यज्ञानद्वारा मोक्षाय कल्पते॥ त्वं पुरुषेषु उत्तमोऽसि ॥ सर्वसहनपूर्वकं यः परविद्याऽधिकारमापद्यते स खलु पुरुषोत्तमः त्वं तादृशोऽसि ॥ अतस्तितिक्षस्व तान् ॥ पुरुषस्य स्वप्रकाशचैतन्यरूपस्याऽऽत्मनः ऋषभत्वं निर्विकारत्वेनोत्तमत्वं 'ऋष ज्ञाने' इति धातुः ॥ ऋषेण स्वरूपज्ञानेन भातीति ऋषभः ऋषभत्वं स्वप्रकाशज्ञानस्वरूपत्वं च जानन् पुरुषर्षभः पुरुषः ऋषभो यस्येति व्युत्पत्तिः ॥ त्वं तादृशोऽसि ॥ आत्मस्व-

१. छा. ४ १५ १. २. तै. का. ३. ९ ३ बृ. ४. ५. १८.

रूपमजानन् शोचितवानसि ॥ मदुपदेशलब्धस्वरूपज्ञानात् इतः परं न शोचिष्यसि ॥ १ तरति शोकमात्मवित् इति श्रुतेः ॥ पुरुषाणामेकवचनेन जीवबहुत्वपक्षो निराकृतः ॥ अत्र सर्वसंसारधर्मविधुरस्याप्यात्मन उपाधिवशात् तत्संसर्गभ्रमो बन्धः तस्य च सत्याऽऽत्मभूतस्वस्वरूपज्ञानादुपाधिना सह निवृत्तौ स्वतः एव कैवल्यरूपो मोक्षः इति बन्धमोक्षयोरुपपत्तिः करणं न हि अयमर्थः मिथ्येति ॥ अतो न काऽप्यनुपपत्तिः॥ विमृश्येदमखिलं तितिक्षस्व ॥

वि ॥ अर्जुनः ॥ तितिक्षस्वेत्युक्तम् किं तावत्तितिक्षणम् ऐहिकसुखहेतुः उत पारत्रिकसुखहेतुः आहोस्वित् अवर्जनीयम् ॥ न तावदाद्यः दुःखरूपत्वात् ॥ न द्वितीयः ॥ आचार्यहननादिदोषहेतुत्वेन नरकायतनहेतुत्वात् ॥ नापि तृतीयः ॥ युद्धादुपरमे शस्त्रपातादेरप्रसक्तेः ॥ अतः कुतस्तितिक्षणीयम् ॥ यद्

कृष्णः ॥ धीरं धिया रममाणं धैर्यवन्तं वा॥ अत एव समदुःखसुखं दुःखं सुखसमं मन्यमानम् ॥ दुःखस्य प्रथममुपादानात् तस्यैव विशेष्यत्वमास्तम ॥ यं पुरुषं एते मात्रास्पर्शाः शीतोष्णमृदुपरुषस्पर्शशस्त्रास्त्रपातादिरूपा न व्यथयन्ति ॥ अवर्जनीयतानिश्चयेन सुखसाधनतानिश्चयेन च प्रत्युतकार्येऽस्त्र च्यावयन्ति ॥ मात्रास्पर्शसामान्यस्य दुःखहेतुत्वात् न दुःखयन्तीत्यर्थो न वक्तव्यः ॥ स अमृतत्वाय मोक्षाय कल्पते ॥ मात्रास्पर्शानां तितिक्षणं दुःखहेतुत्वादैहिकसुखसाधनम् ॥ उचितविहितकर्मकरणप्रवृत्तिहेतुत्वात् पारत्रिकसुखसाधनम् ॥ तद्धस्य अवश्यकर्तव्यत्वादवर्जनीयं च ॥ अत यथा आरोग्यकामः औषधादिसहनक्लेशम् भवार्थी समुद्रतरणादिक्लेशं सुखसाधनत्वादवर्जनीयत्वाच्च सुखं मन्यते । तथा निरतिशयानन्दकमोक्षार्थी य तत्साधनेषु वर्णाश्रमोचितेषु विहितेषु युद्धादिकर्मसु अवर्जनीयशस्त्रास्त्रपातादिजन्यशीतोष्णमृदुपरुषस्पर्शमूलकं स्वपरदुःखं सुखसाधनत्वात् सुखं मत्वा मात्रास्पर्शान् तितिक्षते ॥ स मोक्षाय कल्पते । य स इति परोक्षनिर्देशेन य एतादृशः स एव मोक्षाय कल्पते ॥ न तु त्वादृशो दुःखासहिष्णुः इति सूच्यते ॥ यद्येवमुपालम्भे तात्पर्यं स्यात् तर्हि पुरुषर्षभेति प्रशंसा कथमिति चेत् विपरीतलक्षणया पुरुषर्षभेत्यस्य पुरुषाधमेत्यर्थे

१. छा ७ १ ३.

पर्यवसानम् ॥ दृश्यते हि लोके कुरूपे मन्मथोऽयमिति कृपणे कर्णोऽयमिति च प्रयोगः ॥ अतस्त्वं तितिक्षस्व ॥ अन्यथा साधनाननुष्ठानान्मोक्षाभावः स्वधर्मस्यागात्प्रत्यवायः अधैर्यादपकीर्तिश्च स्यात् ॥ अतो मात्रास्पर्शान् तितिक्षमाणः कृत्वा युद्धाख्यं कर्म तेन निरतिशयं श्रेयो लभस्व ॥ १५ ॥

द्वै॥ अर्जुनः॥ महानुभावानां भीष्मद्रोणादीनां हननं मम सुखहानिः दुःखप्राप्तिश्च स्यादिति मा शोकं कार्षीः ॥ अभिमानत्यागे सुखदुःखयोरभावात् इत्युक्तम् ॥ तथाऽपि तेषां हनने पापं नियतं स्यात् ॥ कृतपापानां नरके वासश्च नियतः॥ उक्तं च मया॥ १ 'पापमेवाश्रयेदस्मान्' इति ॥ २ 'अहो बत महत्पापं कर्तुं व्यवसिता वयं' इति ॥ ३ 'नरके नियतं वासो भवती'ति च॥ ततश्च मम परलोके दुःखं स्यात् इति मे शोकः तद्विषयास्ते कथमशोच्याः ॥ वद ॥

कृष्णः ॥ नासतो विद्यते भावो नाभावो विद्यते सतः ॥
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥ १६ ॥

नेति ॥ असतः भावः न विद्यते ॥ सतः अभावः न विद्यते ॥ अनयोः उभयोः अपि अन्तः निर्णयः तत्वं पश्यन्तीति तत्वदर्शिनः तैः तत्वदर्शिभिः तु एव दृष्टः॥ १६ ॥

सदसच्छब्दौ सत्कर्मासत्कर्मवाचकौ ॥ वक्ष्यते च ॥ ४ 'प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते' ॥ इति ॥ असतः सतः इति च पञ्चमी ॥ असतः असत्कर्मणः सकाशात् भावः पुण्यं सुखं वा न विद्यते ॥ तथा सतः सत्कर्मणः सकाशात् अभावः पापं दुःखं वा न विद्यते॥ विद्यते इत्यस्य द्विरुक्तिरुक्तार्थदाढर्याय॥ उक्तार्थे प्रमाणं किमिति चेत् अनयोः उभयोः असत्कर्मसत्कर्मणोः ५अपि अन्तः सुखदुःखहेतुत्वाभावनिश्चयः ॥ वस्तुयाथात्म्यतत्वज्ञैः ६ एव दृष्टः ॥ दृष्टः एवेति वा॥ अन्यदर्शनस्य अन्यं प्रति अप्रत्यायकत्वात् कथमिदमिति चेत् तैः स्वयं ज्ञात्वा उपदेशपरंपरारूपः संप्रदायः प्रवर्तितः ॥

१. १. ३६. २. १. ४५. ३. १. ४४. ४. १७. २६. ५. इतरेतरसमुच्चये अपिशब्दः ॥ मोक्षहेतुसमुच्चये वा ॥ ६. तुशब्द एवार्थे ॥

तत्वज्ञानां वचनं उक्तार्थे प्रमाणम् ॥ युद्ध चेदं दुष्टनिग्रहशिष्टपरिपालनरूपमद्वतार-कार्यनिर्वाहकतया मत्प्रीतिहेतुत्वाद्त्युत्तमं १ कर्म ॥ सति चैवं कथमनेन पापं तेन च नरकदुःखं स्यात् ॥ न स्यादेव ॥ वक्ष्यते च ॥ 'न हि कल्याणकृत्कश्चित् दुर्गतिं तात गच्छति' ॥ इति ॥ किंतु परमधर्मत्वेन पुण्यं तेन च स्वर्गो मोक्षो वा स्यात् ॥ अतः परलोके दुःखं स्यादिति शोको न त्वया कार्य ॥ तथा च शोकाविषयत्वादशोच्या एव ते ॥ तान् प्रति शोचन् त्वं मूढ एव ॥ त्वद्वादाश्च प्रज्ञावादा एव ॥ वक्ष्यते च ॥ २ 'धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते ॥ इति ॥ ३ अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि ॥ ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥ इति॥ ४ 'ततो युद्धाय युज्यस्व नैव पापमवाप्स्यसि ॥ इति च ॥

५ 'न त्वेवाहं' मिति श्लोके प्रथमयोजनायां ईश्वरस्य तत्रापि ६ पक्षकोटावनुप्रवेशाद्दृष्टान्ताभावः ॥ तथाच कथमनुमानेन नित्यत्वसिद्धिः इति चेत् असतः प्रकृतेः अभावः न विद्यते ॥ सतः परब्रह्मणश्च अभावः न विद्यते ॥ उभयत्र अभावः इति छेदः ॥ अनयोः उभयोः ७ प्रकृतिपरब्रह्मणोः अन्तः तत्वदर्शिभिः दृष्टः ॥ दृष्टान्तद्वयप्रदर्शनं अनुमानदार्ढ्यार्थम् ॥ यथा असतः प्रकृतेः अभावः न विद्यते तथा सतः परब्रह्मणः मम अभावः न विद्यते ॥ उभयोरित्यादि पूर्ववत् ॥ तत्र प्रथमयोजनायां तत्रापि नित्यतायाः साधितत्वात् पुनरत्र नित्यत्वसाधनं किमर्थमिति चेत् द्वितीययोजनायां दृष्टान्तीकृते मयि नित्यत्वस्य प्रमाणप्रमितत्वसूचनार्थमत्र मम नित्यत्वसाधनम् ॥ यथा सतः ब्रह्मणः अभावो न विद्यते तथा असतः प्रकृतेः अभावः न विद्यते ॥ पूर्वयोजने दृष्टान्तीकृतायां प्रकृतौ नित्यत्वस्य प्रमाणप्रमितत्वसूचनार्थमनया योजनया प्रकृतेर्नित्यत्वसाधनम् ॥ वक्ष्यते च ब्रह्मणो नित्यत्वम् ८ 'अजोऽपि सन्नव्ययात्मा' इति ॥ ९ 'यो मामजमनादिं च' इति ॥ १० 'यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति' ॥ इति च ॥ 'नत्वेवाह' मितिश्लोकोकार्थाऽऽक्षेपेणास्य श्लोकस्य प्रवृत्तिपक्षे तदनन्तरमेवायं श्लोकः करणीयः स्यात् इति चेत् प्रस्तुतं परिसमाप्य

१. अत्र, 'तत्कर्म हरितोषं यत् सा विद्या तन्मतिर्यया' ॥ इति (भाग. १२) वचनमनुसन्धेयम्॥ २. २ ३१. ३ २. ३३. ४. २. ३८. ५. २ १२ ६. यत्र किमपि साध्यते सः पक्षः॥ ७. अत्र 'प्रकृतिः पुरुषश्चैव नित्यौ कालश्च सत्तम'॥ इति विष्णुपुराणवचनमनुसन्धेयम् ॥ ८. ४. ६ ९. १० ३. १०. ८. २०.

सिंहावलोकनन्यायेन व्यवहिताऽऽकर्षणस्य ग्रन्थस्वभावसिद्धत्वात्॥ किंच 'अशोच्या' नित्यादिपञ्चश्लोकया एकार्थपरत्वेन एकवाक्यतया दूरानुधावनाभावात् ॥ जीवानां नाशाभावात् देहानां सर्वथा नाशसद्भावात् देहनाशेऽपि प्रतिनिधिलाभस्य विद्यमानत्वात् देहान्यजीवसिद्ध्या देहनाशेऽपि जीवनाशाभावात् अभिमानत्यागेन मात्रास्पर्शानां विफलीकरणसंभवात् तथा विफलीकरणस्य मोक्षसाधनत्वाच्च न तान् प्रति शोकः कार्य' ॥ताननुशोचंश्च त्वं मूढः त्वद्वादाश्च प्रज्ञावादाः इत्येकवाक्यतायाः स्पष्टमवगमात् ॥ न ह्येकवाक्यतया बोधकेषु त्रिचतुरादिश्लोकेषु दूरान्वयो न दृष्टचरः ॥ दृश्यते चेयं रीतिः आदिकुलकान्त्यकुलकेषु काव्यादौ ॥

अस्त्वेवमात्मनां नित्यत्वानुमानस्य दृष्टान्तसद्भावाददुष्टत्वम् ॥ ततः किमिति चेत् १ असतः देहस्य सद्भावो न विद्यते ॥ सतः आत्मनः असद्भावो न विद्यते ॥ अनयोरुभयोः देहात्मनोः इत्यादिपूर्ववत्॥ 'नत्वेवाह' मित्युक्तरीत्या आत्मा नित्यः 'देहिनोऽस्मिन्यथे' त्युक्तरीत्या देहस्सर्वथा नश्वरः ॥ उक्तार्थे तत्वदर्शिनां पराशरादीनां वचनं प्रमाणम् ॥ देहस्य सद्भावः प्रत्यक्षतो दृश्यते ॥ आत्मनोऽसद्भावः २ असदेवेदमग्र आसी'दिति श्रुतावुच्यते ॥ अत्र कथं देहस्य सद्भावो न विद्यते आत्मनोऽसद्भावो न विद्यते इत्युच्यते इति चेत् भावाभावशब्दाभ्यां अविनाशस्वभावविनाशस्वभावौ विवक्षितौ ॥ देहस्य अविनाशस्वभावो न विद्यते आत्मनः विनाशस्वभावो न विद्यते इत्यर्थः ॥ अत उक्तं युक्तम् ॥ तस्मादुभयथाऽप्यशोच्या एव ते ॥ तान् प्रति कुतः शोचसि॥ शोचन् त्वं मूढः प्रतिभासि मे ॥ इदमेवोक्तम् मया ॥ 'गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः' ॥ इत्युपक्रमं ॥

अ ॥ अर्जुनः ॥ तितिक्षुत्वस्य ब्रह्मविद्याऽधिकारत्वात् मात्रास्पर्शान् तितिक्षस्वेत्युक्तम् ॥ कथं तितिक्षणं कर्तुं शक्यम् ॥ सति शीतोष्णादौ सुखदुःखकारणे तद्भोगस्याऽवर्जनीयत्वेन दुःसहानां तेषां तितिक्षणस्याशक्यत्वात् कथंचिदत्य...निवेशेन सहने देहनाशादिर्महाननर्थ आपद्येत ॥ अत कथमिदम् ॥ वद ॥

कृष्णः ॥ यदि शीतोष्णसुखदुःखादिकं जगत् सत्यं स्यात् तर्हि तत्तितिक्षणं

१. वि ॥ २ छां. ६ २ १.

कर्तुमशक्यम् ॥ न च तथा ॥ किंतु शुक्तिरजतादिवदसत्यं आत्मनि कल्पितम् ॥ ततश्च शुक्तिज्ञानेन रजतस्येव अविद्यया आत्मनि कल्पितस्य शीतोष्णसुखदुःखादे सर्वस्य प्रपञ्चस्य आत्मज्ञानेन नाशोपपत्ते· तितिक्षणं कर्तुं शक्यं॥ अत उक्तं युक्तम्॥ असतः अविद्यमानस्य सत् देशतः कालतो वस्तुतश्चापरिच्छिन्नं ब्रह्म तद्भिन्नस्य वा नामरूपात्मकप्रपञ्चस्य भाव· अस्तिता विद्यमानता देशादिभिरपरिच्छिन्नता नास्ति ॥ सतः सर्वत्र सदा विद्यमानस्य देशादिभिरपरिच्छिन्नस्य आत्मनः अभावः नास्तिता अविद्यमानता देशकालादिभि परिच्छिन्नता नास्ति ॥ उभयो प्रपञ्चपरब्रह्मणोः अन्तस्तु सत् सदेव असत असदेव इति नियम एव तस्य ब्रह्मणः भाव याथात्म्यं तद्दर्शिभिः दृष्टः ॥ तत्वदर्शिभिरेव दृष्ट· ॥ दृष्ट एव ॥ शीतोष्णसुखदु खादय शुक्तिरजतरज्जुसर्पादिवत् मिथ्याभूता एव ॥ आत्मयाथात्म्यपरिज्ञानाभावादवभासन्ते सति तु तस्मिन्नात्मयाथात्म्यज्ञाने निवर्तन्ते इति ज्ञात्वा तेषां तितिक्षा कर्तुं शक्या ॥ १ 'सदेव सोम्येदमग्र आसीदिति ' श्रुतिः॥ २'वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यं इति च ॥ कथञ्चिदत्याभिनिवेशेन सहनं देहनाशादिरापद्येत इत्युक्तमिति चेत् कुतो देहनाशाद्बिभेषि ॥ असत देहस्य भाव अविनाश· न विद्यते ॥ सत आत्मन अभाव नाशः नास्ति ॥ सर्वथा विनङ्क्ष्यतो नाशान्न भेत्तव्यम् ॥ अतो धैर्येण मात्रास्पर्शान् तितिक्षस्व ॥ शीतोष्णसुखदु खादिसहने द्वावुपायौ धैर्यं विवेकश्च तत्राद्यः पूर्वश्लोकेनोक्त द्वितीयस्त्वनेन श्लोकेनेति विवेक ॥

कृष्णः ॥ पूर्वश्लोके मुक्तो भवतीत्यनुक्त्वा मोक्षाय योग्यो भवतीति कुत उक्तमिति चेत् असत सन् ज्ञानी असन् अज्ञानी तस्य भाव· मोक्ष न विद्यते ॥ नाभावः इत्येकं पदम् ॥ सत ज्ञानिन· भावः मोक्ष अभाव· मोक्षाभाव· न अभाव· नाभावः नियमेन मोक्ष विद्यते ॥ मोक्ष इत्यनुक्त्वा नाभाव इत्युक्त्या ३ मोक्षस्यावश्यंभाव उच्यते ॥ ४ 'अनियम सर्वेषामविरोधाच्छब्दानुमानाभ्यां ' इति सूत्रम् ॥

१. छां ६ २. १. २. छां. ६ १. ५. ३. 'ज्ञानान्मोक्षो भवत्येव सर्वाकार्यकृतोऽपि तु ' ॥ इति ब्रह्माण्डपुराण वचनम् 'यस्य ज्ञानं तस्य मोक्षः इति नात्रविचारणा ' ॥ इति आग्नेयपुराणवचन चान् सन्धेयम् ॥ ४. ३ ३ ३२.

वक्ष्यते च ॥ १ 'ज्ञानवान्मां प्रपद्यते' ॥ इति ॥ २ 'ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति' ॥ इति ॥ ३ 'तत्वतो ज्ञात्वा विशते तदनन्तर'मिति च ॥ उभयो' ज्ञान्यज्ञानिनोः इत्यादि पूर्ववत् ॥ अत अमृतत्वाय कल्पत इत्युक्तम ॥ मात्रास्पर्शान् तितिक्षमाणो यः कर्तव्यं कर्म करोति स ज्ञानवान् भूत्वा मुक्तो भवतीत्येव वक्तव्यम ॥ अतस्तथोक्तम् ॥ न हि प्रभुप्रसादाद्येकलभ्योद्योग परीक्षायामुत्कर्षलाभमात्रेण लभ्यते॥ किंतु तेन नद्योग्योऽयमिति योग्यगणनायां गण्यते इति प्रसिद्धं हि लोके ॥

दुःखप्रसञ्जकं युद्ध कृत्वा तेन प्राप्तं दुःखं अभिमानत्यागादिना दूरीकृत्य दुःखाभावं संपादयेत्युक्तम् ॥ दुःखाभावसिद्ध्यर्थं दुःखं संपादनीयं किं ॥ दुःखस्यासंपादनेऽपि दुःखप्रसञ्जककार्याकरणेन दुःखाभावसिद्धेः ॥ अत कथमिदम् ॥ वद ॥ इति चेत् ४ असतः अविद्यमानस्य अभाव न विद्यते ॥ ५नासत इत्येक पदम ॥ विद्यमानस्यैव ६ अभावो विद्यते ॥ उभयो विद्यमानाविद्यमानयोः इत्यादि पूर्ववत् ॥ अभावः प्रतियोगिनियतः घटाभावादिवत् यस्याभावः तेन तत्पूर्वं विद्यमानेन भाव्यम् ॥ अत्र तु दुःखस्याभाव अत तत्पूर्वं दुःखेन विद्यमानेन भाव्यम ॥ अत युद्धकरणेन दुःखं संपाद्य तस्याभाव संपादयेत्युक्तम ॥

यस्याभाव इष्यते तत्पूर्वं तस्य संपादन कार्यम् ॥ अतो दुःखाभावाय दुःखसंपादनं कार्यमित्युक्तम् ॥ हन्त तर्हि परमात्मनि उच्यमानस्य दोषाभावस्य सिद्ध्यर्थं तत्र दोषोऽभ्युपेय ॥ 'अविधवा भवे'ति सुवासिन्यामाशास्यमानस्य वैधव्याभावस्य सिद्ध्यर्थं तस्यां वैधव्यमभ्युपेयम् ॥ 'अरोगवान् भवे'ति नीरोगे पुंसि आशास्यमानस्य रोगाभावस्य सिद्ध्यर्थं तत्र रोगोऽभ्युपेय ॥ इत्यापद्यते। अन्यत्र जीवादौ विद्यमाना दोषाः कथमस्मिन् संभवेयुः इति विधवासु दृश्यमानं वैधव्यमस्या नोपनमतु इति, रोगिषु दृश्यमानो रोग अस्य नोपनमतु इति, दोषादीनां परमात्मादिषु संबन्धप्रतिभासरूपबौद्धारोपेण तत्र अभावप्रतियोगिसंपादनं विनैव अभावसंपादन सुलभमिति चेत् समं प्रकृतेऽपि इति चेत् असत अज्ञानेन अभाव 'यदीति' ४६.ोक्तरीत्या अभिमानत्यागादिना भवन् दुःखाभावो न विद्यते ॥ नासत इत्येक पदम ॥ नासतः

१. ७ १९. २. ४. ३९. ३ १८ ५५. ४ द्वितीयपादे असत इति छेद ॥ ५ न सत् असत न असत् नासत् तस्य नासतः ॥ ६. प्रथमपादेऽपि अभाव इति छेद ॥

१ ज्ञानिन एव अभाव उक्तरूपो दुःखाभावः विद्यते ॥ उभयोः ज्ञान्यज्ञानिनोः इत्यादि पूर्ववत् ॥ प्रसक्तौ सत्यां दुःखप्रसञ्जकं कार्यं कृत्वा दुःखं संपाद्य विवेकेन तस्य दूरीकरणं ज्ञानिलक्षणम् ॥ वक्ष्यते च ॥ २ 'य सर्वत्रानभिस्नेहः तत्तत्प्राप्य शुभाशुभम् ॥ नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ' ॥ इति ॥ अतस्तादृश एव दुःखाभाव एष्टव्यस्त्वया ॥ अत कर्तव्यमेव त्वया युद्धाख्यं कर्म ॥

अभिमानत्यागादिना मात्रास्पर्शान् तितिक्षमाणो युध्यस्वेत्युक्तम् ॥ भीष्मादिभि सह कथ युध्येय ॥ उक्तं च मया ॥ ३ 'कथ भीष्ममहं सङ्ख्ये द्रोणं च त्यादि इति चेत असतः देहस्य भाव सर्वदा स्थिति न विद्यते ॥ सतः आत्मनः अभावः न विद्यते ॥ उभयो देहात्मनोरित्यादि पूर्ववत् ॥ स्यादिदं युक्तम् ॥ यदि त्वयि युद्धादुपरते न ते सर्वथा म्रियेरन् न च तथा ॥ ४ 'मरिष्यन्त्येव ते॥ अतो देहनाशस्य अपरिहार्यत्वात् आत्मना नाशाभावात् विवेकालबनेन मात्रास्पर्शान् तितिक्षमाणेन त्वया युद्धं कर्तव्यमेव ॥ वक्ष्यत च ॥ ५ जातस्य हि ध्रुवो मृत्यु इति ६ 'अन्तवन्त इमे देहा इति ७ 'तत्र का परिदेवने ' त्याद च ॥ ८ ' अविनाशि तु तद्विद्धी 'ति ९ ' नायं हन्ति न हन्यते ' इति १० 'हन्यमाने शरीरे इत्यादि च ॥

कथञ्चिदत्यभिनिवेशेन शीतोष्णसुखदुःखादीनां सहने मम देहनाशादिरनर्थ आपद्येत ॥ अत कथं तितिक्षण कर्तुं शक्यमिति चेत असत देहस्य सत आत्मन इत्यादि पूर्ववत् ॥

देहान्यजीवाभावात देहनाशाज्जीवनाशो भविष्यतीति शोचामीति चेत असतः देहस्य सत आत्मन इत्यादि पूर्ववत् ॥ देहात्मभेदः ११ 'देहिनोऽस्मिन् यथादेहे ' इति श्लोक कयाचन योजनया ज्ञानतदभावरूपयुक्तया साधित ॥ अत्र तु नाशतदभावयुक्तया इति भेद ॥ अतो देहान्यजीवसिध्या देहनाशाज्जीवनाशो भविष्यतीति मा शोक कार्षी ॥

देहनाशे प्रतिनिधिलाभे प्रतिनिधिलाभादशोच्यत्वे देहात्मभेदे अभिमानत्यागादिना दुःखाभावे च स्पष्टमस्ति प्रत्यक्षादिकं प्रमाणम् ॥ न तु १२ नत्वेवे'त्युक्तजीव-

१. सन् ज्ञानी असन् अज्ञानी न असन् नासन् नियमेन ज्ञानी २. = ५७. ३. २ ४ ४. अत्र 'मृत्युर्जन्मवतां वीर देहेन सह जायते ॥ अद्य वाऽब्दशतान्ते वा मृत्युर्वै प्राणिनां ध्रुव '॥ (भाग. १०. १.) इत्यादिकमनुसन्धेयम् ॥ ५ २ २७. ६. २. १८. ७. २. २८. ८ २ १७. ९. २. १९. १०. २. २० ११. २. १३. १२ २ १२.

ब्रह्मानित्यतायां तथा इति चेत् अनतः देहतो नश्वरस्य अल्पज्ञानाल्पशक्तिपारतन्त्र्यादिदोषदूषितस्य जीवस्य अभावः नाशः न विद्यते ॥ सतः स्वरूपतो देहतश्च अनश्वरस्य सर्वज्ञत्वसर्वशक्तित्वसर्वस्वतन्त्रत्वादिकल्याणगुणगणसंपत्समृद्धस्य परमात्मनः अभावो न विद्यते ॥ उभयोः जीवपरमात्मनो इत्यादि पूर्ववत् ॥ जीवपरमात्मनोः नित्यत्वं तत्वदर्शिनामुपदेशपरंपरा तन्निबन्धग्रन्थवाक्यानि तन्मूलभूता वेदाश्च प्रमाणं अतो मा शङ्किष्ठाः ॥

प्रतिनिधिलाभसद्भावादशोच्या इत्युक्तम् ॥ प्रतिनिधिलाभसद्भावेऽपि देहनाशे तद्रूपद्रव्यनाशाच्छोक इति चेत् असत नाशस्वभावस्य कार्यस्य भावः सर्वदा स्थितिः न विद्यते ॥ सतः अनाशस्वभावस्य कारणस्य अभावो न विद्यते ॥ उभयोः कार्यकारणयोरित्यादि पूर्ववत् ॥ देहरूपकार्यनाशेऽपि तदारम्भकभूततत्कार्यरूपपदार्थानां नाशाभावात् शोको न कार्यः ॥ सन्निवेशविशेषविशिष्टमण्डपादिरूपकार्यनाशेऽपि संनिवेशविशेषात्मना मिलितानां तदारम्भकाणां वेणुरज्जुशलाकापर्णादीनां अनाशाच्च शोचन्ति हि लोके॥ वेण्वादीनां संनिवेशविशेषात्मना मेलने मण्डपइत्यादिनाम्ना कर्नाचिह्निलक्षणरूपेण च युक्तस्य कार्यस्य उत्पत्तिः ॥ यस्मै कार्याय कार्यमुदपद्यत तत्कार्यानन्तरं तेषां पृथग्भावे तस्य कार्यस्य मण्डपादेर्नाशः ॥ तथा पृथिव्यादीनां भूतानां संनिवेशविशेषात्मना मेलने देहरूपकार्यस्योत्पत्तिः ॥ तद्देहानुभाव्यकर्मफलानुभवानन्तरं पञ्चानां भूतानां पृथग्भावे देहरूपकार्यस्य नाशः ॥ कारणानामेकीभावः कार्योत्पत्तिः कारणानां पृथग्भावः कार्यनाशः ॥ अत एव मरणस्य पञ्चता इति नाम ॥ पञ्चानां भावः पञ्चता इति व्युत्पत्तिः ॥ पञ्चानामेकत्वे देहोत्पत्तिः ॥ एकस्य पञ्चत्वं मरणम् ॥ सतिचैवं शोकस्य का प्रसक्तिः ॥ वक्ष्यते च ॥ १ 'तत्र का परिदेवने'ति ॥

अस्माकं जयनिश्चये मम युद्धे प्रवृत्तिः स्यात् ॥ न चासौ विद्यते ॥ उक्तं हि मया ॥ २ 'न चैतद्विद्मः कतरन्नो गरीयो यद्वा जयेम यदि वा नो जयेयु'रिति ॥ अतः कथं युध्येय इति चेत् असतः समुदायैकवचनम् ॥ असतां दुर्योधनादीनां भावः सुखं तद्धेतुर्जयः न विद्यते ॥ सतः सतां त्वदादीनां पञ्चानां अभावः दुःखं तद्धेतुरपजयः

१. २. २८. २. २. ६.

न विद्यते ॥ उभयोः सज्जनासज्जनयोरित्यादि पूर्ववत् ॥ वक्ष्यते च ॥ १ 'अनन्याश्चिन्तयन्तो मां ये जना: पर्युपासते ॥ तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ इति॥ २ 'कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यती 'ति च ॥

किं मां युद्धं कुर्विति निर्बध्नासि॥ विनैव युद्धं राज्यं दिशेति दुर्योधनं निर्बधान॥ तथा सति सर्वेषां क्षेमः स्यात् इति चेत् असतः दुर्योधनादेः भावः भक्तिः न विद्यते ॥ सतः त्वदादेः अभावः अभक्तिः न विद्यते ॥ उभयोः सदसतोरित्यादि पूर्ववत् ॥ न ते मद्वाक्यं शृणुयुः यूयं मद्वाक्यं शृणुयात अतस्त्वामेव निर्बध्नामि ॥

सर्वप्राणिसकलेन्द्रियमनोबुद्धिप्रेरकस्य हृषीकेशस्य भवत: स्वाभिलषितानुसारेण तेषां प्रेरणं कर्तुमशक्यं किं इति चेत् असतः दुर्योधनादे: विषये भावः तथाविधोऽभिप्रायः मम न विद्यते ॥ सत: त्वदादे विषये अभावः तथाविधाभिप्रायाभावः मम न विद्यते ॥ उभयो: सदसतोरित्यादि पूर्ववत् ॥ दुर्योधनादीनामभक्तत्वात्तद्धननस्य त्वदादीनां भक्तत्वेन त्वदादिपरित्राणस्य च मदभिमतत्वेन एवमेव कुर्यामिति सङ्कल्पात् न तदन्यथाप्रेरणं क्रियते ॥ वक्ष्यते च ॥ ३ 'परित्राणाय साधूनां विनाशाय च दुष्कृताम् ॥ धर्मसंस्थापनार्थाय संभवामि युगेयुगे ' ॥ इति ॥

युद्धरूपकर्मणा पापं नेत्यभिहितं नाश्रौष्यतमेव वा इति चेत् युद्धरूपकर्मणा असत: पापस्य भावः प्राप्ति: न विद्यते ॥ ४ 'नाभावइत्येकं पदम् ॥ सतः पुण्यस्य नाभावः प्राप्तिरेव विद्यते ॥ उभयोः पापपुण्ययोरित्यादि पूर्ववत् ॥

कुत इति चेत् असत धर्मशास्त्रे अविद्यमानस्य भावः प्राप्तिः न विद्यते ॥ सतः धर्मशास्त्रे विद्यमानस्य नाभाव: प्राप्तिरेव विद्यते ॥ उभयो: विद्यमानाविद्यमानयोरित्यादि पूर्ववत् ॥ धर्मशास्त्रेषु च क्षत्रियस्य युद्धाख्यसत्कर्मणा पुण्यमेव स्मर्यते॥ न तु पापम् ॥ अत पाप तेन पारत्रिकदुःख च नास्तीति निश्चितमेव ॥ वक्ष्यते च ॥ ५ 'धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते ' ॥ इति ॥ ६ 'स्वर्गद्वारमपावृत 'मिति ॥ ७ 'हित्वा पापमवाप्स्यसी'ति ॥ ८ 'ततो युद्धाय युज्यस्व नैव पापमवाप्स्यसी 'ति च ॥

१. ९. २२. २. ९. ३१ ३ ४ ८ ४. न भावः अभाव. न अभावः नाभावः ॥ ५. २. ३१. ६. २. ३२ ७. २. ३३. ८. २ ३८

लक्ष्मीपतित्वात् त्वं विनैव युद्धमस्मान् सुखय राज्यादिलंभनेन॥ सूचितं चेदम् १ ' स्वजनं हि कथं हत्वा सुखिनः स्याम माधवे 'त्यत्र माधव इति संबोधयता मया इति चेत् त्वदभिप्रायानुसारेण युद्धाकरणे असत दुर्योधनादीनां भावः स्थितिः सुखं वा न विद्यत इति २ न॥ किंतु विद्यत एव ॥ सत. सतां अभावः नाश दुःखं वा न विद्यत इति न ॥ किंतु विद्यत एव ॥ यद्येवं तर्हि ममावतारो व्यर्थः स्यात् ॥ दुष्टनिग्रहशिष्टपरिपालनार्थं किल ममावतारः ॥ वक्ष्यते च ॥ ३ ' परित्राणाय साधूनां विनाशाय च दुष्कृता 'मिति ॥

भारतान्तर्गता हीयं गीता॥ भारतं च महाप्रौढं काव्यम् ॥ काव्यस्य च शब्दार्थशक्तिभ्यामनेकार्थप्रतिपादकता महान् गुणः ॥ श्लोकार्धेनैव बह्वाक्षेपनिरसनं हि सुमहानुत्कर्षः ॥ अत श्लोकोयमेकविंशतिधा योजित ॥ एवं अत्र तत्र तत्र च योजनान्तराण्यप्यूह्यानि ॥ इत्यलमधिकजल्पनेन ॥ १६ ॥

अर्जुनः ॥ प्रकृतेः ब्रह्मणश्च नित्यतामुक्त्वा ' नत्वेवाह 'मित्युक्तात्मानित्यतानुमाने दृष्टान्तप्रदर्शनं कृतम् ॥ केचित् प्रकृते नित्यतां नाभ्युपगच्छन्ति ॥ केचित् जीवान्यब्रह्मैव नेति वदन्ति ॥ अत कथमिदं वद ॥

कृष्णः ॥ अविनाशितु तद्विद्धि येन सर्वमिद ततम् ॥
विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति ॥ १७ ॥

अविनाशीति । येन इद सर्वं ततं व्याप्तं तत् विनाशः अस्यास्तीति विनाशि न विनाशि अविनाशि तु एव विद्धि ॥ न विद्यते व्ययः नाशः यस्य तत् अव्यय तस्य अस्य विनाशं कर्तुं कश्चित् कोऽपि नार्हति ॥ १७ ॥

येन इदं सर्वं जगत् व्याप्तं यत् सर्वगतमिति यावत् ॥ तत् अविनाश्येव विद्धि नित्यमेव जानीहि ॥ वर्णाकाशादिकं नित्यं सर्वगतत्वात् ॥ यत् सर्वगतं तत् असति बाधके नित्यम् ॥ कालावयवानां क्षणादीनां सर्वगतत्वेऽपि कालावयवत्वरूपबाधकस-

१ १. ३७ २ नञ्द्वयस्य वाक्यद्वयेऽप्यन्वयः ॥ ३. ४. ८.

द्भावात् न नित्यत्वम्॥ एव नित्यतयाऽवगतं वर्णाकाशादिकं 'नत्वेवे'त्युक्तात्मनित्यतानुमाने दृष्टान्तो भवति॥ अविनाशीति ताच्छीलिकणिनिप्रत्ययप्रयोगेण स्वाभाविकनाशो नास्तीत्युक्तं भवति ॥ स्वाभाविकनाशाभावेऽपि शापादिना बलवत्प्रयत्नादिना वा केनचिन्निमित्तेन नाशः किं न स्यात् इति चेत् अव्ययस्यास्य विनाशं कश्चिदपि कर्तुं नार्हति ॥ न व्येतीत्यव्ययम् ॥ ह्रासादिरूपविकाररहितं हि तत् ॥ यस्य ह्रासादि विकार एव नास्ति ॥ किमुवाच्यं तस्य नाशो नास्तीति ॥ वर्णादेर्नित्यत्वस्य पूर्वमनुक्तत्वात् अव्ययस्येत्यनुवादः कथम् ॥ अविनाशीत्युक्तं नित्यत्वं अव्ययस्येत्यनूद्यते इति चेत् तत्र स्वाभाविकनाशाभाव एवोच्यते ॥ अव्ययत्वशब्दितनाशसामान्याभावो नोच्यते ॥ अतः कथमिदं इति चेत् ॥ अव्ययस्य अस्य इति पदद्वयं आवर्त्य प्रथमां ततया विपरिणमय्य इदं वर्णादिकं अव्ययं विविधः अयः गतिः नाशः व्ययः न विद्यते व्ययः विविधनाशो यस्य तत् अव्यय इति अव्ययत्वं विधाय तदनूद्य अव्ययत्वशब्दितनाशसामान्याभाववत्वेन नैमित्तिकनाशाभावो विधीयते ॥ अतो नानुपपत्तिः ॥

अस्तुनाम एवमात्मनो नित्यत्वादिकं तथाऽपि किमर्थं युद्धं कर्तव्यम् ॥ राज्याद्यर्थमिति चेत् ॥ १ 'न च राज्यं सुखानि च'॥ २ 'अपि त्रैलोक्यराज्यस्य हेतोः किंनु महीकृते'॥ ३ 'अवाप्य भूमावसपत्नमृद्धं राज्यं' इति राज्यादिषु कांक्षाऽभावः पूर्वमुक्तो हि मया इति चेत् 'सर्वकर्मसमाराध्यस्य भगवत आराधनाय युद्धरूपं कर्म त्वया कर्तव्यम् ॥ वक्ष्यते च ॥ ४ 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानव' ॥ इति ॥ मदादिना जीवेन चेतनत्वादिना स्वसमस्य भगवत आराधनं किमर्थं कर्तव्यमिति चेत् परमात्मनो विशेषसद्भावात् तदाराधनं कर्तव्यम् ॥ अत एव सत्यपि साहश्ये अहं यथा त्वं तथा न इति, तत्रत्यतुशब्दसूचितं विशेषं पुरोधायाभिहितं 'नत्वेवाह'मित्यत्र ॥ स विशेष क इति चेत् येन परब्रह्मणा सर्वमिदं जगत् व्याप्तं ५ यच्च किंचिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा ॥ अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' ॥ इति श्रुतिः ॥ इदं अस्मिन् जगति विद्यमानं सर्वं व्याप्तं इति वा ॥ इदं अस्मिन् जगति सर्वं यथा तथा सर्वैः प्रकारैः देशतः कालतो गुणतश्च व्याप्तिः कृता इति वा ॥ तत् परं ब्रह्म अविनाश्येव विद्धि ॥ अव्ययस्यास्य इत्यादि पूर्ववत् ॥

१. १. ३२ २ १ ३५. ३. २ ८. ४. १८ ४६. ५. ना. ११

अव्ययत्वशब्दितसकलविधनाशाभावरूपविशेषसूचकस्तुशब्दः ॥ अनित्यत्वं देहनाशः दुःखप्राप्तिः अपूर्णता इति चत्वारो नाशाः ॥ सर्वेषामपि तेषां नाशानां अभावः परमात्मनि न जीवे ॥ अतः निरतिशयातिशयस्य परमात्मनः प्रसादाय तदाराधनं कर्तव्यमेव ॥ तच्च कर्मणा ज्ञानेन वा ॥ इदानीं तत्वज्ञानयोगेऽनधिकारात् कर्मणैव भगवानाराधनीयः ॥ अतस्तदाराधनाय युद्धाख्यं कर्म कुरु ॥

'नासतो विद्यते भावः' इति यदुक्तं देहस्य नश्वरत्वं 'नाभावो विद्यते सतः' इति यदुक्तं आत्मनो नित्यत्वं तदुभयं सम्यगुपपादय इति चेत् तत्र आत्मनो नित्यत्वं प्रथममुपपादयामि ॥ शृणु ॥ येन आत्मना १ इदं परिदृश्यमानं सर्वविधं शरीरं व्याप्तं सर्वं व्याप्तं समग्रं यथा तथा व्याप्तं सर्वावयवेषु व्याप्तं अणुत्वादेकदेशे स्थितेनापि आत्मना स्वप्रभया समग्रं शरीरं व्याप्तम् ॥ यथा एकदेशे स्थितानामपि सूर्यचन्द्रप्रदीपादीनां प्रभया व्याप्तिः ॥ तथा आत्मनोऽपि प्रभया सर्वशरीरव्याप्तिः ॥ २ गुणाद्वाऽऽलोकवत्' ॥ इति सूत्रम् ॥ तत् आत्मरूपं वस्तु अविनाश्येव॥ विनाशमित्यादि ३ पूर्ववत् ॥ अतः 'नाभावो विद्यते सत' इत्युक्तम् ॥

वि॥ अर्जुनः ॥ 'नाभावो विद्यते सत' इति यदुक्तं तदुपपादय ॥

कृष्णः ॥ आत्मतत्वं अविनाश्येव विद्धि ॥ कुत इति चेत् येन आत्मतत्वेन इदं सर्वं अचेतनतत्वं ततं व्याप्तं वक्ष्यते च ॥ ४ 'यावत्सञ्जायते किंचित् सत्वं स्थावरजङ्गमम् ॥ क्षेत्रक्षेत्रज्ञसंयोगात् तद्विद्धि भरतर्षभ ॥ इति ॥ तादृशं खलु तत् ॥ आत्मा अणुः इति सिद्धान्तः ॥ अणोरात्मनः कथं सर्वव्यापित्वं इति चेत् सर्वेभ्यस्तत्वेभ्यः परमसूक्ष्मत्वात् सर्वत्रानुप्रवेशविशेषयोग्य आत्मा ॥ परमसूक्ष्मत्वादिति नाशाभावे हेतुरुक्तो भवति ॥ सूक्ष्मत्वेऽप्यात्मनः कुतो न नाश इति चेत् अव्ययस्य निरतिशयसूक्ष्मत्वान्नाशानर्हस्य अस्य आत्मतत्वस्य विनाशं कश्चित् शस्त्रादिः कर्तुं

१. अ येन आत्मतत्वेन इदं सर्वं जगत् व्याप्तम् परब्रह्माभिन्नत्वात् ॥ २. २. ३. २६. ३. अव्ययस्य उपचयापचयरूपविकाररहितस्य ॥ अ. कश्चित् कोऽपि वादिविशेषः ॥ देशः कालः पदार्थो वा ॥ आश्रयो वा विषयो वा इन्द्रियसन्निकर्षादिर्वा ॥ ईश्वरोऽपिवा ॥ ४. १३. २७.

नार्हति ॥ तदपेक्षया स्थूलत्वात् ॥ न हि स्थूल सूक्ष्मं नाशयितुमीष्टे ॥ नाशकं हि वस्तु नाश्यं व्याप्य नाशयति ॥ यथा शस्त्रजलाग्निवाय्वादिकम् ॥ न हि स्थूलस्य सूक्ष्मव्यापनं सम्भवति ॥ अतः शस्त्रादेरात्मनाशकत्वं न संभवति ॥ अत आत्मतत्वमविनाश्येव ॥ देहाद्विशेषसूचकस्तुशब्द ॥ ईश्वरस्य १'अणोरणीयान् महतो महीया'निति श्रुत्या आत्मनत्वादप्यणीयस्त्वेन आत्मतत्वव्यापनसंभवात् तेनाऽऽत्मनो नाशोऽस्त्विति चेत् ईश्वरस्य तादृशसङ्कल्पाभावादात्मानमीश्वरो न नाशयति ॥ अत आत्मतत्वमविनाश्येव ॥ इदमेवोक्तं 'नाभावो विद्यते सत' इति ॥ १७ ॥

द्वै॥ अर्जुनः॥ 'नत्वेवाह'मित्यादिना जीवानां नित्यत्वमुक्तम् ॥ तन्न सङ्गच्छते॥ कुत इति चेत् ईश्वरो बिंब जीवस्तत्प्रतिबिंब देहस्तु उपाधि ॥ उपाधेर्देहस्य नाशो 'देहिनोऽस्मि'न्नित्यत्र उक्त ॥ उपाधिनाशे प्रतिबिंबनाशो नियत ॥ मुखं बिंबः दर्पणे परिदृश्यमान तु तत्प्रतिबिंब दर्पणमुपाधि । तत्र उपाधिभूतदर्पणनाशे प्रतिबिंबनाशो दृश्यते॥ तद्वदत्र उपाधिभूतदेहनाशे जीवनाशो न्याय्यः॥ अतः कथं नित्यत्वं जीवानां ॥ ब्रूहि ॥

कृष्ण ॥ अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः ॥

अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत ॥ १८ ॥

अन्तवन्त इति ॥ प्रमातु योग्यः प्रमेयः न प्रमेयः अप्रमेयः तस्य अप्रमेयस्य नाशः अस्यास्तीति नाशी न नाशी अनाशी तस्य अनाशिनः नित्यस्य शरीरं अस्यास्तीति शरीरी तस्य शरीरिण इमे देहाः अन्तः नाशः एषां अस्तीति अन्तवन्तः उक्ताः ॥ हे भारत अर्जुन तस्मात् युध्यस्व ॥ १८ ॥

उपाधिभूतदेहनाशेऽपि आत्मा नित्य एव ॥ कुत इति चेत् नाशरहितस्वरूपदेहरूपोपाध्यन्तरं तस्य सर्वदा विद्यते॥ अत आत्मा नित्य एव॥ प्रतिबिंबनाशः बिंबनाशेन उपाधिनाशेन बिंबोपाधिसन्निधिनाशेन वा संभवति ॥ नचात्र बिंबनाशेन नाशप्र-

१. ना १२

सक्ति. ।। बिंबस्य परमात्मत्वात् तस्य च नित्यत्वात् ॥ नापि उपाधिनाशेन नाशप्रसक्ति ॥ स्वरूपदेहरूपोपाधेर्नाशरहितस्य सदा विद्यमानत्वात् ॥ नापिच बिंबोपाधिसन्निधिनाशेन नाशप्रसक्तिः॥ बिंबोपाधिसन्निधेरपि सदा विद्यमानत्वात् ॥ बिंब. ईश्वरः उपाधि स्वरूपदेह.॥ उभावपि नित्यौ॥ ईश्वरस्य बिंबस्य सर्वगतत्वात् तस्य नित्योपाधिसंनिधिरवर्जनीय ॥ अप्रमेयस्य प्रमा परिमिति देशादिभि परिच्छेद. तद्रहित . जीवस्याणुत्वेन देशत परिच्छिन्नत्वात् लक्षणया अप्रमेयश्वरसदृशस्य सर्वगतेश्वरप्रतिबिंबस्येति यावत् ॥ अत एव अनाशिन बिंबोपाधिसंनिधिनाशप्रयुक्तनाशरहितस्य नित्यस्य बिंबनाशप्रयुक्तनाशरहितस्य शरीरिण देहिना जीवस्य इमे परिदृश्यमानाः स्थूलबाह्यदेहा अन्तवन्त नाशवन्त । देहिनोऽस्मिन्नित्यत्र उक्ता ॥ इमे देहा अन्तवन्त इत्युक्त्या नाशरहितदेहान्तरमस्तीति सूच्यते ॥ स्थूलदेहनाशेऽपि लिङ्ग देहसद्भावात् तस्य नाशेऽपि स्वरूपदेहसद्भावात् न जीवस्य नाशप्रसक्ति ॥ न हि पुरतो दृश्यमानस्य दर्पणस्य नाशेऽपि तत्पृष्ठत सश्लिष्टस्य दर्पणान्तरस्य सद्भाव- प्रतिबिंबस्य नाशः संभवा ॥ अतो नित्य एवाऽऽत्मा॥ कथमपरिच्छिन्नस्य परमात्मनः प्रतिबिंब संभवति परिच्छिन्नस्यैव प्रतिफलनसंभवात् । इति चेत् नात्र प्रतिफलितरूपः प्रतिबिंब किन्तु तदधीनत्व सति तत्सरूपरूपः प्रतिबिंबः ॥ बिंबस्य स्वरूपस्थितिसत्ताप्रवृत्तिगुणकर्मचेष्टादिक यथा बिंबाधीनं तथा जीवस्य स्वरूपस्थित्यादिकं सर्वं ईश्वराधीनं इति सूचयितुं बिंबप्रतिबिंबभावेन व्यपदेश ॥ देहोऽन्तवानित्युक्तौ ईश्वर देहोऽपि अन्तवानिति प्रतीयेत तद्व्यावृत्त्यर्थं शरीरिण इति ॥ शरीरिशब्दो [१] जीवे रूढ ॥ अन्यथा देहा इत्युक्त्यैव देहिनो देहा इति लाभात् शरीरिण इति व्यर्थं स्यात् ॥ किमर्थं मा प्रति जीवनित्यत्वादिक साध्यत इति चेत् तस्मात् जीवस्य नित्यत्वात् देहस्य सर्वथा नाशात् देहनाशेऽपि प्रतिनिधिलाभसद्भावात् अभिमानत्यागेन मात्रास्पर्शानां विफलीकरणसंभवात् शोक सपाद्य विवेकेन तत्तितिक्षणस्यैव पुमर्थशिरोरत्नमोक्षहेतुत्वाच्च युद्धं कुरु ॥ महाक्षत्रियकुलप्रसूतत्वात् त्वया युद्धं कर्तव्यमेव ॥ भार्यां ब्रह्मविद्यायां रतत्वात् सर्वमिदमात्मपरमात्मतत्वरहस्यमनुसन्धेहि ॥

सत्यपि सादृश्ये परमात्मनो नाशसामान्याभावरूपविशेषसद्भावात् स्वकर्मणा तदाराधनं कर्तव्यम् ॥ अत युद्धकुर्वित्युक्तम् ॥ नाशसामान्याभावो जीवस्यापि यदि

१. 'जन्तुजन्युशरीरिण.' ॥ इत्यमरः ॥

स्यात् तर्हि ईश्वरादविशेषात्तदाराधनमकर्तव्यमेव स्यात् इति चेत् नित्यस्य स्वरूपतो नाशरहितस्य जीवस्य इमे देहा अन्तवन्तः नाशवन्तः उपलक्षणया उत्पत्तिमन्तश्च उक्ताः ॥ इमे देहा इत्युक्तया देहानां उत्पत्तिविनाशौ प्रत्यक्षाविति सूच्यते ॥ उत्पत्ति विनाशवद्देहवतां जीवानां दुःखप्राप्तिरवर्जनीया ॥ कथमीदृशा जीवाः पूर्णाः स्युरित्यपूर्णता तेषाम् ॥ स्वरूपतो नाशराहित्यादनित्यत्वरूपो नाशो नास्ति जीवस्य ॥ देहहानिदुःखप्राप्त्यपूर्णतारूपास्त्रयो नाशा जीवस्य सन्ति ॥ ईश्वरस्तु अनाशी देहतोऽपि नाशरहितः देहहानिरूपनाशाभाववान् ॥ देहा अन्तवन्त इत्यस्य प्रति निर्देश्यतया अनाशिन इत्युक्तेः ॥ स्वरूपतो नाशाभावादनित्यत्वरूपनाशाभावस्तु कैमुत्यन्यायसिद्धः ॥ अप्रमेयः देशतः कालतो गुणतश्च परिच्छेदरहित अपूर्णत्वरूपनाशाभाववान् ॥ स्वरूपतो देहतश्च नाशरहितस्य देशत कालतो गुणतश्च परिच्छेदरहितस्य दुःखप्राप्तिरूपनाशाभावोऽप्यवर्जनीयतया सिद्धः ॥ एवं ईश्वरश्चतुर्विधनाशरहितः ॥ जीवेश्वरयोरेवंभावः १'न जायते' इत्यत्र प्रमाणतः समर्थयिष्यते ॥ तस्मात् त्रिविधनाशवत्वेन जीवानामस्वातन्त्र्यादिदोषदुष्टत्वात् ईश्वरस्य सर्वविधनाशाभावेन स्वातन्त्र्यादिसर्वगुणगणपरिपूर्णत्वात् ततएव तस्य प्रसत्तये जीवैस्तत्पूजायाः कर्तव्यत्वात् फलाभिसन्धिराहित्येन कृतस्य वर्णाश्रमोचितविहितकर्मानुष्ठानस्यैव भगवत्पूजात्वात् अनाशिनः अप्रमेयस्य तस्य तत्पूजार्थं युध्यस्व ॥ त्वं तु क्षत्रियोऽसि ॥ क्षत्रियाणां युद्धमेव महान् धर्मः ॥ अतः कर्तव्यमेव त्वया युद्धम् ॥

'नासतो विद्यते भाव' इति यदुक्तं देहस्यानित्यत्वं तदुपपादय इति चेत् अप्रमेयस्य अप्रमेयभगवत्प्रतिबिंबस्य अत एव अनाशिन अतएव नित्यस्य जीवस्य इमे देहाः अन्तवन्तः २'देहिनोऽस्मि न्नित्यत्र उक्ता ॥ वक्ष्यन्ते च ॥ ३'अव्यक्तादीनि भूतानी'त्यादौ ॥ देहात्मतत्वोपदेशात् अहं ज्ञानी संवृत्तः नातः परं मां प्रति युध्यस्वेति वचनं तवोपपद्येत इति चेत् सर्वोऽप्ययमुपदेशः स्वधर्मभूतं युद्धमनुष्ठापयितुमेव ॥ न ज्ञानोपदेशेन स्वधर्माच्च्यावयितुम् ॥ न योत्स्ये इत्युक्त्वा तूष्णींभूतं त्वां

१. २. २०. २ २ १३. ३. २ १८.

स्वधर्मे युद्धे प्रवर्तयितुमेव हि 'अशोच्यानन्वशोच' इत्यादिना उपदेश आरब्धः ॥ तस्मात् युध्यस्व ॥ ज्ञानमात्रे प्रवर्तयितुमेवायमुपदेशः इति कुतो न स्यादिति चेत् भरतवंशोत्पन्नत्वेन महाक्षत्रियस्त्वं आधिकारिकजनकप्रियव्रतादिवत् कर्मयोगप्रधानोऽसि ॥ अतः युद्धाख्ये स्वधर्मे प्रवर्तयितुमेवायमुपदेशः ॥ वक्ष्यते च ॥ १ 'यदहंकारमाश्रित्ये त्यादिना ' यथेच्छसितथाकुरु ' इत्यन्तेन ॥

अ ॥ नासतो विद्यते भाव' इत्युक्तं देहानामनित्यत्वं उपपाद्यते ॥ अप्रमेयस्य प्रत्यक्षादिप्रमाणैः प्रमातुमशक्यस्य शब्दप्रमाणवेद्यस्यापि २'यतोवाचोनिवर्तन्ते'इति श्रुत्या अवाच्यत्ववचनेन साक्षात् निर्देष्टुमशक्यत्वादप्रमेयत्वमात्मनो युक्तम् ॥ प्रमा परिमितिः देशतः कालतः वस्तुतश्च परिच्छेदराहितस्य वा ॥ सर्वदेशेषु विद्यमानत्वाद्देशत, सर्वकालेषु विद्यमानत्वात् कालतः सर्ववस्तुस्वरूपत्वात् वस्तुतश्च परिच्छेद आत्मनो नास्ति ॥ अत एव नित्यस्य विद्यमानस्यैवान्यथाभावरूपनाशराहितस्य अनाशिन ३ अदर्शनरूपनाशराहितस्य ॥ लोके हि द्विविधो नाशो व्यवह्रियते ॥ भस्मीभावाददर्शने गते व्याध्यादिना अन्यथा विकृते च देहे देहो नष्ट इति व्यवहरन्ति॥ तदुभयविधनाशराहितस्य शरीरिणः सर्वप्राणिशरीरोपाधिकस्य ॥ शरीररूपोपाधिना खलु परब्रह्म क्षेत्रज्ञतामश्नुते ॥ वक्ष्यते च ४ 'इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते॥ एतद्यो वेत्ति तं प्राहु' क्षेत्रज्ञ इति तद्विद ' ॥ इति ॥ तादृशस्य जीवस्य इमे देहाः भीष्मद्रोणादिशब्दवाच्या देहा' अन्नमयप्राणमयमनोमयविज्ञानमयानंदमयनामानः पञ्च कोशा वा नाशवन्त ज्ञानिभि वेदादिभिर्वा उक्ता ॥ दिहउपचये' इतिधातुनिष्पन्नदेहशब्दप्रयोगेण उपचयापचयशब्दितवृद्धिह्रासोपलक्षितसर्वविकारवत्त्वेन देहानामनित्यत्वमिति सूच्यते ॥ विकाराश्च वक्ष्यन्ते ॥ 'नजायत ' इत्यत्र ॥ घटावच्छिन्नाकाशस्य अवच्छेदका घटाइव बहुभिर्वेषैर्नटतो नटस्य ते वेषा इव च देहावच्छिन्नस्य आत्मनो देहा अन्तवन्त ॥ इमे ५ स्वप्नावस्थायामनुभूयमाना देहाः जाग्रद्व-

१ १८ ५९. २ तै. २ ४ ३. अनाशिन' देशादितोऽपरिच्छिन्नस्य अतएव नित्यस्य नाशरहितस्य इति केचित् ॥ ४. १३. १. ५ अत्र 'सुप्त तल्पगतो येन स्वप्नदेहेन दिक्तटान् ॥ परिभ्रमसि हे राम स देहस्ते क्व सप्रति '॥ इति वासिष्ठवचनमनुसन्धेयम् ॥

स्थायां अन्तवन्त उक्ता ॥ तद्वत् अज्ञानदशायां प्रतीयमाना देहाः प्रबोधदशायां अन्तवन्त उक्ता इति वा ॥ इदमेवोक्तं 'नासतो विद्यते भाव' इति ॥ अत्र शरीरिण इत्येकवचनेन देहा इति बहुवचनेन च इमे देहाः त्रैलोक्यवर्तिसर्वप्राणिसंबन्धिनः सर्वेऽपि देहाः नित्यस्य शरीरिण एकस्यैवात्मनः उक्ता इति योजनया एकजीववादापरपर्याय आत्मैक्यवाद साधितः ॥ १ एको देव सर्वभूतेषु गूढ सर्वव्यापी सर्वभूतान्तरात्मा ॥ कर्माध्यक्ष सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्चे'ति श्रुति ॥ तस्मात् आत्मनो नित्यत्वात् देहादिप्रपंचस्यानित्यत्वात् मदीया इमे मरिष्यन्ति इति मोहजं शोकं त्यक्त्वा स्वधर्मं युद्धं कुरु ॥ महाक्षत्रियोऽसि ॥ ब्रह्मविद्यायां रतोऽसि॥ अध्यात्मज्ञानसंपन्नोऽस्यसि ॥ 'मात्रास्पर्शास्तु' इत्यत्र अहंकारममकारादीन परित्यजेत्युक्तम ॥ त्यक्ताहंकारममकारस्य युध्यस्वेति युद्धे प्रवर्तनं कथमिति चेत् ॥ त्यक्ताहंकारममकारः सन् स्वधर्मत्वधिया युद्धंकुर्वित्याशय ॥ वक्ष्यते च ॥ २ 'मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा ॥ निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वर ॥ इति॥ ज्ञानकाण्डमिदम् अत्र युध्यस्वेति कर्मविधिरनुपपन्न इति चेत् ॥ युध्यस्वेत्यस्य कर्मविधौ न तात्पर्यम् ॥ तव स्वत एव युद्धे प्रवृत्तत्वेन युद्धविधेरनावश्यकत्वात् ॥ किंतु तत्वविचारेण शोकमोकरूपप्रतिबन्धकापनयन कुर्विति शोकमोहापनयविधावेव तात्पर्यं इति वा ॥

ज्ञानिनामपि शरीररक्षणमावश्यकं अत युद्धेन शरीरयात्रां कुर्विति शरीररक्षणविधिः॥ वक्ष्यते च॥ ३ 'शरीरयात्राऽपि च ते न प्रसिध्येदकर्मण' ॥ इति ॥ इति वा॥

त्रि॥ नासतो विद्यते भाव' इत्युक्तं देहस्यानित्यत्वमुपपादय इति चेत् अप्रमेयस्य आत्मा हि प्रमाता ज्ञाता न प्रमेय ज्ञेय प्रमातुरप्यात्मन अहमिति प्रमाविषयत्वेन प्रमेयत्वात् कथमिदमिति चेत् प्रमातृत्वप्रमेयत्वरूपोभयधर्मवत्वात् प्रमेयतैकस्वभाववर्जित आत्मा ॥ अनात्मभूतं सर्वं प्रमेयतैकस्वभाववत् ॥ तादृशस्य अत अनाशिन नाशानर्हस्य अत नित्यस्य आत्मन इमे देहा अन्तवन्तः ॥

१. श्वे. ६ ११. २. ३. ३०. ३ ३ ८

विनाशस्वभावाः ॥ १ 'मतुपा नित्ययोगबोधनात् ॥ सावयवत्वात् भूतसंघातरूपत्वेन कालतः शैथिल्यसंभवात् कर्मफलभोगार्थत्वाच्च नाश एव युक्तः ॥ अतः तादृशाः शरीरिकाः ॥ ईश्वरदेहव्यावृत्त्यर्थं २ इमे इति ॥ देहानामनित्यत्वं प्रत्यक्षसिद्धं तत्कुतः साध्यते इति चेत् ॥ देहात्मनोर्भेदस्थापनार्थं नित्यत्वसंभवशंकापाकरणार्थं वैराग्यजननाद्यनेकप्रयोजनार्थं च देहानित्यत्वसाधनम् ॥ तस्मात् देहस्य विनाशीकस्वभावत्वेन आत्मनश्चाविनाशीकस्वभावत्वेन तयोरुभयोरप्यशोच्यत्वात् स्वगतपरगतशस्त्रपातमृदुपरुषस्पर्शशीतोष्णसुखदुःखादीनां अवर्जनीयताबुद्ध्या सहनसंभवात् युद्धाख्यनिवृत्तिकर्मणः मोक्षसाधनत्वाच्च युद्धाख्यं कर्माऽऽरभस्व ॥ भरतकुलप्रसूतमहाक्षत्रियस्य तव युद्धकर्म हि धर्मः ॥ १८ ॥

अर्जुनः ॥ एतावता प्रबन्धेन आत्मा नित्य इत्युक्तम् ॥ समर्थितं च ॥ अयमिममहन् अयमनेन हत इति लोके व्यवहारदर्शनात् कथमात्मनो नित्यत्वम् ॥ वद ॥

कृष्णः ॥ य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ॥
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥ १९ ॥

य इति ॥ यः एनं हन्तारं वेत्ति जानाति ॥ यः एनं हतं मन्यते च ॥ तौ उभौ न विजानीतः ॥ अयं न हन्ति ॥ अयं न हन्यते ॥ १९ ॥

यः एनं जीवं कस्यचन हन्तारं वेत्ति यश्च एनं जीवं केनचित् हतं मन्यते तौ उभौ न विजानीत न सम्यग्ज्ञानिनौ भ्रान्तिमन्तौ ॥ हननकर्तृत्वप्रतीतिः हननकर्मत्वप्रतीतिश्च भ्रान्तिः ॥ कुतस्तज्ज्ञानस्य भ्रान्तित्वमिति चेत् ॥ अयं जीवः न हन्ति अयं जीवः न हन्यते ॥ आत्मनः हननकर्तृत्वं हननकर्मत्वं च नास्ति ॥ तस्मिन् तत्प्रतीतिर्भ्रान्तिः ॥ तदभाववति तत्प्रकारकज्ञानं भ्रान्तिरित्यभिधीयते ॥ जीवस्य हननकर्तृत्वाभावोक्त्या ईश्वरस्य तदस्तीति प्रतीयते ॥ तथा च ईश्वरस्य हन्तृत्वात् जीवस्य

१ 'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ॥ संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥' इति स्मरन्ति ॥ २. ज्ञानानन्दात्मकदिव्यमङ्गलविग्रहवत्त्वेन शरीरित्वमीश्वरस्यापीत्याशयः ॥

ईश्वरेण हन्यमानत्वाच्च जीवस्यानित्यत्वमापद्यत एव इति चेत् यः एनं ईश्वरं हन्तारं वेत्ति ॥ यः एनं जीवं तेनेश्वरेण हतं मन्यते तावुभौ न विजानीतः ॥ कुतः इति चेत् ॥ अयं ईश्वरो न हन्ति अयं जीवः ईश्वरेण न हन्यते ॥ प्रतिबिंबो जीवो नित्यः बिंबोपाधितत्संनिधीनां नित्यत्वात् ॥ जीवस्य हननं न संभवति नित्यत्वात् ॥ शरीरस्य हननं संभवति अनित्यत्वात् ॥ तत्कर्तृत्वं च जीवस्य न स्वातन्त्र्येण संभवति॥ संभवति चास्वातन्त्र्येण अस्वतन्त्रत्वात् ॥ संभवति चेश्वरस्य स्वातन्त्र्येण ॥ सर्व-स्वतन्त्रत्वात् ॥ वक्ष्यते च १ 'मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन्'॥ इति॥ २ 'मया हतां स्त्वं जहिमाव्यथिष्ठाः' ॥ इति च ॥ अत्र हननं क्रियान्तराणां उप लक्षणम् ॥ तेन सर्वत्र जीवस्यास्वातन्त्र्यं ईश्वरस्य स्वातन्त्र्यं च उक्तं भवति ॥ सति चैवं या जीवस्य स्वातन्त्र्यप्रतीतिः या चानित्यत्वप्रतीतिः सा भ्रान्तिरेव ॥ यश्च हन्ति हतः इत्यादिव्यवहारः सोऽपि भ्रान्तिमूलकः ॥ ततश्च उक्तमात्मनो नित्यत्व ईश्वरस्य स्वातन्त्र्य जीवस्यास्वातन्त्र्यं च युक्तमेव ॥ भ्रान्तिमूलकव्यवहारस्याकिञ्चित्करत्वात् न तद्विरोधात्प्रामाणिकः शास्त्रार्थोऽन्यथ-यितव्यः ॥ किंतु प्रामाणिकशास्त्राविरोधात् व्यवहारोऽन्यथयितव्य ॥ तस्य अर्थान्तरं वा कल्प्यम् ॥ किमर्थान्तरमिति चेत् देहं हन्ति देहो हतः इत्यर्थः ॥ हननं हिंसा ॥ अयं एतदीयदेहस्य हिंसामुत्पाद्य हिंस्यमानाद्देहादेनमात्मानं निष्कासयति ॥ अयम-नेन देहान्निष्कासित इति वा ॥ सुखदुःखभोगायतनात् गृहात् निष्कासनमिव तादृ-शात् देहात् निष्कासनं महानपराधः ॥ अतएव तत्कारिणो बलवती शिक्षा ॥ जीव नित्यत्वादेः पूर्वमुक्तत्वेऽपि अनित्यत्वादिज्ञानस्य भ्रान्तित्व अनित्यत्वादिव्यवहारस्य तन्मूलकत्वं च वक्तु तदुक्तिपूर्वकं जीवनित्यत्वादिकं उक्तम् ॥ अस्य भ्रान्तित्वा-द्युक्तावेव तात्पर्यं न नित्यत्वाद्युक्तौ ॥ अतो न पुनरुक्तिः ॥ तथाऽपि पादत्रये उक्तस्य जीवनित्यत्वस्य तुरीयपादे उक्तथा पुनरुक्तिः इति चेत् पादत्रयेण भ्रान्तित्वतन्मूलक-त्वयोरुक्तौ कुतो भ्रान्त्यादित्वं कल्प्यत इत्याक्षेपे हननकर्तृत्वकर्मत्वाभाववति आत्मनि तज्ज्ञानं तदभाववति तत्प्रकारकज्ञानं जायते ॥ अतस्तज्ज्ञानादेर्भ्रान्तित्वादिकं कल्प्यते इत्येवं समाधानं वक्तुं पुनरात्मनो नित्यत्वोक्तिः ॥ अस्य कर्तृत्वकर्मत्वाभावप्रदर्शने तात्पर्यं न नित्यत्वाद्युक्तौ अतो नानुपपत्तिः ॥ यो जीवं हन्तारं वेत्ति यश्च ह-

१. ११. ३३. २ ११. ३४.

तं मन्यते तावुभौ भ्रान्तौ इत्युक्तया न हन्ति न हन्यते इत्युक्तया च हननाभावस्यैव जीवे प्रतीतेः आत्मानित्यत्वज्ञानतद्व्यवहारयोः भ्रान्तित्वतन्मूलकत्वे एव प्रतीयेयातां आत्मस्वातन्त्र्यज्ञानतद्व्यवहारयो भ्रांतित्वतन्मूलकत्वप्रतीतिः केन इति चेत् आत्मानित्यत्वज्ञानिनां समुदायाविवक्षायामेकवचने व्यक्तिविवक्षायां बहुवचने प्रयोक्तव्ये तौ इति द्विवचनेन उभाविति तयोर्भेदप्रदर्शनेन च द्वौ समुदायौ विवक्षितौ ॥ आत्मानित्यत्वज्ञानिनां समुदाय एकः आत्मस्वातन्त्र्यज्ञानिनां समुदाय एकः ॥ आत्मनामनित्यत्वाभावस्यैव आत्मनां स्वातन्त्र्याभावस्यापि पूर्वमुक्तेः ॥ अत उक्त विधया हन्तारं हन्ति इति पदद्वयेन स्वातन्त्र्यमुच्यते हतं हन्यते इति पदद्वयेन अनित्यत्वमुच्यते इति कृत्वा तज्ज्ञानिनां द्वयोः समुदाययोः भ्रान्तत्वमुच्यते ॥ अतो युक्तमेवोक्तम् 'उभौ तौ न विजानीत' इति ॥ तयोः भ्रान्तत्वं कुतः प्रमाणादुच्यत इति चेत् नेयं गीता मत्प्रेक्षोत्प्रेक्षितार्थाऽऽवेदिका ॥ किंतु निगममौलिनिर्णीतार्थाऽऽवेदिका ॥ निगममौलिभूता उपनिषदेव वक्ति ॥ १ 'हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम् ॥ उभौ तौ न विजानीतो नायं हन्ति न हन्यते'॥ इति ॥ स एव मन्त्रोऽत्र मूलप्रमाणानुसारिणी गीतेयमिति सूचयितुं वेदानधिकारिणामपि श्रवणादिसौकर्याय पूर्वार्धे कतिपयपदव्यत्यासादन्यथयित्वा मया ते अभिहितः ॥

अ॥ अर्जुनः॥ भीष्मद्रोणादिचेतनानां नाशाभावात् तद्देहानां सर्वथा नाशाच्च न तान् प्रति शोकः कार्यः इति त्वया अभिहितम्॥ उक्तविधया भीष्मादीनां शोकाविषयत्वेऽपि विनशिष्यत्तद्देहहननकर्तृत्वेन मम, तत्र प्रेरकत्वेन तव च पारत्रिकदुःखमवश्यं स्यात् इति मे शोकः॥ स चापरिहार्यः॥ शोकाविषये पातकं नास्ति इति न युक्तम् ॥ द्वेष्यस्य ब्राह्मणस्य हनने शोकाभावेऽपि महतः पातकस्य नियतत्वात् ॥ तस्मात् 'तस्माद्युध्यस्व भारते' ति युद्धे प्रेरणमयुक्तम् ॥ वद ॥

कृष्णः ॥ यः एनं आत्मानं शरीरहननकर्तारं वेत्ति ॥ यश्च एनं आत्मानं हतं हननक्रियाकर्मीभूतं मन्यते तावुभौ न विजानीतः ॥ कुत इति चेत् ॥ अयं आत्मा न हन्ति हननक्रियायाः कर्ता न भवति ॥ न हन्यते हननक्रियायां कर्म च न भवति ॥ सर्वधर्मविधुरत्वादात्मनः ॥ नात्र शङ्का कार्या ॥ श्रुतिरेवैवं वक्ति ॥ 'हन्ता

१. का. २. १९.

चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम् ॥ उभौ तौ न विजानीतो नायं हन्ति न हन्यते' ॥ इति ॥ मन्त्र एव कतिपयपदविशेषितस्तेऽभिहितः ॥ आत्मनः हनने कर्तृत्वकर्मत्वयो-रभावेन तव भीष्मादिदेहहननकर्तृत्वस्य मम तत्र प्रेरकत्वस्य चाभावात् आवयोः पारत्रिकदुःखशङ्कयाऽपि न शोकः कार्यः ॥ अतः 'एतान्न हन्तुमिच्छामि घ्नतोऽपि' इत्यादिना तव हननकर्तृत्वोक्तिः भ्रान्तिमूला ॥ अत स्तस्माद्युध्यस्व भारते'ति मदुक्तं युक्तम् ॥ अत्र यः एनं हन्तारं हतं च वेत्तीत्यत्र पूर्वौ यो वेत्ति यश्च मन्यते इति पृथगुक्तिः, काव्यत्वात् १ अलङ्कारसंपादनाय वा ॥ यः तार्किकः कर्तृत्वं वेत्ति यश्च चार्वाकादिः कर्मत्वं मन्यते इति वादिभेदज्ञापनाय वा ॥ धीरः कर्तृत्वं अधीरः कर्मत्वं इति धैर्याधैर्यावस्थाभेदसूचनाय वा कृतेति ज्ञातव्यम् ॥

वि॥ अर्जुनः॥ 'अविनाशित्वि'ति श्लोके शस्त्रादेरहन्तृत्व आत्मनश्च हननायोग्यत्व-मुक्तम् ॥ तत्कथम् ॥ दृश्यते हि युद्धादौ शस्त्रादिना आत्मनो हननम् ॥ अतः कथ-मिदम् ॥ वद ॥

कृष्ण॥ यः एनं जीवात्मानं प्रति हंतारङ्कमपि पदार्थं वेत्ति यश्च एनं आत्मानं शस्त्रा-दिना हतं च मन्यते तावुभौ न विजानीतः॥ कुत इति चेत्॥ अयं शस्त्रादिः एनं न हन्ति॥ २ अयं आत्मा शस्त्रादिना न हन्यते ॥ अतः युद्धे मदीयशस्त्रादिना आत्मनो नाशः स्या-दिति मा व्यथिष्ठाः ॥ छेदनादिशक्तोऽपि त्वदीयः शस्त्रादिः नित्यत्वेन छेदाद्ययोग्ये आत्मनि न क्रमते ॥ नहि तत्कार्यशक्तमपि तदयोग्ये क्रमते ॥ प्रपञ्चयिष्यते चैतत् ३'नैनं छिन्दन्ती'त्यादौ॥ शस्त्रादिना आत्मा न हन्यते शस्त्रादिरात्मानं न हन्तीत्येव वक्तव्ये ४ शस्त्रादेरहन्तृत्वं आत्मनो हननयोग्यत्वं च जानन् भ्रान्त इति किमर्थ-

१. 'उन्मीलन्ति कदंबानि स्फुटन्ति कुटजोद्गमाः ॥ इत्यादाविव अर्थावृत्त्या अर्थावृत्तिदीपकाल-ङ्कारः ॥ त्रिविधं दीपकावृत्तौ भवेदावृत्तिदीपकम्॥ इति चन्द्रालोके ॥ 'अर्थावृत्तिः पदावृत्तिरुभयावृत्ति-रेव च' । इति काव्यादर्शे ॥ यः एनं इत्यनयोरावृत्त्या उभयावृत्तिदीपकालङ्कारोऽपीत्यवेके ॥ २ अयमिति शब्दावृत्तिः॥ अर्थभेदात् ॥ ३ २. २३ ४. हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम् । उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥ इति (का. २ १९.) वाक्योपबृंहणरूपोऽयं श्लोकः तस्य मन्त्रस्य आत्मनो हन्तृत्वं जानन् भ्रान्त इत्यर्थ उक्तः 'कर्ता शास्त्रार्थवत्त्वा'दितिसूत्रभाष्ये भाष्यकारैः॥ अत्र च तैरेवशस्त्रादेरहन्तृत्वं जानन् भ्रांत इत्यर्थ उच्यते ॥ अतः कथमिद ॥ इति चेत् अत्र शस्त्रादेः कस्यापि हन्तृत्वं नेत्युच्यते तत्र आत्मनो हन्तृत्वं नेत्युच्यते इति सामान्यविशेषभावादविरोधः॥ तद्भाष्या-नुसारेण आत्मनो हन्तृत्वनिषेधस्तु 'वेदाविनाशिन' मित्यत्र (२. २१.) वक्ष्यते ॥

मुच्यते इति चेत् विपर्ययज्ञानिनिंदया प्रकृतार्थे दार्ढ्यमुत्पादयितुं तथोक्तम् ॥ तत्रतत्र आत्मनो हननव्यवहारो दृश्यते ॥ तस्य का गतिः शरीरहननपरतया गतिकल्पनं तु न युक्तम् ॥ शरीरहननस्थले हननव्यवहाराभावात् ॥ न हि लोके मातापित्रो शरीरमग्निसात्कृतवन्तं पुत्रं पितृहा मातृहा इति व्यवहरन्ति ॥ वद ॥ इति चेत् जीवत आत्मन शरीरवियोगकरणं मारणापरपर्यायं हननशब्देन विवक्षितम् ॥ एव आत्मनो हननायोग्यत्वेऽपि देहवियोगकरणरूपहननयोग्यत्वात् युद्धे च तादृशहननस्य अवश्यं संभवात् तस्य च 'न हिंस्यात्सर्वाभूतानी'ति निषिद्धत्वात् युद्धमनुचितमेव इति चेत् क्षात्रियस्य युद्धं स्वधर्मः विहितहिंसा च न दोषाय ॥ १ 'अशुद्धमिति चेन्न शब्दा'दति सूत्रम् ॥ 'न हिंस्या'दिति तु उत्सर्गापवादन्यायादविहितशरीरवियोगकरणरूपहिंसानिषेधकम् ॥ अतो नानुपपत्ति ॥ किंच यागे क्रियमाणहिंसाया इव युद्धे क्रियमाणहिंसाया अपि हिते पर्यवसानात् हिंसात्वमेव नास्तीति २ 'स्वधर्मं'मिति श्लोकोपन्यासे वक्ष्यते ॥ १९ ॥

अर्जुनः ॥ यद्येवमात्मा नित्यः स्यात् तर्हि चैत्रो जातो मृत इति जन्ममरणव्यवहारः कथम् ॥ वद ॥

कृष्ण ॥ न जायते म्रियते वा कदाचित् नायं भूत्वा भविता वा न भूय. ॥
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे॥२०॥

नेति ॥ अयं आत्मा कदाचिदपि न जायते न म्रियते वा च ॥ नायमित्यस्य उभयत्रान्वयः ॥ अयं न भूत्वा भूयः पुनः भविता न ॥ भूत्वा भूयः पुनः न भविता वा च न ॥ अतः अजः जननरहितः नित्यः मरणरहितः शाश्वतः शश्वत् सदा भवनवान् ॥ अयं शरीरे हन्यमानेऽपि न हन्यते ॥ २० ॥

न जायते म्रियते वा कदाचिन्नायम् ॥ अयं जीवः कदाचिदपि न जायते ॥ कदाचिदपि न म्रियते च ॥ कुत इति चेत् अज नित्य शाश्वतः किलायं लक्षणया अजनित्यशाश्वतेश्वरप्रतिबिंब ॥ अजः जन्मरहितः नित्यः मरणरहित शाश्वत शाश्वत्

१. ३. १. २७ २ २. ३१

सदा एकरूप्येण वर्तमानः तादृशेश्वरप्रतिबिंबत्वान्न जायते न म्रियते च जीवस्य जननमरणव्यवहारो दृश्यते तस्य का गतिः ॥ नित्यसिद्धस्यापीश्वरज्ञानस्य कयाचन विवक्षया १ तदैक्षतेति तात्त्विकभवनव्यवहारवत्, नित्यसिद्धस्यापि जीवस्य कयाचन विवक्षया तात्त्विकभवनं व्यवह्रियत इति गतिकल्पनं तु न युक्तम् ॥ कुत इति चेत् भूत्वा भविता वा न भूयः ॥ अयं जीवः भूत्वा स्थित्वा २ भूयः पुनः भविता कयाचन विवक्षया तात्त्विकभवनव्यवहारवांश्च न भवति ॥ वाशब्दो चशब्दार्थे ॥ स्वरूपेण स्थित्वा शरीरेण भवनस्य विद्यमानत्वात्, 'भूत्वा भविता न' इत्यस्य एवमेवार्थो वक्तव्यः ॥ तर्हि गतिकल्पनं कथमिति चेत् ॥ पुराणि शरीराणि अणति गच्छति प्राप्नोति इति पुराणः ॥ देहाद्देहान्तरप्राप्तिमत्वात् जीवस्य शरीरसंयोगवियोगावेव जन्मनाशौ तत्पर एव च तद्व्यवहारः ॥ यदि शरीरवियोगवान् स्यादात्मा तर्हि दर्पणनाशान्मुखप्रतिबिंबस्येव देहनाशादात्मना नाशः स्यादिति चेत् अयं शरीरे हन्यमानेऽपि न हन्यते ॥ आश्रयाश्रितनाशेऽपि स्वरूपदेहरूपानित्योपाधेस्सदा विद्यमानत्वादुपाधिनाशप्रयुक्तनाशो नास्त्यात्मन इत्युक्तमधस्तात् ॥ न म्रियते इत्युक्त्वा पुनः न हन्यते इत्युक्त्या पुनरुक्तिरिति चेत् उक्तशङ्कापरिहारार्थं उपसंहारार्थं च पुनरुक्तिरित्यदोषः ॥ जननमरणराहित्यस्य भगवत्प्रतिबिंबत्वस्य देहाद्देहान्तरगमनस्य शरीरनाशेऽप्यनाशस्य च पूर्वमुक्तत्वेन श्लोकोऽयं समग्र एव पुनरुक्तः इति चेत् नास्य श्लोकस्य उक्तार्थप्रतिपादने तात्पर्यम् ॥ किन्तु उक्तार्थे प्रमाणप्रदर्शने तात्पर्यम् ॥ प्रमाणं तु ३ 'नजायते म्रियते वा विपश्चित् नायं कुतश्चित् न बभूव कश्चित् ॥ अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे' ॥ इति पूर्वश्लोकोदाहृतमन्त्राव्यवहितोत्तरो मन्त्रः ॥ स एव पूर्वार्धे कतिपयपदैर्व्यत्यासितः एतच्छ्लोकरूपेण प्रमाणतया तेऽभिहितः ॥ ईश्वरस्य सर्वविधनाशराहित्यात् स्वातन्त्र्यम् जीवस्य त्रिविधनाशवत्वादस्वातन्त्र्यं इत्युक्तम् ॥ तत्कथमिति चेत् ॥ नायमित्यत्र ना अयमिति छेदः ॥ अयं ना परमपुरुषः कदाचिदपि न जायते ॥ स्वरूपतो नोत्पद्यते ॥ किं जीववद्देहत उत्पद्यत इति चेत् भूत्वा भविता वा न भूयः ॥ भूत्वा स्वरूपेण स्थित्वा भूयः पुनः भविता न देहतो नोत्पद्यते च ॥ जीववद्देहतो नश्यति किं इति चेत् न म्रियते च॥ चशब्दार्थकवाशब्दात् नेति संबध्यते ॥ शरीरवियोगरूपमरणं न प्राप्नोति ॥ न म्रियते

१. छा. ६. २. ३. २. भूयः किंच इति वा ॥ ३. का. २. १०.

इति सामान्येन नाशाभावोक्तेरस्याः कुतो देहतोनाशाभावरूपनाशाभावपरता इति चेत् न म्रियते इति मरणं निषिध्यते ॥ मरणं च शरीरतो नाशः ॥ न नाशसामान्यम्॥ न हि घटादीनां नाशे घटादयो मृता इति व्यवहरन्ति ॥ किंतु घटादयो नष्टा इत्येव ॥ स्वरूपतो नाशाभावस्तु कैमुत्यन्यायसिद्ध ॥ स्वरूपतो नाशाभावादनित्यत्वरूपनाशाभावः देहतो नाशाभावाद्देहहानिरूपनाशाभावः उक्तोभयविधनाशाभावबल. दुःखप्राप्त्यपूर्णत्वरूपयोर्नाशयोरसंभवात्तयोरुभयोर्नाशयोरभावः । एवं सर्वविधनाशाभावादीश्वरस्य स्वातन्त्र्य सिध्यति ॥ स्वरूपतो नित्यस्यापि जीवस्य देहतो जन्मनाशमत्वात् जन्मनाशवद्देहवतां च दुःखप्राप्तेरवर्जनीयत्वात् देहशानां पूर्णताप्रसक्तेरेवाभावादपूर्णताया अप्यवर्जनीयत्वाच्च जीवस्य त्रिविधनाशवत्वादस्वातन्त्र्यं च सिध्यति ॥ जीवपक्षेऽपि न म्रियते इत्यस्य देहतो न नश्यतीत्यर्थः कुतो नोच्यते ॥ शरीरनाशो हि मरणार्थकमृङ्धातोर्मुख्योऽर्थः ॥ कुतः प्रसिद्धो मुख्योऽर्थः परित्यज्यते ॥ इति चेत् पुराण इति तस्य शरीरसंयोगवियोगरूपजन्मनाशयोरुक्तिरूपबाधकवशात् प्रत्यक्षबाधाच्च प्रसिद्धमुख्यार्थपरित्यागेन स्वरूपतो न नश्यतीत्येवार्थो वक्तव्यः॥ अवताररूपेण जन्ममरणयोर्विद्यमानत्वात्कथं न जायते न म्रियत इति इति चेत् अयं भूत्वा भविता वा न भूय ॥ पूर्वं अवताररूपेण स्थित्वैव कदाचित् पुनः भविता जनदृग्विषयतया जात इति जननव्यवहारवान् भवति॥ अवतीर्य अवताररूपेण स्थित्वा कदाचित् जनदृग्विषयतया न भविता च मृत इति मरणव्यवहारवांश्च भवति ॥ अत अयं ईश्वरः अजः नित्य अत शाश्वत पुराणः अनादिः शरीर १ 'य पृथिव्यां तिष्ठ'न्नित्यादिश्रुतिभि शरीरभूते सर्वस्मिन जडवर्गे २ 'य आत्मनि तिष्ठन्निति' श्रुत्या शरीरभूते सर्वस्मिन् चेतनवर्गे हन्यमानेऽपि न हन्यते ॥ वक्ष्यते च ॥ ३ 'य स सर्वेषु भूतेषु नश्यत्सु न विनश्यती'ति॥ ४ विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यती'ति च ॥ उत्तरार्धं जीवविषय वा ॥ एतादृशेश्वरप्रतिबिंबत्वात् जीवः अजः नित्यश्च ॥ एवं तर्हि ईश्वरादविशेष इति चेत पुराणः देहसंयोगवियोगरूपजन्ममरणवान् ॥ अयमेव ईश्वरादस्य विशेषः ॥ जीवत्वदशायां तथात्वेऽपि ब्रह्मत्वदशायां अविशेषः इति चेत् शाश्वत सदा एकरूप. कदाऽप्यत्यक्तजीवत्वधर्म ॥ जीवत्वस्य सर्वदा विद्यमानत्वेन जीवधर्मस्यास्वातन्त्र्यस्य संसारे मुक्तौ

१ बृ. ५ ७. ३. २ बृ. ५. ७. २२ ३. ८. १०. ४. ११. १८

च सत्वादस्त्येव स्वतन्त्रादीश्वरात् सर्वत्र सर्वदा विशेषः ॥ शरीरिणः शरीरनाशे नाशावश्यंभावात्कथं देहाद्देहान्तरप्राप्तिमत्त्वरूपपुराणत्वमिति चेत् शरीरे हन्यमानेऽपि न हन्यते ॥ उदाहृतमन्त्ररूपमूलप्रमाणसद्भावात् प्रामाणिकमेव मदुक्तमखिलम् ॥ अतः श्रद्धत्स्वेदमखिलम् ॥

अ ॥ अर्जुनः ॥ 'अविनाशि तु तद्विद्धी'त्यत्र आत्मनो नित्यत्वे अव्ययस्ये-त्यनेन अविक्रियत्वरूपो हेतुरुक्तः ॥ के ते विकाराः कैर्विकारैराहित्यादात्मा नित्यः ॥ वद ॥

कृष्णः ॥ आत्मा कदाचिदपि न जायते ॥ कदाचिदपि न म्रियते च ॥ वा शब्द चशब्दार्थे॥ तद्बलान्नञ उभयत्र संबन्धः ॥ कुतो न जायत इति चेत् नायं भूत्वा भविता वा न भूयः ॥ यो हि अभूत्वा भविता स खलु जायते इत्युच्यते॥ अयमात्मा न भूत्वा भूयः पुनः भविता न ॥ तस्मान्न जायते ॥ कुतो न म्रियत इति चेत् नायंभूत्वा-भविता वा न भूयः ॥ यो हि भूत्वा न भविता स खलु म्रियते इत्युच्यते ॥ अयमात्मा भूत्वा भूयः न भविता च न ॥ वाशब्दश्चशब्दार्थे ॥ तस्मान्न म्रियते च ॥ नायमित्यस्य प्रथमपादेन संबन्धे अभविता इति छेदः ॥ न भूत्वा अभाविता भविता न ॥ भूत्वा अभाविता न ॥ इति व्याख्येयम् ॥ अत अजः नित्यश्च ॥ अजः अतो न जायते ॥ नित्य अतो न म्रियते ॥ इति वा ॥ ईदृशोऽप्यात्मा कालतोऽपक्षीयेत इति चेत् शाश्वतः शश्वत् सदा एकरूप एव भवतीति शाश्वतः ॥ कालतो नापक्षीयते ॥ नित्यत्वात् स्वरूपतो नापक्षीयते ॥ निर्गुणत्वात् गुणतो नापक्षीयते ॥ नापक्षीयते चेत तर्हि वर्धते किं इति चेत् पुराण ॥ पुराऽपि नव ॥ यो हि काञ्चिदुपचयापचयावस्थां प्राप्य नवो भवति स खलु वर्धते ॥ आत्मा तु सर्वदा नवः अतो न वर्धते ॥ उपचयापचययोरभावेऽपि विपरिणमते किं इति चेत् ॥ शरीरे हन्यमाने-ऽपि न हन्यते ॥ न विपरिणमते ॥ न म्रियते इति तु नार्थः ॥ मरणाभावस्य 'न म्रियते' इत्यनेनोक्तेः ॥ जायते अस्ति वर्धते विपरिणमते अपक्षीयते नश्य ति इति षड्विकाराः ॥ अत्र 'न जायत' इति प्रथमविकारस्य प्रतिषेधः ॥ जन-नानन्तरभाव्यस्तित्वस्य जन्मपूर्वकत्वेन जननाभावोक्त्या अस्तित्वाभावलाभात् 'न जायते' इत्यनेनैव द्वितीयस्यापि प्रतिषेधः ॥ 'पुराण' इति तृतीयस्य 'नहन्यत'

इति चतुर्थस्य 'शाश्वत' इति पञ्चमस्य 'न म्रियते' इति षष्ठस्य च प्रतिषेधः॥ 'न म्रियते' इति चतुर्थोऽपि प्रतिषिध्यते॥ 'न हन्यते' इति तु यस्मात्सर्वविकारशून्य आत्मा तस्माच्छरीरे हन्यमानेऽपि न हन्यते [1] इत्युपसंहारः ॥ इति वा ॥ 'नाय'मित्यत्र अयमात्मा भूत्वा उत्पद्य भूयः पुनः भविता अस्तित्ववान् न किंतु सदाऽप्यस्तित्ववान् इति जननानन्तरभाव्यस्तित्वरूपस्य द्वितीयस्य 'नित्य' इति चतुर्थस्य च प्रतिषेधः ॥ 'न हन्यते' इति तु तथाऽपि देहनाशादात्मनाशः स्यादिति भ्रमवारणाय ॥ इति वा ॥ 'नित्य' इति तृतीयस्य 'पुराण' इति चतुर्थस्य च प्रतिषेध ॥ भूत्वा भूयः अधिकं यथा तथा भविता न इति तृतीयस्य प्रतिषेधे 'नित्य' इति तत्र हेतु ॥ 'अज' इति द्वितीयाभावे हेतुः ॥ 'न हन्यते' इति तु उपसंहारः ॥ इति वा ॥ एवं सर्वविकारशून्यत्वादात्मनः एनं हन्तारं हतं च मन्यमानौ न विजानीतः इति पूर्वेणान्वयः ॥ अस्य सर्वस्यार्थस्य प्रामाणिकतासूचनाय कतिपयपदैर्व्यत्यासितः पूर्वश्लोकोदाहृतमन्त्राव्यवहितमन्त्र एव आत्मनो निर्विकारत्वप्रतिपादकत्वेन ते अभिहितः ॥ २० ॥

वि ॥ अर्जुनः ॥ 'अविनाशित्वि'ति विनाशित्वमात्मनो निराकृतम् ॥ जन्यत्वादिकं तु किं तस्यास्ति उत न ॥ ब्रूहि ॥

कृष्णः ॥ अत्र कदाचिदित्यनेन वर्तमानकालो न विवक्षितः ॥ वर्तमानार्थकलकारेणैव तदुक्त्या वैयर्थ्यापातात् ॥ नापि भूतकालः भविष्यत्कालो वा ॥ वर्तमाननिर्देशानुपपत्तेः ॥ किंतु कल्पाद्यन्तव्यतिरिक्तः समस्तः काल कदाचिदित्यनेनोच्यते॥ वर्तमाननिर्देशस्तु वर्तमानतया अनुभवसूचनाय ॥ तथा च अयमात्मा कदाचित् कल्पादिकल्पान्तव्यतिरिक्ते समस्ते काले न जायते न म्रियते च ॥ वाशब्दश्चशब्दार्थे॥ तत्तत्काले तैस्तैस्तेषुतेषु देहेषु जायते म्रियत इति वर्तमानतया अनुभूयमानौ जन्मनाशौ देहधर्मत्वादात्मनो न स्तः ॥ अत आत्मा अजो नित्यश्च ॥ कल्पाद्यन्तव्यतिरिक्तकाले जन्मनाशयोरभावेऽपि कल्पादौ जन्मनः कल्पान्ते नाशस्य च विद्यमानत्वादात्मनोऽजत्वं नित्यत्वं च कथं इति चेत्॥नायमात्मनामाप्रलयावस्थानवादो युक्तः॥ [2]'नायं भूत्वा भविता वा न भूयः' अयमात्मा कल्पादौ भूत्वा भूयः कल्पान्ते न भविता च न ॥

१. शरीरे जायमानेऽपि न जायते इत्यपि बोध्यम् ॥ २ अर्जुनमतानुयायिना ब्रह्मानन्दगिर्याख्याने व्याख्याने आभूतसंप्लवावस्थाय्यात्मवादं निराकरोति इत्यवतार्य एवं व्याख्यातम् ॥

वाशब्दश्चार्थे ॥ भूयो वा कल्पान्तेऽपि इत्यपिशब्दार्थो वा ॥ कल्पादिकल्पान्तयोरुपलभ्यमानौ जन्मनाशौ परमपुरुषशरीरान्निस्सरणतत्प्रवेशरूपावेवेति न तदानीमपि जीवस्य जन्मनाशौ स्त ॥ अत· अज नित्यश्च ॥ जन्मनाशयोरभावेऽपि परिणामी स्यादिति चेत् शाश्वत· शश्वत् भव मशा एकरूप न तु कदाचन कयाऽपि विधया विपरिणमते ॥ अवयवाप्यायनेन नवीकरणसंभवात् कथं शाश्वतत्व इति चेत पुराणः पुराऽपि नवः सर्वदाऽपि नव· ॥ निरवयवत्वादवयवाप्यायनेन नवीकरणासंभवात् सर्वदाऽपि नव इव प्रकाशते ॥ पुरातनोऽपि नव इति वा॥ नवशब्दोऽत्र आश्चर्यार्थकः इति वा ॥ वक्ष्यते च ॥ १ 'आश्चर्यवत्पश्यति कश्चिदेनं' इत्यादि॥ अतः शरीरे हन्यमानेऽपि न हन्यते ॥ पूर्वश्लोकादाहृतमन्त्राव्यवहितो मन्त्र एव कतिपयपदैर्व्याख्यात· आत्मनोऽजन्यत्वादिप्रतिपादकतया त अभिहित मदुक्तार्थस्य प्रामाणिकतासूचनाय ॥ २० ॥

अर्जुनः ॥ आत्मन अनित्यत्व स्वातन्त्र्यं च जानन् भ्रांत इत्युक्तम्॥ तादृशभ्रांत्युत्पत्तेः को हेतु ॥ ब्रूहि ॥

कृष्णः ॥ वेदाविनाशिनं नित्यं य एनमजमव्ययम् ॥
कथं स पुरुषः पार्थ कं घातयति हन्ति कम् ॥ २१ ॥

वेदेति ॥ हे पार्थ य· एनं जीवं ईश्वर च विनाशः अस्यास्तीति विनाशी न विनाशी अविनाशी तं अविनाशिनं,न जायते इत्यज·, तं अजं न व्येतीति वा न विद्यते व्यय· यस्य इति वा अव्ययः, तं अव्ययं नित्यं च वेद वेत्ति सः पुरुषः कं घातयति कं हन्ति कथं घातयति कथं हन्ति ॥ २१ ॥

उपनिषदादिनिर्णीतजीवेश्वरस्वरूपयाथात्म्यज्ञानाभावात तादृशी भ्रान्तिर्जायते॥ सति जीवेश्वरस्वरूपयाथात्म्यज्ञाने तादृशी भ्रान्तिर्न जायेत ॥ यः एनं जीवं अविनाशिनं बिबोपाधितत्संनिधिनाशादिनिमित्तकनैमित्तिकनाशरहितं नित्यं स्वाभाविकनाशरहितम् अजं जननरहितम् अव्ययम् निर्विकारं च नित्यं नाशरहितं अविना-

१ २. २९

शिनं दोषरहितं दोषयुक्ते नष्टशब्दप्रयोगात् इति वा ॥ अनेन यथा भीष्मादिचेतनानां नित्यत्वात्तद्धननं कर्तुं अशक्यम् ॥ तथा स्वतो दुःखादिदोषरहितत्वात् तेषां दुःखमपि कर्तुमशक्यं इति सूच्यते ॥ 'मात्रास्पर्शा' इत्यत्र जीवस्य अभिमानादेव रागद्वेषसुख-दुःखादयः न स्वत इत्युक्तम् ॥ तथा एवं ईश्वरं आत्मनाशिनं देहतो नाशरहितं नित्यं स्वरूपतो नाशरहितं अजं निर्विकारं च वेद जानाति स पुरुषः कं हन्ति न कमपि कं घातयति न कमपि कथं हन्ति न कथमपि कथं घातयति न कथमपि ॥ एवं हन्मि अनेन प्रकारेण हन्मि एवं घातयामि अनेन प्रकारेण घातयामि इति बुद्धिं न करोति ॥ यथाश्रुतार्थस्तु न युक्तः ॥ ज्ञानी न हंति न घातयतीत्युक्ते अज्ञानी हन्ति घातयतीत्यापद्यते ॥ तच्चायुक्तम् ॥ आत्मनो नित्यत्वात् ॥ अस्वातन्त्र्याच्च ॥ लक्षणया ज्ञानी तादृशबुद्धिं न करोतीत्युक्ते अज्ञानी तादृशबुद्धिं करोतीत्यापद्यत ॥ तच्च युक्तम् ॥ ज्ञानिनः आत्मनित्यत्वास्वातन्त्र्यज्ञानसत्वात् ॥ अज्ञानिनः तदभावात् ॥ 'य एवं वेत्ति हन्तारं' इत्यत्र आत्मनाऽनित्यत्वस्वातन्त्र्यप्रतीतभ्रान्तित्वमुक्तम् ॥ अत्र तु तथा-प्रतीतिं जीवेश्वरस्वरूपयाथात्म्यज्ञानाभावो हेतुरुच्यत इति भेदः ॥ जीवेश्वर-स्वरूपयाथात्म्यमजानन् आत्मनोऽनित्यत्वं स्वातन्त्र्यं च मन्यते इति वक्तव्ये तथाऽनुक्त्वा जानन् न मन्यत इत्युक्त्या व्यतिरेकमुखेन हेतुरुक्त इति बोध्यम् ॥ तत्र भ्रान्तित्वे आत्मनोऽस्वातन्त्र्यानित्यत्वरूपो हेतुरुक्तः ॥ अत्र तु तत्रैव जीवेश्वरस्वरूपया-थात्म्यज्ञानिनः तादृशप्रतीत्यनुदयरूपोऽपरो हेतुरुच्यते इति भेदः ॥ इति वा ॥ २१ ॥

वि ॥ आत्मयाथात्म्यज्ञानस्य किं फलमिति चेत् ॥ एवं जीवं उक्तरूपं यो जानाति स पुरुषः एवं हन्मि घातयामि इति न शोचति ॥ अजानंस्तु शोचति ॥ उक्तरूपशोकाभाव एव फलमात्मज्ञानस्य ॥ पार्थेदमवधेहि ॥ त्वं तु शोचसि ॥ अतो मूढोऽसि ॥ २१ ॥

अ ॥ अर्जुनः ॥ उक्तरीत्या आत्मानमविक्रियं अतएव नित्यं यो जानाति तस्य अविक्रियात्मज्ञानिनः किं फलं वद ॥

कृष्णः ॥ यः एवं आत्मानं अविनाशिनं विनाशः देशकालवस्तुभिः परिच्छेदः तद्रहितं सर्वदेशसर्वकालव्यापिनं सर्ववस्तुस्वरूपं च ॥ विनाशः शुक्तिरजतरज्जु-सर्पादेरिव प्रमाणेन बाधः तद्रहितम् ॥ सत्यमिति यावत् ॥ तादृशमिति वा ॥

विनंष्टुं शीलमस्यास्तीति विनाशी रज्जूरगतुल्यः स्थूलसूक्ष्मकारणशरीराख्य उपाधिः तद्भिन्नं इति वा ॥ अजं अव्ययं नित्यं च नित्यं अत एव अजं अव्ययं अत एव अविनाशिनं इति वा॥ जानाति साक्षात्करोति च स पुरुषः यः एनं अविनाशिनं अजं अव्ययं च नित्यं सदा वेद स पुरुषः इति वा ॥ वेद आ विनाशिनं इति छेद ॥ अज्ञानेनाऽऽवृतत्वात् आ समंतात् अदर्शनं गतं एनं यो नित्यं सच्चिदानन्दाऽऽत्मना सदैव सन्त वेद स पुरुषः इति वा ॥ कं हन्ति कं घातयति कथं हन्ति कथं घातयति तादृशबुद्धिं न करोति ॥ हनने कर्तृत्वं प्रयोजकत्वं च न मनुते ॥ उभयत्राऽऽक्षेप एव न प्रश्नः ॥ उत्तरस्य प्रतिवचनाभावात् ॥ कं १कथं हन्ति इति हन्तृत्वरूपकर्तृत्वाऽऽक्षेपः॥ कं कथं घातयतीति प्रयोजकत्वाऽऽक्षेपः॥ कं इति हन्तव्यत्वरूपकर्मत्वाऽऽक्षेपः ॥ कथं इति साधनाऽऽक्षेपः ॥ 'पुरुष' इत्युक्त्या आत्मयाथात्म्यज्ञानवानेव पुरुषः अन्यस्तु पशुरिति सूच्यते॥ विदुषो हननक्रियाऽऽक्षेपमुखेन सर्वकर्मसंन्यासो गीताशास्त्रे विवक्षितो लेशतः सूच्यते ॥ हननक्रियाया मुखत उक्तिस्तु प्रकरणानुगुण्याय ॥ कर्मकाण्डविहितानि कर्माणि तु अविदुषः ॥ वक्ष्यते च ॥ २'कर्मयोगेन योगिना'मिति॥ विदुषस्तु कर्मसंन्यासे अधिकारः॥ वक्ष्यते च ॥ ३'ज्ञानयोगेन सांख्याना'मिति॥ ४'तस्य कार्यं न विद्यते'॥ इति ॥ ५सर्वकर्माणि मनसा संन्यस्यास्ते' इति च ॥ हननक्रियाऽऽक्षेपादन्याः क्रिया विदुषोऽभ्यनुज्ञायन्ते इति कुतो न वाच्यं इति चेत् 'युध्यस्वे'ति हननक्रियामभ्यनुज्ञाय तस्या एवात्राऽऽक्षेपेण वास्तवकर्तृत्वाभाव एव विवक्षित इति स्पष्टमवगम्यते ॥ यस्य कर्तृत्वं नास्ति तस्य कथं कर्माणि स्युः ॥ लेशतः सूचितो विदुषः सर्वकर्मसंन्यास स्तत्रतत्रो-परिष्टादुपपादयिष्यते ॥ २१ ॥

अर्जुनः ॥ आत्मनो नित्यत्वं देहस्यानित्यत्वं चोक्तम् ॥ देहस्यानित्यत्वात् देहसंयोगवियोगरूपौ जन्मनाशावात्मनः स्त इति सिद्धम् ॥ पूर्वदेहवियोगोत्तरदेह संयोगयोरात्मनो विकारादिकं दुःखादिकं च स्यात् ॥ अतस्तान् प्रति शोचामि ॥ सति चैवमहं कथं मूढः स्यां ॥ ६वद ॥

---

१. कथं घातयति हन्तीति न घातयितृत्वहन्तृत्वाऽऽक्षेपः ॥ किंतु तत्कार्यप्रत्यवायाऽऽक्षेपः ॥ अत एव वक्ष्यते ॥ 'ततो युद्धाय युज्यस्व नैव पापमवाप्स्यसी'ति (२. ३८.) ॥ इति केचित् ॥ २ ३. ३ ३ ३ ४ ३. १७. ५ ५. १३. ६ माऽस्त्वात्मनिमित्तः शोकः शरीरनिमित्तस्तुस्यादेव ॥ तत्र समाधानं वद इत्यर्थः ॥

कृष्णः ॥ वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि ॥
तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ॥२२॥

वासांसीति ॥ नरः जीर्णानि वासांसि वस्त्राणि विहाय त्यक्त्वा अपराणि नवानि नूतनानि वासांसि यथा गृह्णाति ॥ तथा देहः अस्यास्तीति देही जीर्णानि शरीराणि विहाय अन्यानि नवानि शरीराणि संयाति प्राप्नोति ॥ २२ ॥

नरः जीर्णानि वस्त्राणि विहाय [1]अन्यानि नूतनानि वस्त्राणि यथा गृह्णाति तथा जीवः जीर्णानि शरीराणि विहाय [2]अन्यानि नूतनानि शरीराणि प्राप्नोति ॥ जीर्णवस्त्रपरित्यागनूतनवस्त्रग्रहणयोः यथा आत्मनो विकार दुःखादिकं च नास्ति तथा जीर्णपूर्वशरीरपरित्यागे नूतनोत्तरदेहग्रहणे च नाऽऽत्मनो विकारो दुःखादिकं च॥ पूर्वदेहत्यागोत्तरदेहस्वीकारौ कौमाराद्यवस्थात्यागस्वीकाराविवेति 'देहिनोऽस्मि'न्नित्यत्राभिहितम् ॥ तत्र दृष्टान्तभूतत्यज्यमानगृह्यमाणदेहयोरत्यन्तभिन्नत्वाभावात् अत्यन्तभिन्नयोर्विषये कथं स्यादिति शङ्कापरिहाराय अत्यन्तभिन्नदृष्टान्तप्रदर्शनमिदम् ॥ उत्तरपूर्ववस्त्रयोरिव उत्तरपूर्वदेहयोरेव जननाशौ नाऽऽत्मनः ॥ पूर्ववस्त्रत्यागोत्तरवस्त्रस्वीकारौ यथा अवश्यंभाविनौ तथा पूर्वदेहत्यागोत्तरदेहस्वीकारौ अवश्यंभाविनौ ॥ अवश्यंभावित्वेनापरिहार्यत्वान्न शोकः कार्यः ॥ वक्ष्यते च ॥ [3]'तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि'॥ इति ॥ वस्त्रदृष्टान्तेन यथा वाससामेव आगमापायौ नामरूपादिभेदः शैथिल्यं वैचित्र्य च न त्वात्मनः ॥ तथा देहानामेव जन्मनाशौ अवान्तरविकाराः नामरूपादिभेदः शैथिल्यं वैचित्र्यं च नाऽऽत्मनः इति स्पष्टमुक्तं भवति ॥ वस्त्रान्तरस्वीकारात् यथा पूर्ववस्त्रनाशे न शोकः क्रियते तथा देहान्तरस्वीकारात् पूर्वदेहनाशे शोको न कार्य इत्युक्तम् ॥ किं प्रतिनिधिलाभमात्रेण समाधानं भवेत् ॥ स्वीक्रियमाणस्य नवानीति नूतनत्वोक्त्या त्यज्यमानस्य जीर्णानीति जीर्णत्वोक्त्या च समाधानमिति चेत् न पुरातनत्वनूतनत्वमात्रेण समाधानसंभवः ॥ सार्वभौमादिपुरातनशरीरत्यागेन नारकितिर्यक्स्थावराद्यतिगर्हितनूतनशरीरप्राप्तिः क-

१. अ॥ नामरूपलक्षणे पूर्वानुभूतविलक्षणानि॥ २. नामरूपजातिगुणविशेषैः पूर्वानुभूतविलक्षणानि॥

३ २. २७.

स्यचिदिष्टा ॥ न हि पुरातनगृहत्यागेन नूतनकारागृहप्रवेशः पुरातनवसनत्यागेन नूतनगोणीपरिग्रहश्च इष्टतरः इति चेत् अन्यानि विलक्षणानि लोकोत्तराणीति गृह्यमाणस्य त्यज्यमानापेक्षया अत्युत्तमत्वोक्त्या समाधानं संभवति ॥ न ह्यधमं वस्त्रं त्यक्त्वा उत्तमं वस्त्रं गृह्णन्तः शोचन्ति लोके ॥ किन्तु हृष्यन्ति ॥ तथा अधमं शरीरं त्यक्त्वा उत्तमं शरीरं ग्रहीष्यन्तो भीष्मादयो न शोचिष्यन्ति ॥ किंतु हर्षिष्यन्ति ॥ युद्धे तनुं त्यजतां अत्युत्तमशरीरप्राप्तिः वेदशास्त्रपुराणादितोऽवगम्यते ॥ तस्मात् शोको न कार्य इत्युक्तं युक्तमेव ॥ देहिनोऽस्मिन्नित्यत्र शोकाविषये शोकः क्रियते इत्युक्तम् ॥ अत्रतु शोकविरुद्धहर्षविषये शोकः क्रियते इत्युच्यत इति विवेकः ॥

१ अस्त्वेवं तेषामशोच्यता तथाऽपि तेषां परमोपकारिणां भोगायतनस्य शरीरस्य नाशने अपकारकरणेन कृतघ्नोऽहंस्यां ॥ स्मर्यते हि कृतघ्नमधिकृत्य ॥ ' ब्रह्मघ्ने च सुरापे च चोरे भग्नव्रते तथा ॥ निष्कृतिर्विहिता शास्त्रे कृतघ्ने नास्ति निष्कृतिः ' ॥ इति ॥ अतो बिभेमीति चेत् ॥ हन्त भ्रांतोऽसि ॥ अभ्युपगम्य युद्धं भीष्मादिशरीरनाशने महोपकारी खलु तेषां स्याः ॥ कथमिति चेत् ॥ अपराणि अन्यानि इत्यनयोः २ परमोत्कृष्टानीत्यर्थः ॥ नवानि गृह्णातीत्युक्त्यैव अन्यानि गृह्णातीत्यर्थस्य लाभात् ॥ जीर्णवस्त्रत्यागेन नूतनवस्त्रग्रहणस्य मनुष्येतरस्मिन् असंभवात् नर इति व्यर्थम् ॥ अतः नरः मनुष्यविशेषः ॥ उत्कृष्टो मनुष्य इति यावत् ॥ जीर्णानि वस्त्राणि विहाय नवानि पूर्वानुभूतवस्त्रापेक्षया उत्कृष्टानि वस्त्राणि यथा गृह्णाति तथा देही धर्मानुष्ठानैकतानतया ३ प्रशस्तदेहवान् भीष्मादिः जीर्णानि वयसा तपसा च कृशानि शरीराणि विहाय अन्यानि नवानि उत्कृष्टानि देवादिशरीराणि सं गर्भवासक्लेशादिराहित्येन याति ॥ भीष्मादयो हि चिराय धर्मानुष्ठानक्लेशेन जर्जरीभूतदेहाः भोक्तुकामास्तद्धर्मफलं असमर्थाः शरीरेणानेन तद्भोगाय स्वहननमात्मनाकर्तुमधर्मत्वादनिच्छवः परेण विशिष्टेन पुंसा धर्म्येण पथा कल्पितेनानेहसा वा शरीरनाशमपेक्षमाणा वर्तन्ते ॥ सति चैव कृते त्वया युद्धे तच्छरीरनाशे कृतमहोपकार एव तेषां त्वं स्याः ॥ त्वया दुर्योधनादीनामसतामपि वीरजनप्राप्यस्वर्गभोगभोगाय तदुचितदेहसंपादनेन महानुप-

१. अ ॥ केचित् ॥ २ ' अन्येव रूपसंपत्तिरन्या वैदग्ध्यधोरणी ' ॥ इत्यादौ तथा दर्शनात् ॥
३ प्रशंसायां इनि प्रत्ययः ॥

कारः कुतो भवति ॥ किं पुनर्महानुभावानां भीष्मादीनाम् ॥ अतो मा भैषी· ॥ वसन-दृष्टान्तः सर्वसाधारणः तेन कोऽर्थविशेषः सूचितो भवतीति चेत् नूतनवस्त्रग्रहणं द्विविधम् ॥ केचित्स्वतन्त्राः भर्तृपित्रादय· पुरातन जीर्णं वस्त्रं विहाय नूतनमुपभोगक्षमं वस्त्रं क्रीत्वा परिदधते ॥ परतन्त्रा भार्यापुत्रादयस्तु भर्तृपित्रादिभि क्रीत्वा परिधेहीदमिति दत्तं वस्त्रं परिदधते ॥ अत्र परतन्त्राणां नव्यवस्त्रग्रहणमेव दृष्टान्ततयाऽभिप्रेतम् ॥ परतन्त्रजीवशरीरग्रहणरूपदार्ष्टान्तिकानुरोधात् । परतन्त्रस्य जीवस्य नूतनशरीरग्रहणं परमात्माधीनम् ॥ वक्ष्यते च ॥ १ 'प्रकृतिं स्वामवष्टभ्य विसृजामि पुन पुनः' इति ॥ परतन्त्रा भार्यापुत्रादय पूर्वानुभूतवसनापेक्षया उत्कृष्टवसनलाभाय स्वतन्त्रान् भर्तृपित्रादीन् अनुवर्तमाना तन्मुखोल्लासाय तदुक्तमनुतिष्ठन्तश्च दृश्यन्ते ॥ तथाकरण एव स्वतन्त्राः परतन्त्रेभ्य· उत्कृष्टं वसनं क्रीत्वा ददति नान्यथा ॥ तद्वत् पूर्वानुभूतदेहापेक्षया उत्कृष्टदेहलाभाय परतन्त्रैर्जीवै स्वतन्त्रं परमात्मानमनुवर्तमानैः तन्मुखोल्लासाय तदुक्तमनुतिष्ठद्भिश्च भाव्यम् ॥ तथाकरण एव तेभ्य ईश्वरः दिव्यं देहं दद्यात् ॥ नान्यथा ॥ प्रत्युत अधमां गतिं मपि प्रापयेत ॥ वक्ष्यते च ॥ २ 'तानहं द्विषतः' इत्यादिना ३ 'ततो यान्त्यधमां गतिम्'॥ इत्यन्तेन॥ किं तदुक्तमिति चेत् ॥ स्वस्ववर्णाश्रमोचितं विहितं कर्म स्वमुखोल्लासाय तैस्तै कर्तव्यमितीदं तदुक्तम् ॥ तदाज्ञारूपवेदशास्त्रपुराणादितोऽवगन्तम ॥ वक्ष्यते च ॥ ४ 'स्वे स्वे कर्मण्यभिरत· संसिद्धिं लभते नरः'॥ इति ॥ ५ 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः'॥ इति च ॥ अतस्त्वया इतोऽप्युत्कृष्टशरीरलाभाय स्वतन्त्रभगवदाराधनरूप तेन तव विहितं कर्म कर्तव्यम ॥ तच्च तव क्षत्रियस्य युद्धमेव ॥ अत एतावन्मनसि निधाय 'युध्यस्व भारते' त्युक्तम् ॥ अयमर्थविशेषो वासोदृष्टान्तेन सूच्यते ॥ २२॥ ॥

अर्जुनः ॥ आत्मनः स्वतो निमित्तैश्च न नाशः ॥ देहस्य तु सर्वथा नाश इत्युक्तम ॥ युद्धे क्रियमाणे शस्त्रै· आग्नेयवारुणवायव्याद्यस्त्रैश्च नाशः स्यात् ॥ पृथिव्यादिभूतचतुष्टयविकारैरात्मनो विकारसंभवात ॥ सामान्य निमित्तैरनाश्यस्यापि निमित्तविशेषेण नाश· संभवति ॥ दक्षशिरोनाशवत् ॥

१. ९. ८. २. १६. १९ ३. १६. २०. ४. १८ ४५ ५. १८. ४६.

[1]अच्छिनद्धि पशुपतिर्दक्षस्य शिरः शस्त्रादिना छेत्तुमशक्नुवन्नपि युद्धं यज्ञत्वेन तत्र तं पशुत्वेन च ध्यात्वा मन्त्रपूर्वकपशुसंज्ञपनोपायरूपेण केनचिन्निमित्तविशेषेण ॥ छेदादयो विकाराः देहस्यैव नाऽऽत्मनः तस्य अविक्रियत्वात् इति चेत् गृहस्य दाहे गृहान्तर्वर्तिन इव देहस्य छेदादौ तदन्तर्वर्तिन आत्मनोऽपि तदवश्यंभावात् स्युरेवाऽऽत्मनः छेदादय ॥ सतिचैवं आत्मन उक्तं नित्यत्वं कथं घटेत ॥ वद ॥

कृष्णः ॥ नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ॥
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥ २३ ॥

नेति ॥ शस्त्राणि एनं न च्छिन्दन्ति ॥ पावकः अग्निः एनं न दहति ॥ आपः एनं न क्लेदयन्ति च ॥ मारुतः वायुः एनं न शोषयति ॥ २३ ॥

एनं जीवं शस्त्राणि गदाखड्गादयः पृथिवीविकाराः न छिदन्ति ॥ द्विधा न कुर्वन्ति ॥ पावकोऽग्निः एनं न दहति ॥ आपः जलानि च एनं न क्लेदयन्ति ॥ आर्द्रीकरणेन शैथिल्यमुत्पाद्य न नाशयन्ति ॥ मारुतः वायुः एनं न शोषयति ॥ निमित्तविशेषा अप्येनं न नाशयन्ति ॥ शस्त्रादीनां मुख्यत उक्तिस्तु तेषामेव युद्धे संभवात् ॥ पृथिव्यप्तेजोवायूनामेव नाशकत्वशङ्कातन्निषेधौ ॥ नाऽऽकाशस्य ॥ तस्य नाशकत्वासंभवात् ॥ भूतचतुष्टयेन देहस्य छेदादौ सत्यपि न तदन्तर्वर्तिनोऽप्यात्मनः छेदादिकम् ॥ गृहस्य दाहेऽपि गृहान्तर्वर्तिनामपि दाहानर्हाणामुपलानामिव ॥ एनमेनमित्यसकृदुक्तिः सर्वेऽपि जीवा एवंरूपा इति सूचनाय ॥ इदमेव 'अच्छेद्योऽय'मित्यादावुत्तरत्र अयमित्यस्यासकृदुक्तेरपि फलं बोध्यम् ॥ छिन्दन्तीत्यादिवर्तमाननिर्देशेन शस्त्रादयो न तव मम च छेदादिकं कर्तुं [2]प्रभवन्तीति [3]युद्धेऽस्मिन्विदितं भविष्यतीति

१ 'आक्रम्योरसि दक्षस्य शितधारेण हेतिना ॥ छिन्दन्नपि तदुद्धर्तुं नाशक्नोत् त्र्यंबकस्तदा ॥ शस्त्रैरस्त्रान्वितैरेव आनिर्भिन्नत्वचं हर ॥ विस्मयं परमापन्नो दध्यौ पशुपतिश्चिरम् ॥ दृष्ट्वा संज्ञपने योगं पशूनां स पतिर्मखे ॥ यजमानपशोस्तस्य कायात्तेनाहरच्छिरः '॥ इति भागवते ४ स्कन्धे ५ अध्याये ॥ २. वि ॥ 'विनाशमव्ययस्यास्य न कश्चित् कर्तुमर्हति 'त्युक्तस्यैव प्रपञ्चः ॥ ३ युद्धस्य अद्याप्यनारब्धत्वेन न छेदादेः प्रसक्तिः ॥ अतो वर्तमाननिषेधोऽयमयुक्त इति चेत् 'प्रवृत्ते शस्त्रसंपाते' इत्युक्तेरस्त्येव छेदादेः प्रसक्तिः ॥ तत्र 'वर्तमानसामीप्ये वर्तमानवद्वा' (३. ३. १३१.) इति भविष्यति लटः ॥

सूच्यते ॥ १जीवस्य स्वरूपतोऽविनाशित्वं देहतो विनाशित्वं ईश्वरस्य तु स्वरूपतो देहतश्चाविनाशित्वं इत्युक्तम् ॥ तत्कथम् ॥ जीवस्येव ईश्वरस्यापि देहतो विनाशित्वमेव युक्तम् ॥ युद्धे शस्त्रादिना ईश्वरदेहस्य छेदादिसंभवात् इति चेत् एनं ईश्वरं शस्त्राणि न छिन्दन्तीत्यादि पूर्ववत् ॥ ईश्वरदेहस्य छेदाद्यभावपरमिदम् ॥ जीवस्येव ईश्वरस्यापि स्वरूपत छेदाद्यभावपरमेवेदमस्त्विति चेत् जीवस्यापि स्वरूपत· छेदाद्यभावादीश्वरस्य कैमुत्येन तत्सिद्धेः जीवादीश्वरस्य विशेषानावायकत्वात्तत्र वचनमिदं व्यर्थं स्यात् ॥ अतो युक्तमुक्तम् ॥ एनमेनमिति अयमयमिति च शब्दाऽऽवृत्ति सर्वाण्यपि भगवद्रूपाणिदृशानीति सूचनाय ॥ २२ ॥

अर्जुनः ॥ न छिन्दन्तीति वर्तमाननिर्देशेन वर्तमानच्छेदादेरेव निषेधात् इदानीं सत्वेन पूर्वं तदभावात्तिरोभ्यश्च स्यादुत्तरत्र च्छेदादिना विनाशित्वमात्मन इति भाति ॥ परिहर तमेतं विशयम् ॥

कृष्णः ॥ अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ॥ २३॥ ॥

अच्छेद्य इति ॥ अयं आत्मा छेत्तुं अर्हः छेद्यः न छेद्यः अच्छेद्यः ॥ अयं दग्धुं अर्हः दाह्यः न दाह्यः अदाह्यः॥ अयं क्लेदयितुं आर्द्रीकर्तुं अर्हः क्लेद्यः न क्लेद्यः अक्लेद्यः॥ अयं शोषयितुं अर्हः शोष्यः न शोष्यः अशोष्यः चैव ॥ २०॥ ॥

अयं आत्मा छेत्तुं दग्धुं क्लेदयितुं शोषयितु च अनर्ह एव ॥ २ निरवयवत्वाच्छे-

प्रवृत्तं प्रवर्तितुमुद्युक्ते अविलम्बेन प्रवर्तयितव्ये इति यावत् ॥ तदा शस्त्रसंपातप्राक्काले इति व्याख्यातत्वान्नेदानीमपि युद्धमारब्धमित्यवगम्यते ॥ तथा च कथं शस्त्रादिभि· छेदादेः प्रसक्ति. इति चेत् यावद्गीतोपदेशसमाप्ति युद्धस्यानारंभेऽपि तदनन्तरं युद्धारम्भनिश्चयात् तत्र च छेदादिप्रसक्तेर्विद्यमानत्वात् उक्तार्थोपपत्ति·॥ वर्तमानसामीप्याद्वर्तमानप्रत्यय ॥ अत एव हि विदितं भविष्यतीति सूच्यते इत्युक्तम्॥ तत्र प्रवृत्ते इति भूते क्तः ॥ तदा युद्धारंभसमये इति व्याख्याने नोक्तशङ्कावकाश इति चेत् समनन्तरभारतग्रन्थेन गीतोपदेशसमाप्त्यनन्तरमेव युद्धारंभावगमात् योत्स्यमानानवेक्षेऽहं' इत्यादिगीताविरोधाच्च पूर्वव्याख्यानमेव तत्र युक्तम् ॥ नहि चलति युद्धे गीतोपदेश इति वक्तुं युक्तम् ॥ असंभवात ॥

१ द्वै ॥ केचित् ॥

दानर्हः अमूर्तत्वाद्दाहानर्हः निरवयवत्वात् क्लेदनानर्हः द्रवत्वाभावाच्च शोषणानर्हः॥ यस्मादेवं तस्मान्नैनं छिन्दन्ति शस्त्राणीत्यादि ॥ यस्माच्छेदाद्यनर्हः तस्मात् कदाऽप्यात्मनः छेदादिना विनाशित्वं न भवति ॥ एनं ईश्वरं न च्छिन्दन्तीत्याद्युक्तं कुत इति चेत् ॥ अयं ईश्वरः अच्छेद्य इत्यादि पूर्ववत् ॥ यस्मात् ईश्वरः छेदाद्यनर्हः तस्मात् एनं ईश्वरं न च्छिन्दन्तीत्यादि ॥ अत ईश्वरस्य न च्छेदादिना विनाशित्वं भवति ॥ ईदृशेश्वरप्रतिबिंबत्वाज्जीवस्यापि न च्छेदादिना विनाश इति बोध्यम् ॥ छेदादिना नाशरहितेश्वरप्रतिबिंबत्वात् जीवस्य न च्छेदादिना नाश इति वक्तु ईश्वरपरयोजनापेक्षा ॥ ईश्वरस्य देहतोऽपि च्छेदाद्यभावपरतया योजनाय जीवपरयोजनापेक्षा ॥ जीवपरयोजनया जीवस्य स्वरूपतः छेदाद्यभावप्रतिपादने हि ईश्वरे तस्य कैमुत्येन सिध्या ईश्वरे विशेषानाधायकताऽऽपत्त्या ईश्वरस्य देहतोऽपि छेदाद्यभावपरतया योजनमावश्यकं भवति ॥ अतोऽत्र अन्योन्याश्रय इति चेत् ईश्वरस्य स्वरूपत छेदाद्यभावपरतया योजयित्वा ईदृशेश्वरप्रतिबिंबत्वाज्जीवस्य न च्छेदादिना नाशः इत्येवं व्याख्याने नान्योन्याश्रयः ॥ एवं व्याख्याने जीवादीश्वरे विशेषानाधायकताऽऽपत्त्या आवृत्या पुनरीश्वरस्य देहतोऽपि छेदादिना नाशाभावपरतयाऽपियोजन क्रियते ॥ अतो नानुपपत्तिः॥ २३॥

अर्जुनः ॥ कुतो हेतो रात्मनः छेदाद्यनर्हत्वं वर्तमानच्छेदाद्यदर्शनादेवेति चेत् पूर्वं कदाऽप्यदृष्टस्य पश्चाद्दर्शनादेवं वक्तुं न युक्तम् ॥ अतो हेत्वन्तरं वक्तव्यम् ॥ वद ॥

कृष्णः ॥ नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥ २४ ॥
अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते ॥ २४॥ ॥

नित्य इति ॥ अयं आत्मा नित्य सर्वे गतः सर्वगतः स्थाणुः न चलः अचलः सनातनः अयं न व्यक्तः अव्यक्तः अयं चिन्तयितुं अर्हः चिन्त्यः न चिन्त्यः अचिन्त्यः अयं विकर्तुं अर्हः विकार्यः न विकार्यः अविकार्य अयं उच्यते ईदृश उच्यते ॥ २४ ॥ २४॥ ॥

सर्वगतः स्थाणुः इति छेदः॥ अयं जीवः नि : सर्वगतः स्थाणु अचलः सनातनः॥

सर्वगतत्वस्य जीवे अभावात् भगवत्परतया नेतव्यत्वेन तत्सहपठितानां नित्यत्वा- नामपि तथा नयनं युक्तम् ॥ नित्यत्वादिविशिष्टेश्वरप्रतिबिंब इत्यर्थः ॥ अभेदस्य बाधितत्वात् ॥ नित्यत्वस्य सर्वगतत्वस्य च ईश्वरे अनाशिन. अप्रमेयस्य इति पदा- भ्यां 'अन्तवन्त' इत्यत्र उक्तत्वेन पौनरुक्त्यं इति चेत् नित्यत्वं सर्वगतत्वे विवक्षितम्॥ 'सविशेषणे हि विधिनिषेधौ सति विशेष्ये बाधे विशेषणमुपसंक्रामत.'॥ इति न्या- यात् ॥ नित्यं यत्सर्वगतत्वं तद्विशिष्ट. इत्यर्थः ॥ बिंबभूतस्येश्वरस्य सर्वगतत्वेन बिं- बोपाधिसंनिधेः सर्वदा सत्वात् नात्मनो बिंबोपाधिसंनिधिनाशप्रयुक्तनाशः इति तत्र अप्रमेयपदेनोक्तम् ॥ यदि तदीश्वरस्य सर्वगतत्वं कालतोऽनित्यं स्यात् तर्हि बिंबोपा- धिसंनिधेर्नाशसंभवात् तन्नाशप्रयुक्तो नाश आत्मनः स्यात् इति शङ्काऽपनोदाय ईश्व- रस्य सर्वगतत्वं नित्यं इति वक्तव्यत्वादेवं व्याख्यातव्यम् ॥ स्थाणुः स्थिरस्वभावः नैमित्तिकनाशरहितः अचलः प्राकृतचलनरहितः 'अगुणः असुखः' इत्यादिवत् ॥ स्थाणुः निमित्तैरप्यन्यथाभावरहितः ॥ क्रियाऽऽवेशात्मककर्तृत्वरूपनैमित्तिकान्यथाभावस्य 'तदैक्षत' 'तदसृजत' इत्यादौ श्रवणात् स्थाणुत्वमनित्यमिति चेत् अचलः अच- लस्वभावः कदाऽप्यनपगतस्थाणुत्वादिमान् ॥ तर्हि श्रूयमाणं कर्तृत्वं मायथाऽऽरोपि- तमसत्यं इति वक्तव्यमिति चेत् अचलः कदाऽप्यनपगतकर्तृत्वादिमान् ॥ अन्य- थाभावराहित्यरूपं स्थाणुत्वं अन्यथाभावरूपं कर्तृत्वं चेत्युभयं विरुद्धं कथमीश्वरे घटते इति चेत् सनातनः नादेन शब्देन सह वर्तते इति सनातनः शब्द- प्रमाणवान् ॥ १ 'त्वयीश्वरे ब्रह्मणि नो विरुध्यते' ॥ २ 'विज्ञानशक्तिरहमास- मनन्तशक्तेः' ॥ ३ 'पराऽस्यशक्तिर्विविधैव श्रूयते' ॥ ४ 'चित्रं न चैतत् त्वयि कार्ये कारणे' इत्यादिश्रुतिस्मृतिरूपप्रमाणबलादुभयमप्यचिन्त्याद्भुतशक्तिवशादुप- पद्यते ॥ ईदृशविचित्रशक्तेरपगमे कथमुपपद्येत इति चेत् अचलः कदाऽप्यनपगत- विचित्रशक्तिमान् कुतः इदमवगम्यते इति चेत् सनातनः श्रुतिस्मृतिरूपप्रमाणबलात् कदाऽप्यनपगतविचित्रशक्तिमत्वमीश्वरस्यावगम्यते॥ अतो नानुपपत्तिः ॥ अचलसनात- नपदयोरावृत्तिः ॥ एतादृशो य ईश्वरः तत्प्रतिबिंबः ॥ किञ्च अयं जीवः अव्यक्तः चक्षु- रादिज्ञानेन्द्रियाविषयः अयं अचिन्त्यः मनसोऽविषयः अयं अविकार्यः कर्मेन्द्रिया- विषयः ॥ कुतः ईदृशत्वमवगम्यते इति चेत् उच्यते वेदशास्त्रपुराणादिभिः एतादृशः उच्यते ॥ अव्यक्तत्वादिमान् य ईश्वरः तत्प्रतिबिंबः ॥ अतः अच्छेद्यत्वादिमान् जीवः ॥

---

१. भाग० १०. ३. २. भाग. ३ ९. ३. श्वे. ६. ८. ४. भाग० ५. १८.

कुतः ईश्वरस्य छेदाद्यनर्हत्वं इति चेत् अयं ईश्वरः नित्यः सर्वगतः स्थाणुः अचलः सनातनः अव्यक्तः अचिन्त्यः अविकार्यः उच्यते ॥ अतः ईश्वरः छेदाद्यनर्हः ॥ ईदृशे श्वरप्रतिबिंबत्वाच्च जीवस्याच्छेद्यत्वादिकं इति वा ॥

नित्यसर्वगतत्वादिविशिष्टेश्वरसरूपत्वमुक्त्वा किमर्थं पुन 'रव्यक्तोऽय मित्यादिना अव्यक्तत्वादिविशिष्टेश्वरसरूपत्वमुच्यत इति चेत् बिंबभूतेश्वरधर्माणां नित्यसर्वगतत्वादीनां जीवे असंभवात् तत्प्रतिबिंबत्वं न संभवति इत्याक्षेपे अव्यक्तत्वादीनां केषां चिदीश्वरधर्माणा जीवे संभवात् तत्प्रतिबिंबत्वम् ॥ न हि प्रतिबिंबस्य बिंबगतयावद्धर्मवत्वं लोके दृश्यते ॥ अत संभवद्धर्मविवक्षया प्रतिबिंबत्वोक्तिः ॥ इति बोधनार्थं पुनरीश्वरप्रतिबिंबतोक्तिः ॥ जीवे ईश्वरप्रतिबिंबतायाः पूर्वमुक्तत्वेन पुनरत्र तदुक्त्या पौनरुक्त्यमिति चेत् नत्तच्छङ्कानिवर्तकान् बिंबभूतेश्वरगुणान् तत्रतत्र प्रदर्श्य जीवे तत्प्रतिबिंबताया उक्तेरपौनरुक्त्यम् ॥

सहेतुकमच्छेद्यत्वादेः कथनादेव नैमित्तिकविनाशसंभवशङ्काऽनुन्मेषात् 'नैन' मिति तत्प्रतिषेधो व्यर्थः इति चेत् उक्ताच्छेद्यत्वादेः, युद्धरङ्गे प्रसक्तिमतोऽप्यर्जुनीयस्य छेदादेरदर्शनात् अच्छेद्यत्वादिक युक्तं इत्युपपादनार्थं 'नैनं छिन्दन्ती'ति निषेधः ॥ तर्हि 'अच्छेद्य' इत्यादेरनन्तरं 'नैन'मिति श्लोकेन भाव्यम् इति चेत् प्रसक्तस्य वर्तमानकालिकस्य छेदादेरभावरूपं हेतुमुक्त्वा अच्छेद्यत्वादिरूपं साध्यं वक्तुं यथाश्रुत एव क्रमः कल्पित ॥ पूर्वं कदाऽप्यदृष्टस्य पश्चाद्दर्शनात् वर्तमानच्छेदाद्यभावस्य हेतुत्वं न संभवतीत्युक्तं इति चेत् तस्य निश्चययुक्तित्वासंभवेऽपि संभावनायुक्तित्वसंभवादेवं वक्तुं युक्तम् ॥

जीवस्यापि अच्छेद्यत्वादेरभ्युपगमे भगवता सर्वसाम्याऽऽपत्या अनाशिनोऽप्रमेयस्य भगवतः पूजार्थं युध्यस्वेति पूज्यपूजकभावोक्तिः अनुपपन्ना स्यात् ॥ जीवस्य स्वरूपतोऽच्छेद्यत्वादिकं ईश्वरस्य तु स्वरूपतो देहतश्च अच्छेद्यत्वादिकं इति विशेषसद्भावात् पूज्यपूजकभाव उपपद्यते इति चेत् सर्वथा विनश्यतो देहस्य विषये ईश्वराद्विशेषसत्वेऽपि कदाऽप्यनपगमिष्यत स्वरूपस्य विषये अविशेषात् पूज्यपूजकभावोऽनुपपन्न एव इति चेत् जीवेश्वरयो स्वरूपविषयेऽपि महान् विशेषोऽस्ति ॥ अतः पूज्यपूजकभावादिकमुपपद्यत एव ॥ स विशेषः क इति चेत् ॥ सर्वगतस्थाणुः इत्येकं

पदम् ॥ सर्वगते परमात्मनि तिष्ठति तदधीनतया तदाधारकतया च वर्तते इति सर्वगतस्थ स चासौ अणुश्च सर्वगतस्थाणु ॥ नित्यः इत्यस्य नित्यमित्यर्थः ॥ क्रियाविशेषणत्वेऽप्यार्षत्वात् पुंस्त्वम् ॥ नित्य इति सर्वगतस्थत्वविशिष्टस्य अणुत्वविशिष्टस्य च जीवस्य विशेषणं सविशेषणे ही ति न्यायात् सर्वगतस्थत्वाणुत्वरूपविशेषणे उपसंक्रामति ॥ नित्यं यत् सर्वगतस्थत्व अणुत्वं च तद्विशिष्ट ॥ इति वा ॥ नित्यं सर्वगतपरमात्माधीनः तदाधारकः अणुश्च जीवः ॥ परमात्मा तु सर्वगतः स्वतन्त्रः आधारभूतश्च ॥ अयमेव जीवेश्वरस्वरूपविषये विशेष ॥ जीवस्य सर्वगतस्थत्वं अणुत्वं च यदा अपगच्छति तदा अविशेषः स्यात् इति चेत् अचलः अचञ्चलस्वभावः कदाऽप्यनपगतसर्वगतस्थत्वाणुत्वस्वभावः ॥ नित्यत्वविशेषणेनैवोक्तार्थलाभात् अचल इति व्यर्थमिति चेत् सर्वगतस्थत्वाणुत्वादेः स्वाभाविकनाशाभावेऽपि वरादिप्रबलनिमित्तक नैमित्तिकनाश स्यात् इति शङ्कापरिहाराय अचल इत्युक्तम् ॥ जीवस्य ईदृशत्वं कुतोऽवसीयते इति चेत् सनातनः नादेन शब्दप्रमाणेन सहितः शब्दप्रमाणैकसमधिगम्यः ॥ जीवस्य ईदृशत्वं प्रमाणबलादवसीयते ॥ किं च जीवः सनातनः विधिनिषेधबोधकशब्दबद्ध परमात्मा तु विधिनिषेधागोचरः ॥ मुक्तौ जीवस्य विधिनिषेधागोचरत्वात् तदानीमीश्वराधीनता न स्यात् इति चेत् सनातनः मुक्तौ विधिनिषेधातीतत्वेऽपि जीवस्य भगवदधीनत्व प्रमाणबलादवगम्यते ॥ अणुत्वाज्जीवस्य व्यक्तमदर्शनेऽपि तदाधारभूतस्य ईश्वरस्य व्यक्तं दर्शनं स्यात् इति चेत् अयमीश्वरः अव्यक्त अप्रकाशः ॥ वक्ष्यते च ॥ १ 'नाहं प्रकाश सर्वस्ये'ति ॥ देहतोऽपि छेदादिरहितस्य सर्वगतस्य कथमव्यक्तत्वमिति चेत् अचिन्त्य अचिन्त्यशक्तित्वात् सदा सर्वत्र सत्त्वेऽपि अदर्शनमुपपद्यते ॥ तादृशाचिन्त्यशक्तेर्नाशे तस्य दर्शनं स्यात् इति चेत् अविकार्यः विकर्तु विकारं नेतुं अशक्य अप्रतिहताचिन्त्यानित्यशक्तिक ॥ ईश्वरस्य सर्वथा अदृश्यत्वे श्रवणमननादिवैयर्थ्याऽऽपत्त्या सर्वशास्त्रवैयर्थ्यम् ॥ अपरोक्षदर्शनपरश्रुत्यादीनां अप्रामाण्यं च स्यात् इति चेत् अव्यक्तः आत ईश्वरात् तत्प्रसादात् ॥ २ 'अ इति ब्रह्मे'ति श्रुतिः ॥ व्यक्त ॥ ३ 'यमेवैष वृणुते तेन लभ्यः तस्यैष आत्मा विवृणुते तनूं स्वां' ॥ इति श्रुतिः ॥ ४ 'अतोऽनन्तेन तथा हि लिङ्ग'मिति सूत्रम् ॥ तस्य प्रसाद:

१. ७. २५. २. ऐ आ. २. ३. ८ ७. ३ का. २. २३. ४. ३. २ २७.

कथमुत्पद्यते इति चेत् अचिन्त्यः अः ब्रह्म इति चिन्त्यः ॥ १ 'ब्रह्मदृष्टिरुत्कर्षा'दिति सूत्रम् ॥ भगवतो ब्रह्मत्वेनोपासनात्तादृशो भगवतः प्रसादो लभ्यते ॥ अव्यक्तः अचिन्त्य इत्यनयोरावृत्तिः । कुतः ईश्वरस्य ईदृशाचिन्त्याद्भुतशक्तिमत्त्वमिति चेत् उच्यते श्रुत्यादिभिरीश्वर एतादृश उच्यते ॥ तस्मादस्य विषये यदुच्यते तदखिलं युक्तम् ॥

नैनं छिन्दन्ती 'ति सार्धश्लोकद्वयं ईश्वरपरमेव ईश्वरपरतया योजनं तूक्तम् ॥ एवंसति जीवस्य नैमित्तिकनाशप्रतिषेधकाभावात् जीवविषयनैमि त्तकनाशशङ्कायाः कः परिहार इति चेत् बिंबभूतेश्वरस्य नैमित्तिकनाशप्रतिषेधे तत् तिबिंबस्य जीवस्य स्वतएव तल्लाभः ॥ तुल्यन्यायेन देहतोऽप्यच्छेद्यत्वादिकं जीवस्याऽऽपद्येत इति चेत् यो यत्प्रतिबिंबः स असति विरोधेतत्समानधर्मा ॥ देहतोऽप्यच्छेद्यत्वादेरभ्युपगमे प्रत्यक्षविरोधः ॥ अत उक्तं सर्वमुपपद्यते ॥ इति वा ॥ २४ ॥ २४॥ ॥

अ ॥ अयमात्मा नित्यः सर्वगतः स्थाणुः स्थिरस्वभावः रूपान्तरापत्तिरूपविक्रियाशून्यः अचलः क्रियारहितः अवस्थान्तरप्राप्तिर्विक्रिया अवस्थैक्येऽपि चलनमात्रं क्रिया इति भेदः ॥ पूर्वरूपापरित्यागी वा ॥ सनातनः सदैकरूपः अनादिर्वा चिरन्तनो वा॥ सना इत्यव्ययं नैरन्तर्यार्थकम् ॥ देशतः कालतो वस्तुतश्च परिच्छेदरहितो वा॥ वस्तुतः परिच्छेदाभावो नाम सर्ववस्त्वात्मकत्वं सजातीयविजातीयस्वगतभेदराहित्यं इति यावत् ॥ सना नैरन्तर्येण त्रिविधपरिच्छेदराहित्येन भवति अस्तीति सनातनः अखण्डैकरसः न कस्या अपि क्रियायाः कर्मभूतः ॥ कुत इति चेत् उत्पत्त्याप्तिविकृतिसंस्कृतिरूपकर्तृक्रियाफलयोगे हि कर्मत्वं स्यात् ॥ अनित्यो घटादिरुत्पाद्यते ॥ परिच्छिन्नो ग्रामादिः प्राप्यते ॥ रूपान्तरापत्तिरूपविक्रियावान् तक्षीरादिर्विकार्यते ॥ मलावरणेन पूर्वरूपपरित्यागी दर्पणादिः संस्कार्यते ॥ आत्मा तु नित्यत्वादनुत्पाद्यः सर्वगतत्वादप्राप्यः स्थाणुत्वादविकार्यः अचलत्वादसंस्कार्यः ॥ अतः अच्छेद्यत्वादिमान् ॥

चैत्रो दग्धः छिन्नः इत्यादिप्रयोगदर्शनात् स्यादेव च्छेदादिकमात्मनः इति चेत् अयमात्मा अव्यक्तः चक्षुरादीन्द्रियागोचरः ॥ अतः न प्रत्यक्षं तत्र प्रमाणम् ॥ प्रत्यक्षा-

१. ४ १ ५.

भावेऽप्यनुमानं तत्र प्रमाणमस्तु इति चेत् ॥ अयं अचिन्त्यः अनुमानाविषयः क्वाचि-त्प्रत्यक्षस्यैव वन्ह्यादेरन्यत्रानुमानविषयत्वं दृष्टम् ॥ अयमात्मा तु अतीन्द्रियत्वेन प्रत्यक्षाविषयत्वादनुमानाविषय. ॥ अतीन्द्रियस्यापि चक्षुरादेरिन्द्रियस्य कार्येणानु-मानविषयत्वदर्शनादस्यापि अनुमानविषयत्वं स्यात् इति चेत् अविकार्य विलक्षण-कार्याभाववान् विलक्षणकार्योपलंभे तदन्यथाऽनुपपत्त्या अतीन्द्रियत्वेऽप्यनुमानविष-यत्वं स्यात् ॥ अयं तु कार्याभाववान् अतो नानुमानविषय. ॥ अतो नानुमानं तत्र प्रमाणम् ॥ श्रुतिः प्रमाणमस्तु इति चेत् उच्यते ॥ अयं वेदादौ अच्छेद्यत्वादिमानुच्यते॥ अतो न श्रुति प्रमाणम् ॥ लौकिकशब्द प्रमाणमस्तु इति चेत् तस्य प्रत्यक्षादि-पूर्वकत्वेन प्रत्यक्षादेरभावादसिद्धि अत. सोऽपि न तत्र प्रमाणम् ॥ छेदादौ कस्यापि प्रमाणस्याभावादच्छेद्यत्वादिमानात्मा ॥ चैत्रो दग्ध इत्यादिप्रयोगस्तु भ्रान्तिमूलकः देहदाहादिपरो वा ॥ अयमात्मा अव्यक्त. चक्षुरा गोचरः अयं अचिन्त्य मनसो-ऽप्यगोचरः अयं अविकार्य. कर्मेन्द्रियागोचर आत्मतत्वज्ञै. एतादृश उच्यते इति वा ॥ 'वासांसि ' देहिनोऽस्मिन् ' इत्यत्र स्थूलशरीराभिन्नत्वमात्मन प्रतिपादित तन्नाशे ना-ऽऽत्मनो नाशः इति चोक्तम् ॥ लिङ्गशरीरशब्दितसूक्ष्मशरीरकारणशरीरयोरप्याऽऽत्म-त्वात्तन्नाशे स्यादात्मनो नाश इति चेत् अव्यक्त व्यक्त सूक्ष्मदेह तद्भिन्नः अचिन्त्य. चिन्त्य. कारणदेह तद्भिन्नः अतः अविकार्यः विकारं प्रापयितुमनर्हः इत्यादिभिरुच्य-ते॥ व्यक्तः प्रत्यक्षगम्यः स्थूलदेह तद्भिन्नोऽव्यक्त कार्येणानुमेयचक्षुरादिसमुदाया-त्मकलिङ्गदेहः चिन्त्यः तद्भिन्नोऽचिन्त्य ॥विकारं स्थूलसूक्ष्मकार्यभावनावस्थानं अर्हतीति विकार्यः त्रिगुणात्मकमूलाज्ञानरूपकारणदेहः तद्भिन्नोऽविकार्य उच्यते॥ इति वा॥ 'सर्व-गत ' इत्यनेन यो हि शस्त्रादौ न तिष्ठति तस्य शस्त्रादिना छेदादिकं स्यात् अयं तु सर्वग-तत्वेन शस्त्रादीनामन्तः स्थित्वा तेषां सत्तास्फूर्तिप्रदः अतः शस्त्रादयः एनं न स्वव्यापा-रविषयीकुर्युः इति सूच्यते ॥ 'नैन 'मिति शस्त्रादीनां छेदादिकरणसामर्थ्याभाव उक्त. ॥ 'अच्छेद्योऽय 'मिति तत्र हेतुतया छेदाद्ययोग्यत्व सहेतुकमुक्तम् ॥ 'अव्य-क्तोऽय 'मिति छेदादौ १ प्रमाणाभाव उक्तः ॥ दुर्बोधत्वादात्मतत्वस्य पुनः पुन. शङ्का-

१. नित्यत्वादयोऽष्टौ हेतवः ॥ विकर्तुं योग्याः विकार्याः अवयवा अविकार्यः निरवयवः ॥ इति केचित ॥

स्यराण्युक्राण्य तदेव भंग्यन्तरेणाभिहितं मन्दानांबुद्धिगोचरतामापद्यतेत्याशयात् क्वचिदर्थतः क्वचिच्छब्दतश्च पुनरुक्तिर्न दोषाय ॥ २४ ॥ २४॥ ॥

वि ॥ सर्वगतः परमसूक्ष्मत्वेन सर्वव्यापनस्वभावः अतः छेदाद्यभाववान् अतो नित्यः" परमसूक्ष्मत्वेन 'अविनाशितु'यत्रो करीत्या छेदाद्यनर्हत्वादात्मनो न शस्त्रादिभिर्नाश. ॥ अत एव स्थाणुः स्थिरस्वभाव अचलः यत्नेनाप्यप्रकंप्यः ॥ 'स्थाणु रिति नाशानर्हत्वमुच्यते ॥ 'अचल' इति शस्त्राद्याविषयत्व इति वा ॥ 'स्थाणु'रिति स्वाभाविकविकाराभाव उच्यते ॥ 'अचल' इति नैमित्तिकविकाराभावः इति वा ॥ अथ सनातन अनादि. ॥ छेदादिमत्वं प्रत्यक्षेण गृह्यते अतः अच्छेद्यत्वानुमानं प्रत्यक्षविरुद्धं इति चेत् अव्यक्तः चक्षुराद्यगोचरः ॥ शरीरस्य छेदादिमत्वं प्रत्यक्षेण गृह्यते ॥ अतः तस्य अच्छेद्यत्वादेरुक्तौ प्रत्यक्षविरोधः स्यात् ॥ आत्मन छेदादिमत्व न प्रत्यक्षेण गृह्यते आत्मनोऽतीन्द्रियत्वात् ॥ अतस्तस्य अच्छेद्यत्वादेरुक्तौ न प्रत्यक्षविरोध ॥ अप्रत्यक्षस्यापि कुसूलनिहितधान्यस्य अङ्कुराद्योग्यत्वसाधने प्रत्यक्षविरोधः तस्य अप्रत्यक्षत्वेऽपि अङ्कुरयोग्यप्रत्यक्षधान्यसाजात्यात् ॥ तद्वत् अप्रत्यक्षस्याप्यात्मन छेदाद्ययोग्यत्वसाधने प्रत्यक्षविरोध. स्यादेव छेदादियोग्यप्रत्यक्षवस्तुसाजात्यात् इति चेत् अचिन्त्यः अव्यक्तपदेन व्यक्तशब्दितेन्द्रियग्राह्ययावद्वस्तुविजातीयत्वोक्त्या छेदादियोग्यप्रत्यक्षसर्ववस्तुविजातीयत्वादात्मन. छेदादियोग्यप्रत्यक्षवस्तुसाजात्यात्तत्स्वभावत्वेन तदभावानुमाने प्रत्यक्षविरोध इति चिन्तयितुमनर्हः ॥ प्रत्यक्षसर्ववस्तुविजातीयत्वेन प्रत्यक्षवस्तुसाजात्यात् प्रत्यक्षविरोध इत्यपि न वक्तुं शक्यम् ॥ अत अयमात्मा अविकार्यः विकारं प्रापयितुमनर्हः ॥ तर्हि शास्त्रविरोध इति चेत् उच्यते ॥ अयमात्मा अच्छेद्यत्वादिविशिष्टः नित्यत्वादिविशिष्टश्च शास्त्रैरुच्यते ॥ अतो न तद्विरोधः ॥ २४ ॥ २४॥ ॥

अर्जुनः ॥ अस्त्वेतादृश आत्मा ततः किम् ॥ वद ॥

कृष्णः ॥ तस्मादेनं विदित्वैवं नानुशोचितमर्हसि ॥ २५ ॥

तस्मादिति ॥ तस्मात् एनं एवं विदित्वा ज्ञा.त्वा अनुशोचितुं नार्हसि ॥ २५ ॥

आत्मनः स्वभावतो निमित्ततश्च नाशाभावात् एनं आत्मानं एवं अनादिनित्यत्वादिना अशोच्य विदित्वा हन्ताऽहमेतेषां मयेमे हन्यन्ते इति शोकं कर्तुं नार्हसि ॥ एवमात्मानमविदित्वा एवमन्वशोचः विदित्वा त्वेनमात्मानं नानुशोचितुमर्हसि ॥ नार्हसीत्युक्त्या आत्मवेदिनस्ते शोको नोपपद्यते इति सूच्यते ॥ शोचसि च त्वम् ॥ अतस्त्वं मूढः त्वद्वादाश्च प्रज्ञावादाः ॥

१ अस्तु उक्तदिशा ईश्वरः स्वातन्त्र्यादिसकलकल्याणगुणरत्नाकरः ततः किं वद इति चेत् तस्मात् ईश्वरस्यैव स्वातन्त्र्यात् विहितं युद्धादिकं स्वकर्म कृतवतां उक्तगुणवत्तया त्वं ज्ञातवतां अशेषदुःखनिरसनद्वारा पुमर्थशिरोरत्नमोक्षप्रदत्वाच्च एनं ईश्वरं एवं विहितस्वकर्मानुष्ठानद्वारेण ज्ञात्वा तेन ज्ञानेन नानुशोचितु दुःखाभावेन स्थातुं अर्हसि मुक्तो भवितुमर्हसि ॥ २५ ॥

अर्जुनः ॥ आत्मनां नित्यत्वात् देहानां सर्वथा नाशाच्च तान् प्रति शोकमोहौ परित्यज्य त्वया युद्धं कर्तव्यमित्युक्तम् ॥ नित्यस्याप्यात्मनः शरीरसंयोगवियोगरूपौ जन्मनाशौ स्त एव ॥ युद्धे च शरीरवियोगरूपं मरणं नियतम् ॥ मृतानां च यावन्मोक्षं पुनर्जननं नियतम् ॥ अतो मदीयानां मम च मरणेन पश्चाज्जन्मना च दुःखं भविष्यतीति शोचामि ॥ कथं शोकमोहौ त्यक्त्वा युद्धं कर्तुं शक्यम् ॥ वद ॥

कृष्णः ॥ अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम् ॥
तथाऽपि त्वं महाबाहो नैवं शोचितुमर्हसि ॥ २६ ॥

जातस्य हि ध्रुवो मृत्युः ध्रुवं जन्म मृतस्य च ॥
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥ २७ ॥

अथेति ॥ महान्तौ बाहू यस्य सः महाबाहु हे महाबाहो अर्जुन नित्यं नियमेन जातः नित्यजातः तं च नित्यं मृतं वा च अथ मन्यसे मन्यसे यदि ॥ तथाऽपि त्वं एवं उक्तरीत्या शोचितुं नार्हसि ॥ २६ ॥

---

१. द्वै ॥ केचित् ॥

जातस्येति ॥ जातस्य मृत्युः मरणं ध्रुवः नियतः ॥ मृतस्य जन्म च ध्रुवम् ॥ हि प्रसिद्धमिदम् ॥ हि यस्मात् तस्मादिति वा ॥ तस्मात् परिहर्तुं योग्यं परिहार्यं न परिहार्यं अपरिहार्यं तस्मिन् अर्थे वस्तुनि विषये त्वं शोचितुं नार्हसि ॥ २७ ॥

एनं आत्मानं नित्यजातं नियमेन जनिमन्तं शरीरसंयोगरूपजनिमन्तमेव नित्य नियमेन मृतं वा शरीरवियोगरूपमरणवन्तमेव च॥ अथ मन्यसे यदि मन्यसे तथाऽपि १एवं शोचितुं नार्हसि ॥ महाबाहो परमधीरस्य तव एव शोचनमनुचितम् ॥ अतएव नानुशोचितुमर्हसीत्युक्तम् ॥ २६ ॥

कुतो न शोचितव्यमिति चेत् जातस्य देहस्य मृत्युः मरण ध्रुवः नियतः अवश्यं-भावी ॥ मृतस्य जन्म पुनर्जनिश्च ध्रुवम् ॥ श्रुत्यादिप्रसिद्धमिदम् ॥ जन्ममरणयोरव-श्यभावित्वात् परिहर्तुमशक्ये अवर्जनीये जननमरणनिमित्तकदुःखरूपे पदार्थे विषये महाकुलप्रसूत परमधीरश्च त्व शोचितु नार्हसि ॥ न ह्यवर्जनीये शोको युज्यते ॥ पूर्वश्लोकार्थे हेतूक्तिपरोऽयं श्लोक. ॥ २७ ॥

यान् प्रत्यहमनुशोचामि तेषामशोच्यत्वं सयुक्तिकमुक्त्वा तान् प्रति न त्वया शोकः कार्यः इति कृष्ण त्वया सम्यगभिहितम् ॥ अथापि न तदखिलं शोकातंककलं-किते मम मानसे श्रयते ॥ उक्तं हि मया ॥ ‘ कार्पण्यदोषोपहतस्वभाव पृच्छामि त्वां धर्मसंमूढचेताः’ ॥ इति ॥ सतिचैवं किं करोमि का वा मे गतिः ॥ वद ॥ इति चेत् अथेति पक्षान्तरतासूचनाय ॥ तिष्ठतु तावदयं विस्तरः ॥ पक्षान्तरमेव ब्रवीमि ॥ तथाऽपि उक्तयुक्तीनां त्वदीयमनःसंश्रयणाभावेऽपि एनं नित्यजातं च नित्यं मृतं च त्वं मन्यसे ॥ तेन त्वमेवं शोचितुं नार्हसि ॥ जन्ममरणे नियततया अवर्जनीये इति त्वयैव ज्ञातत्वात् तावन्मात्रज्ञानेनैव त्वया शोको न कार्यः ॥ न ह्यवर्जनीयत्वेन ज्ञाते विवेकिनां शोको दृष्टः ॥ २६ ॥

जातस्येत्यादि पूर्ववत् ॥ जन्ममरणयोरवर्जनीयताज्ञानरूपहेतोः पूर्वश्लोक एवो क्तत्वात् पूर्वश्लोक्तयो हेतुसाध्ययोरेव दाढर्यार्थमनुवादपरोऽयं श्लोकः ॥ २७ ॥

---

१. एनमिति पाठान्तरम् ॥ एनं प्रतीत्यर्थः ॥ २. २. ७.

अ ॥ अर्जुनः ॥ आत्मनो नित्यत्वान्न शोकः कार्य इत्यभिहितम् ॥ आत्मयाथात्म्यज्ञानं परमात्मप्रसादैकलभ्यम् । न तदुदेति मम ॥ अहं तु आत्मा तत्तद्देहेन सह जायते ॥ तत्तद्देहेन सह नश्यतीति जीवानित्यत्वपक्ष एव युक्त इति मन्ये ॥ जीवस्यानित्यत्वात्तन्नाशशङ्कया शोचामि ॥ कथमेवं सति युद्धमङ्गीकुर्याम् ॥ वद ॥

कृष्णः ॥ अथेति पक्षान्तरतासूचकम् ॥ चशब्दोऽप्यर्थे ॥ दुर्बोधत्वादात्मयाथात्म्यस्य मदुक्तमनङ्गीकृत्य यदि जीवानित्यत्वपक्षमवलंबसे तत्राप्युच्यते इति वा ॥ एनं नित्यजातं तत्तच्छरीरोत्पत्तौ नियमेन जनिमन्त च नित्य मृतं च तत्तच्छरीरनाशे नियमेन नाशवन्त च १ मन्यसे ॥ तथाऽपि एवं शोचितुं नार्हसि ॥ महाबाहुरपि पराक्रमसीमाऽपि त्व दुर्मताभ्युपगमात् ईदृशोऽसि संवृत्तः इति साभिप्रायसोपहाससानुकम्पसंबोधनेन तवेदमनुचितमिति सूच्यते ॥ २६ ॥

कुत इति चेत् जातस्य देहेन सह जातस्य मृत्यु ध्रुवः अपरिहार्यः ॥ देहेन सह मृतस्य पुनर्जन्म च अपरिहार्यम् ॥ देहारंभककर्मक्षये देहेन सह नाशस्य कृतेन देहारंभकेण कर्मणा पुनरुत्पत्तेश्च २ न्याय्यत्वात् ॥ श्रुत्यादिप्रसिद्धमिदम् ॥ तस्मात् जन्ममरणयोः मरणजन्मनोश्च अहोरात्रयोरिव शुक्लपक्षकृष्णपक्षयोरिव च अवर्जनीयत्वात् परिहर्तुमशक्ये तस्मिन् जन्ममरणलक्षणेऽर्थे विवेकी त्वं न शोचितुमर्हसि॥२७॥

आत्मा ज्ञानस्वरूप प्रतिक्षणविनाशीति बौद्धाः ॥ देह एवाऽऽत्मा स च जायते नश्यति प्रतिक्षणं विपरिणमते च इति चार्वाकाः ॥ देहातिरिक्तोऽप्यनित्य आत्मा देहेन सह जायते देहेन सह नश्यति इत्यन्ये ॥ सृष्ट्यादिकाल एव आकाशवज्जायते आप्रलयं शरीरभेदेऽप्यनुवर्तते नश्यति च प्रलय इत्यपरे ॥ नित्य एवाऽऽत्मा स च देहसंयोगेन जायत इत्युच्यते ॥ देहवियोगेन म्रियते इत्युच्यते ॥ तौ च देहसंयोगवियोगरूपजन्मनाशौ कर्मनिमित्तकत्वात् कर्माधारस्यात्मन एव मख्यौ ॥ देहस्य कृतहानाकृताभ्यागमप्रसङ्गेन कर्माधारत्वाभावादमुख्यौ इति तार्किकाः ॥ नित्य

---

१. मन्यसे इति काकुः ॥ परमास्तिकस्त्व न मन्यस एव ॥ यदि कदाचित् लोकवासनया मन्यसे तथाऽपि इति केचित् ॥ २ देहेन सह आत्मनो नाशादिद चिन्त्यम् ॥ देहस्यैव प्रकारान्तरेणोत्पत्तिर्वा विवक्षणीया ॥

एवाऽऽत्मा तस्य आकाशस्येव कर्णशष्कुलीजन्मना देहजन्मना जन्म तन्नाशेन च नाशः इति औपाधिकतया जन्मनाशावमुख्यौ ॥ देहस्य तौ मुख्यौ इत्यन्ये ॥ इति षड् पक्षाः ॥ तत्र प्रथमद्वितीयतृतीयपक्षेषु शोको न कार्यः ॥ प्रथमपक्षे नित्यं प्रतिक्षणं जातं नित्यं प्रतिक्षणं मृतं इत्यर्थः ॥ द्वितीयपक्षे नित्यं नियमेन जातं नित्यं नियमेन मृतं इति प्रतिक्षणे विपरिणामाङ्गीकारात् नित्यं प्रतिक्षणं जनिमन्तं नित्यं प्रतिक्षणं मृतिमन्तं इति चार्थः ॥ पूर्वावस्थापरित्यागोत्तरावस्थास्वीकारयोः सत्वात् ॥ तृतीयपक्षे नित्यं प्रतिशरीरोत्पत्ति जातं नित्यं प्रतिशरीरनाशं मृतं इत्यर्थः ॥ तत्र प्रथमपक्षे प्रतिक्षणमात्मनोऽन्यत्वेन बन्धुविनाशजनितदुःखस्य पारत्रिकदुःखस्य चाभावेन दृष्टादृष्टोभयविधदुःखनिमित्तकशोकप्रतिषेधः ॥ द्वितीयतृतीयपक्षयोः दृष्टदुःखनिमित्तकशोकसंभवेऽपि शरीरनाशोत्तरमात्मनोऽभावेन पापहेतुकपारत्रिकदुःखानुभवमयनिमित्तकशोको न कार्यं इत्यदृष्टदुःखनिमित्तकशोकप्रतिषेधः ॥ अत एव एवं शोचितुमित्युक्तम् ॥ आत्मनो नित्यत्वपक्षे यथा ऐहिकस्य पारत्रिकस्य च दुःखस्य संभवं मत्वा उभयथा शोचसि तथा शोचितुं नार्हसि ॥ प्रथमपक्षे उभयविधदुःखप्रसक्तेरभावात् द्वितीयतृतीयपक्षयोः पारत्रिकदुःखप्रसक्तेरभावात् ॥ इति तदर्थः ॥ अतो मदीयनित्यत्वपक्षापेक्षया त्वदीयानित्यत्वपक्षा एत एव त्वां युद्धे प्रवर्तयितुमनुकूलाः ॥ २६ ॥

चतुर्थपञ्चमषष्ठपक्षेषु नित्यं नियमेन जातं नित्यं नियमेन मृतं इत्यर्थः ॥ शरीरनाशानन्तरं आत्मनो विद्यमानत्वेऽपि शोको न कार्यः ॥ कुत इति चेत् जातस्य कर्मवशाल्लब्धशरीरसंयोगरूपजन्मनः स्वरूपतो नित्यस्याप्यात्मनः मृत्युः शरीरवियोगरूपं मरणं ध्रुवः नियतः अवश्यंभावी ॥ शरीरारंभककर्मक्षये शरीरक्षयस्य न्याय्यत्वात् ॥ मृतस्य लब्धशरीरवियोगरूपमरणस्य पुनर्जन्म च ध्रुवम् ॥ कृतशरीरान्तरारंभककर्मणः तेन पुनः शरीरसंयोगस्य न्याय्यत्वात् ॥ जीवन्मुक्तावस्थामापन्नस्य न पुनर्जन्म अतः कथमुच्यते 'ध्रुवं जन्म मृतस्य चे'ति इति चेत् कर्मशेषवतो जीवस्यैव प्रकृते विवक्षणात् जीवन्मुक्तो मृतस्येत्यनेन न गृह्यते ॥ तस्मात् जन्ममरणयोरवश्यंभावित्वात् अपरिहार्ये तस्मिन्नर्थे न शोचितुमर्हसि ॥ त्वयि युद्धादुपरते यद्येते भीष्मादयो न म्रियेरन् म्रियेरंश्च युद्धे तर्हि शोकः कर्तुमुचितः ॥ न तथा मरिष्यन्त्येव नियतं ते ॥ वक्ष्यते च ॥ १ 'ऋतेऽपि त्वा न भविष्यन्ति सर्वे' इति ॥ तत्परिहारासमर्थस्य

१. ११. ३२.

तथ अवश्यंभाविनि तस्मिन् जननमरणरूपार्थे शोको न कर्तुमुचितः ॥ शोके प्रयोजनाभावात् इति चतुर्थादिषु त्रिषु पक्षेषु दृष्टदुःखनिमित्तकशोकप्रतिषेधः ॥ तस्मात् देहनाशेऽप्यात्मनोऽनाशात् अर्थे युद्धाख्ये विहितकर्मणि अपरिहार्ये विहितत्वात् विहितपरित्यागे प्रत्यवायप्रसङ्गाच्च परिहर्तुमशक्ये सति त्वं शोचितुं अदृष्टदुःखनिमित्तकं शोकं कर्तुं नार्हसि ॥ युद्धं हि क्षत्रियस्य विहितं कर्म तच्च हिंसारूपमपि यागीयपशुहिंसावत् न प्रत्यवायजनकम् ॥ प्रत्युत पारत्रिकसुखजनकं च ॥ अतः शरीरनाशेऽप्यात्मनोऽनाशात् तस्य पारत्रिकसुखलाभार्थं विहितकर्मणः कर्तव्यत्वेनापरिहार्यत्वात् तेन पारत्रिकदुःखसंभावनानिमित्तकः शोको न कार्यः इति तेषु पक्षेषु अदृष्टदुःखनिमित्तकशोकस्य प्रतिषेधः ॥ वक्ष्यते च ॥ १ 'स्वधर्ममपि चावेक्ष्य' २ 'स्वर्गद्वारमपावृतं' ३ 'नियतं कुरु कर्म त्वं' ४ 'तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर'॥ ५ 'तस्मादसक्तः सततं कार्यं कर्म समाचर' इत्यादि॥ युद्धाख्यं कर्म काम्यम् ॥ वक्ष्यते च ॥ ६ 'हतो वा प्राप्स्यसे स्वर्गं जित्वा वा भोक्ष्यसे महीम्'॥ इति॥ तत्तु परिहार्यम् ॥ वक्ष्यते च ॥ ७ 'दूरेण ह्यवरं कर्मे'ति ॥ सति चैवं अपरिहार्यत्ववचनं कथमिति चेत् काम्यमपि आरब्धस्य परिसमापनीयत्वेन नित्यवदपरिहार्यम् ॥ आरब्धत्वात् ॥ इदं चाभ्युपेत्य ॥ वस्तुतो युद्धमकाम्यमेव प्रकृते विवक्षितम् ॥ वक्ष्यते च ॥ ८ 'सुखदुःखे समे कृत्वे'ति ॥ २७ ॥

परमास्तिकशिरोमणेस्तव वेदबाह्यमतावलंबनमनुचितम् ॥ अतः आत्मनित्यत्वपक्ष एव त्वयाऽभ्युपेयः ॥ तत्र त्वयोक्ताभिर्मयाऽङ्गीकृताभिरेताभिर्युक्ताभिर्युक्तिभिः आत्मनो नित्यत्वेऽपि तस्य शरीरसंयोगवियोगरूपजन्मनाशयोरवश्यंभावित्वात् युद्धे च शरीरनाशस्य नियतत्वात् अनुशोचामीति चेत् ॥ नित्यजातं नित्यश्चासौ जातश्च तं नित्यं शरीरसंयोगरूपजन्मवन्तं च नित्यं मृतं च नित्यमितिपुल्लिङ्गं द्वितीयान्तम् ॥ नित्यं शरीरवियोगरूपमरणवन्तं च अथ मन्यसे मन्यसे यदि तथाऽपि त्वं एवं शोचितुं नार्हसि ॥ २६ ॥

कुत इति चेत् जातस्य मृत्युः ध्रुवः इत्यादि पूर्ववत् ॥ 'नैवं शोचितुमर्हसि'

१ २. ३१. २. २. ३२. ३. ३. ८. ४. ३. ९. ५. ३. १९. ६. २. ३७. ७. २. ४९.
८. २. ३८.

'न त्वं शोचितुमर्हसि' इति अव्यवधानेन द्विरुक्त्या शोकस्य सर्वथा अकर्तव्यत्व सूच्यते ॥ २७ ॥

वि ॥ अर्जुनः ॥ देहात्मनोर्भेदं आत्मनो नित्यत्वं चोक्त्वा शोको न कार्य इत्युक्तम् ॥ स देहात्मभेदवादो न मे बुद्धिमारोहति ॥ अतो देहात्मवाद एवाभिनिवेशो मम ॥ देहस्यैवाऽऽत्मत्वात् तस्य चानित्यत्वात् तन्नाशशङ्कया शोचामि ॥ अतः कथं युध्येय ॥ वद ॥

कृष्ण. ॥ देहात्मवादेऽपि शोको न कार्यः ॥ अथेति पक्षान्तरारंभसूचनार्थः ॥ मन्यसे किं इति प्रश्नार्थो वा ॥ एव मन्यसे चेत् तथैवास्तु तत्रापि ब्रूमः ॥ इत्यभ्युपगमार्थो वा॥ नित्यजातं नित्यं मृतं च वाशब्दश्चशब्दार्थे ॥ नियमेनोत्पत्तिमन्तं नाशवन्तं च देहमेव, चशब्द एवार्थे ॥ एनं आत्मानं मन्यसे। तथाऽपि त्वं एवं शोचितुं नार्हसि ॥ एवमतिमात्रं शोककरणमनुचितमिति सूचयितुमेवशब्द. ॥ देहातिरिक्तनित्यात्माभ्युपगमे शोकप्रसक्तिरेव नास्ति ॥ देहात्मवादाभ्युपगमे देहनाशशङ्कया शोकप्रसक्तावपि सर्वथा न शिष्यतो नाशस्य परिहर्तुमशक्यत्वात् अतिमात्रं न शोचितव्यम् ॥ देहातिरिक्तनित्यात्माभ्युपगमे पारत्रिकदुःखभिया अतिमात्रशोको युज्यते ॥ देहात्मवादाभ्युपगमे तस्य नाशनैयत्येन पारत्रिकदुःखप्रसक्तेरभावादतिमात्रं सन्तोष्टव्ये अतिमात्रं शोको न युक्तः ॥ महाबाहोर्धीरस्य तव स्वपरमरणनिमित्तकशोको न युज्यते ॥ २६ ॥

तत्र को हेतुरिति चेत् नित्यजातनित्यमृतपदाभ्यां सूचित एव हेतुरुपपाद्यते ॥ अवधारय ॥ जातस्य मृत्युः नाशः ध्रुवः मृतस्य नाशं प्राप्तस्य जन्म पुनरुत्पत्तिश्च ध्रुवं प्रमाणप्रसिद्धमिदम् ॥ हि यस्मादेवं तस्मादिति हेत्वर्थको वा हिशब्दः ॥ तस्मात् परिणामिनो द्रव्यस्य उत्पत्तिविनाशाख्यपरिणामपरंपराया अपरिहार्यत्वात् अपरिहार्ये तस्मिन्नर्थे उत्पत्तिविनाशाख्यपरिणामपरंपरारूपे वस्तुनि विषये त्वं न शोचितुमर्हसि॥ न ह्यवर्जनीये शोको युक्त· ॥ नाशं प्राप्तस्य पुनरुत्पत्तिरिति कथम् ॥ लोके हि प्रागविद्यमानस्यैव घटादेरुत्पत्तिर्दृश्यते ॥ न तु उत्पद्य विनष्टस्य ॥ लोके अदृष्टमपि मृतस्य जन्म वचनादस्मादभ्युपगन्तव्यं इति चेत् हि शब्देन लोकप्रसिद्धमिदमिति च बोधनात्तथा वक्तु न शक्यम ॥ मृतस्य पुनर्जन्माभ्युपगमे सर्वथा निवर्तयितव्यानां महता प्रयासेन निवर्तितानां संसारदु·खानां रोगाणां शत्रूणां च पुनरुत्पत्त्यापत्त्या तन्निवर्तनप्रयासवैयर्थ्यं स्यात् ॥ तन्निवर्तनपरशास्त्राणां च वैयर्थ्यं स्यात् ॥ मृतस्य पुत्रादेः

पुनरुत्पत्तिनैयत्येन पुत्रमरणादौ रोदनादिकमनुपपन्नं स्यात् ॥ अतोऽनुपपन्नमिदम् ॥ इति चेत् उत्पत्तिविनाशादयः सतो द्रव्यस्यावस्थाविशेषाः ॥ यथा सत एव मृद्रूपद्रव्यस्य मृत्पिण्डत्वकपालत्वघटत्वकपालत्वचूर्णत्वादयोऽवस्थाविशेषा एव उत्पत्तिविनाशादयः तथा ॥ पूर्वावस्थस्य उत्तरावस्थाप्राप्तिर्विनाशः सैव उत्तरावस्थस्य तस्योत्पत्तिः ॥ पूर्वपूर्वावस्थस्य उत्तरोत्तरावस्थाप्राप्तिर्विनाशः सैव उत्तरोत्तरावस्थस्य तस्योत्पत्तिः ॥ मृत्पिण्डत्वाद्यवस्थस्य कपालत्वाद्यवस्थाप्राप्तिर्विनाशः कपालत्वाद्यवस्थस्योत्पत्तिः ॥ एवं नाशावस्थां प्राप्तस्य उत्पत्त्यवस्थाप्राप्त्या मृतस्य पुनर्जन्मेति युक्तम् ॥ उत्पत्त्यवस्थां प्राप्तस्य पूर्वावस्थाप्राप्तिरूपोत्पत्तिं प्राप्तस्य उत्तरावस्थाप्राप्तिरूपविनाशप्राप्त्या जातस्य मृत्युर्ध्रुव इति युक्तम् ॥ नष्टस्य घटादेः पुनरुत्पत्त्यदर्शनात्कथमिदमिति चेत् यदवस्थस्य नाशः तदवस्थस्यैवोत्पत्तिर्नोच्यते ॥ किंतु अवस्थान्तरविशिष्टस्य तस्य ॥ अतो न दोषः॥ सांसारिकदुःखानां रोगाणां च नष्टानां पुनः नोत्पत्तिः परिणामिद्रव्यत्वाभावात् ॥ शत्रुदेहानां अवस्थान्तरवैशिष्ट्येन पुनरुत्पत्तावपि यदवस्थया शत्रुत्वं तदवस्थानाशादनिष्टनिवृत्तिरप्रतिहता ॥ पुत्रादिशरीराणां अवस्थान्तरवैशिष्ट्येन पुनरुत्पत्तावपि यदवस्थावैशिष्ट्येन पुत्रादित्वं तदवस्थानाशादिष्टनिवृत्तिरप्रतिहता ॥ अतो रोदनाद्युपपत्तिः ॥ इत्यादिकमूह्यम ॥ उत्पत्तेः नाशत्वे नाशस्यचोत्पत्तित्वे उत्पत्तौ नाशव्यवहारः नाशे उत्पत्तिव्यवहारश्च स्यादिति चेत् अर्थक्रियाकारित्वे उत्पत्तिव्यवहारः तदभावे नाशव्यवहार इति व्यवस्था क्रियते ॥ अतो नानुपपत्तिः ॥ 'जातस्य हि ध्रुवो मृत्युः तस्मान्न शोचितुमर्हसी'ति मृत्युनैयत्यमेव, शोकाकरणे हेतुत्वेन वाच्यम् ॥ मृत्युरेव हि शोकनिमित्तम् ॥ मरणशङ्कया ह्यहं शोचामि ॥ न पुनरुत्पत्तिशङ्कया ॥ अतः 'ध्रुवं जन्म मृतस्य चे'ति पुनरुत्पत्तिनैयत्यप्रतिपादनमनावश्यकं इति चेत् उक्तविधया अवस्थाभेदेन उत्पत्तिरेव विनाशः विनाश एवोत्पत्तिः इति पुनरुत्पत्तिप्रतिपादनमपि नाशनैयत्यप्रतिपादनमेव ॥ अतो न दोषः ॥ यस्य शोकनिमित्तत्वं तस्यैव नैयत्यप्रतिपादनेन शोकस्याकरणीयत्व प्रतिपादनीयमित्याशये एवम्॥ न केवलं शोकनिमित्तस्य नाशस्य नैयत्येनैव शोकस्याकरणीयत्वम् ॥ किंतु नष्टस्य तस्यैव अवस्थान्तरवैशिष्ट्येन पुनरुत्पत्तिनैयत्येनापि इत्याशये 'ध्रुवं जन्म मृतस्य चे'त्य स्यानावश्यकताशङ्कैव नास्ति ॥ अतः सर्वमिदमवधार्य न शोचितुमर्हसि ॥ २७ ॥

अर्जुनः ॥ न शोचितुमर्हसि इत्यसकृदुच्यते ॥ कथं मदीयानां मम च शरीरनाशहेतौ युद्धे प्रत्युपस्थिते नाशशङ्कया शोकमकृत्वा स्थातुं शक्यम् ॥ वद ॥

कृष्णः ॥ अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ॥
अव्यक्तनिधनान्येव तत्र का परिदेवना ॥ २८ ॥

अव्यक्तेति ॥ हे भारत अर्जुन भूतानि अव्यक्तं प्रधानं आदिः येषां तानि अव्यक्तादीनि व्यक्तं मध्ये मध्यावस्था येषां तानि व्यक्तमध्यानि अव्यक्ते प्रधाने निधनं लयो येषां तानि अव्यक्तनिधनान्येव तत्र परिदेवना विलापः का ॥ २८ ॥

जन्ममरणस्वरूपमविदन् शोचसि ॥ वेदने तु तस्य न शोचेः ॥ अतस्तत्स्वरूपं शृणु ॥ भूतानि शरीराणि अव्यक्तं जडप्रकृतिः आदिः उत्पत्तिकारणं उत्पत्तेः पूर्वरूपं वा येषां तानि जडप्रकृतेः परिणामभूतानीति यावत् ॥ अवयवसंस्थानसंनिवेशविशेषवैशिष्ट्येन व्यक्ततया अवस्थानं मध्यं मध्यमावस्था येषां तानि ॥ अव्यक्ते निधनं लयो येषां तानि तादृशान्येव ॥ प्रकृतावेव लीनानीति यावत् ॥ प्रकृतिरेव शरीरतामापद्य कञ्चित्कालं स्थित्वा पुनः प्रकृतिरूपेणावतिष्ठते ॥ तत्र एवं सति तादृशेषु शरीरेषु विषये का परिदेवना कः शोकनिमित्तकविलापः ॥ परिवेदनेति पाठे कः शोकः ॥ शोकस्य विलापस्य वा प्रसक्तिर्नेति यावत् ॥

भूतानि जीवाः जडप्रकृतिः देहकारणं येषां तानि जडप्रकृतिकार्यदेहवन्तः ॥ जडप्रकृतिकार्यदृग्गोचरदेहवत्तयाऽवस्थानं मध्यकाले येषां तानि ॥ जडप्रकृतावेव देहलयो येषां तानि ॥ जीवाः जडप्रकृतिकार्यदेहसंयोगरूपं जन्म प्राप्य तेन देहेन जनदृग्गोचरतया सुखदुःखादिकमनुभवन्तः स्थित्वा देहवियोगरूपमरणं प्राप्नुवन्ति ॥ तादृशेषु जीवेषु का परिदेवना इति वा ॥

भूतानि जीवाः अव्यक्तं प्रकृतिरूपं लिङ्गशरीरं आदिः पूर्वशरीरं येषां तानि व्यक्तं जनदृग्गोचरं स्थूलशरीरं मध्यं मध्यकालिकं येषां तानि प्रकृतिरूपलिङ्गशरीरं निधनं अन्तिमशरीरं येषां तानि ॥ कारणभूतलिङ्गशरीर एव निधनं कार्यदेहलयो येषां तानि॥ इति वा ॥ लिङ्गशरीरेण स्थित्वा तदनुगुणं स्थूलशरीरमापद्य कञ्चित्कालं स्थित्वा पुनर्लिङ्गशरीरेणावतिष्ठन्ते ॥ तेषु जीवेषु परिदेवना का ॥

भूतानि जीवाः अव्यक्तं अव्यक्तत्वं १ अदर्शन आदौ येषां तानि॥ व्यक्तं व्यक्तत्वं दर्शनं मध्ये येषां तानि अव्यक्तं अव्यक्तत्व अदर्शनं निधने अन्ते येषां तानि ॥ तादृशेषु जीवेषु का परिदेवना ॥

जीवास्तावदादौ लिङ्गशरीरविशिष्टाः स्थूलदृग्गोचरा एव स्थित्वा ततः कर्मवशेन प्रकृतिकार्यस्थूलदेहभाजो भूत्वा सुखदुःखान्यनुभूय तदारंभककर्मक्षये तद्देहप्रहाणेन पुनः पूर्ववदेव भवन्ति ॥ इदं च यावन्मोक्षं तेषां नियतम् ॥ अतो जीवविषये न शोकः कार्यः ॥

पूर्वश्लोकवदयमपि श्लोकः जन्मनाशनैयत्यरूपहेतुतद्धेतुकशोकाभावरूपसाध्ययोरनुवादपरः ॥ श्लोकद्वयेन तदनुवादस्तु जन्मनाशनैयत्यादस्वातन्त्र्यं जीवस्य ॥ जीवस्य देहसंयोगवियोगरूपजन्ममरणनैयत्यात्तद्विषये यथा शोको न कार्यः तथा तत्र स्वातन्त्र्यबुद्धिरपि न कार्या इति प्रागुक्तजीवास्वातन्त्र्यस्थिरीकरणार्थः ॥

भूतानि शरीराणि आदौ अव्यक्तानि अनुपलब्धानि मध्ये व्यक्तानि उपलब्धानि निधने अन्ते अव्यक्तानि अनुपलब्धानि ॥ तेषु शरीरेषु का परिदेवना ॥

भूतानि शरीराणि अव्यक्ता अनुपलभ्यमाना आदिः उत्पत्तेः पूर्वावस्था येषां तानि ॥ व्यक्ता उपलभ्यमाना मध्या मनुष्यत्वादिरूपमध्यमावस्था येषां तानि ॥ अव्यक्तं अनुपलभ्यमानं निधनं मृतेरुत्तरावस्था येषां तानि ॥ तेषु शरीरेषु का परिदेवना ॥

२ भूतानि शरीराणि अव्यक्तं अव्यक्तत्वं अदर्शनं आदिः उत्पत्तेः पूर्वावस्था येषां तानि ॥ व्यक्तं व्यक्तत्वं दर्शनं उत्पत्तेरूर्ध्वं मृतेश्च पूर्वं भवं मध्यं व्यावहारिकसत्वलक्षणा मध्यमावस्था येषां तानि ॥ अव्यक्तं अव्यक्तत्व अदर्शनं निधनं मृतेरुत्तरावस्था येषां तानि ॥ तेषु शरीरेषु का परिदेवना ॥

---

१ अत्र, अदर्शनादिहायातः पुनश्चादर्शनं गतः ॥ नासौ तव न तस्य त्वं वृथा किमनुशोचसि ' ॥ इति भारतस्त्रीपर्व (२ १३.) वचनमनुसन्धेयम् ॥ २ एतदादि यावच्छ्लोकव्याख्यासमाप्ति अद्वैतिनां व्याख्यानुरोधेन ॥

भूतानि शरीराणि तद्धेतुभूतानि महाभूतानि वा अव्यक्तं प्रधानं जडप्रकृतिः पूर्वरूपं येषां तानि ॥ व्यक्त नामरूपाभ्यां स्पष्टं मध्यं जन्ममरणान्तरालस्थित्यवस्था येषां तानि ॥ अव्यक्ते प्रधाने निधनं लयो येषां तानि ॥ तेषु शरीरेषु का परिदेवना ॥

भूतानि शरीराणि अव्यक्तं माया तस्मात् जन्म शुक्तिरजतस्येव येषां तानि मायाकल्पितानि ॥ व्यक्तं सत्वेन भानं मध्यं तस्येव येषां तानि॥ देवमनुष्यातिर्यगादिभेदेन लब्धस्वरूपाणि ॥ अव्यक्ते मायायामेव निधन तस्येव लयो येषां तानि ॥ तेषु १ स्वाप्नेन्द्रजालगजतुरगादिवदहष्टदृष्टनष्टस्वरूपेषु शरीरेषु का परिदेवना ॥

भूतानि सर्वाणि ब्रह्मव्यतिरिक्तानि चेतनाचेतनात्मकानि वस्तूनि अव्यक्ते प्रमाणैः व्यक्तीकर्तुमशक्यं अधिष्ठानभूते परब्रह्मणि तदज्ञानात् शुक्तौ तदज्ञानाद्रजतस्येव आदिः जन्म येषां तानि ॥ व्यक्तं सर्वपदार्थव्यञ्जकं यावदधिष्ठानदर्शनं सत्तास्फूर्त्यादिसर्वकार्यनिर्वाहकं २ अन्तःकरणं मध्ये स्थितिकाले येषां तानि ॥ अव्यक्ते तस्मिन्नेव अधिष्ठानभूते ब्रह्मणि निधनं नाशो येषां तानि ॥ तादृशेषु शरीरेषु महाभूतेषु वा चेतनाचेतनात्मकेषु ब्रह्मेतरसर्ववस्तुषु वा का परिदेवना ॥ आदावन्ते च यानि न सन्ति तानि मध्ये सन्त्यपि ३ न सन्त्येव॥ अत एवोक्तं मया॥ 'नासतो विद्यते भाव' इति ॥ तादृशेषु यावदधिष्ठानभूतब्रह्मदर्शनं नाशेऽप्यव्यक्तरूपेणविद्यमानेषु सति ब्रह्मदर्शने सर्वात्मना नशिष्यत्सु स्वाप्नैन्द्रजालशुक्तिरजतरज्जुसर्पमरीचिकाजलादिवत् मिथ्याभूतेषु भूतेषु जन्ममरणनिमित्तकः शोको न कार्यः ॥ शुद्धवंशोद्भवत्वात् शास्त्रतत्वमर्मविमर्शार्होऽसि ॥ अतो न शोचितुमर्हसीत्यादि यदुक्त तद्युक्तमेव ॥

भूतानामेषस्वभावः स्वभावस्त्वपरिहार्यः अतः स्वभावविषये न शोको युक्तः॥

१. अत्र 'यथा स्वप्नप्रपञ्चोऽयं मयि मायाविजृंभितः ॥ तथा जाग्रत्प्रपञ्चोऽयं मयि मायाविजृंभितः' इति ॥ २. 'अत्र मनोवृत्तिमयं द्वैतं अद्वैतं परमार्थतः' ॥ इति ३ अत्र, 'आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा' ॥ इति वचनं चानुसन्धेयम् ॥

वस्तुस्वभाव एव शोकनिमित्तमिति चेत् नियतविचित्रानन्तभेदभिन्नस्वभाववस्तुसन्तते जगति सर्वस्य सर्वदाऽपि दुःखजलनिधावेव मज्जनं स्यात् ॥ सुखहेतुविच्छेदाच्छोक इति चेत् द्विषतां तत्संबन्धिनां भैक्षचर्यादेश्च सुखहेतुत्वं नास्ति ॥ प्रत्युत दुःखहेतुत्वमेवास्ति ॥ शत्रुतदीयनाशस्य सार्वभौमपदलाभादेश्च सुखहेतुत्वमेवास्ति ॥ स्वशरीरनाशाच्छोक इति चेत् महाबाहो भारतस्य महामहिमवतो भवतो न शरीरनाशभिया शोको युक्तः ॥ बन्धुनाशनिश्चयेन शोक इति चेत् संरक्षणीयबन्धुजनसंरक्षणसंभवेन हर्षोदयाच्छोकः परिहर्तव्यः ॥ बन्धुवधपातकीति लोकापवादभिया शोकः इति चेत् युद्धादुपरमे भयादयं रणादुपरत इति परमासह्यदुःखजनकलोकापवादमहार्णवे मग्नः स्याः ॥ वक्ष्यते च ॥ १'भयाद्रणादुपरतं मंस्यन्ते त्वा' मिति ॥ अखिलमेतदेवमेव ॥ तथाऽप्ययं शोको दुष्परिहर इति चेत् अपरिहार्ये शोको न युक्त इति विवेकेन सुखदुःखादिमूलभूताभिमानत्यागेन च शोकस्सुपरिहर एव ॥ अतो न शोचितुमर्हसीत्युक्तं युक्तम् ॥ २८ ॥

अर्जुनः ॥ आत्मनो नित्यत्वादियाथात्म्यं यथावदसकृदभिहितं त्वया ॥ न तन्मम बुद्धावारोहति ॥ सति चैवं कथमहं शोकमकृत्वा स्थातुं शक्नोमि ॥ वद ॥

कृष्णः ॥ आश्चर्यवत्पश्यति कश्चिदेनं आश्चर्यवद्वदति तथैव चान्यः ॥
आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाऽप्येनं वेद न चैव कश्चित्॥

आश्चर्यवदिति ॥ एनं आत्मानं कश्चित् पश्यति जानाति ॥ सः आश्चर्यवत् ॥ आश्चर्य एव ॥ तथा एनं अन्यः वदति स च आश्चर्यवदेव ॥ एनं अन्यः शृणोति स च आश्चर्यवत् ॥ कश्चित् एनं श्रुत्वाऽपि नैव वेद च ॥ २९ ॥

यः कश्चित् एनं जीवं पश्यति जानाति सः ज्ञाता आश्चर्यवत् आश्चर्य एव दुर्लभ एव॥ दुर्लभं ह्याश्चर्यमुच्यते॥ तथा अन्यः कश्चित् एनं जीवं वदति सोऽपि आश्चर्यवत् दुर्लभ एव ॥ अन्यः कश्चित् एनं जीवं शृणोति स च आश्चर्यवत् दुर्लभ एव ॥ आत्मनो द्रष्टा वक्ता श्रोता च दुर्लभः ॥ अहं स इति सर्वेषां स्वपरदर्शनवचनश्रवणसत्वात् कथमिदमिति चेत् चशब्दोऽप्यर्थे ॥ कश्चिच्च कश्चिदपि एनं जीवं श्रुत्वा उक्त्वा दृष्ट्वाऽपि

१. २. ३५.

नैव वेद ॥ सम्यक् न जानात्येव॥ एवमात्मतत्त्वयाथात्म्यज्ञानस्य परमगहनत्वात् क्रमेण सम्यक् ज्ञास्यसि ॥ इदानीं मदुपदेशादेव शोकमकृत्वा स्थातव्यमविशंकं त्वया ॥ सामान्यतो दर्शनादेः सत्त्वेऽपि उक्तविधया आत्मविषयकसम्यग्ज्ञानवचनश्रवणादिमान् दुर्लभ एव ॥ परतन्त्रप्रतिबिंबभूतजीवात्मयाथात्म्यज्ञानिन एव दौर्लभ्ये किमुत स्वतन्त्रबिंबभूतपरमात्मयाथात्म्यज्ञानिनः इति ईश्वरज्ञानिदौर्लभ्ये पर्यवसानम् ॥ स च महान् महिमा ॥ दुर्लभं हि यथावदीश्वरज्ञानम् ॥ वक्ष्यते च ॥ १ 'यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्वतः' ॥ इति ॥ २ 'बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते' ॥ इति च ॥ ३ 'श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि बहवो यं न विद्युः ॥ आश्चर्योऽस्य वक्ता कुशलोऽस्य लब्धा आश्चर्यो ज्ञाता कुशलानुशिष्टः' ॥ इति श्रुतिः ॥ कैमुत्यन्यायेन ईश्वरज्ञानिदौर्लभ्यलाभात्तादृशेश्वरप्रतिबिंबभूतस्य जीवस्य नाशाभावो युक्त इति लभ्यते ॥ ईश्वरमहिम्नः पूर्वमुक्तत्वेऽपि मन्दजनबोधनाय दार्ढ्यार्थं पुनरुक्तिः ॥ एनमित्यस्य आश्चर्यवदित्यस्य च असकृदुक्तिरादरार्था ॥

जननमरणनैयत्याज्जीवे स्वातन्त्र्यबुद्धिर्न कार्येत्यभिहितं ॥ तर्हि स्वातन्त्र्यबुद्धिः क्व कार्येति चेत् आश्चर्यशब्दः स्वतन्त्रमाह॥ सर्वस्वतन्त्रो ह्याश्चर्य उच्यते॥ अनेकसहस्रेषु मध्ये कश्चित् सात्त्विकप्रकृतिः एनं ईश्वर आश्चर्यवत् आश्चर्यसदृशं आश्चर्यशब्दस्य स्वतन्त्रपरत्वात् स्वतन्त्रेश्वरसदृशं जानाति ॥ लोके स्वस्य स्वेनोच्यमान सादृश्यं असंभवि सत् सदृशान्तरव्यवच्छेदकं भवतीति ४ प्रसिद्धम् ॥ तथा च ईश्वरस्य ईश्वरेण सादृश्यमुच्यमानमसंभावितं सत् सदृशान्तरव्यवच्छेदकं फलति ॥ ततश्च ईश्वरमेव स्वतन्त्रं जानाति नान्यं कमपि इति निष्पन्नम ॥ श्रूयते च ॥ सदृशान्तरराहित्यमीश्वरस्य ॥ ५ 'एकमेवाद्वितीय मिति ॥ तथैव अन्यः एनं ईश्वर आश्चर्यवत् सदृशान्तररहित वदति च ॥ अन्य एनं ईश्वर आश्चर्यवत् सदृशान्तररहितमेव शृणोति च ॥ कश्चिदपि य पश्यति वदति शृणोति सोऽपि एनं ईश्वर श्रुत्वा उक्त्वा दृष्ट्वा ऽपि नैव वेद च ॥ अचिन्त्याप्रमेयपरमाद्भुतवस्तुत्वात् यथावन्न जानाति ॥

१. ७ ३. २. ७ १९ ३ का २. ७ ४ अत्र 'इन्दुरिन्दुरिव श्रीमान्' इति चन्द्रालोके अनन्वयालङ्कारश्लोकः ॥ 'गगनं गगनाकारं सागरः सागरोपमः॥ रामरावणयोर्युद्धं रामरावणयोरिव' ॥ इति रामायणे युद्धकाण्डे ११० सर्गे श्लोकश्चानुसन्धेयः ॥ ५ छा ६. २. १

कश्चिदित्युक्तथा न सर्वेऽपीश्वरस्य स्वातन्त्र्यं अन्यस्यास्वातन्त्र्यं च पश्यन्ति वदन्ति शृण्वन्ति च॥ किन्तु बहुजन्मसमाचीर्णपुण्यपरिपाकवान् कश्चिदेवेति सूच्यते॥ वक्ष्यते च ॥ १ 'मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये'॥ इति ॥ कश्चिदपि न वेदेत्यनेन सत्यपि श्रवणादौ यथावद्ज्ञान दुर्लभमित्युक्तं भवति॥ वक्ष्यते च॥ २' यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्वतः' ॥ इति॥ चतुर्थपादस्याऽऽवृत्तिः कश्चित् तामसप्रकृतिः एनं श्रुत्वाऽपि न वेद ॥ वेद चेत् न वेद ॥ विरुद्धं वेद ॥ कश्चित् राजसप्रकृतिः एनं श्रुत्वाऽपि न वेद ईषद्वेद ॥ कश्चित् सात्विकप्रकृतिः एनं श्रुत्वा वेदापि किन्तु ३ साकल्येन न वेद ॥ राजसास्तामसाश्च ईश्वरं श्रुत्वाऽपि न जानन्ति ॥ किंतु सात्विका एव जानन्ति ॥ तेष्वपि न सर्वेऽपि जानन्ति ॥ किंतु कश्चिदेव ॥ सोऽपि समग्रं न जानाति ॥ किंतु किञ्चिदेव ॥ इति च ॥ २९ ॥

अ ॥ अर्जुनः ॥ 'अशोच्यानन्वशोचस्त्वं' इत्यादिना अशोच्यान् प्रत्यनुशोचंस्त्वं मूढ इति किं मामेवमुपालभसे ॥ शोचन्ति हि लोके अहमिव बहवः ॥ यदि वस्तुस्थितिरीदृशी तर्हि कुतस्ते शोचन्ति ॥ न त्वामेकमेवाहमुपालभे ॥ किंतु ये ईदृशास्तान् सर्वानपि ॥ परन्तु उपदेशस्य सर्वार्थत्वेऽपि यथा त्वां व्याजीकृत्य उपदेशः क्रियते ॥ तथा उपालंभस्य सर्वार्थत्वेऽपि त्वां व्याजीकृत्य उपालंभः क्रियते इति चेत् किमर्थं तथोपालंभ क्रियते ॥ विदिताऽऽत्मतत्वस्य नवैवमनुशोचनमनुचितमित्युपालभे इति चेत् अहमिव बहवो विदिताऽऽत्मतत्वा अप्यनुशोचन्ति ॥ ते श्रुताऽऽत्मतत्वा एव न पुनर्विदितात्मतत्वाः अतस्ते शोचन्ति ॥ शोचन्तु नाम ॥ अविदित्वा आत्मतत्वं त इव त्वं यदन्वशोचः तत्ते युक्तम् ॥ सर्वज्ञादीश्वरान्मत्तो यथावदात्मतत्वं साक्षाच्छ्रुत्वा विदिताऽऽत्मतत्वोऽपि त्वमनुशोचसीति त्वामहमुपालभे इति चेत् अहमपि त इव श्रुताऽऽत्मतत्व न विदिताऽऽत्मतत्वः अत शोचामि ॥ तर्हि महानयं तेषामिव ते दोषः ॥ यत् श्रुत्वाऽप्यात्मतत्वमात्मयाथात्म्य न वेत्थ इति चेत् नायं

१. ७. ३. २. ७ ३ ३ अत्र, 'ब्रह्मादयस्सुरगणा मुनयोऽथ सिद्धाः सत्वैकतानमनसो वचसा वितानैः ॥ नान्त परस्य परतोऽप्यधनाऽपि यान्ति किं नाद्यमर्हति स मे हरिरुग्रजातेः ॥' इति भागवते ७ स्कन्धे ९ अध्याय ॥

तेषां मम च दोषः ॥ किंतु तदुपदेष्टॄणां मदुपदेष्टुस्तव चैवायं दोषः ॥ 'वक्तुरेव हि तज्जाड्यं श्रोता यत्र न बुध्यते' ॥ इति न्यायः ॥ परीक्षार्थं प्रहितेषु पठितृषु परीक्षायां उत्कर्षमलभमानेषु पाठकस्य नास्य बोधनशक्तिरस्ति अत एवैवमभूत् इत्ययशः पाठकपदात्प्रच्यावनं च भवति लोके इति विदितमेव सर्वेषां ॥ इति चेत् ॥ स्यादयं तेषां विषये तेषां वा तदुपदेष्टॄणां वा दोषः ॥ दुर्विज्ञेयत्वादात्मतत्वस्य यथावद्दर्शनवचनश्रवणवेदनानां दुर्लभत्वात् ॥ त्वद्विषये पुनरयं दोषः त्वैव ॥ उपदेष्टुर्मम नित्यनिरस्तादोषदोषेश्वरतया त्वमेव न वेत्थेति पर्यवसानस्यैवौचित्यात् ॥ पाठके तत्रतत्र समीचीनाऽस्यपाठनशक्तिः इति लब्धप्रथे कुत्राचित्तेन प्रहितेषु पठितृषु परीक्षायां हीनेष्वपि न पाठकस्यायशः पदच्युतिर्वा ॥ किंतु पठितृणा मेव एते मन्दाः नापठंश्च सम्यक् इत्ययशः विद्याशालातः प्रच्यावनं च भवतीति विदितमेव हि लोके ॥ इति चेत् यद्येवं तर्हि महदिदं शोकस्थानम् ॥ सर्वज्ञस्य भगवतः ईश्वरस्य तव सकाशात् श्रुत्वाऽपि नाहमज्ञासिषमात्मतत्वम् मूढो मन्दोऽहं किं मया जीवता इति शोचामीति चेत् मैवं शोचीः ॥ विषयस्य यथावद्वेदनं द्वेधा संभवति ॥ बुद्धिमान्द्यात् विषयकाठिन्याद्वा ॥ तत्र विषयस्य साधारणत्वेन केषुचित् परीक्षायामुत्कर्षमुपगतेषु तमलभमानः कश्चित्, मन्दोऽहं अतो नाहमुत्कर्षमाप्नुवं मोघमेवाहं जीवामीति शोचति ॥ विषयस्य काठिन्यात् सर्वेषु परीक्षायां हीनेषु तादृशः कश्चिदपि न शोचति ॥ किंतु किमेवमासीत् इति पृष्टः, कोवा प्रापोत्कर्षं कठिनो विषयः हन्त महदिदं अन्याय्यं परमोत्तमपरीक्षायां प्रष्टव्यान् विषयान् अवरपरीक्षायां पृष्ट्वा वयमुत्कर्षाच्च्याविता इति वदति ॥ पुनस्तस्मिन्नेव पर्वभेदे प्रविष्टः पठति च इति प्रसिद्धं हि लोके ॥ बुद्धिमतस्तव यथावदात्मतत्वावेदनं न बुद्धिमान्द्यात् ॥ किंतु आत्मतत्वस्य परमदुर्विज्ञेयत्वात् ॥ अतः तदेव भूयोपि श्रोतव्यं श्रावयामि च पुनःपुनरहं इति चेत् किं तदात्मतत्वं तथा दुर्विज्ञेयम् ॥ बद ॥

कृष्णः॥ एनं आत्मानं कश्चित् आश्चर्यमिव पश्यति॥ तथैव अन्यः एनं आश्चर्यमिव वदति च ॥ अन्यः एनं आश्चर्यमिव शृणोति च ॥ कश्चिदपि एनं श्रुत्वा दृष्ट्वा उक्त्वापि नैव वेद नैव साक्षात्करोति अत्र प्रथमपादेन अद्भुतवस्तुदर्शनमिव आत्मदर्शनं दुर्लभं इत्यात्मविषयकदर्शनशब्दितज्ञानस्य द्वितीयपादेन अद्भुतवस्तुवचनमिव आत्म-

वचनं दुर्लभं इत्यात्मविषयकवचनस्य तृतीयपादेन अद्भुतवस्तुश्रवणमिव आत्मश्रवणं दुर्लभं इत्यात्मविषयकश्रवणस्य चतुर्थपादेन श्रवणदर्शनोक्तीनां भावेऽपि अद्भुतवस्तुसाक्षात्कार इव आत्मसाक्षात्कारो दुर्लभ इत्यात्मविषयकसाक्षात्कारस्य च दौर्लभ्यमुच्यते ॥ तेन च दर्शनवदनश्रवणसाक्षात्काराणां दौर्लभ्यप्रतिपादनेन क्रमात् द्रष्टुः वक्तुः श्रोतुः साक्षात्कर्तुश्च दौर्लभ्यमुक्तं भवति ॥ तेन च दुर्विज्ञेयत्वमात्मतत्त्वस्योक्तं भवति ॥

कश्चित् एनं आत्मानं पश्यति सः आश्चर्यवत् आश्चर्येण तुल्यो वर्तते ॥ दुर्लभत्वेन आश्चर्यवस्तुसदृशो वर्तते ॥ उत्तरत्राप्येवमेव ॥ द्रष्टृवक्तृश्रोतृसाक्षात्कर्तॄणां साक्षादेवदौर्लभ्यमुच्यते॥ वक्ष्यते च १'मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये' ॥ इति '॥ २'स महात्मा सुदुर्लभः'॥ इति च ॥

कश्चिद्यः एनं शास्त्राचार्योपदेशाभ्यां पश्यति सः आश्चर्यवत् पश्यति ॥ आश्चर्यं पश्यन्निव विस्मयेन पश्यति ॥ सर्वगतस्य नित्यज्ञानानन्दस्वभावस्य आत्मनः मायया परिच्छिन्नवत् अज्ञवत् दुःखिवच्चोपलभ्यमानतया तत्र शास्त्राचार्योपदेशाभ्यां गृह्यमाणं सर्वगतत्वादिकं असंभावनाभिभूतचेतस्कतया अघटमानं ऐन्द्रजालमिव विस्मयेन गृह्णाति ॥ एवं वदति शृणोति च ॥ विपरीतभावनाऽभिभूतस्तु कश्चित् श्रुत्वा उक्त्वा ज्ञात्वाऽपि नैव वेद ॥ नैवाऽऽत्मनिःतत् गृह्णाति ॥ अपितु शास्त्रादिकमेव प्रतारकं मन्यते ॥ अतो दुर्विज्ञेयमात्मतत्त्वम् ॥

यः कश्चित् एनं मत्प्रसादेन पश्यति साक्षात्कर्तुमिच्छति सः आश्चर्यवत् दुर्लभः ॥ विषयाशापाशमुच्छिद्य मोक्षेच्छाकरणस्य हनुमतः समुद्रलङ्घनस्येव अन्याशक्यतया आश्चर्यत्वात् तत्कर्ता मुमुक्षुर्दुर्लभः ॥ वक्ष्यते च ॥ ३ मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ॥ इति ॥ एवमन्यो यो वदति सोऽप्याश्चर्यवत् ॥ तत्त्वोपदेष्टा अतिदुर्लभः ॥ एवं अन्यो यः शृणोति सोऽप्याश्चर्यवत् ॥ भक्तिविरक्त्यादिसाधनसंपत्तियुक्तः श्रोता आकाशगामीवातिदुर्लभः ॥ साधनसंपत्तिरहितः कश्चिदपि एनं श्रुत्वा मत्वाऽपि नैव वेद ॥ अतः आत्मतत्त्वं दुर्विज्ञेयम् ॥

१. ७. ३. २ ७ १९. ३. ७ ३.

आश्चर्यवदिति कर्तृकर्मक्रियाणां विशेषणम् ॥ आश्चर्यवद्वर्तमानं आश्चर्यवस्तुना तुल्यं लोकदृष्ट्या अघटमानविरुद्धनानाधर्मवत्तया प्रतीयमानं सन्तमप्यसन्तमिव स्वप्रकाशचैतन्यरूपमपि जडमिव आनन्दघनमपि दुःखिनमिव निर्विकारमपि विकारिणमिव नित्यमप्यनित्यमिव प्रकाशमानमप्यप्रकाशमानमिव ब्रह्माभिन्नमपि तद्भिन्नमिव मुक्तमपि बद्धमिव अद्वितीयमपि सद्वितीयमिव प्रतीयमानं एनं आत्मानं शमदमादिसाधनसंपन्नचरमशरीरः कश्चिदेव पश्यति ॥ शास्त्राचार्योपदेशादिना आविद्यकसर्वविरुद्धधर्मपरिहाणेन परब्रह्मत्वमात्राकारया वेदान्तमहावाक्यश्रवणमननजनितया अनेकजन्मसमाचीर्णसुकृतपरिपाकलब्धया अन्तःकरणवृत्त्या [१] साक्षात्करोति ॥ अत्र आश्चर्यवदिति कर्मविशेषणम् ॥ तथा कश्चिदेनं यत्पश्यति तद्दर्शनं आश्चर्यवत् ॥ आश्चर्येण तुल्यं वर्तते ॥ आत्मदर्शनं स्वतो मिथ्याभूतमपि सत्यस्याऽऽत्मनो व्यंजकं आविद्यकमप्यविद्याया विघातकम् ॥ आश्रयभूताविद्यायाः स्वात्मस्वरूपस्य च निवर्तकम् ॥ अत आश्चर्येण तुल्यम् ॥ अत्र आश्चर्यवदिति क्रियाविशेषणम् ॥ तथा कश्चिद्यः एनं पश्यति सः आश्चर्यवत् वर्तते ॥ आत्मनो द्रष्टा निवृत्ताविद्यातत्कार्योऽपि प्रारब्धकर्मवशात्तद्वानिव सर्वदा समाधिनिष्ठोऽपि भाषणगमनाऽऽसनादिमांश्च वर्तेत ॥ अत आश्चर्यवत् ॥ अत्र आश्चर्यवदिति कर्तृविशेषणम् ॥ आत्मविषयकदर्शनतत्कर्मतत्कर्तृणामाश्चर्यत्वोक्त्या आत्मनो दुर्विज्ञेयत्वमुक्तं भवति ॥ यः एनं आत्मानं यथा पश्यति तथैव वदति च सः अन्यः सर्वजनविलक्षणः परमदुर्लभः ॥ अत्रापि आश्चर्यवदिति कर्तृकर्मक्रियाणां विशेषणम् ॥ अज्ञस्य उपदेष्टृत्वासंभवेन यथावद्विदितात्मयाथात्म्यस्यैव उपदेशे अधिकारः ॥ वक्ष्यते च ॥ [२] 'उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः' ॥ इति ॥ तादृशो ज्ञानी च प्रायेण समाधिनिष्ठः स्यात् ॥ असमाधिस्थोऽपि न परैर्ज्ञायेत ॥ ज्ञाताऽपि द्रव्यलाभख्यात्यादिप्रयोजनानपेक्षणात् कथं परमगोप्यमात्मतत्त्वमन्यस्मै ब्रूयात् ॥ प्रयोजनानपेक्षत्वेऽपि भक्तिमदास्तिकजनोद्दिधीर्षया करुणयैव ब्रुवंस्तु परमदुर्लभः ॥ अत्र आश्चर्यवदिति कर्तृविशेषणम् ॥ अन्यः इतरः इति तु न सम्यक् ॥ यथावद्दर्शनवचनयोरेकाधिकारिकत्वात् ॥ यद्वदति तद्वचनं आश्चर्यवत् ॥

१ पश्यति परोक्षतो जानाति इति वक्तव्यम् श्रुत्वा वेदापि साक्षात्करोत्यपि इति वक्ष्यमाणत्वात् ॥ इत्याहुः ॥

१ 'यतो वाचो निवर्तन्ते ॥ अप्राप्य मनसा सह' ॥ इति श्रुत्या केनापिशब्देनावाच्यस्य शुद्धस्यात्मनः शब्दैः प्रतिपादनस्याशक्यत्वात् ॥ सर्वशब्दावाच्यस्य शुद्धस्यात्मनो विशिष्टशक्तेन पदेन जहदजहल्लक्षणया कल्पितसंबन्धेन वा विना शक्तिं विना लक्षणां विना संबन्धं २ 'सुषुप्तोत्थापकवाक्यवद्वा बोधनस्य लौकिकप्रतिपादनविलक्षणत्वाच्च सा वचनक्रिया आश्चर्यवत् ॥ अत्र आश्चर्यवदिति क्रियाविशेषणम् ॥ कर्मण आश्चर्यत्वं तु प्राग्वत् । वचनतत्कर्मतत्कर्तॄणां आश्चर्यत्वप्रतिपादनेन दुर्विज्ञेयत्वमात्मन उक्तं भवति ॥ द्रष्टुर्वक्तुश्च विलक्षणः अविदितात्मतत्त्वो मुमुक्षुः ब्रह्मविदं गुरुमुपेत्य शृणोति ॥ वेदान्तमहावाक्यतदर्थतत्तात्पर्यश्रवणजनितनिश्चयज्ञानविषयीकरोति ॥ अत्र आश्चर्यवदिति कर्तृकर्मक्रियाणां विशेषणम् ॥ कर्त्रादीनामाश्चर्यत्वं तु पूर्ववद्बोध्यम् ॥ अनेकजननान्तरसमाचीर्णपुण्यपरिपाकसक्षालितमनोमलतया समुपजनितात्मयाथात्म्यशुश्रूषाकां हि श्रोता ॥ वक्ष्यते च ॥ ३ 'मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये'॥ इति॥ ४ 'श्रवणायापि बहुभिर्यो न लभ्य' इति श्रुतिः॥ उक्तहेतुसमुपजनितोक्तरूपश्रवणशक्तिकश्च ॥ अतः श्रोता आश्चर्यवत् ॥ श्रवणतत्कर्मतत्कर्तॄणां आश्चर्यत्वप्रतिपादनेन आत्मनो दुर्विज्ञेयत्वमुक्तं भवति ॥ कश्चित् श्रुत्वाऽप्येनं वेद॥ अत्रापि आश्चर्यवदिति संबध्यते ॥ तच्च कर्तृकर्मक्रियाणां विशेषणम् ॥ कर्त्रादीनामाश्चर्यत्वं तु आश्चर्यवत्पश्यतीत्यत्रोक्तरीत्या ज्ञेयम् ॥ वेदनतत्कर्मतत्कर्तॄणामाश्चर्यत्वप्रतिपादनेन आत्मनो दुर्विज्ञेयत्वमुक्तं भवति ॥ कृतश्रवणादिकानां वेदनसौलभ्यात् वेदनस्याऽऽश्चर्यत्वं कथं इति चेत् न चैव कश्चित् ॥ चशब्दात् श्रुत्वाऽप्येनमितिसंबध्यते ॥ कश्चित् एनं श्रुत्वाऽपि मननादिकं कृत्वाऽपि नैव वेद ॥ प्रतिबन्धकेन पापेन ५ प्रतिबन्धात् ॥ ६ 'शृण्वन्तोऽपि बहवो य न विद्यु'रिति श्रुतिः ॥ ७ 'ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शना' दिति सूत्रम् ॥ श्रवणादिकमकुर्वंस्तु न वेदेति किमु वक्तव्यम् ॥ तस्मादात्मा दुर्विज्ञेय एव ॥ 'श्रुत्वाऽप्येनं वद' 'न चैव कश्चित्' इति वाक्यद्वयम् ॥ श्रुत्वाऽपीत्यादेरेकवाक्यत्वे ८ 'आश्चर्यो ज्ञाता कुशलानुशि—' इति

१. तै. २ ४. २ अत्र अगृहीत्वैव संबंधं अभिधानाभिधेययोः ॥ हित्वा निद्रां प्रबुध्यन्ते सुषुप्ते बोधिताः परैः ॥ जाग्रद्वन्न यत शब्दं सुषुप्ते वेत्ति कश्चन'॥ इति वचनमनुसन्धेयम् ॥ ३. ७ ३ ४ का २ ७. ५ अत्र, 'ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः' ॥ इति, कुतस्तदज्ञानमिति चेत तद्धि बन्धपरिक्षयात् ॥ इति च वचनमनुसन्धेयम् ॥ ६. का. २. ७ ७ ३. ४. ५० ८ का २ ७

श्रुत्या ज्ञातुः सद्भावोक्तिर्विरुद्धा स्यात् ॥ अध्यात्मशास्त्राणामनारंभणीयता च स्यात् ॥ अत एवमुक्तम् ॥ वक्ष्यते च ॥ १ 'कश्चिन्मां वेत्ति तत्वतः' इति ॥ 'न चैव कश्चित् इत्यस्य सर्वत्र संबन्धः ॥ कश्चित् पश्यति कश्चित् नैव पश्यति ॥ कश्चिद्वदति कश्चित् नैव वदति ॥ कश्चित् शृणोति कश्चित् नैव शृणोति ॥ कश्चित् वेद कश्चित् नैव वेद ॥ इति वा॥ कश्चित् पश्यति न वदति कश्चित् पश्यति वदति च॥ कश्चित् पश्यति वदति च न शृणोति कश्चित् शृणोति न पश्यति न वदति॥ कश्चित् शृणोति पश्यति वदति च॥ कश्चित् श्रुत्वाऽप्येनं वेद ॥ कश्चित् नैव वेद ॥ कश्चित् सर्वबहिर्भूतः इति अनेके प्रकाराः यथासंभवं संपद्यन्ते ॥

कश्चिदेव एनं पूर्वश्लोकोक्तं भूतग्रामं आश्चर्यवत् आश्चर्यं अद्भुतं स्वप्नेन्द्रजालादिकं तेन तुल्यं मिथ्याभूतं पश्यति ॥ एनं व्यवहारास्पदमपि मिथ्यात्वेन वदति तदत्याश्चर्यम् ॥ एनं अनात्मतया उपलभ्यमानं प्रत्यगभिन्नत्वेन शृणोति तदत्यन्तमाश्चर्यम् ॥ एनं प्रत्यगनन्यत्वेन श्रुत्वाऽपि स्वप्नादिदृष्टान्तैरुक्त्वाऽपि ध्यानेन साक्षात्कृत्वाऽपि नैव वेद तत्वतो न जानाति ॥ तीव्रविक्षेपवतः प्राप्ताऽपि प्रज्ञा परिहीयते ॥ तस्मादात्मतत्वं दुर्विज्ञेयम् ॥ २९ ॥

वि ॥ अर्जुनः ॥ देहात्मवादमङ्गीकृत्य शङ्कमानं मां प्रति देहनाशस्यापरिहार्यत्वात् वस्तुस्वभावनैयत्यानुसन्धानाच्च शोको न कार्य इत्यभिहितम् ॥ त्वदीयाऽऽत्मनित्यत्वपक्षं विहाय मदीयानित्यत्वपक्ष एव त्वया अभ्युपगत इति भाति ॥ किं तथा वद ॥

कृष्णः ॥ देहातिरिक्तनित्यात्मसत्वपक्ष एव श्रुत्यादिसम्मतः मदभिमतश्च ॥ सः कुतो न मम बुद्धावारोहतीति चेत् आत्मतत्वस्य दुर्विज्ञेयत्वात् न तव बुद्धिमारोहति ॥ किं तथा आत्मतत्वं दुर्विज्ञेयमिति चेत् शतसहस्रेषु महता पुण्येन क्षीणपापः कश्चित् अव्यक्तत्वादिना आश्चर्यवत् स्थितं एनं उक्तस्वभावं आत्मानं पश्यति ॥ तथैव अन्यः कश्चित् तथाविध एव आश्चर्यवत् स्थितं एनं परस्मै वदति च ॥ अन्यः कश्चित् आश्चर्यवत् स्थितमेनं शृणोति च ॥ कश्चित् एनं श्रुत्वाऽपि यथावन्नैव वेद च ॥ पश्यन्नपि यथावन्न पश्यति ॥ वदन्नपि यथावन्न वदति च ॥ शृण्वन्नपि यथावन्न शृणोति॥

---

१ ७. ३

१'श्रवणायापि बहुभिर्यो न लभ्यः' इति मन्त्रार्थोपबृंहणरूपोऽयं श्लोकः कतिपयपद-व्यत्यासितः॥ देहातिरिक्तनित्यात्मनो द्रष्टैव तावद्दुर्लभः किमुत यथावद्द्रष्टा॥ सत्स्वपि तादृशेषु वक्तैव दुर्लभः॥ किमुत सकलरहस्यवक्ता॥ सत्स्वपि तादृशेषु श्रोतैव दुर्लभः॥ किं पुनः सकलशिष्यगुणसंपत्तियुक्तो यथावच्छ्रोता॥ अत्र प्रथमं श्रवणं ततो मननात्तत्वनिश्चयः ततो वचनयोग्यता तत्रापि चिराभ्यासादिना यथावद्वचन-योग्यता ततो निदिध्यासनाद्दर्शनं ततश्चिरदर्शनसंस्काराद्वज्रादिरत्नानामिवाऽऽत्म-नस्तत्वविशेषदर्शनमितिक्रमः॥ दुर्विज्ञेयत्वादात्मतत्वं न तव बुद्धावारोहति॥ सर्वैर्दु-र्विज्ञेये वस्तुनि विषये तवैकस्यैव मदीयोपालंभो वा किमर्थं॥ पुनःपुनर्यथावदुप-दिश्य यथावदात्मतत्व ग्राहयामि॥ मा व्यथिष्ठाः॥ २९॥

एव दुर्विज्ञेयमात्मतत्वं तस्य बन्धं मोक्षं तदुपायं मोचयितारमीश्वरं तन्महिमानं च प्रतिपादयतो गीताग्रन्थस्यापि दुर्विज्ञेयता स्यात् ततश्च तद्द्रष्टा तद्वक्ता तच्छ्रोता च दुर्लभ स्यात् न किं तथा वद॥ इति चेत् एवं दुर्विज्ञेयात्मपरमात्मतत्वादिज्ञातव्यसक-लार्थप्रतिपादकं गीताग्रन्थं कश्चिदेव पश्यति॥ स च अहो अस्य ग्रन्थस्य ज्ञातव्य-सर्वार्थप्रतिपादकता इति आश्चर्यवत् अद्भुतमिव विस्मयेन पश्यति॥ सः आश्चर्य-वत् दुर्लभः॥ तादृशेषु अनेकेषु अन्यः विलक्षणः कश्चिदेव वदति॥ सः आश्चर्यवत् दुर्लभः॥ न हि सर्वेषां ज्ञातॄणां बोधकताशक्तिर्दृश्यते॥ अत एव वक्ष्यते॥ २'ज्ञानिन-स्तत्वदर्शिन' इति॥ ज्ञातृवक्तृभ्यामन्य शृणोति॥ न सर्वे शृण्वन्ति॥ किन्तु बहुजन्म-समाचीर्णपुण्यपरिपाकसमुपजातशुश्रूषाकः कश्चिदेव शृणोति॥ सोऽप्याश्चर्यवत् दुर्लभः॥ स शृण्वन् आश्चर्यवत् अद्भुतमिव विस्मयेन शृणोति॥ एवं ग्रन्थं श्रुत्वा ज्ञात्वा उक्त्वाऽपि कश्चित् नैव वेद॥ साकल्येन न वेद॥ किंतु किञ्चिदेव जानाति॥ श्रुत्वा कश्चित् जानाति कश्चित् नैव जानाति॥ गीताग्रन्थदर्शनवदनश्रवणानां दुर्ल-भत्वोक्त्या महामाहिमता तस्योक्ता भवति॥ अत एव वक्ष्यते॥ ३'य इदं परमं गुह्यं' इत्यादिना ४'प्राप्नुयात्पुण्यकर्मणाम्'॥ इत्यन्तेन ग्रन्थेन गीताग्रन्थ...वनादीनां महत्फलम्॥ अतो यथावच्छृणु॥

१. का. २ ७. २. ४. ३४ ३. १८. ६८. ४. १८. ७१.

गीताग्रन्थस्य सकलार्थप्रतिपादकतया यथावत्तद्दर्शनवदनश्रवणादिकर्ता महामहिमवान् स्यात् नह्यन्तरेण व्याकरणादिशास्त्रान्तरपरिज्ञानं लोकतन्त्रदर्शनं संस्कृतभाषायां अन्यादृशं परिचयं भगवति वासुदेवे भक्तिं च गीतार्थो यथावद्ज्ञातुं शक्यः॥ न किं तथा वद इति चेत् यः गीताग्रन्थ पश्यति वदति शृणोति च एनं आश्चर्यवत् स्थितं कश्चिदेव पश्यति॥ आश्चर्यवत् अतिविस्मयेन पश्यति॥ य. पश्यति सः आश्चर्यवत्॥ इत्यादि॥ गीताग्रन्थ यः सम्यक् श्रुत्वा ज्ञात्वा असकृदितरेभ्य उपदिशन् गीतारसं समग्रमनुभवति एनं श्रुत्वाऽपि ज्ञात्वाऽपि उक्त्वाऽपि तन्निष्ठानशेषविशेषान् साकल्येन न जानाति॥ इत्याद्यूह्यम्॥ २९॥

अर्जुनः॥ अस्तूक्तमखिलं प्रमेयम्॥ किं कर्तुं मां उद्योजयसि॥ ब्रूहि॥

कृष्णः॥ देही नित्यमवध्योऽयं देहे सर्वस्य भारत।
तस्मात्सर्वाणि भूतानि न त्वं शोचितुमर्हसि॥ ३०॥

देहीति॥ हे भारत अर्जुन सर्वस्य देहे हन्यमानेऽपि देहः अस्यास्तीति देही आत्मा हन्तुं योग्यः वध्यः न वध्यः अवध्यः इति यत् तत् नित्यं निश्चितम॥ तस्मात् सर्वाणि भूतानि प्रति त्वं शोचितुं नार्हसि॥ ३०॥

अयं जीवः देहे नष्टेऽपि देही देहवान् स्वरूपदेहवान् इति यत् तत् नित्यं निश्चितम्॥ अत· सर्वस्य तृतीयार्थे षष्ठी॥ सर्वेण प्रकारेण बिंबोपाश्रितसंनिधिनाशादिहेतुभिरपि अवध्यः नाशानर्हः॥ अयं ईश्वर· सर्वस्य प्राणिजातस्य देहे स्थूलदेहे लिङ्गदेहे स्वरूपदेहे च रक्षकत्वेन वर्तते॥ अतः सर्वत्र रक्षकतया भगवतोऽवस्थानात् देही नित्यमेव अवध्यः॥ सर्वस्य सर्वत्र व्याप्तिमत्तया सर्वशब्दवाच्यस्य॥ वक्ष्यते च॥ १ 'सर्वं समाप्नोषि ततोऽसि सर्वः'॥ इति॥ तादृशस्य हरेरधीने देहे वर्तमानोऽयं जीवः नित्यमवध्यः तस्मात् त्व सर्वाणि शरीराणि सर्वान् जीवांश्च प्रति अनुशोचितुं

---

१. ११. ४०.

नार्हसि ॥ नानुशोचितुं शोकमकृत्वा स्थातुमर्हसि ॥ एवमवस्थातुमेव त्वामुद्योजयामि॥ भारतत्वादेवं कर्तुमर्होऽसि ॥ योद्धुमर्हसीतिवक्तव्ये नानुशोचितुमर्हसीत्युक्तथा स्वत एव युद्धे प्रवृत्तत्वात्तव युद्धे प्रेरणं न मया कर्तव्यम् ॥ किन्तु प्रतिबन्धकशोकमोहापनोदनमेव मया कर्तव्यम् ॥ निवृत्ते च शोकमोहरूपे प्रतिबन्धके स्वयमेव धीरो वीरो धार्मिकश्च त्वं युद्धे प्रवर्तिष्यसे इति सूच्यते॥ त्वां व्याजीकृत्य लोकोद्धारार्थं विंशत्या श्लोकैस्तत्वोपदेशोऽयम् ॥ ३० ॥

अ ॥ अर्जुनः ॥ सर्वस्य प्राणिजातस्य देहे नष्टेऽपि तत्र विद्यमानोऽयं जीवः अवध्यः नाशानर्हः इति यत् तन्नित्यं निश्चितम् ॥ अतः सर्वाणि भूतानि भीष्मादीन् तदीयानि स्थूलसूक्ष्मशरीराणि च उद्दिश्य शोचितु नार्हसि ॥ स्थूलदेहस्य सर्वथा नाशात् स्थूलदेहनाशेऽपि सूक्ष्मशब्दितलिङ्गदेहस्यानाशात् आत्मनश्च सर्वथा अनाशात् शोकमोहौ विहाय स्वधर्मं युद्धं कर्तुमर्हसि ॥

भीष्मादिशब्दवाच्यार्थभूतान देहान् उद्दिश्य शोको न कार्य इत्युक्तम् 'अव्यक्तादीनि भूतानी' त्युपसहृतम् ॥ भीष्मादिशब्दलक्ष्यार्थभूतानात्मन उद्दिश्य शोको न कार्य इत्युक्तमुपसंह्रियते ॥ देही देहोपाधिकः देहे उपलभ्यमान जीवः सर्वस्य ब्रह्मादिस्तंबान्तस्य प्राणिजातस्य देहे वध्यमानेऽपि नित्यमवध्यः ॥ तस्मात् भीष्मादिशब्दलक्ष्यार्थभूतान् आत्मन उद्दिश्य '[1] त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च' त्युक्तरीत्या शोको न कार्य ॥ अध्यात्मज्ञानसंपन्नस्य तव इदमेव युक्तम् ॥ शोकमोहपरिहारार्थमात्मानात्मतत्वमुपदिश्य न शोचितुमर्हसि इत्युक्त्या शोकमोहादिदोषरहितस्यापरोक्षज्ञानिनः सर्वकर्मसंन्यास एवाधिकार इति सूच्यते ॥

एवमेतावता ग्रन्थेन अर्जुनस्य कथमेते मदीया दीना अल्पबला बलवत्तरेण मया हन्तव्याः ॥ कथमेतेषां पुत्रादय एतैर्विना जीविष्यन्ति ॥ कथंवाऽहं भीष्मादिभिर्गुरुभिर्युद्धं कुर्याम् ॥ [2] 'यानेव हत्वा न जिजीविषाम' इत्युक्तरीत्या कथं वा तैर्विना जीविष्यामि इति शोकः तन्मूलभूतः अनात्मनि आत्मधीरूपः अनात्मीये आत्मीयताधी

१. १. ३४. २. २. ६..

रूपश्च यो मोहः स च देहात्मतत्त्वोपदेशेन निराकृतः ॥ स्वधर्मे युद्धे अधर्मधीरूपो मोहस्तु स्वधर्ममपी'त्यादिना निराकरिष्यते ॥ ३० ॥

वि ॥ अयं देही सर्वस्य देवादेः स्थावरान्तस्य प्राणिनः देहे वध्यमानेऽपि नियमेन अवध्यः ॥ देहीत्यनेनैव देहे विद्यमान इत्यर्थस्य लाभेन देहे इत्यस्य वैयर्थ्यादेवं व्याख्यानमुचितम् ॥ १ 'हन्यमाने शरीरे'॥ इत्युक्तं हि मया ॥ २ 'न हन्यते हन्यमाने शरीरे'॥ इति श्रुतिश्च ॥ तस्मात् सर्वाणि देवादिस्थावरान्तानि भूतानि जीवान् प्रति त्वं न शोचितुमर्हसि ॥ युयुत्सया पुरतोऽवस्थितानां भीष्मादीनां नाशशङ्कया युद्धादुपरिरंसन्तं मां प्रति भीष्मादीन् न शोचितुमर्हसीति वक्तव्ये सर्वाणि भूतानीति कुत उच्यते इति चेत् शरीरस्य सर्वथा नाशात् आत्मनश्च कयाऽपि विधया नाशाभावात् भीष्मादीन् प्रति शोको न कार्य इत्यसकृदुक्तथा भीष्मादीनां विषये एवं स्यात् देवादिस्थावरान्तानां अन्येषां प्राणिनां विषये देहविषये जातिगुणदेशादुर्भेदत्वसुभेदत्ववैषम्यामिव आत्मविषये सुखित्वदुःखित्वादिवैषम्यमिव च नित्यत्वानित्यत्वादिवैषम्यमपि स्यात् इति शङ्कोत्पद्येत तां परिहर्तुं देवादिस्थावरान्तानां सर्वेषां आत्मनां साधारणमिदं नित्यत्वम् ॥ अनित्यत्वादिकं तु देहगतं ॥ अनित्यत्वादिमद्देहवाचकदेवादिशब्दैरात्मनो व्यपदेशस्तु देहस्यापृथक्सिद्धत्वादुपचारेण इति बोधयितुं सर्वाणि भूतानीत्युक्तम् ॥ अत· तादृशान् सर्वान् आत्मनः प्रति न त्वया शोकः कार्यः ॥ सूक्ष्मत्वाच्छेद्यत्वादिना नित्यत्वेन च स्वरूपत· समानानां जीवानां सुखदुःखादिवैषम्यं कथं इति चेत् तत्तद्देहोपाधिकज्ञानावस्थातारतम्यात् सुखदु·खादिवैषम्यमुपपद्यते ॥ इमे जनाधिपा इत्याद्युक्तिस्तु तेषामेव नाशस्य शङ्कितत्वेन शङ्कां सयुक्तिकं परिहृत्य युद्धे प्रवर्तनाय॥ अतो नानुपपत्तिः॥ एवमेतावता प्रबन्धेन पार्थस्य तव अस्थानकारुण्यमपनोदितम् ॥ ३ 'स्वधर्ममपि चे'त्यादिना ४ 'मरणादतिरिच्यते' इत्यन्तेन धर्माधर्मधीरपनोद्यते॥ ५ 'भयाद्रणादुपरत'मित्यादिना ६ 'युध्धाय कृतनिश्चयः' इत्यन्तेन अस्थानस्नेहोऽपनोद्यते ॥ तन्त्रितयापनोदाय हि ७ अध्यात्मशास्त्रावतरणं मया कृतम् ॥ अतो विधूतशोकमोहादिको भूत्वा स्वधर्मं युद्धं कुरु ॥ भारतत्वाद्युद्धमेव कर्तुमर्होऽसि ॥ ३० ॥

१. २ २०. २. का. २. १८. ३. २. ३१. ४. २ ३४. ५. २. ३५. ६. २. ३७. ७. इदमेवोक्तं यामुनाचार्यैः गीतार्थसंग्रहे ॥ 'अस्थानस्नेहकारुण्यधर्माधर्मधियाऽऽकुलम् ॥ पार्थं प्रपन्नमुद्दिश्य शास्त्रावतरणं कृतम्'॥ इति ॥

अर्जुनः ॥ उपदिष्टवानस्यात्मतत्वं परमया कृपया ॥ तथाऽपि तस्य बुद्धावनारोहात् पुनः पुनः शोको जायते ॥ सतिचैवं कथमहं स्वजनहिंसात्मके प्रकृते युद्धे प्रवर्तेय ॥ वद ॥

कृष्णः ॥ स्वधर्ममपि चावेक्ष्य न विकंपितुमर्हसि ॥
धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते ॥ ११ ॥

स्वधर्ममिति ॥ अपि च किंच युत्धं स्वस्य धर्मः स्वश्चासौ धर्मश्च इति वा स्वधर्मः तं अवेक्ष्य पर्यालोच्य विकंपितुं युत्धाच्चलितुं कंपमाप्तुं वा नार्हसि ॥ क्षत्रियस्य धर्मादनपेतं धर्म्यं तस्मात् युत्धात् अन्यत श्रेयः न विद्यते ॥ हि प्रसित्धम् ॥ अतः न विकंपितुमर्हसीति वा ११ ॥

तिष्ठतु तावदयं तत्वोपदेशः बुद्धावनारूढ एव मनसि ॥ कर्मयोगानुष्ठानसमुपजातसर्वकर्मसमाराध्यभगवत्प्रसादेन निश्शेषनिर्धूतमले मनसि स्वयमेव शुद्धां बुद्धिमध्यारोहेदयमुपदेशः ॥ अतः त्वां प्रकारान्तरेण स्वधर्मे युद्धे प्रवर्तयामि ॥ शृणु किंचिदवधानेन ॥ किंच युद्धं स्वधर्मं विचारय ॥ युद्धं हि क्षत्रियस्य तव स्वस्य विहितो धर्मः ॥ अत एव स्वः स्वकीयो धर्मः ॥ स्वतन्त्रत्वात्स्वशब्दवाच्यस्य भगवतः धर्मः तत्प्रीतिजनको धर्मः ॥ अत एव स्वीयधर्मः ॥ भगवत्प्रीतिजनक एव हि स्वधर्मः ॥ स्वं धनं तस्य धर्मः धनसंपादको धर्मः युद्धेन राज्यादेर्लाभात् ॥ अतः महायासलब्धद्रव्यव्ययैकसाध्ययागदानादिधर्मेभ्य उत्तमो धर्मः ॥ हिंसारूपतया अधर्मः किल युद्धं कथं स्वधर्म इत्युच्यते इति चेन् न अत्यन्तं अधर्मोऽपि १ तव स्वस्य विहितधर्मत्वात् स्वशब्दितभगवत्प्रीति जनको धर्मः ॥ तादृशं स्वधर्मं बुध्या २ विचार्यापि त्वं कंपितुं वेपथुशब्दितं कंपं प्राप्तुं नार्हसि ॥ ३ 'वेपथुश्च शरीरे मे' इति यत्त्वयोक्तं तदयुक्तम् ॥ तस्माद्युद्धाच्चालितुं नार्हसि ॥ ४ 'एतान्न हन्तुमिच्छामि'॥ ५ 'न यो-

१. 'तत्कर्म हरितोषं यत् सा विद्या तन्मतिर्यया'॥ इति भागवते प्रथमस्कन्धे १ अध्याये ॥
२. अपि च किंच युद्धं च युद्धं तु अवेक्ष्यापि अवेक्ष्यापि नार्हसि च नार्हस्येव इत्यादिरीत्या अपि चशब्दयोरन्वयः ॥ ३. १ २९ ४ १ ३५. ५ २ ६.

स्ये ' ॥ १ ' कथं भीष्ममहं ' इत्यादि यत्त्वयोक्तं तदयुक्तम् ॥ अतो योद्धव्यमेव ॥ स्वधर्मं क्षत्रियस्य तत्र विहितं युद्धे अपलायनरूपं धर्मं पर्यालोच्य विकम्पितुं युद्धं विहाय पलायितुं नार्हसि ॥ वक्ष्यते च ॥ २ ' शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनमिति ॥ न केवलमात्मयाथात्म्यज्ञानात् किंतु युद्धस्य स्वधर्मत्वपर्यालोचनात् युद्धादपलायनस्य स्वधर्मत्वपर्यालोचनाच्च त्वया युद्धं कर्तव्यमेव ॥ किमर्थमेवं निर्बध्यते अन्यदेव किमपि श्रेयस्साधनमुपदिश्यतां अनुतिष्ठामीति चेत् धर्म्यात् धर्मात् अनपेतात् पारत्रिकसुखहेतुर्धर्मः तज्जनकात् धारकत्वाद्धर्मो भगवान् तत्पूजारूपत्वेन तत्प्रीतिजनकात् धर्मशास्त्रादागतात् विहिततया कर्तव्यत्वेन प्राप्तात् अपराङ्मुखत्वरूपधर्मोपेतात् निवृत्तनिरायुधशरणागतादिषु शस्त्रादिप्रयोगाद्यभावादिरूपन्यायत प्रवृत्तात् युद्धात् अन्यत् श्रेयः श्रेष्ठं कर्म श्रेयस्साधनं वा क्षत्रियस्य न विद्यते ॥ हिशब्देन प्रमाणप्रसिद्धिस्सूच्यते ॥ अतः स्वधर्ममवेक्ष्य न विकंपितुमर्हसीति वा॥ ३ ' ये युध्यन्ते प्रधनेषु शूरासो ये तनुत्यजः ' ॥ इति श्रुतौ युद्धस्य श्रेयस्साधनत्वं प्रसिद्धम्॥ युद्धमेव जयद्वारा प्रजारक्षणब्राह्मणशुश्रूषादिक्षत्रियधर्मनिर्वाहकमिति तदेव क्षत्रियस्य प्रशस्यतरं नान्यत् ॥ ' क्षत्रियो हि प्रजा रक्षन् शस्त्रपाणि प्रदण्डवान् ॥ निर्जित्य परसैन्यानि क्षितिं धर्मेण पालयेत् ' ॥ इति पराशरस्मृति ॥ समोत्तमाधमैः राजा चाहूतः पालयन् प्रजाः ॥ न निवर्तेत संग्रामात् क्षात्रं धर्ममनुस्मरन् ॥ संग्रामेष्वनिवर्तित्वं प्रजानां चैव पालनम् ॥ शुश्रूषा ब्राह्मणानां च राज्ञः श्रेयस्करं परम् ॥ इति मनुस्मृतिः ॥ प्रमाणे राज्ञ उक्ते अस्त्वेवं राज्ञः त्वया तु क्षत्रियस्येति क्षत्रियसामान्यस्योच्यते ॥ तत्कथमिति चेत् ॥ अवेष्ट्यधिकरणन्यायेन विधिवाक्यस्थराजन्शब्द क्षत्रियजातिमात्रवाची ॥ अत क्षत्रियेण त्वया युद्धं कर्तव्यमेव ॥ क्षत्रियस्य श्रेयस्साधनानां यज्ञदानादीनामन्येषां विद्यमानत्वात् अन्यन्न विद्यत इति कथमुच्यते इति चेत् 'न हि निन्दा निन्द्यनीयं निन्दितुं प्रवृत्ता अपितु स्तोतव्य स्तोतुं ' इति न्यायात् ४ ' अपशवो वा अन्ये गोअश्वेभ्यः ' इत्यत्रेव स्तोतव्ययुद्धप्रशासनाय अन्यच्छ्रेयो न विद्यते इत्युच्यते ॥ युद्धेन जयः तेन धनं तेन च यागादिकं तेन च चित्तशुद्धिः तया च ज्ञानं तेन च मोक्षः इति युद्धस्य श्रेयःसाधनत्वं बोध्यम् ॥ ५ ' न च श्रेयोऽनुपश्यामी 'त्यादि ६ ' जीवितेन वा ' इत्यन्तं यदुक्तं तदयुक्तम् ॥ स्वधर्ममित्यनेन स्वधर्मत्वात्कर्तव्यतया प्राप्ते युद्धे तादृशे-

१. २. ४ २. १८. ४१ ३. तै आ. ७. १. ४. तै. सं. ५ १. ६ ५. १. ३१. ६. १. ३२.

यागे इव हिंसादिदोषविचारो न कर्तव्य इति सूच्यते । यथा यागीयपशुहिंसा 'न हिंस्यात्सर्वाभूतानि' इति श्रुत्या निषिद्धत्वादधर्मोऽपि 'अग्नीषोमीयं पशुमालभेत' इति श्रुत्या विहितत्वाद्धर्म इत्यनुष्ठीयते ॥ तथा युद्धं हिंसारूपत्वादधर्मोऽपि विहितत्वाद्धर्म इति क्षत्रियेण त्वया अनुष्ठेयमेव ॥ १ यद्यप्येते न पश्यन्ति' इत्यादिना युद्धस्य अधर्मत्वात्पापहेतुत्वाभिधानं २ 'कथं भीष्मं' इत्यादिना गुर्वादिहननप्रसक्त्या अकर्तव्यत्वाभिधानं च धर्मशास्त्रापरिज्ञानमूलकं त्वदीयम् ॥ युद्धस्य हिंसारूपत्वादधर्मस्यापि विहितत्वात्कर्तव्यत्वमस्तु धर्मत्वं कथम् । यागीयपशुहिंसावद्धर्मत्वं इत्युक्तमिति चेत् तत्रेव पृच्छामि ॥ यागीयपशुहिंसायाः अधर्मत्वेऽपि विहितत्वात्कर्तव्यत्वमस्तु धर्मत्वं कथमिति चेत् हिंसात्वे सति हि अधर्मत्वं स्यात् ॥ दृष्टान्ते यागे दार्ष्टान्तिके युद्धे च क्रियमाणायाः हिंसाया हिंसात्वमेव नास्ति ॥ कुत इति चेत् केयं हिंसा दुःखजनकव्यापारो हिंसा इति चेत् रक्षारूपस्य चिकित्सकशल्यप्रयोगादेः दुःखजनकव्यापारत्वेन हिंसात्वं स्यात् ॥ अतो न सा हिंसा ॥ प्राणवियोगानुकूलव्यापारो हिंसा इति चेत् अतादृशेषु सर्पस्वहरणनरकपीडनादिषु हिंसाशब्दप्रयोगो दृश्यते ॥ अतो न सा हिंसा ॥ किन्तु अनर्थपर्यवसितः तादात्विकदुःखजनको व्यापारो हिंसा ॥ प्रकृते च युद्धे मृतानां स्वर्गादौ कल्याणतरदेहप्राप्त्युक्त्या अनर्थपर्यवसितत्वाभावेन न युद्धे क्रियमाणहिंसाया हिंसात्वम् ॥ ३ न वा उ एतन्म्रियसे न रिष्यसि ॥ देवा इदेषि पथिभिः सुगेभिः ॥ यत्र यन्ति सुकृतो नापि दुष्कृतः ॥ तत्र त्वा देवस्सविता दधातु ॥' इति श्रुत्या यागे हिंस्यमानां पशूनां स्वर्गादौ कल्याणतरदेहप्रापकत्वावगमात् अनर्थपर्यवसितत्वाभावेन न दृष्टान्तभूतस्य अग्नीषोमीयादिपशुहिंसनस्यापि हिंसात्वम् ॥ उक्ता च युद्धे मृतानां कल्याणतरदेहप्राप्तिः ४ 'वासांसि जीर्णानि' इत्यत्र ॥ अतो धर्मत्वं युक्तम् ॥ अधर्ममपि इति अधर्मत्वमङ्गीकृत्य समाधानं कथमुक्तं इति चेत् युद्धं अज्ञदृष्ट्या अधर्मत्वेन प्रतीयमानमपि विद्वद्दृष्ट्या धर्ममेव जानीहि इत्यर्थः । अतो युक्तमुक्तम् ॥ ३१ ॥

अर्जुनः ॥ जये सति युद्धस्य श्रेयस्साधनत्वं युक्तम् ॥ पराजये कथं तत् वद ॥

१. १ ३८. २. २. ४ ३. तै. ब्रा [illegible] ४. २ २२.

**कृष्णः ॥ यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ॥**
**सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम् ॥ ३२ ॥**

**यदृच्छयेति** ॥ हे पार्थ यदृच्छया अप्रयत्नेन भगवदिच्छया वा च एव उपपन्नं प्राप्तं अपगतं आवृतं आवरणं प्रतिबन्धकं यस्मात् तत् अपावृतं तादृशं स्वर्गस्य द्वारं ईदृशं युद्धं सुखं तद्धेतुभूतं पुण्यं सुखकामना वा एषां अस्तीति सुखिनः क्षत्रियाः लभन्ते ॥ ३२ ॥

युद्धे जये सति उक्तविधया श्रेयोलाभः ॥ पराजये पारत्रिकस्वर्गादिश्रेयोलाभः । स्वर्गस्य साधनं हि युद्धं स्वर्गद्वारत्वम् अग्निष्टोमादेरप्यस्ति इति चेत् अपावृतं आवृतं आवरणं [१] प्रतिबन्धकं प्रतिबन्धकरहितं स्वर्गसाधनम् ॥ अग्निष्टोमादिना स्वर्गादिकं चिरेण प्राप्यते युद्धेन तु अचिरेण ॥ आवृतं आवरणरूपं कवाटं उद्घाटित [२] कवाटं स्वर्गस्य स्वर्गशब्दितसुखानुभवस्थानस्य प्रतीहारभूतं द्वारमिव प्राप्तिसाधनम् ॥ युद्धस्य श्रेयस्साधनत्वमुच्यते कस्यचन क्षात्रयस्य तदीये आयुषि युद्धं नैव प्रासज्जत तस्य गतिः का किं श्रेयोऽर्थं पित्रादिना येनकेनचिद्युद्धं कर्तव्यं इति चेत् न तथा किन्तु अप्रयत्नेन भगवदिच्छया युद्धमुपनतं चेत् न विहातव्यम् ॥ तव चेदं युद्धं अप्रयत्नादीश्वरेच्छयोपनतम् ॥ ईदृशं जये कीर्तिप्रतिष्ठाराज्यलाभादेः पराजये स्वर्गस्य च साधनम् ॥ अपावृतं स्वर्गद्वारं यदृच्छयैवोपनतं युद्धं न सर्वेषां क्षत्रियाणां लभ्यम् ॥ किन्तु ये सुखिनः [३] सुखहेतुपुण्यवन्तः सुखकामनावन्तो वा त एव [४] लभन्ते । सुखवन्तो लभन्त इति यथाश्रुतं तु न सम्यक् ॥ युद्धेन प्राप्यस्य सुखस्य युद्धप्रापकत्वाभावात् ॥

१. अपगतं आवरणं प्रत्यवायरूपं स्वर्गद्वारताप्रतिबन्धकं यस्मात्तत् इति केचित् ॥ २. अत्र 'न ध्यातं पदमीश्वरस्य विधिवत् संसारविच्छित्तये स्वर्गद्वारकवाटपाटनपटुर्धर्मोऽपि नोपार्जितः ॥ नारीपीनपयोधरोरुयुगळं स्वप्नेऽपि नालिङ्गितं मातुः केवलमेव यौवनवनच्छेदे कुठारा वयम् ॥' इति श्लोकोऽनुसन्धेयः ॥ ३. सुखिन एव सन्तः न तु त्वमिव शोचन्तः इति केचित् ॥ ४. अलभन्त भीष्मो हि अम्बानिमित्तमयुध्यत परशुरामेण गुरुणा ॥ गुरुजनप्रातियोद्धकयुद्धाचरणे शिष्टाचारप्रदर्शनमिदं इति केचित् ॥

ये क्षत्रिया लभन्ते ते सुखिनो भवन्तीति वा ॥ यस्मादेवं तस्माद्युद्धं ईदृशं उभयविधश्रेयस्साधनमिति वा ॥ अतः जये अपजये च श्रेयःसाधनत्वादिदं युद्धं त्वयाऽनुष्ठेयमेव ॥ अतः १ 'निहत्य धार्तराष्ट्रान्नः का प्रीतिः स्यात्' २ 'स्वजनं हि कथं हत्वा सुखिनः स्याम' इति त्वयोक्तमयुक्तम् ॥ यत् पुण्यवन्त एव क्षत्रिया लभन्ते अपावृतं स्वर्गद्वारं तत् यदृच्छयैवोपनतं चेत् तत्किमननुष्ठाय विहातुमर्हम् ॥ एतादृशं चेदवश्यमनुष्ठेयमेव ॥ ईदृशं ममोपनतं चेत् अहमवश्यमनुतिष्ठेयम् । तादृशं किं ब्रूहि इति चेत् ईदृशं क्षत्रियस्य तव युद्धं अतस्तदनुतिष्ठ ॥

क्षत्रियस्य युद्धमुभयविधश्रेयःसाधनत्वात्परमप्रशस्तमस्तु ॥ तथाऽपि प्रकृतमिदं युद्धं गर्हितत्वादकार्यमेव ॥ कुत इति चेत् ईदृशं रचितमहोपकारमहानुभावपरमपूज्यतमगुरुभीष्मद्रोणादिप्रतियोद्धृकम् अतो गर्हितम् इति चेत् ईदृशं तथाऽपि विधिविहितत्वेन धर्मत्वात् स्वर्गद्वारं ॥ यदृच्छया चोपनतं युद्धं इत्यादि पूर्ववत् ॥ विधिविहितो धर्म इति कथं 'श्येनेनाभिचरन् यजेत' इति विधिविहितश्येनयागस्य धर्मत्वं हि स्यात् इति चेत् अनिषिद्धफलोद्देश्यको धर्मः निषिद्धफलोद्देश्यकोऽधर्म इति व्यवस्था ॥ अतः अनिषिद्धस्वर्गादिफलकं युद्धं धर्मः ॥ 'न हिंस्यात्' 'न निहन्यात्' इत्यादिना निषिद्धशत्रुवधरूपफलकः श्येनयागादिरधर्मः ॥ अतो धर्मत्वात्स्वर्गद्वारमिति युक्तम् ॥ विधिविहिते श्येनयागे कथं निषेधस्यावकाशः 'विधिस्पृष्टे निषेधानवकाशः' इति हि न्यायः इति चेत् यत्र विधिः श्येनयागादौ न तत्र निषेधः ॥ यत्र शत्रुवधरूपे फले निषेधः न तत्र विधिस्पर्शः ॥ अतो निषेधविषयफलकत्वात् श्येनयागादेरधर्मत्वं ॥ युद्धस्यातादृशत्वात् धर्मत्वं ॥ अतः स्वर्गद्वारं ॥ ईदृशं कथं स्वर्गद्वारं गुरुहननादेः पापहेतुत्वात् इति चेत् तेषां आततायिपक्षपातित्वेन शस्त्रपाणित्वरूपाततायिलक्षणाक्रान्तत्वेन च आततायित्वात् आततायिवधे च दोषाभावात् ईदृशमपि स्वर्गद्वारं ॥ आततायिवधाभ्यनुज्ञानस्य आचार्यादिव्यतिरिक्तविषयत्वात् ईदृशं कथं स्वर्गद्वारं ॥ इति चेत् आचार्यादिविषयेऽपि आततायिवधाभ्यनुज्ञानस्य मनुना स्पष्टमुक्तत्वात् ईदृशमपि स्वर्गद्वारं ॥ 'गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतं ॥ आततायिनमायन्तं हन्यादेवाविचारयन् ॥ आततायिनमायान्तमपि वेदान्तपारगं ॥

१. १. ३६. २. १. ३७.

जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत् ॥ नाऽऽततायिवधे दोषो हन्तुर्भवति कश्चन ॥' इति मनुस्मृतौ ॥ आततायिवधस्यस्वजीवनरूपदृष्टप्रयोजनार्थत्वेन तद्विधायकं शास्त्रं अर्थशास्त्रं ॥ 'न हिंस्यात्' 'न निहन्यात्' इत्यादि शास्त्रं तु दृष्टप्रयोजनानपेक्षणाद्धर्मशास्त्रं ॥ यदननुष्ठाने प्रत्यवायः तद्धर्मशास्त्रं यदननुष्ठाने न सः तदर्थशास्त्रम् ॥ 'न हिंस्यात्' इत्यादिशास्त्राननुष्ठाने प्रत्यवायः ॥ आततायिनं हन्यात्' इत्यस्याननुष्ठाने न सः ॥ न हि 'न हिंस्यात्' इत्यादिशास्त्रविरोधेन वधं कुर्वन्निव जातस्य ध्रुवो मृत्युः यदा कदा वा मर्तव्यम् किमर्थं तात्कालिकजीवनाय मया अयं हन्तव्यः स्वजीवनार्थं हिंसनादपि अहिंसनं वरं इति आततायिनमहतवान् विध्युल्लङ्घनकारीति दण्ड्यते ॥ आततायिवधशास्त्रस्य उक्तरीत्या अर्थशास्त्रत्वेन दुर्बलत्वादीदृशं कथं स्वर्गद्वारम् ॥ युध्यस्वेति प्रकृते मया विधीयमानस्य युद्धस्यापि दृष्टप्रयोजनानपेक्षत्वेन प्रकृते आततायिवधशास्त्रस्यापि धर्मशास्त्रत्वात् तस्य च अनुल्लङ्घनीयत्वात् ईदृशमपि स्वर्गद्वारम् ॥ वक्ष्यते च १ 'सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ॥ ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥' इति । उभयोरपि धर्मशास्त्रत्वे कथं निर्णयः परस्परविरोधात् ॥ अत ईदृशं कथं स्वर्गद्वारम् ॥ 'न हिंस्यात्' इत्यादिकं सामान्यशास्त्रम् 'आततायिनं हन्यात्' इति तु विशेषशास्त्रम् ॥ विशेषेण सामान्यस्य बाधो निर्विवादः अतः आततायिवधशास्त्रस्यैव बलवत्त्वात् ईदृशमपि स्वर्गद्वारम् ॥ आततायिवधशास्त्रस्य अर्थशास्त्रत्वाभिप्रायेण यदुक्तम् २ 'पापमेवाश्रयेदस्मान् हत्वैतानाततायिनः ॥' इति त्वया तदयुक्तम् ॥ 'अर्थशास्त्रात्तु बलवत् धर्मशास्त्रमिति स्थितिः ॥' इति याज्ञवल्क्यवचनस्य का गतिः इति चेत् दृष्टप्रयोजनोद्देश्यकाधर्मयुद्धविषयं तद्वचनमिति न कोऽपि विरोधः ॥ अतः अपावृतस्वर्गद्वारत्वादनुष्ठेयमेव युद्धं त्वयेत्यलम् ॥ ईदृशं युद्धं ये क्षत्रियाः लभन्ते तेषां अपावृतं स्वर्गद्वारं अप्रयत्नेनैवोपनतं भवति ॥ गत्वा च स्वर्गं तत्र सुखिनो भवन्ति ॥ स्वर्गद्वारप्राप्तिहेतुत्वाद्युद्धं कर्तव्यं इति वा ॥ ३२ ॥

**अर्जुनः** ॥ अस्त्वेवं युद्धस्य करणे उभयथाऽपि श्रेयः ॥ तथाऽपि नाहं भीष्मादिभिर्योत्स्ये ॥ ३ 'न कांक्षे विजयं कृष्ण न च राज्यं सुखानि च' इत्यादिना ४ 'अपि त्रैलोक्यराज्यस्य' इत्यादिना ५ 'अवाप्य भूमावसपत्नमृद्धं राज्यं

१. २. ३८ २. १ ३६. ३. १. ३२. ४. १. ३५. ५. २. ८.

सुराणामपि चाधिपत्यम् ॥' इति च उक्तविधया जयादिसर्वश्रेयोऽनपेक्षणात् ॥ अकरणे प्रत्यवायाभावाच्च ॥ यद्यकरणे प्रत्यवाय स्यात् तर्हि तदनुष्ठेयं स्यात् वद ॥

कृष्णः ॥ अथ चेत्त्वमिमं धर्म्यं सङ्ग्रामं न करिष्यसि ॥
ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥ ३३ ॥

अथेति ॥ अथ त्वत्पक्षावलंबनेन धर्मादनपेतं धर्म्यं इमं संग्रामं युद्धं न करिष्यसि चेत् ततः तर्हि स्वधर्मं कीर्तिं च हित्वा त्यक्त्वा पापं अवाप्स्यसि ॥ ३३ ॥

अथेति पक्षान्तरम् ॥ यदि मदीयं युद्धस्य कर्तव्यत्वपक्षं विहाय अकर्तव्यत्वपक्षमभ्युपेत्य युद्धं त्यजसि तर्हि तव तेन महान् प्रत्यवायः स्यात् ॥ अथ तथाऽपि युद्धस्य ईदृशत्वेऽपि दुरभिनिवेशादकर्तव्यत्वमभ्युपेत्य 'धर्म्याद्धि युद्धात् इत्यत्रोक्तविधया धर्म्यं इदं युद्धं न करिष्यसि चेत् अथ युद्धप्रारम्भानन्तरं आरब्धं युद्धं त्यजसि इति वा ॥ अनेन यदि युद्धारम्भात्पूर्वमेव ईदृशी बुद्धिस्तवाऽऽगता स्यात् तर्हि सम्यक् स्यात् इति सूच्यते ॥ ततः तर्हि युद्धस्याकरणात् इति वा ॥ स्वधर्मं युद्धरूपं स्वधर्मफलभूतमैहिकमामुष्मिकं च सुखम् । स्वः स्वकीयः धर्मः यस्मिन् प्रतिपाद्यते तत् वेदशास्त्रादिकं च हित्वा कीर्तिं च हित्वा स्वधर्मत्यागमूलकं पापं तन्मूलकं नरकादिदुःखं च प्राप्स्यसि ॥ स्वधर्मं कीर्तिं च हित्वा पापं च प्राप्स्यसि ॥ न केवलं स्वधर्मकीर्त्योर्हानिमात्रम् ॥ किन्तु पापप्राप्तिरपि ॥ कीर्तिं हित्वा स्वधर्मं सु महान् अधर्मः 'न निवर्तेत संग्रामात्' इत्यादिना निषिद्धो युद्धान्निवृत्तिरूप तं तज्जनितं पापं च प्राप्स्यसीति वा ॥ स्वधर्मं अनेकजन्मार्जितं स्वकीयं सर्वं पुण्यं हित्वा पापं राजकृतं सर्वं पापं प्राप्स्यसि । युद्धात्परावृत्त शत्रुभिर्हन्येत ॥ परावृत्य हत स्वकीयसकलसुकृतहानिपूर्वकं राजकृतसकलपापभाक् भवति ॥ 'यस्तु भीतः परावृत्त सङ्ग्रामे हन्यते परैः । भर्तुर्यद्दुष्कृतं किंचित तत्सर्वं प्रतिपद्यते ॥ यच्चास्य सुकृतं किंचित् अमुत्रार्थमुपार्जितम् ॥ भर्ता तत्सर्वमादत्ते परावृत्तहतस्य तु ॥' इति मनुस्मृतौ ॥ 'राजा सुकृतमादत्ते हतानां विपलायिनां ॥' इति याज्ञवल्क्यस्मृतौ च ॥ [1] 'पापमेवाश्रयेद-

१. १ ३६.

स्मात्' इति । १ 'एतान्न हन्तुमिच्छामि' इति । २ 'यदि मामप्रतीकारम्' इति च यत्त्वयोक्तं तत्सर्वमयुक्तम् ॥

उक्तरूपत्वद्वचनश्रवणाद्बिभेमि कर्तव्यमादिश करिष्यामि इति चेत् ततः युद्धाकरणे उक्तरीत्या इष्टानिवृत्त्यनिष्टप्राप्त्योः प्रसङ्गात् चिकीर्षितं पापं पापहेतुभूतं युद्धान्निवृत्तिरूपं कर्म हित्वा स्वधर्मं अव पालय ॥ तेन कीर्तिं आप्स्यसि ॥ अव आप्स्यसि इति पदद्वयं तिङन्तम् ॥ स्वधर्मकीर्त्योस्तत्रक्रमेणान्वयः ॥ ३३ ॥

अर्जुनः ॥ सुखं कीर्तिं च हित्वा पापहेतुकं दुःखं प्राप्स्यसीत्युक्तम् ॥ नाहं सुखकामः कीर्तिकामो वा ॥ पापप्राप्तिस्तु कालव्यवधानेन परलोके बाधिका ॥ नेदानीमिह लोके बाधकं किञ्चिन् ॥ अतो माऽस्तु युद्धम् वद ॥

कृष्णः ॥ अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययां ॥
संभावितस्य चाकीर्तिः मरणादतिरिच्यते ॥ ३४ ॥

अकीर्तिं चेति ॥ न कीर्तिः अकीर्तिः तां च प्राप्स्यसि ॥ भूतानि प्राणिनः न विद्यते व्ययः यस्याः सा अव्यया तां अकीर्तिं ते तव कथयिष्यन्त्यपि संभावितस्य पुंसः अकीर्तिः च तु मरणात् अतिरिच्यते विशिष्यते ॥ ३४ ॥

सङ्ग्रामं न करिष्यामि चेत् अकीर्तिं च अवाप्स्यामि ॥ सा च लोकापवादरूपत्वादिदानीमेव इह लोके एव बाधिका ॥ उत्पद्यतां नामाकीर्तिः को वा तां ज्ञास्यति के वा वदिष्यन्ति इति चेत् अनामधेयकुलगोत्रस्य कीर्तिमकीर्तिं च न कोपि जानीयात् ॥ जानन्तोऽपि न वदेयुः ॥ संभावितस्य सर्वबहुमतस्य परमप्रसिद्धस्य ३ तव तामकीर्तिं भूतानि कथयिष्यन्ति ॥ कालेन सा नङ्क्ष्यति ॥ यत्र क्वापि पलायितं मां न बाधिष्यते च इति चेत् सा तु अव्यया स्थास्यति । व्ययः देशतः कालतश्च हानिः तस्या न भविष्यति ॥ संभावितस्याकीर्तिर्यदि भवति तर्हि सा सद्य एव सकलमपि भुवनं व्याप्नोति ॥ न च कालतो नश्यति ॥ अकीर्तिदूषितो देशान्तरं गतश्चेदपि तत्रत्याः सोऽयमित्यङ्गुल्या तं निर्दिश्य तदीयं अकीर्तिहेतुभूतं कुकर्म स्वैरं आविष्कुर्वन्ति ॥ तथा तत्रतत्र त्वदीयदोषमाविष्कुर्वन्तः कथा-

१. १. ३५. २. १. ४६. ३. न तु स्वतः पापिष्ठतमस्य दुर्योधनादेः इति केचित् ॥

प्रमत्तेषु स्वैरं संलपिष्यन्त्यपि१ ॥ भूतानीति सामान्यशब्दप्रयोगेण उत्तमा संलपन्ति चेत् संलपन्तु नाम ॥ न तेन हानिः ॥ अधमाः असमर्था अपि स्वैरं त्वां प्रतिसंलपेयुः ॥ तत् परमां व्यथामापादयेत् ॥ अतो वदामि अपि भूतानि कथयिष्यन्ति ते अव्ययामिति ॥ इति सूच्यते ॥ अस्तु नाम तादृशी दुष्कीर्तिः का हानिः इति चेत् संभावितस्य पुंसः अकीर्तिस्तु मरणात् अतिरिच्यते विशिष्यते ॥ मरणदुःखादप्यधिकदुःखप्रदा भवति ॥ मरणदुःखं क्षणिकं अकीर्तिदुःखं तु यावद्देहभावि ॥ युद्धे स्वजनवधादकीर्तिः युद्धान्निवृत्तौ स्वधर्मत्यागादकीर्तिः सति चैवं युद्धान्निवृत्तिः केवलमकीर्तिकरीत्युच्यते तत्कथं इति चेत् युद्धस्य विहितत्वेन धर्मत्वात्तत्र स्वजनवधादकीर्तिर्न भवति ॥ न हि स्वधर्ममनुतिष्ठतोऽकीर्तिस्संभवति ॥ युद्धे शरीरनाशसंभवेन शरीररक्षणार्थं अकीर्तिः सोढव्या न त्वकीर्तिपरिहाराय युद्धं कर्तव्यम् ॥ जयानिश्चयेन शरीरनाशसंभवात् युद्धवर्जन२वचनसद्भावाच्च इति चेत् अकीर्तिर्नरकदुःखहेतुः मरणं तु न तथा ॥ अकीर्तिदूषितः प्रेत्य परलोकं गतस्तया३ नरकेषु पात्यते ॥ अतो न मरणपरिहारायाकीर्तिः सोढव्या ॥ युद्धवर्जनवचनं तु अर्थशास्त्रत्वात् 'न निवर्तेत सङ्ग्रामा'दित्यादिधर्मशास्त्रेण बाध्यते ॥ मरणभीर्विशक्तविषयं वा ॥ मरणादतिरिच्यते इत्यनेन मरणादकीर्तिर्वरं इत्युच्यत इति कुतो न स्यात् ॥ आधिक्यं तु गुणेन अगुणेन वा संभवति ॥ अतः कथं निर्णय इति चेत् अकीर्तियुद्धमरणयोः नरकस्वर्गहेतुत्वविशेषात् प्रकरणाच्च उक्तविधया निर्णयो युक्तः ॥ 'जीवन् भद्राणि पश्यति' ॥ 'एति जीवितमानन्दो नरं वर्षशतादपि ॥' 'त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् ॥ ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥ इत्यादीनि जीवनावश्यंभाववचनान्यपि युद्धवर्जनवचनवन्नेयानि ॥ अतोऽकीर्तिपरिहाराय युद्धं कर्तव्यमेव ॥ ३४ ॥

१. चापि अपि च ॥ मन्त्रानप्यपि कथयिष्यन्ति च । इत्यपि चापिशब्दौ योजयन्ति ॥ चापीति निपातसमुदायः समुच्चये इति वा ॥ २. 'साम्ना दानेन भेदेन समस्तैरुत वा पृथक् ॥ विजेतुं प्रयतेतारीन् न युध्येत कदाचन ॥ अनित्यो विजयो यस्मात् दृश्यते युध्यमानयोः ॥ पराजयश्च सङ्ग्रामे तस्माद्युद्धं विवर्जयेत् ॥ त्रयाणामप्युपायानां पूर्वोक्तानामसम्भवे ॥ तथा युध्येत सम्पन्नो विजयेत रिपून् यथा ॥' इति भारते शान्तिपर्ववचनान्यनुसन्धेयानि ॥ ३. 'कीर्तिं स्वर्गफलामाहुः आसंसारं विपश्चितः ॥ अकीर्तिं तु निरालोकनरकोद्देशदूतिकाम् ॥ अकीर्तिर्यस्य गीयेत लोके भूतस्य कस्यचित् ॥ पतत्येवाधमान् लोकान् यावच्छब्दास्स कीर्त्यते ॥' इत्यादि वचनमनुसन्धेयम् ॥

अर्जुनः ॥ अकीर्तिर्मरणादतिरिच्यत इति त्वदुक्तं सत्यम् ॥ यदि सा स्यात् न च सा जायेत ॥ सत्यपि शौर्ये बन्धुस्नेहात्कारुण्याच्च युद्धान्निवृत्ते मयि दुष्कीर्तिवादस्यानवकाशात् ॥ प्रत्युत दयालुत्वान्निवृत्तोऽयं युद्धादिति महती कीर्तिरेव स्यात् ॥ मूढा मां त्वयान्निन्दन्ति चेत् निन्दन्तु ॥ ज्ञातमदीयपराक्रमा भीष्मादयस्तु मां स्तुवीरन्नेव वद ॥

कृष्णः ॥ भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः ॥
येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ॥ ३५ ॥

भयादिति ॥ येषां त्वं बहुमतः भूत्वा आसीः महारथाः त एव त्वां रणात् युद्धात् भयात् उपरतं मंस्यन्ते ज्ञास्यन्ति ॥ ततः लघोः भावः लाघवं तत् यास्यसि प्राप्स्यसि ॥ ३५ ॥

येषां त्वं पूर्वं बहुमतोऽभू[१] बहुमानविषयस्सन्नासीः ते[२] भीष्मद्रोणकर्णादयो महारथा एव त्वां रणात् भयादुपरतं मंस्यन्ते ॥ युद्धादुपरतो भूत्वा लाघवं अल्पतां अल्पोऽयं गृह्णीत प्रहरत संहरत चैनं इत्यवमतिविषयतां प्राप्स्यसि ॥ महारथाः त्वां रणात् भयादुपरतं मंस्यन्ते ॥ येषां त्वं बहुमत आसीः तेषामेव पुरतो लाघवं यास्यसि इति वा ॥ अकीर्तिः पारोक्षिकी लघुकृतिरापरोक्षिकी इति भेदः ॥ इदानीं युद्धादुपरमे एवमेव मन्येरन् ॥ यदि युद्धोद्यमात्पूर्वमेव ईदृशी बुद्धिस्तवाऽऽगता स्यात् तदा त्वदुक्तरीत्या मन्येरन् ॥ अत असह्या दुष्कीर्तिः स्यादेव ॥ तत्परिहाराय युद्धं कर्तव्यमेव ॥ ३५ ॥

अर्जुनः ॥ भीष्मादयो रणात् भयात् उपरतं मत्वा निन्देयुरित्युक्तम् ॥ निन्दन्ति चेत् निन्दन्तु नाम ॥ सह्यैव तैः कृतमहोपकारैः क्रियमाणा निन्दा ॥ हितानुध्यानपूर्वकत्वात् ॥ सहन्ते हि भर्त्रा पित्रा गुरुणा स्वामिना च भृशमाकुष्टा निन्दिता प्रहृताश्च भार्यापुत्रच्छात्रभृत्या तमाक्रोशं तां च निन्दां तं च प्रहारं लोके ॥ अतस्तत्परिहाराय युद्धं कर्तव्यमिति न युक्तम् वद ॥

१. बहुभिः शौर्यादिभिर्गुणैर्युक्त इति मतः ज्ञातः इति वा ॥ २. भीष्मादीनां तत्त्ववित्त्वेन तथा मननासम्भवात् कर्णादीनां ग्रहणम् ॥

**कृष्णः ॥ अवाच्यवादांश्च बहून् वदिष्यन्ति तवाहिताः ॥**
**निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम् ॥ ३६ ॥**

**अवाच्येति** ॥ न हिताः अहिताः शत्रवः तव समर्थस्य भावः सामर्थ्यं निन्दन्तः सन्तः तव विषये बहून् वक्तुं अर्हाः वाच्याः न वाच्याः अवाच्याः ते च ते वादाश्च अवाच्यवादाः तान् वदिष्यन्ति च ॥ ततः दुःखतरं अधिकदुःखं किन्नु ॥ ३६ ॥

संग्रामं न करिष्यसि चेत् दुर्योधनादयः अहिताः शत्रवश्च तव सामर्थ्यं निवातकवचादियुद्धे महादेवयुद्धे उत्तरगोग्रहणयुद्धे च प्रसिद्धं निन्दन्तः देवैर्दत्तस्य देवदत्तस्य शङ्खस्य महिम्ना निवातकवचादियुद्धे अस्य जयः ॥ युद्धकौशलमस्य दर्शयितायै प्रदर्शयितुं किरातरूपो भगवान् पिनाकपाणिः लीलायुद्धमकृत ॥ तेन तस्मिन् युद्धे अस्य प्रसिद्धिः ॥ उत्तरगोग्रहणे अज्ञातवासः सावशेष गन्तव्यं भूयोऽपि पाण्डवैस्त्रयोदशवर्षाणि इति प्रख्यापयितुं युद्धाभिनयः कृतः ॥ अतस्तस्मिन् युद्धे अस्य जयः ॥ इति हेत्वन्तरारोपेण दूषयन्तः तव विषये बहूनि अवाच्यानि निन्दावचनानि वदिष्यन्ति ॥ तस्मात् [1] दुःखतरं किन्नु ॥ निन्दन्तः स्तवसामर्थ्यं इति छेदः ॥ स्तुतियोग्यत्वं निन्दन्तः इत्यर्थः ॥ अवाच्यवचनानि तव विषये वदिष्यन्तीति वा ॥ अहिता इत्यनेन यदि भीष्मद्रोणकृपशल्यादयो वदेयुः तर्हि तद्गौरवात्सोढुं शक्यं पराक्रमहीनैः आततायिभिः उक्तानवाच्यवादान् कथं सहेथाः इति सूच्यते ॥ तवेत्यनेन हीनस्य समाधिस्थस्य च अवाच्यवादश्रवणं न दुःखाय तद् तु दुःखप्रदं इति सूच्यते ॥ परोक्षदूषणं दुःखं अपरोक्षदूषणं दुःखतरम् । न ततोऽधिकं किमपि ॥ अतस्तत्परिहाराय युद्धं कर्तव्यम् ॥ अवाच्यवादश्रवणदुःखमपि सहिष्ये नाहं योत्स्ये इति चेन्मैवं ब्रूहि ॥ त्वमिदानीं युद्धान्निवृत्तोऽपि गाण्डीवसामर्थ्यादे प्रत्यक्षदूषणश्रवणजनितदुःखं असहमानः स्वयमेव युद्धं करिष्यसि ॥ तदा नायं स्वधर्मबुध्या युद्धे प्रावर्तिष्ट ॥ किंतु दुर्योधनादिभिः दूषणवचनैः युद्धे प्रवर्तितः धिक् पार्थस्य धार्मिकतां इति त्वां प्रति, उपादिश्य

---

१. गुणशब्दादेव तरप् ॥ न जात्यादिशब्दात् ॥ न हि घटतरं पटतरमित्यादिप्रयोगो दृश्यते ॥ इति चेत् दुःखशब्दः सादृश्यात्प्रतिकूलवाचकः ॥ दृश्यते च प्रतिकूलतरमित्यादिप्रयोगः ॥

युद्धे प्रवर्तयितुं प्रवृत्तोऽपि नायं तथा कर्तुमशक्नोत ॥ धिक् कृष्णस्योपदेशचातुरीं इति मां प्रति च स्वैरं संलपेयुः ॥ अतो मद्वचनात् धर्मबुद्ध्या स्वयमेव युद्धे प्रवर्तस्व ॥ किमहं गाण्डीवसामर्थ्यादेः प्रत्यक्षदूषणं न सहेय इति चेत् गाण्डीवसामर्थ्यादिदूषणे सर्वेभ्यः पूज्येभ्यः पूज्यतमं पितृसमं १ युधिष्ठिरमपि हन्तुं त्वमुद्युञ्जीथाः किंपुनः कर्णदुर्योधनादीन् ॥ अस्तुनामेदं मनसि तादृशे समये त्वामहं स्मारयिष्यामि ॥

अहिताः निन्दन्तु नाम हितास्तु पापभीरुरयं धर्मबुद्ध्या युद्धान्निवृत्त इति स्तुवीरन् ॥ तच्च सुखाय भवति इति चेन् तव आहिताः इति छेदः ॥ तव आः हिताः इति छेदः ॥ संग्रामं न करिष्यसि चेत् तव अत्यन्तं हिताः तव सामर्थ्ये सत्यपि सामर्थ्ये निवृत्तोऽयं युद्धात् धिगस्य सामर्थ्यमिति निन्दन्त अवाच्यवादान् वदिष्यन्ति । तदतीव दुःखं आः महती पीडा खलु ॥ आ इति कोपसूचको वा ॥ अतस्तत्परिहाराय युद्धं कर्तव्यम् ॥ ३६ ॥

अर्जुनः ॥ करणे ऐहिकामुष्मिकसुखप्राप्तिसद्भावात् अकरणे ऐहिकामुष्मिकमहानर्थप्राप्तिसद्भावाच्च कर्तव्यमेव युद्धमिति महता प्रबन्धेनाभिहितं त्वया ॥ नेदं मोहावेशपरवशस्य मम बुद्धिमारोहति ॥ प्रत्युत विपरीतमेव भासते ॥ अलमदृष्टपारत्रिकसुखसद्भावासद्भावविचारेण ॥ ऐहिकसुखानुभवाय करणीयमेव युद्धमित्युक्तं मया इति चेत् जयानिश्चयात् सत्यपि जयनिश्चये तस्य पराजयादप्यधिकदुःखप्रदत्वात् न युद्धमैहिकसुखार्थं करणीयमिति २'न चैतद्विद्मः' ३'हत्वार्थकामांस्तु गुरूनिहैव भुञ्जीय भोगान् रुधिरप्रदिग्धान्' ४ ॥ 'यानेव हत्वा न जिजीविषाम' इत्यादिभिरभिहितमेव मया ॥ ५'स्वर्गद्वारमपावृतमिति' पारत्रिकसुखानुभवार्थं युद्धं करणीयमित्युक्तमिति चेत् युद्धे मृतस्यैव स्वर्गः ॥ पराजितस्यैव मृतिः ॥ न च पराजयनिश्चयः ॥ 'न चैतद्विद्मः कतरन्नो गरीयो यद्वा जयेम यदि

१. युधिष्ठिरस्य गाण्डीवादिनिन्दावचनम् पुनरर्जुनस्य युधिष्ठिरवधोद्योगश्च कर्णपर्वणि ॥ ‘धिग्गाण्डिवं धिक च ते बाहुवीर्यं असङ्ख्येयान् बाणगणांश्च धिक ते ।। धिक् ते केतुं केसरिणः सुतस्य कृशानुदत्तं च रथं च धिक ते ॥ युधिष्ठिरेणैव मुक्तः किरीटी श्वेतवाहन ॥ असिं जग्राह संक्रुद्धो जिघांसुर्भरतर्षभ' ॥ इति ॥ (६९. ७०) ॥ २. २. ६. ॥ ३. २. ५. ॥ ४. २. ६. ॥ ५. २. ३२. ॥

वा नो जयेयुः॥' इति पराजयनिश्चयाभावोऽपि मयोक्तः ॥ अत ऐहिकसुखार्थं पारत्रिकसुखार्थं वा न युद्धं करणीयं इति भाति ॥ वद ॥

कृष्णः ॥ हतो वा [1]प्राप्स्यसे स्वर्गं जित्वा वा भोक्ष्यसे महीम् ॥
तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः ॥ ३७ ॥

हत इति ॥ हे कौन्तेय अर्जुन त्वं हतः सन स्वर्गं वा प्राप्स्यसे ॥ जित्वा महीं स्वर्गं वा च वा भोक्ष्यसे ॥ तस्मात युद्धाय युद्धं कर्तुं कृतः निश्चयः येन सः कृतनिश्चयः सन उत्तिष्ठ ॥ ३७ ॥

मास्तु जयनिश्चय ॥ मा चास्तु पराजयनिश्चयः ॥ तथाऽपि युद्धं कर्तव्यमेव ॥ जयापजययोरन्यतरस्य निश्चितत्वात ॥ जये अपजये च उक्तरीत्या महतः श्रेयसो लाभसद्भावात् ॥ कथमिति चेत् रणे शत्रून् जेष्यसि तैर्हन्यसे वा ॥ हतस्सन् स्वर्गं वा प्राप्स्यसे ॥ जित्वा महीं वा भोक्ष्यसे ॥ वाशब्दौ विकल्पार्थौ ॥ जये साम्राज्यं अपजये स्वाराज्यमित्युक्तं भवति ॥ न च तद्युक्तम ॥ जयापजययोर्मध्ये जय उत्कृष्टः अपजयस्त्वपकृष्टः ॥ उत्कृष्टफलेन अपकृष्टफलादुत्कृष्टेन भवितव्यं ॥ न हि अपकृष्टापजयफलात् स्वाराज्यात् उत्कृष्टजयफलं भूमिराज्यं उत्कृष्टमिति वक्तुं शक्यम ॥ किंच शत्रून् जेतुं शक्तेनापि स्वर्गं कामयमानेन शत्रून अजित्वा तैर्हतेन भवितव्यमित्यापद्यते इति चेत् एको वाशब्दो विकल्पार्थे ॥ द्वितीयस्तु चशब्दार्थे ॥ जित्वा महीं स्वर्गं च भोक्ष्यसे इत्यर्थः ॥ 'ये युध्यन्ते प्रधनेषु शूरासो ये तनुत्यजः' इति श्रुतौ अपजयस्येव जयस्यापि स्वर्गप्राप्तिहेतुत्वोक्तेः ॥ अपजये स्वर्गः जये स्वर्गो मही चेत्युभयं इति, अपजये स्वर्ग [2]प्राप्तिमात्रम ॥ जये स्वर्गं प्राप्य तत्र विलक्षण [3]भोगानुभवोऽपि न केवलं तत्र ॥ महीं प्राप्य तत्र यावज्जीवं ऐहिकानिषिद्धसकलभोगानुभवोऽपि इति च अपकृष्टापजयफलादुत्कृष्टजयफलस्य उत्कर्षो बोध्यः ॥ जयेन महीं प्राप्य ततः स्वर्गं प्राप्नुवन द्रव्यैकसाध्ययागदानधर्मादिसाधनानुष्ठान-

१. प्राप्स्यसि इति पाठान्तरम् ॥ २. अत एव तत्र प्राप्स्यसे इत्युक्तम् ॥ ३. अत एव तत्र भोक्ष्यसे इत्युक्तम् ॥

प्रजापालनरूपस्याऽन्नप्रैष्कल्यात् मोक्षस्वर्गसुखप्रौष्कल्यमिति जयस्यापजयादुत्कर्षसिद्धिः ॥ प्रवीरतमानां तेषां जयस्य तद्धननमन्तरेणानुपपद्यमानतया जित्वेत्यस्य हननपर्यन्तपर्यवसायित्वेन कथं जित्वा स्वर्गं भोक्ष्यसे इत्युच्यते ॥ तद्धननस्य पापहेतुत्वेन नरकसाधनत्वात् इति चेत् युद्धस्य विहितधर्मत्वेन तत्र तद्धननस्य न पापहेतुत्वम् ॥ प्रत्युत पुण्यहेतुत्वमेव ॥ किंच आततायिनां तेषां वधे न कोऽपि दोषः ॥ आततायिवधाभ्यनुज्ञानस्य आचार्यादिविषयेऽपि प्रवृत्तिरुपपादिता हि मया 'यदृच्छया चोपपन्न' मित्यत्र ॥ ऐहिकसुखानपेक्षायाः आमुष्मिकस्वर्गादिसुखानपेक्षायाश्च मया स्पष्टमुक्तत्वेन तथा निरपेक्षं मां प्रति 'हतश्चेत् स्वर्गं जितवांश्चेत् महीं स्वर्गं च प्राप्स्यसि' इति वचनमनुचितम् ॥ विरक्तं प्रति कामिनीभोगसुखोपदेशवत् इति चेत् नाहमनपेक्षणीयानपेक्षितोपदेशकारी ॥ किंतु अपेक्षणीयं अपेक्षितं चैव मयोपदिश्यते ॥ किं स्वर्गो भूमिश्चेत्युभयं ममापेक्षितं इति चेत् स्वर्गशब्देन त्रिदिवापरपर्यायः स्वर्ग एव फलत्वेन मया नोच्यते । वक्ष्यते च तत्सुखस्य नाशशिरस्कत्वेन हेयत्वं मया [1] 'क्षीणे पुण्ये मर्त्यलोकं विशन्ती' ति ॥ किंतु मोक्षसुखमपि ॥ 'यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् ॥ अभिलाषोपनीतं च सुखं स्वर्गपदास्पदम् ॥' इति स्मरन्ति ॥ वैकुण्ठादिलोकोऽपीति वा ॥ स्वतन्त्रेण रमणात्मकेन च भगवताऽधिष्ठितत्वात् वैकुण्ठादिलोकः स्वर्गः ॥ युद्धे जयेन भूमिराज्यं प्राप्य तत्र यागदानधर्मप्रजापालनादीन् वक्ष्यमाणनिवृत्तिकर्मतया कुर्वतस्ते अपेक्षणीयस्य त्वदपेक्षितस्य मोक्षसुखस्य प्राप्तिरपि भविष्यति इत्युक्तम् ॥ न त्वैहिकसुखं स्वर्गसुखं च भविष्यतीत्येव मयोक्तम् ॥ यद्येवं तर्हि उभयं कुत उच्यते मोक्षं इत्येवोच्यतां इति चेत् अस्य वचनस्य 'स्वर्गकामो यजेत' इत्यादिश्रुत्यनुसारित्वात् तत्र स्वर्गपदेन उभयोरपि प्रतिपादनात् अत्राप्युभयोः प्रतिपादनं ॥ श्रुतावेव पृच्छामि किमुभयप्रतिपादकं स्वर्गपदं प्रयुज्य उभयोः प्रतिपादनेन एकमेव एकवाचकपदं[2] प्रयुज्य प्रतिपाद्यतां इति इति चेत् न केवलं त्वादृशान् विरक्तान् मुमुक्षून् प्रत्येव श्रुत्या गीतया चोपदेशः क्रियते ॥

१. ९. २१. ॥ २. अत एव 'सत्रं स्वर्गाय लोकाय सहस्रसममासत' ॥ (भाग. १. १.) इत्यादिकं संगच्छते ॥ कथमन्यथा शौनकादयः ऐहिकं सुखं स्वर्गसुखं च तृणाय मन्यमानाः नश्वरस्वर्गाय सहस्रवार्षिकं सत्रमासीरन् ॥ व्याख्यातं च तत्र व्याख्यानभिरेवम् ॥

किन्तु विरक्तान् मुमुक्षून् अविरक्तान् विषयिणश्च प्रति ॥ तत्र अविरक्तान् विषयिणः अमुमुक्षून् नास्तिकान् प्रति तदनुभूयमानसुखापेक्षया अतिशयितस्य तज्जातीयस्य स्वर्गसुखस्य प्रतिपादनेन तानास्तिकीकृत्य प्रवृत्तिकर्माणि प्रवर्तयितुं विरक्तान् मुमुक्षून् आस्तिकान् प्रति सर्वसुखविलक्षणमोक्षसुखप्रतिपादनेन तत्साधननिवृत्तिकर्मणि प्रवर्तयितुं च उपदेशः कार्यः ॥ अतः उभयवाचकं पदं प्रयुज्य अधिकारिभेदेनोपदेशः क्रियते ॥ अतस्त्वं युद्धे जये पराजये वा मोक्षसुखं भोक्ष्यसे १ इत्येव मयोक्तमिति गृहाण ॥ जये तस्मिन्नेव जन्मनि मोक्षसाधनानुष्ठानम् ॥ पराजये तु जन्मान्तरे इत्यादिकमूह्यम् ॥ तुल्यन्यायेन भीष्मादीनामप्येवमेव उभयथाऽपि श्रेयोलाभसंभवात् त्वया स्वार्थं परार्थं च युद्धं कर्तव्यं इत्युक्तं भवति ॥ तस्मात् उभयथाऽपि श्रेयोलाभहेतुत्वात् त्वं जयपराजयतत्फलसन्देहेऽपि जये पराजयेऽपि फलनैयत्येन युद्धं कर्तव्यमेवेति जेष्यामि शत्रून् मरिष्यामि वा इति च मनसि निश्चयं कृत्वा युद्धसन्नद्धो भव ॥ विशुद्धक्षेत्रे महापुरुषादुद्भूतस्य तव इदमेव युक्तम् ॥ ३७ ॥

अर्जुनः ॥ उक्तास्त्वया बह्व्यो युक्तयः तथाऽपि न ताः मम बुद्धौ प्रतिष्ठां लभंते ॥ मोहावेशपरवशत्वात् ॥ अतः त्वं एवं युध्यस्व एवमनुष्ठितेन युद्धेन पापं नावाप्स्यसीति मुखतो विस्पष्टं ब्रूहि ॥ अन्यथा पापभीरुरहं कथं गुरुभिर्युद्धमभ्युपगच्छेयम् ॥ वद ॥ उक्तं हि मया ॥ २ 'कार्पण्यदोषोपहतस्वभावः पृच्छामि त्वां धर्मसंमूढचेताः ॥' इति ॥ किंच युद्धं मुमुक्षोर्मोक्षसाधनं इत्युक्तम् ॥ येन प्रकारेण कृतं चेन्मोक्षाय भवति तमपि प्रकारं ब्रूहि ॥

कृष्णः ॥ सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।
ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥ ३८ ॥

सुखेति ॥ सुखं च दुःखं च सुखदुःखे समे कृत्वा लाभश्च न लाभः अलाभः अलाभश्च लाभालाभौ जयश्च न जयः अजयः अजयश्च जयाजयौ तौ च समौ कृत्वा ततः युद्धाय युद्धं कर्तुं युज्यस्व प्रयतस्व ॥ ततः तादृशात् युद्धात् पापं न. अवाप्स्यसि ॥ एवमिति पाठे एवं कृतेन युद्धेन पापं नावाप्स्यसि ॥ ३८ ॥

---

१. ऐहिकसुखस्वर्गसुखयोः प्राप्तिरानुषङ्गिकी ॥ निवृत्तिकर्मण्यपि आनुषङ्गिकं फलमस्त्येवेति स्पष्टमुपपादयिष्यते ॥ २. २. ७. ॥

जयापजयौ समौ कृत्वा तत्फलभूतौ लाभालाभौ समौ कृत्वा तत्फलभूते सुखदुःखे समे कृत्वा अनुपादेयतया दुःखतद्धेत्वलाभतद्धेत्वपजयैः सुखतद्धेतुलाभतद्धेतुजयान् समान्मत्वा सुखादिषु रागं दुःखादिषु द्वेषं चाकृत्वा तत्कृतहर्षशोकरहितोऽपि भूत्वा स्वधर्मत्वात् भगवत्पूजारूपं च मत्वा, १ 'समदुःखसुखं धीरं' इत्यत्रोक्तरीत्या वैषयिकसुखमेवात्र ग्राह्यम् ॥ तत्र दुःखस्यैव जयादीनां प्रथममुपादानात् तत्र दुःखसमं सुखं मत्वा इत्यर्थवत् अत्र जयादिसमान् अपजयादीन्मत्वा जयादिवदजयादीनपि उपादेयान्मत्वा इत्यर्थः स्यात् इति चेत् भोगैकनाश्यप्रारब्धकर्मफलानुभवरूपत्वेन प्रतिकलं भगवत्स्मरणहेतुत्वेन च २ अपजयादीनामप्युपादेयतासूचनार्थं तस्याप्यर्थस्य विवक्षितत्वादेवमुक्तम् ॥ कथं जयापजयादीनां समीकरणं कर्तुं शक्यं इति चेत् जयापजयादीनां भगवदधीनतामनुसन्दधानेन समीकरणं कर्तुं शक्यम्॥ कथमिदं लभ्यते इति चेत् समे मा लक्ष्मी तया सहित समः लक्ष्मीपतिर्हरिः तस्मिन् कृत्वा समं ब्रह्म वक्ष्यते च ॥ ३ 'निर्दोषं हि समं ब्रह्मे'ति ॥ तस्मिन् समे ब्रह्मणि कृत्वा इति वा ॥ जयापजयादीनां भगवदधीनतां मत्वा विहितमनुष्ठीयमानं कर्म तत्राधाय इत्यर्थविवक्षणादिदं लभ्यते ॥ एतदर्थविवक्षा कथं ज्ञायते इति चेत् समत्वेन विशेषितानि त्रीणि द्वंद्वानि ॥ तत्र द्वे पुल्लिङ्गनिर्दिष्टे एकं नपुंसकलिंगनिर्दिष्टं ॥ एकस्यापेक्षणात् द्वयोरपेक्षणस्य न्याय्यत्वात् पुल्लिंगनिर्दिष्टद्विकानुरोधेन समशब्दे पुल्लिंगनिर्देशेन समौ इति वक्तव्यम् ॥ तथाऽनुक्त्वा एकस्यानुरोधेन समे इत्युक्तम् ॥ तेन ज्ञायते समे इत्यस्य समर्प्यंततामाश्रित्य इदमर्थान्तरं विवक्षितमिति ॥ ततः विवेकेन जयापजयादीनां समीकरणानंतरं युद्धं कर्तुं युज्यस्व प्रयतस्व ॥ ४ एवं सति एवं युद्धकरणे पापं पापफलं दुःखं च नावाप्स्यसि ॥ ५ नावाप्स्यस्येव ॥ युद्धस्य विहितधर्मत्वेन विहितधर्मानुष्ठानस्य पापाहेतुत्वेन प्रत्युत पुण्यहेतुत्वेन च पापं तेन च दुःखं नावाप्स्यसि ॥ किन्तु पुण्यं तेन च सुखमेव अवाप्स्यसि ॥ युद्धाय युज्यस्व ततः युद्धादिति वा ॥ ततः सव्यसाची धनंजयः इति प्रसिद्धस्त्वं युद्धाय युज्यस्व इति वा ॥ ना एव इति च्छेदः ॥ ततः समीकरणसंपादनानन्तरं ना पुमान् सन्

१. २. १५. २. 'विपदः संतु नश्शश्वत् तत्रतत्र जगत्पते । भवतो दर्शनं यत्स्यादपुनर्भवदर्शनम् ।' इति भागवते १ स्कं. ८ अध्याये ॥ अन्यत्र च ॥ 'यस्यानुग्रहमिच्छामि तस्य वित्तं हराम्यहम् ॥' इति ॥ ३. ५. १९. ॥ ४. एवमिति पाठे ॥ ५. एवेति पाठे ॥

पुंधर्मे धैर्यमाश्रितः सन् युद्धाय युज्यस्व ॥ ततः अकामनया युद्धकरणात् पातीति पः न विद्यते पः यस्य सः अप पश्चासौ अपश्च पापः स्वयमीश्वरः ईश्वरान्तररहितः भगवान् तं पापं अवाप्स्यस्येव ॥ पातीतिपा सर्वजगन्माता लक्ष्मीः तां पातीति पापः लक्ष्मीपतिर्हरिः तं अवाप्स्यस्येव ॥ इति वा ॥ वक्ष्यते च ॥ १'युध्य च ॥ 'मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयः ॥' इति ॥ २'मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः ॥ निर्वैरः सर्वभूतेषु यस्स मामेति पाण्डव' ॥ इति च ॥ अथाप्यकरणे किं स्यादिति चेत् अयुद्धं युद्धाभावः तस्मै युद्धमकर्तुं न युज्यस्व ॥ ततः युद्धाकरणात् पापं आप्स्यस्येव ॥ मुमुक्षुणा त्वया अकामनया भगवत्सेवारूपमिदमिति युद्धमनुष्ठेयम् ॥ तथाऽनुष्ठितेन तेन ज्ञानद्वारा मोक्षमाप्नुयाः ॥ पापभीरुरहं कथं गुरुभिर्युध्येय इति चेत् गुरुभिर्युद्धे पापमवश्यं स्यादिति हि शङ्क्यते ॥ तत्र किं प्रमाणम् ॥ न तावत्प्रत्यक्षादिकम् ॥ अतीन्द्रियत्वात् ॥ अपितु धर्मशास्त्रवचनं प्रमाणमिति वाच्यम् ॥ तस्याप्यवश्यादरणीयत्वे अनुल्लङ्घनीयत्वे च को हेतुः इति चेत् भगवदाज्ञारूपत्वमेव हेतुरिति वाच्यम् ॥ यस्याज्ञारूपं धर्मशास्त्रमिति तदुल्लङ्घनाद्बिभेषि स एव ह्यहं गुरुभिर्युद्धं कुर्विति स्वयं ब्रवीमि ॥ परोक्षवचनोल्लङ्घनाद्बिभ्यत् त्वं न कुतोऽपरोक्षवचनोल्लङ्घनाद्बिभेषि॥ धर्मशास्त्रवचनस्येव अस्यापि मद्वचनस्य अनुष्ठाने पापं नावाप्स्यसि ॥ प्रत्युत तस्येव अस्याप्युल्लङ्घन एव पापमवाप्स्यसि ॥ परोक्षापरोक्षवचनयोर्विरोधात् कथं निर्णय इति चेत् परोक्षवचनं सामान्यविषयम् अपरोक्षवचनन्तु विशेषविषयं अतः अपरोक्षवचन विषयभिन्नविषय एव परोक्षवचनस्य प्रवृत्तिः ॥ अतः सामान्यविशेषभावेन निर्णयः ॥ परोक्षवचनापेक्षया प्रत्यक्षवचनस्य प्राबल्यानुभवेन तदुल्लङ्घनएव प्रभोः कोपादयदर्शनानुभवेन च मदीयपरोक्षवचनरूपश्रुतिस्मृतीनिहासधर्मशास्त्राद्यपेक्षया मदीयापरोक्षवचनस्यैव प्राबल्यात् तदनुरोधेन त्वया युद्धं कर्तव्यमेव ॥

३ 'हतो वा प्राप्स्यसे स्वर्गं' इति युद्धस्य स्वर्गार्थं कर्तव्यतोक्त्या काम्यत्वमापद्यते ॥ तेन च नित्यत्वं व्याहन्यते ॥ तेन चाकरणे पापहेतुत्वं विहन्यते ॥ ४'जित्वा वा भोक्ष्यसे महीं' इति राज्यार्थं कर्तव्यतोक्त्या दृष्टप्रयोजनापेक्षत्वादर्थशास्त्रत्वमापद्यते ॥ तेन च धर्मशास्त्रविहितधर्मत्वं विहन्यते ॥ अकरणे पा

१. ८. ७. ॥ २. ११ ५५. ॥ ३. २. ३७. ॥ ४. २. ३७.

पहेतुत्वस्य धर्मशास्त्रविहितधर्मत्वस्य चाभावात् ॥ १'अथचे'दित्यत्र स्वधर्मं हित्वा पापमवाप्स्यसीत्युक्तमयुक्तमिति चेत् एवं युद्धं कुर्वन् पापं न प्राप्स्यसि ॥ कामनया करणे गुर्वादिहननमूलकं पापं अकरणं नित्यकर्मानुष्ठानमूलकं च पापं स्यात् ॥ अकामनया करणे तु तदुभयमपि न ॥ अतोऽकामनया युद्धं कुरु ॥ अकामनया युद्धकरणस्यैव मदभिप्रेतत्वात् ना'थचे'दितिश्लोकोक्तार्थविरोधः ॥ तर्हि हतो वेति कुत प्रयोजनं प्रदर्शितमिति चेत् न स्वर्गादिरूपकाम्यकर्मप्रयोजनं प्रदर्शितम् ॥ किंतु निवृत्तिधर्मज्ञानमोक्षरूपाकाम्यकर्मप्रयोजनमेव प्रदर्शितम् ॥ काम्यकर्मप्रयोजनप्रदर्शनार्थं स्वर्गपदप्रयोग इत्युक्तं हि त्वयेति चेत् विषयिणामाकर्षणाय निवृत्तिकर्मणामानुषङ्गिकफलप्रदर्शनाय च तथोक्तमिति न कोऽपि विरोधः ॥ पापं नावाप्स्यसीत्युच्यते ॥ पापशब्देन किं गुर्वादिहननसंभावितपापं गृह्यते ॥ उत कृतं पापम् ॥ आहोस्वित् करिष्यमाणम् ॥ नाद्यः ॥ युद्धस्य अधर्मत्वेऽपि स्वधर्मत्वेन कर्तव्यतोक्तथा उक्तप्रायत्वात् ॥ न द्वितीयः ॥ नावाप्स्यसीति भविष्यदर्थकप्रयोगानुपपत्ते ॥ न च तृतीय ॥ करिष्यमाणे प्रायश्चित्तायोगात् ॥ प्रायश्चित्तं हि सुखदुःखादिसमीकरणम् ॥ करिष्यमाणपापनाशश्लेषे तात्पर्यमिति चेत् ब्रह्मज्ञानव्यतिरिक्तस्य कस्यापि न तादृशी शक्तिः ॥ अतः कथमिदमिति चेत् एवं स्वकर्म कुर्वाणः पापं मुमुक्षोरनिष्टत्वाविशेषेण मोक्षप्रतिबन्धकपापशब्दितपुण्यपापरूपसकलसांसारिककर्मफलभूतं संसारबन्धं नावाप्स्यसीत्यर्थः ॥ न केवलं संसारानवाप्तिमात्रं किन्तु २'सोमृतत्वाय कल्पते' इत्युक्तरीत्या संसारबन्धान्मोक्षावाप्तिरपि भविष्यति ॥ अत सर्वथा युद्धं कर्तव्यमेवेत्यलम् ॥ ३८ ॥

अर्जुनः ॥ ३'स्वधर्ममपि चावेक्ष्ये'त्यादिना 'नैवं पापमवाप्स्यसी' त्यन्तेन यत्त्वयाऽभिहितं तदखिलं श्रुतवतो मम युद्धं कर्तव्यमित्येव भाति ॥ अथापि मदीया इमे भीष्मद्रोणादयो युद्धे नियतं मरिष्यन्तीति शोकमोहावेशपरवशस्य मे न युद्धे प्रवृत्तिरुदेति ॥ आत्मा नित्यः देहस्तु सर्वथा नश्वर देहनाशेऽपि देहान्तरप्राप्तिर्नियता ॥ अभिमानत्यागेन शोकपरिहारः कर्तुं शक्यः ॥ युद्धं तु स्वधर्मः अतः जये पराजये च श्रेयःप्रदं अकामनया रागद्वेषादिराहित्येन भगवत्प्रीत्यर्थं तस्य करणे न पापप्राप्तिर्भवति ॥ किन्तु ज्ञानद्वारा मोक्षप्राप्तिर्भवति ॥ इत्यादिकं तत्वजातं मया

१. २. ३३. ॥ २. २. १५. ॥ ३. २. ३१.

सम्यगभिहितं श्रुतवतस्ते कुत एवं शोको मोहो वा इति चेत् पापरूपज्ञानप्रतिबन्धकात् न त्वदुपदेशो मम बुद्धिमध्यारोहति ॥ उपायेन बुद्धिं मम शुद्धां कृत्वा तां बुद्धिमध्यारोहय ॥

कृष्णः ॥ एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु ।
बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि ॥ ३९ ॥

एषेति ॥ हे पार्थ ते तुभ्यं साङ्ख्ये ज्ञानविषये एषा बुध्यतेऽनयेति बुद्धिः वाक् ज्ञानं वा अभिहिता उक्ता ॥ योगे तु इमां वक्ष्यमाणां बुद्धिं शृणु ॥ यया बुद्ध्या युक्तः सन् कर्मैव बन्धः कर्मणा बन्धो वा कर्मबन्धः तं प्र निश्शेषं हास्यसि यक्ष्यसि ॥ ३९ ॥

हे पार्थ सांख्ये एषा बुद्धिस्तुभ्यमभिहिता ॥ योगे तु इमां बुद्धिं शृणु ॥ ख्यातिः ज्ञानं समीचीना ख्यातिः संख्या ॥ शुद्धात्मतत्त्वविज्ञानं सांख्यमित्यभिधीयते ॥ इत्युक्तं तत्त्वज्ञानं तस्मिन् विषये तद्विषयभूतजीवेश्वरतत्त्वविषये तत्प्रतिपादनार्थमिति यावत् ॥ ज्ञाने विषये तदुत्पादनार्थमिति यावत् ॥ इति वा ॥ एषा न त्वेवाहमित्यादिरूपा बुध्यते ज्ञायतेऽर्थोऽनयेति बुद्धिः वाक् तुभ्यं उक्ता मया सा न त्वं अशुद्धां बुद्धिमध्यारुक्षत् यदि ते बुद्धिर्विशोध्येत तर्हि शुद्धा तां बुद्धिमध्यारोहेत् ॥ केन पुनर्विशोध्या सा इति चेत् उपायेन ॥ स उपायः कः इति चेत् योगशब्दिते ज्ञानोपाये विषये वाचमभिधास्यामि शृणुमां वक्ष्यमाणा १ स मे युक्ततमो मत ॥ इत्यन्ताम् ॥ शृण्वन्तं त्वां प्रति पुनः शृण्वित्युक्त्या सम्यक् श्रुत्वा तत्र निष्ठावान् भवेति सूच्यते ॥ तुशब्दः प्रकरणान्तरसूचकः ॥ कर्मयोगस्य अवश्यानुष्ठेयत्वरूपविशेषसूचको वा ॥ कर्मयोगादिकमुपाय इत्युक्तं भवति ॥ किं भक्तिश्रद्धापूर्वकं श्रुत्वा तत्र निष्ठा कर्तव्या ॥ किं तादृशी सा वाक् इति चेत् यया कर्मयोगध्यानयोगविषयया वाचा हेतुभूतया युक्तः कर्मयोगध्यानयोगवान् सन् कर्मबन्धं प्रहास्यसि ॥ यया वक्ष्यमाणया वाचा जनितया बुद्ध्या कर्मयोगध्यानयोगविषयकज्ञानेन योगवान् सन् तेन अन्तःकरणशुद्धिवैराग्यश्रवणमनननिदिध्यासनापरोक्षज्ञान-

१. ६ ४७

द्वारा कर्मबन्धं तन्मूलकं संसारं निश्शेषं त्यक्ष्यसि ॥ मुक्तो भविष्यसि ॥ इति वा ॥ यया वाचा कर्मानुष्ठानद्वारा जनितया बुद्ध्या तत्त्वज्ञानेन युक्तः कर्मबन्धं प्रहास्यसि इति वा ॥ यया बुद्ध्या युक्तस्सन् यया बुद्ध्या युक्तस्सन् यया बुद्ध्या युक्तस्सन् इति त्रिरावृत्त्याऽन्वयः ॥ यया वक्ष्यमाणया कर्मयोगादिविषयया वाचा जनितया बुद्ध्या कर्मयोगादिज्ञानेन युक्तः कर्मयोगादिमान् सन् यया उक्तया वाचा जीवात्मपरमात्मतत्त्वविषयया जनितया बुद्ध्या तत्त्वज्ञानेन युक्तः सहित सन् कर्मबन्धं प्रहास्यसि सा एषा उक्ता अन्यामिमां शृणु इति वा ॥ वागित्यनुक्त्वा बुद्धिपदेन तदुक्त्या उक्तविषये वक्ष्यमाणविषये च तत्र यथा सम्यक् बोधो जायेत तथा उक्तं वक्ष्यते चेति सूच्यते ॥ सांख्यशास्त्रयोगशास्त्रयोरप्रकृतत्वात् सांख्ययोगशब्दाभ्यां ज्ञानतदुपायावेव प्रकृते अभिधीयेते ॥ 'योगे त्विमां शृणु' इति प्रतिज्ञाकरणं च तस्य अनेकाध्यायैः प्रतिपादयिष्यमाणत्वात् तत्र श्रोतृजनमनसामवधानजननाय ॥ अतस्त्वं कर्मयोगादिविषये मया वक्ष्यमाणां वाचं श्रुत्वा तत्र निष्ठामधिष्ठाय उपायतया कर्मयोगादिकं कर्तुमर्हसि ॥ ३९ ॥

अ ॥ अर्जुनः ॥ सुखदुःखे समे कृत्वा युद्धाय युज्यस्व नैवं पापं नावाप्स्यसीत्युक्तम ॥ तथाऽपि न मे मानसं युद्धायोत्कण्ठते ॥ कुत इति चेत् १'य एनं वेत्ति हन्तारं' इत्यादिना २'कं घातयति हन्ति कं ॥' इत्येतेन त्वया य सर्वकर्मसंन्यास उक्तः ॥ तस्मात्तत्राहं स्पृहये ॥ ३'स्वधर्ममपि चावेक्ष्य' इत्यादिना कर्तव्यत्वेनोपदिष्टाय युद्धाय कुतो न स्पृहयसे इति चेत् दुःखजनकयुद्धात्मककर्मकरणापेक्षया कर्तृकरणकर्मणां मिथ्यात्वानुसंधानेन सर्वं कर्म संन्यस्य तूष्णीमवस्थानस्य ज्यायस्त्वात्तमेव चिकीर्षामि न युद्धम ॥ विहितत्वादुभयमप्यावश्यकमिति चेत् उभयोर्विधानमेव कुतः ॥ समुच्चयाभिप्रायेण इति न वक्तुं युक्तम ॥ प्रकाशतमसोरिव कर्तृत्वभोक्तृत्वादिसर्वधर्मविधुरशुद्धात्मस्वरूपोऽहमिति ज्ञानस्य कर्म कृत्वा तत्फलं भोक्ष्ये इति ज्ञानस्य च परस्परविरोधेन ज्ञानकर्मसमुच्चयानुपपत्तेः ॥ अधिकारिभेदेन द्वयोर्विधानमिति न युक्तम ॥ मामेकमेव प्रति द्वयोर्विधानात ॥ अत कथमिदं वद ॥

कृष्णः ॥ तत्र एकस्यैव अंतःकरणशुद्ध्यशुद्ध्यवस्थाभेदेन द्वयोरुपदेशः ॥

१. २. १९. २. २. २१. ३. २. ३१.

अतो नानुपपत्तिः ॥ सं समीचीनतया ख्यायते उच्यते इति संख्या परविद्या ॥ सा
हि १ 'अथ परा यया तदक्षरमधिगम्यते' इति प्रशस्यते ॥ सम्यक् ख्यायते प्रति-
पाद्यते परं ब्रह्म अनयेति संख्या उपनिषत् ॥ सा हि परं ब्रह्म सम्यक् प्रतिपाद-
यति ॥ उप अधिकं यथातथा निषीदति उपविष्टं वर्तते परं ब्रह्म प्रतिपाद्यतया
अत्रेत्युपनिषत् ॥ उप समीप एव निषीदति परमात्मानं प्राप्नोत्यनयेत्युपनिषत्
इति हि व्युत्पत्तिः ॥ तत्प्रतिपाद्यं, सम्यक् ख्यायते प्रतिपाद्यते वस्तुतत्त्वमनयेति
संख्या सम्यग्ज्ञानम् तस्यां विषयत्वेन प्रकाशमानं, परविद्योपनिषत्प्रतिपाद्यं उपनि-
षदेकवेद्यं सम्यग्ज्ञानविषयीभूतं निर्विशेषं परं ब्रह्म सांख्यं तस्मिन्विषये शुद्धात्मतत्त्व-
विषये इति यावत् ॥ एषा २ 'न त्वेवाहं' मित्यादिका ३ 'तस्मात्सर्वाणि भूतानि न त्वं
शोचितुमर्हसि ॥' इत्यन्ता बुद्धिः ज्ञानं ज्ञानजनिका वाग्वा तुभ्यमभिहिता ॥ तस्याः
बुद्धावनारोहात् योगे तादृशज्ञानोपायभूतकर्मयोगध्यानयोगविषये इमां वक्ष्य-
माणां योगे कर्मयोगे विषये इमां 'सुखदुःखे समे कृत्वा' इत्युक्तां विस्तरेण
वक्ष्यमाणां च इति वा बुद्धिं शृणु ॥ योगे कर्मयोगे करणीयां फला-
भिसंधित्यागलक्षणां बुद्धिं शृणु इति वा ॥ तुशब्दोऽधिकारिभेदसूचकः ॥ शुद्धान्तः-
करणं प्रति ज्ञानस्योपदेशः न कर्मणः ॥ वक्ष्यते च ॥ ४ 'तस्य कार्यं न विद्यते' ॥
इति ॥ अशुद्धान्तःकरणं प्रति तु कर्मण उपदेशः तस्य ज्ञानयोगे अनधिकारात् ॥
अतो न विरोधः ॥ उपदेशस्य भिन्नाधिकारिविषयकत्वात् न ज्ञानकर्म समुच्चय-
शङ्कावकाशः ॥ कथं भिन्नाधिकारिविषयकत्वमुपदेशस्य मामेकं प्रत्येव क्रियोपदि-
श्यते इति चेत् ॥ व्यक्तिभेद इव अवस्थाभेदेऽप्यधिकारिभेदसंभवादुपपन्नो भिन्ना-
धिकारिकयोरपि विषययोरेकं प्रत्युपदेशः ॥ यद्यपि अभ्यर्हितत्वादात्मतत्त्वोपदेशस्तत्
कृतः ॥ तथापि तस्य आरूढाधिकारिविषयकत्वात् इदानीं आरुरुक्षोस्तव चित्त-
शुद्ध्यादिना तत्त्वज्ञानप्राप्तये कर्मयोगस्यैव कर्तव्यतया कर्मयोगोऽपि संग्रहेणोक्तः ॥
विस्तरेण वक्ष्यते च ॥ आरुरुक्षुरशुद्धचित्तोऽस्यामिदानीं कर्म कुरु ॥ आरूढश्शुद्ध-
चित्तो यदा भविष्यसि तदा कर्मयोगं संन्यस्य ज्ञानयोगाभ्यासमेव कुरु ॥ इत्यव-
स्थाभेदेन द्वयोर्विधानमुपपद्यते ॥ वक्ष्यते च स्पष्टमेव ॥ ६ 'आरुरुक्षोर्मुनेर्योगं

१. मुं. १. १. ५. २. २. १२. ३. २. ३०. ४. ३. १७. ५. 'स्वधर्म-
मपी'त्याद्युपदेशस्तु प्रासंगिकः ॥ न तात्पर्येण प्रवृत्तः ॥ इति भावः ॥ ६. ६. ३

कर्म कारणमुच्यते ॥ योगारूढस्य तस्यैव शमः कारणमुच्यते ॥ १ यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते ॥ सर्वसंकल्पसंन्यासी योगारूढस्तदोच्यते ॥ इति ॥ वक्ष्यते चायं विषयविभागः स्पष्टम् ॥ २ ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनां इति ॥ किमवश्यं श्रोतव्या सा बुद्धिः इति चेत् यया बुद्ध्या येन कर्मयोगध्यानयोगविषयकज्ञानेन यया कर्मयोगादिविषयया वाचा इति वा युक्तस्सन् संयुतस्सन् कर्मयोगादियोगवान् सन् इति वा हेतुभूतया यया बुद्ध्या येन कर्मयोगादिविषयकज्ञानेन यया कर्मयोगादिविषयया वाचा इति वा जनितया बुद्ध्या कर्मयोगादिजनितात्मापरोक्षज्ञानेन संयुतः सन् इति वा कर्मबन्धं कर्मात्मकं बन्धं निःशेषं त्यक्ष्यसि ॥ तत्त्वज्ञानजनितेश्वरप्रसादबलेन बन्धकेभ्यः सर्वेभ्यः कर्मभ्यो मुक्तो भविष्यसि ॥ वक्ष्यते च ॥ ३ अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः ॥ सर्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि ॥ इति ४ ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥ इति च ॥ युक्तः कर्मयोगवान् सन् कर्मणा बन्धः अन्तःकरणाशुद्धिलक्षणो ज्ञानप्रतिबन्धः तं प्रहास्यसि ॥ इति वा ॥ तां बुद्धिं शृणु ॥ कर्मनिमित्तकज्ञानप्रतिबन्धोऽपि आत्मतत्त्वोपदेशेनैव निवर्तेत ॥ श्रवणादेस्तन्निवर्तनसमर्थत्वात् ॥ अतः किं कर्मोपदेशेन इति चेत् उपदिष्टमप्यात्मतत्त्वं नाशुद्धान्तःकरणस्य तव बुद्धिमारोहतीति कर्मयोगोपदेशः कृतः ॥ करिष्यते च ॥ श्रवणादिकमन्तरङ्गसाधनमुपदिश्यतां किं बहिरंगसाधनकर्मयोगोपदेशेन इति चेत् श्रवणादिकमपि नाशुद्धान्तःकरणस्य बुद्धिमारोहति ॥ अतः बहिरङ्गसाधनं कर्मयोपदिश्यते ॥ श्रवणादेः कदा कथमुपयोगः इति चेत् कर्मणा उक्तप्रतिबन्धकनिवृत्तौ सत्यां अज्ञानविपर्ययसंशयादिरूपप्रतिबन्धकापनोदेनोपयोगः ॥ अशुद्धान्तःकरणत्वात्तव श्रवणादियोग्यताऽपि दूरे तु ज्ञानयोग्यता ॥ किंतु बहिरंगसाधनकर्मयोगानुष्ठानयोग्यतैवेति इदानीन्तनीमवस्थां अनुसृत्य कर्मयोगः एवोपदिश्यते ॥ वक्ष्यते च ॥ ५ कर्मण्येवाधिकारस्ते ॥ इति ॥ ३९ ॥

वि ॥ अर्जुनः ॥ उपदिष्टमात्मतत्त्वं त्वया तच्च न मे बुद्धावारोहति ॥ तस्य बुद्धावारोहाय कमप्युपायमुपदिश ॥

१. ६. ४. २. ३. ३. ३. ४. ३६. ४. ४. ३७. ५. २. ४७.

कृष्णः ॥ हे पार्थ संख्या बुद्धिः तयाऽवधारणीयं सांख्यं आत्मतत्त्वं तस्मिन् विषये तद्ज्ञानायेति यावत् ॥ एषा बुद्धिः ज्ञानं तुभ्यं अभिहिता ॥ १ न त्वेवाहमित्यादिना २ तस्मात्सर्वाणि भूतानि न त्वं शोचितुमर्हसि ॥ इत्यन्तेन ग्रन्थेन उक्ता ॥ ३ स्वधर्ममपि चावेक्ष्य इत्यादेः धर्माधर्मभ्रमास्थानस्नेहप्रतिक्षेपमात्रार्थत्वेन तत्त्वज्ञानार्थत्वाभावात् न तस्य आत्मज्ञानार्थमभिहितत्वेनोक्तिः ॥ ज्ञानार्थं ज्ञानमुक्तमिति एकस्यैव साध्यसाधनभावः कथमिति चेत् निर्णयज्ञानाय युक्तिपरामर्शरूपज्ञानमुक्तमिति वा आत्मतत्त्वापरोक्षज्ञानाय तद्विषयपरोक्षज्ञानमुक्तमिति वा विलक्षणेन साध्यसाधनभाव उपपद्यते ॥ तेषा बुद्धिर्बुद्धिमध्यागोहतीति चेत योगे ज्ञानोपायभूते कर्मयोगे विषये तज्ज्ञानार्थं वक्ष्यमाणां बुद्धिं वक्ष्यमाणं ज्ञानं शृणु ॥ योगे कर्मयोगविषये अपेक्षितो यो योगः समत्वबुद्धियोगः तस्मिन् विषये तदुत्पादनाय वक्ष्यमाणं ज्ञानं शृणु इति वा ॥ ज्ञानार्थं ज्ञानमिति एकस्यैव साध्यसाधनभावः कथमिति चेत् अनुष्ठानानुप्रविष्टं ज्ञानं साध्यं तत्साधनभूतं वक्ष्यमाणकर्मयोगादिविषयकं ज्ञानं साधनमिति भेदसत्त्वादुपपद्यते ॥ उभयत्र बुद्धिः बोधजनिका वाक् इत्यर्थाभ्युपगमे तु नैवास्या शङ्काया अवकाशः ॥ किमवश्यं श्रोतव्या सा बुद्धिरिति चेत् यया बुद्ध्या युक्तः येन ज्ञानेन संयुक्तस्सन् यया वाचा हेतुभूतया युक्तः योगवान् सन् इति वा ॥ कर्मणा बन्धः तं कर्मनिमित्तकं संसारबन्धं निश्शेषं हास्यसि तां बुद्धिं शृणु ॥ आत्मतत्त्वोपदेशसमनन्तरं तच्छ्रवणरूपो ज्ञानयोग एव वक्तव्यः ॥ तथापि ज्ञानयोगस्य मनश्शुद्धयाधायककर्मयोगसाध्यत्वात् कर्मयोगमुक्त्वा पश्चात् ४ प्रजहाति यदेत्यादिना ज्ञानयोगोपदेश एव न्याय्यः ॥ अत इदानीं कर्मयोग उपदिश्यते ॥ शृणु तमवधानेन ॥ ३९ ॥

अर्जुनः ॥ कर्मयोगमुपदिशसि तमनुतिष्ठेयमुक्तम ॥ आरब्धस्य मध्ये विच्छेदे कृषिवाणिज्यादिवन्निष्फल्यं स्यात् ॥ अंगवैकल्ये प्रमादादिना अन्यथाकरणे च चिकित्सावत् प्रत्यवायादनर्थोऽपि स्यात् ॥ यथाशक्ति स्वल्पमनुष्ठितं न फलाय कल्पेत अतः कर्मयोगाद्बिभेमि ॥ वद ॥

कृष्णः ॥ नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ॥
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥ ४० ॥

१. २. १२. २. २. ३०. ३. २. ३१. ४. २. ५५.

नेति ॥ इह अकाम्यकर्मणि विषये अभिक्रमः उपक्रमः आरम्भः तस्य नाशः अभिक्रमनाशः नास्ति ॥ इह प्रत्यवायः दोषः न विद्यते नास्ति ॥ अस्य धर्मस्य स्वल्पमपि महतः भयात् त्रायते रक्षति ॥ ४० ॥

पार्थ मा भैषीः ॥ कर्म द्विविधं काम्यं अकाम्यं चेति ॥ अनेन कर्मणा इदं फलं मे भूयादिति भगवत्प्रसादव्यतिरिक्तफलेच्छया क्रियमाणं काम्यं कर्म ॥ भगवत्प्रीत्यर्थमेव क्रियमाणं कर्म अकाम्यं कर्म ॥ तत्र काम्यं कर्म बन्धहेतु ॥ अकाम्यं कर्म मोक्षहेतु ॥ स्पष्टं चेदं सर्वमुपरिष्टाद्दृश्यते ॥ 'योगे त्विमां शृणु' इत्युक्तं कर्म अकाम्यमेव ॥ यया बुद्ध्या कर्मबन्धं प्रहास्यसीति मोक्षहेतुत्वोक्तेः ॥ इह कर्मणि पूर्वश्लोकोक्तमया विविक्षिते अकाम्ये कर्मणि उपक्रमशब्दितस्याऽऽरम्भस्य निष्फलत्वरूपो नाशो नास्ति ॥ आरब्धस्य मध्ये विच्छेदेऽपि आरम्भमात्रस्यापि फलमस्ति ॥ आरब्धस्य विच्छेदेन अङ्गवैकल्येन प्रमादादिना अन्यथाकरणेन अन्यधर्माकरणेन च प्रत्यवाय दोषः न विद्यते ॥ अस्य पूर्वोक्तस्य धर्मस्य निवृत्तिकर्मणः स्वल्पमपि महतः संसारभयात् कर्तारं त्रायते ॥ अः परमात्मा तस्य धर्मः तदीयो धर्मः तत्प्रीतिजनको निवृत्तिधर्मः तस्य इति वा ॥ [1] 'अ इति ब्रह्म' इति श्रुतेः ॥ फलमनपेक्ष्य भगवत्प्रीत्यर्थमेव करणात् तादृशो महिमा अस्य ॥ भृतिग्रहणार्थं कर्म कुर्वन् आरब्धस्य विच्छेदे अङ्गवैकल्ये अन्यथाकरणे अन्यकार्याकरणे च प्रभुप्रकोपद्वारा अनर्थो भवति ॥ अभिलषितं फलमपि न सिध्यति ॥ अनपेक्ष्य वेतनं प्रभुप्रसादमात्रापेक्षया स्नेहेन वा कर्म कुर्वन् आरब्धस्य कर्मणो विच्छेदेऽपि आरम्भमात्रस्य प्रभुप्रीतिरूपं फलं सिध्यति ॥ अङ्गवैकल्येन यथावदकरणेन अन्यथाकरणेन अन्यकर्माकरणेन च प्रत्यवायो न दृश्यते ॥ फलानपेक्षस्य कर्मण एकदेशोऽपि प्रभुप्रसादद्वारा महतो भयादेनं रक्षति इति प्रसिद्धं हि लोके ॥ फलापेक्षया क्रियमाणे काम्ये कर्मणि तु आरम्भमात्रस्य फलं नास्ति ॥ अङ्गवैकल्यादिना प्रत्यवायोऽपि ॥ एकदेशस्य उद्देश्यप्रसादद्वारा रक्षकत्वं च नास्ति ॥ अतस्त्वमकाम्यं कर्म कुरु ॥ 'नेहाभिक्रमनाशोऽस्ती'त्यस्य विवरणं स्वल्पमप्यस्येति ॥ उपक्रममात्रस्यापि भगवत्प्रसादरूपं फलमस्ति ॥ किं पुनः किंचित्कृतस्य ॥ किंचि-

[1] ऐ. आ २. ३. ८.

त्कृतं विघ्नैर्मध्ये विच्छिन्नं चेदपि महतो भयात् त्रायते ॥ कृत स्वल्पोऽप्यंशो भगवत्प्रसादद्वारेण ज्ञानद्वारा संसारबन्धनिवर्तको भवति ॥ इति वा ॥

१ अकाम्यकर्मयोगस्य महदिदं माहात्म्यं यत्किल आरब्धस्य विच्छिन्नस्यापि भगवत्प्रकोपानुत्पादनपूर्वकं भगवत्प्रसादोत्पादनेन पुण्यलोकप्रापणं भूयोऽपि तादृशकर्मानुष्ठानयोग्यकुले जन्मप्रापणं तत्रानायासेन तादृशे योगे प्रवृत्त्युत्पादनं क्रमेणापवर्गप्रापणम ॥ स्पष्टमिदं २ 'पार्थ नैवेह नामुत्र इत्यादिना ध्यानयोगमाहात्म्योक्तिमुखेन प्रपञ्चयिष्यते ॥ ४० ॥

३ अ ॥ अर्जुनः ॥ मां प्रति कर्मयोगो विधीयते ॥ इदं च न युक्तम ॥ कर्मणां नश्वरफलकत्वात् ॥ ४ 'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते' इति श्रुतिः ॥ ५'विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इति श्रुत्या सर्वेषां कर्मणां ज्ञानेच्छां ज्ञानं चोद्दिश्य विनियोगे सर्वेषां कर्मणां काम्यत्वात् सर्वाङ्गसाहित्येन कर्तव्यानां तेषां यत्किंचिदङ्गवैकल्येऽपि वैगुण्यापत्त्या प्रत्यवायजनकत्वात ॥ यज्ञेनेत्यादिविहितानां सर्वेषां कर्मणां पुरुषायुषशतेनापि कर्तुमशक्यत्वाच्च ॥ ब्रूहि ॥

कृष्णः ॥ इह कर्मणि अभिक्रम्यते कर्मणा प्रारभ्यते इत्यभिक्रमः फलं तस्य नाशः नास्ति ॥ अस्य निवृत्तिकर्मणः फलं चित्तशुद्धिः सा च पापक्षयरूपा क्षयस्य क्षयो न संभवति ॥ किंच निवृत्तिकर्मफलं ज्ञानेनाज्ञाननिवृत्तिः तस्य च नाशो नास्ति ॥ निवृत्तेर्निवृत्त्यसंभवात् ॥ इह निवृत्तिकर्मणि अङ्गवैकल्येन प्रत्यवायो न विद्यते ॥ विविदिषन्तीति वाक्ये नित्यानामेव कर्मणां विविदिषां वेदनं च प्रति विनियोगः ॥ तत्र सर्वाङ्गोपसंहारनियमो नास्ति ॥ काम्यान्यपि कर्माणि तत्र विनियुज्यन्ते इति पक्षेऽपि फलाभिसन्धिराहित्येन तेषां नित्यतुल्यत्वात् स नियमो नास्ति ॥ अस्य धर्मस्य मध्ये संख्यया इतिकर्तव्य कृत्वा स्वल्पमपि यथाशक्ति भगवदाराधनार्थं कृतं चेत् तत् ' जन्मजन्मान्तराभ्यस्तं दानमध्ययनं तपः ॥ तेनैवाभ्यासयोगेन तच्चैवाभ्यसते पुनः ॥' इति स्मृत्युनुरोधादुत्तरोत्तरसंस्काराधानद्वारा स्वसजाती

१. वि ॥ २. ६ ४०. ३. अ केचित ॥ ४. छा ८. १ ६ जित इति पाठान्तरम ॥ ५. बृ ४ ४. २२.

यदुद्देशनिमित्तं मत कामादिदोषक्षपणद्वारा महतो भयात्संसारादनुष्ठातारं रक्षत्येव तस्मिन्वाक्ये समुच्चायकपदाभावेन समुच्चयेन विधानाभावात् ॥ अत कर्मयोगमुपदिशामि ॥ श्रुत्वा तं कुरु ॥ तेन कर्मबन्धं प्रहास्यसीत्युक्तं युक्तमेव ॥ अतस्त्वं तादृशं कर्म कुरु ॥ ४० ॥

अर्जुनः ॥ ज्ञानोपायविषये बहवो बहुधा वदन्ति ॥ मतभेदसद्भावात् त्वदुक्त एव कथं मम विश्वासो जायेत ॥ त्वं तु शृणु इति वदन् मदीये मते विश्वासं कुर्विति बोधयसि ॥ कथमेतत ॥ वद ॥

कृष्णः ॥ व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन ॥
बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥ ४१ ॥

व्यवसायात्मिकेति ॥ हे कुरुनन्दन अर्जुन इह अकाम्यकर्मणि विषये व्यवसायः निश्चयः आत्मा स्वरूपं यस्याः सा व्यवसायात्मिका बुद्धिः ज्ञानं एका एकरूपा एकफला च ॥ व्यवसायः एषां अस्तीति व्यवसायिनः न व्यवसायिनः अव्यवसायिनः तेषां अव्यवसायिनां बुद्धयः बह्व्यः शाखाः यासां ताः बहुशाखाः न विद्यते अन्तः यासां ताः अनन्ताः च ॥ हि प्रसिद्धमिदम ॥ ४१ ॥

हे पार्थ सम्यगवधारय ॥ इह निर्बन्धकर्मणि विषये प्रमाणनिर्णीतार्थनिश्चयात्मिका बुद्धि तादृशज्ञानजनिका वाक् एकरूपैव । निश्चयज्ञानजनिका वाक् इह वेदे लोके च एकरूपैव इति वा ॥ इह ज्ञानजनिकासु बुद्धिषु निश्चयज्ञानजनिका बुद्धि सर्वत्र एकरूपैव इति वा ॥ निश्चयज्ञानरहितानां वाचस्तु बहुप्रकारा अनन्ताश्च प्रसिद्धमिदं ॥ मतं द्विविधम ॥ प्रामाणिकं [illegible]प्रामाणिकं चेति ॥ वैदिकं प्रामाणिकम ॥ अवैदिकं अप्रामाणिकम ॥ प्रामाणिकमतविरोधश्चेत्परिहरणीय अप्रामाणिकमतविरोधश्चेत् तस्य अकिञ्चित्करत्वादुपेक्षणीयः ॥ मदुक्तस्य प्रामाणिकमतानुसारित्वात न प्रामाणिकमतविरोध शंक्य ॥ अप्रामाणिकमतविरोधस्तु स्यादेव ॥ तस्य च अकिञ्चित्करत्वेनाबाधकत्वादुपेक्षणीय । अतो मन्मते विश्वासं कुर्विति युक्तम ॥ ४१ ॥

अ॥ अर्जुनः ॥ सांख्ये बुद्धिरभिहिता योगे बुद्धिं शृणु इति सांख्यबुद्धियोगबुद्धिरूपे द्वे बुद्धी उक्ते ॥ सतीषु उक्तबुद्धिद्वयव्यतिरिक्तासु बह्वीषु काणादादिशास्त्रप्रसिद्धासु ज्ञानरूपासु बुद्धिषु ता अनुक्त्वा उक्तबुद्धिद्वयस्यैवोक्तौ को हेतुः ॥ वद ॥

कृष्णः ॥ सन्त्यन्या बह्व्यो बुद्धयः तास्तु बाधनीया बाधिके इमे द्वे बुद्धी एव ॥ अतः बाध्या बुद्धीरनुक्त्वा बाधिके इमे द्वे एव बुद्धी उक्ते प्रमाणजन्यनिश्चयरूपा बुद्धिः इह १ श्रेयोमार्गे एकैव ॥ द्वयोर्बुद्ध्योरुक्तत्वादेकेति कथं इति चेत् बुद्ध्योर्द्वित्वेऽपि मोक्षरूपफलस्यैक्यात् एकेत्युक्तिः ॥ मोक्षरूपैकफलसाधिके द्वे बुद्धी इतरासां बुद्धीनां बाधनायाभिहिते इति यावत् ॥ वक्ष्यते च ॥ उक्तयोर्द्वयोः बुद्ध्योरेकफलकत्वम् ॥ २ 'सांख्ययोगौ पृथक्' इत्यादिना ३ 'यः पश्यति स पश्यति' इत्यन्तेन ॥ निश्चयबुद्धिरहितानां काम्यकर्मिणां बुद्धयस्तु विषयभूतानां कामानां बहुप्रकारत्वाद्बहुशाखाः प्रतिशाखमवान्तरविशेषसद्भावात् अनन्ताश्च ॥ ४ 'आयुराशास्ते ॥ सुप्रजास्त्वमाशास्ते ॥ सजातवनस्यामाशास्ते ॥ उत्तरां देवयज्यामाशास्ते ॥ भूयो हविष्करणमाशास्ते ॥ दिव्यं धामाशास्ते ॥ विश्वं प्रियमाशास्ते' ॥ इति ५ 'जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यात्' इति च श्रुतिः ॥ आसां बुद्धीनां अनुपरतसंसारप्रवाहप्ररोहप्रापकत्वादासां बाधनाय बाधिके मोक्षरूपैकफलहेतुभूते द्वे सांख्ययोगबुद्धी एव उपदिष्टे ॥ अतो युक्तमेवेदम्

निवृत्तिकर्मयोगबुद्धिर्मोक्षफला इतरबुद्धिबाधिका इत्युक्तम् ॥ को निवृत्तिकर्मप्रवृत्तिकर्मबुद्ध्योर्विशेष इति चेत् इह निवृत्तिकर्मणि प्रवर्तमानस्य भगवानेवास्माकं शरणं भगवद्भजनेनैव ध्रुवं तरिष्यामि भवजलधिं इति निश्चयरूपा एकैव बुद्धिर्भवति । निश्चयज्ञानरहितानां काम्यकर्मिणां बुद्धयः बहुशाखाः प्रत्येकं अनन्ताश्च ॥ अनन्ताः प्रत्येकं बहुशाखाश्च इति वा ॥ निवृत्तिकर्मणि निश्चयबुद्धेरेकत्वेन सुलभत्वात्तत्र प्रवृत्तस्य न पातप्रसक्तिः ॥ काम्यकर्मणि प्रवृत्तस्य तु उद्देश्यफलानां बहुत्वेन निश्चयस्य दुर्लभत्वात् कदाचिदश्रेयस्यपि श्रेयस्त्वबुद्ध्या प्रवृत्तौ पातः स्यात् अतः प्रवृत्तिनिवृत्तिकर्मणोर्महान् विशेषः इति निवृत्तिकर्मबुद्धेर्बाधिकत्वमुक्तम् ॥

१. इह सांख्ये योगे च या बुद्धिः सा एका इति केचित् ॥ २. ५. ४. ३. ५. ५. ४. तै. ब्रा. ३. ५. १०. ५. बृ. ३. ४. १७.

संख्यया स्वल्पस्य कथं महतो भयात् त्राणकर्तृत्वं इति चेत् इह श्रेयोमार्गे निवृत्तिकर्मणि तत्त्वनिश्चयात्मिका बुद्धिरेकैव सर्वेषामाश्रमाणां सर्वेषां वर्णानां च साधारणतया फलत्वेन विवक्षिता ॥ अत तत्तद्वर्णाश्रमोचितेन एकेनापि सम्यगनुष्ठितेन तल्लाभात् संख्यया स्वल्पस्यापि संसारभयात् त्राणकर्तृत्वमुपपद्यते ॥ अव्यवसायिनां बुद्धयस्तु बहुशाखा अनन्ताश्च ॥ ते काम्यमानानां फलानामानन्त्यात् तत्तत्प्रापककर्मणामप्यानन्त्येन श्रम फलोद्देशेन कर्मकरणात्तदनुभवायानेकजन्मप्राप्तिश्चेत्यनर्थावहं काम्यं कर्म ॥ अत. काम्याकाम्यकर्मणोर्महद्वैषम्यम् ॥ वक्ष्यते चानुपदम् ॥ जन्मकर्मफलप्रदाम ॥ क्रियाविशेषबहुलां इति ॥ अतस्त्वं अकाम्यं कर्म कुरु ॥ ४१ ॥

वि ॥ अर्जुनः ॥ यया बुद्ध्या कर्मबन्धं प्रहास्यसि इमां बुद्धिं शृणु इत्युक्त्वा काम्यकर्मबुद्ध्यपेक्षया अकाम्यकर्मबुद्धेरुत्कर्षः उक्त कोऽस्यावुत्कर्ष तमुपपादय ॥

कृष्णः ॥ इह निवृत्तिकर्ममार्गे या बुद्धिः निवृत्तिकर्मानुष्ठेयमिति बुद्धि सा व्यवसायात्मिका आत्मयाथात्म्यनिश्चय [1] पूर्विका ॥ याथात्म्यनिश्चयश्च. आत्मा नित्य स्वयंप्रकाश आनन्दरूप भगवच्छेषभूत स्वाभाविकापहतपाप्मत्वादिमान् इत्येवं निश्चय ॥ आत्मपरमात्मनोः शेषशेषित्वज्ञानाभावे परमात्मप्रसादेतरफलान पेक्षया तत्प्रसादमात्रार्थं कथं शरीरायासद्रव्यव्ययादिसाध्यं कर्म कुर्यात् ॥ [2] काम्यकर्मबुद्धिस्तु नाऽऽत्मयाथात्म्यनिश्चयपूर्विका ॥ आत्मयाथात्म्यनिश्चयाभावेऽपि आत्मा नित्य शरीरनाशानन्तरमप्यस्तित्ववान् देहातिरिक्त इति ज्ञानमात्रेण देहान्तरानुभाव्यस्वर्गादिफलककाम्यकर्मानुष्ठानं सम्भवति ॥ किञ्च निवृत्तिकर्मबुद्धिः एका ॥ यथा पृथग्विधिवाक्यसिद्धस्वर्गफलसाधनभूताऽग्नेयादियागषट्कविषया बुद्धिः स्वर्गार्थिना स्वर्गफलकं कर्म कर्तव्यमित्येकशास्त्रार्थविषयत्वादेका ॥ तथा पृथग्विधिवाक्यसिद्धमोक्षरूपैकफलसाधनभूतानेकशास्त्रोक्तकर्मविषया बुद्धिः मुमुक्षुणा मोक्षफलकं कर्म कर्तव्यमित्येकशास्त्रार्थविषयत्वादेका ॥ अत सुलभा सुकरा च ॥

१. कार्यकारणयोरभेदव्यपदेशात् व्यवसायरूपा इत्यर्थकव्यवसायात्मिकेति पदप्रयोगः ॥
२. इह बुद्धिर्व्यवसायात्मिकेत्यनेनेदं लब्धम् ॥

[1]आग्नेयादियागषट्के फलस्य स्वर्गस्य एकत्वम् ॥ निवृत्तिकर्मसु फलस्य मोक्षस्य एकत्वं इति विवेकः ॥ अव्यवसायिनां आत्मयाथात्म्यनिश्चयरहितानां आत्माऽस्तित्वज्ञानमात्रेण काम्यकर्मसु प्रवृत्तानां काम्यकर्मबुद्धयस्तु स्वर्गपशुपुत्रान्नाद्ययशःश्रीपुष्टितुष्टिजयायुरारोग्यादीनां कामानामानन्त्येन तत्तद्धेतुभूतकर्मणामानन्त्यादनन्ताः ॥ एकैकस्मिन्नपि फले अवान्तरविशेषसत्त्वात् प्रत्येकं बहुप्रकाराश्च ॥ एतदर्थमिदं कर्तव्यं एतदर्थमिदं कर्तव्यं इत्यनेकशास्त्रार्थविषयत्वादनेकाः ॥ अनेकशाखाश्च ॥ अतो दुर्लभाः दुष्कराश्च ॥ अयमेव काम्याकाम्यकर्मबुद्ध्योर्विशेषः ॥ उक्तविशेषसत्त्वादकाम्यकर्मबुद्धेः काम्यकर्मबुद्ध्यपेक्षया उत्कर्षः ॥ अपर्यवसानानन्तकर्मतत्फलप्रवाहहेतुत्वात् काम्यकर्मबुद्धिर्बन्धहेतुः ॥ अनादिकालप्रवृत्ताचित्संसर्गमूलकयावत्कुकर्मनिर्हरणहेतुत्वात् अकाम्यकर्मबुद्धिर्मोक्षहेतुः ॥ अत एवोक्तं 'कर्मबन्धं प्रहास्यसी'ति ॥ पूर्वश्लोके काम्यकर्मापेक्षया अकाम्यकर्मणो विशेष उक्तः ॥ अत्र तु काम्यकर्मबुद्ध्यपेक्षया अकाम्यकर्मबुद्धेर्विशेष उच्यते ॥ इति भेदः ॥ 'नेहे'त्यत्र आरम्भमात्रस्यापि साफल्येन विच्छिन्नस्यापि प्रत्यवायाजनकत्वेन स्वल्पस्यापि महाभयात् त्राणकर्तृत्वेन च निवृत्तिकर्मणः अनथाभूतकाम्यकर्मणः सकाशादुत्कर्ष उक्तः ॥ अत्र तु अन्तर्गतज्ञानयोगकतया ज्ञानाकारत्वेन ज्ञानकर्मोभयात्मकत्वात् मोक्षहेतुत्वात् एकशास्त्रार्थविषयैकबुद्धिविषयत्वाच्च निवृत्तिकर्मणः अनथाभूतकाम्यकर्मणः सकाशादुत्कर्ष उच्यते इति च भेदः ॥ नित्यनैमित्तिकानि तत्तत्र श्रूयमाणप्राजापत्यलोकाद्यभिव्यक्तिरक्षयाकरणनिमित्तप्रत्यवायपरिहारादिरूपाणि फलानि परित्यज्य मोक्षैकफलतया एकशास्त्रार्थीकृत्य कर्तव्यानि ॥ काम्यान्यपि श्रूयमाणफलपरित्यागेन मोक्षैकफलतया नित्यनैमित्तिकैः सह एकशास्त्रार्थीकृत्य यथाशक्ति कर्तव्यानि ॥ इत्युक्तं भवति ॥ अत त्वं स्वर्गाद्यर्थतया अभिधीयमानमपि युद्धं फलपरित्यागेन मोक्षैकफलतया नित्यनैमित्तिकैः सह एकशास्त्रार्थीकृत्य मोक्षैकफलकतया अनुतिष्ठ ॥ ४१ ॥

अर्जुनः ॥ अस्त्वेवं अकाम्यकर्मणः तद्बुद्धेश्च माहात्म्यं तथापि काम्यकर्मणामपि वेदादिविहितत्वेन प्रशस्तत्वादनुष्ठेयान्येव तान्यपीति भाति ॥ किञ्च वैदिकाः केचित् प्रामाणिकाः कर्माणि स्वर्गादिफलान्येवाहुः ॥ त्वया तु काम्या-

---

1. आग्नेय अग्नीषोमीय उपांशुयाज ऐन्द्र ऐन्द्र ऐन्द्राग्न इति षट् यागाः ॥

न्येव स्वर्गादिफलानि ॥ अकाम्यानि तु ईश्वरार्पणबुद्ध्या अनुष्ठितानि ज्ञानद्वारा मोक्षार्थानीत्युच्यते ॥ अतः प्रामाणिकमतविरुद्धे त्वन्मते कथं विश्वासः कार्यः ॥ किञ्च उक्तरूपा व्यवसायात्मिका बुद्धिः कुतो नोदेति सर्वेषां ॥ ब्रूहि ॥

कृष्णः ॥ यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ॥
वेदवादरताः पार्थ नान्यदस्तीति वादिनः ॥ ४२ ॥

कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम् ॥
क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥ ४३ ॥

भोगैश्वर्यप्रसक्तानां तयाऽपहृतचेतसां ॥
व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥ ४४ ॥

यामिति ॥ हे पार्थ विपश्चितः बहुज्ञाः न विपश्चितः अविपश्चितः अल्पज्ञाः वेदेषु वादाः वेदवादाः तेषु रताः आसक्ताः वेदवादरताः अन्यत् नास्ति इति वादिनः कामेषु आत्मा मनः येषां ते कामात्मानः स्वर्गः परः उत्कृष्टः येषां ते स्वर्गपराः ते पुष्पाणि अस्याः संजातानीति पुष्पिता तां पुष्पितां पुष्पितसदृशीं वा जन्म च कर्म च फलं च जन्मकर्मफलानि तानि प्रददातीति जन्मकर्मफलप्रदा तां क्रियाणां कर्मणां विशेषाः भेदाः तैः बहुला ते बहुलाः यस्यां सा इति वा क्रियाविशेषबहुला तां भोगश्च ईश्वरस्य भावः ऐश्वर्यं ऐश्वर्यं च भोगैश्वर्ये तयोः गतिः प्राप्तिः तां प्रति विद्यमानां यां इमां वाचं प्रवदन्ति तया वाचा अपहृतं चेतः येषां ते अपहृतचेतसः तेषां भोगश्च ऐश्वर्यं च भोगैश्वर्ये प्र अधिकं सक्ताः प्रसक्ताः भोगैश्वर्ययोः प्रसक्ताः भोगैश्वर्यप्रसक्ताः तेषां समाधौ समाध्यर्थं समाधिः मनः तस्मिन् समाधिः परमात्मा तस्मिन् विषये व्यवसायः निश्चयः आत्मा स्वरूपं यस्याः सा व्यवसायात्मिका बुद्धिः ज्ञानं न विधीयते नोत्पद्यते ॥ ४२ ॥ ४३ ॥ ४४ ॥

ये स्वर्गादीन्येव फलानि तत्साधनानि काम्यान्येव कर्माणि नातोऽन्यत्
किमपि इति वदन्ति ॥ ते तु न वैदिकाः ॥ किंतु वैदिकाभासाः ॥ वेदतात्पर्यविषयी-
भूतार्थं पूर्वोत्तरसन्दर्भशुद्धिं चापर्यालोच्य आपाततः प्रतीतार्थमेव गृहीत्वा स्वयं
नष्टाः परांश्च नाशयन्तो वराकाः ॥ अतस्तन्मतविरोधोऽपि अकिञ्चित्करत्वादुपे-
क्ष्यः ॥ अकाम्यकर्मणि प्रवृत्तिजननाय अकाम्यकर्मप्रशंसा कृता ॥ इदानीं काम्यकर्म-
णि प्रवृत्तिनिवारणाय काम्यकर्मनिन्दा क्रियते ॥ शृणु तामपि ॥ वैद्येन पथ्ये प्रवृ-
त्तिजननाय पथ्यप्रशंसा क्रियते ॥ अपथ्ये प्रवृत्तिनिवारणाय अपथ्यनिन्दा क्रियते ॥
इति विदितमेव हि लोके ॥ अविपश्चितो यां वाचं प्रवदन्ति तया अपहृतचेतसां
व्यवसायात्मिका बुद्धिर्न विधीयते इत्यन्वयः ॥ अविपश्चितः अल्पज्ञाः ॥ विविधं
विशेषेण पश्यन्ती चित् बुद्धिः येषां ते विपश्चितः बहुज्ञाः न विपश्चितः अविपश्चितः
अल्पज्ञा इत्यर्थः ॥ अतएव वेदवादरताः वेदेषु वादः आपाततः प्रतीतार्थः काम्य
कर्मतत्फलरूपः तत्रैव रताः ॥ वेदानां वादः निरर्थकः पाठः तत्रैव रताः ॥ वेदेषु
वादः तात्पर्यार्थापरिज्ञानमूलको विवादः तत्रैव रताः ॥ वेदेषु ये वादाः यानि
वाक्यानि तेष्वेव रताः तदर्थज्ञानहीनाः ॥ वेदेषु वादाः अर्थवादाः रुच्यु-
त्पादकफलविशेषप्रतिपादनेन कर्मप्रशंसापरवाक्यानि तेषु रताः तैरेव सन्तुष्टाः ॥
मोक्षाख्यं फलं तत्प्रदं विष्ण्वाख्यं परं ब्रह्म तत्साधनं निवृत्तिकर्म तत्प्र-
तिपादकज्ञानकाण्डात्मकवेदभागश्च नास्तीति वादिनः ॥ मानिन इत्यनुक्त्वा
वादिन इत्युक्त्या न केवलमेवं ज्ञात्वा स्वयं नश्येयुः ॥ किन्तु एवमुक्त्वा
परानपि नाशयेयुः इति सूच्यते ॥ अत रम्भाद्यावासस्वर्गमेव [1] परमपुरु-
षार्थं मन्यमानाः कुत एतत्सर्वोमिति चेत् कामात्मानः काम्यमानविषयशतव्याकुल-
चित्ततया कामस्वरूपाः कामः विषयेच्छा तत्स्वभावाः कामेषु विषयेषु आत्मा
मनो येषां ते तादृशाः कामः इच्छा आत्मनि मनसि येषां ते तादृशाः विषयभो-
गलंपटमनसः तात्पर्यार्थमज्ञात्वा पूर्वोत्तरसन्दर्भशुद्धिरहितवेदवाक्यानि केवलं पर-
वञ्चनार्थमुदाहरन्तो वैदिकाभासाः पुष्पितां काम्यकर्मप्रतिपादिकां वाचं प्रवदन्ति ॥
फलस्थानीयं मोक्षं परित्यज्य पुष्पस्थानीयं स्वर्गादिकमेव फलत्वेन प्रतिपादयतीति
पुष्पिता सा ॥ फलवदधिकसुखहेतुत्वान्मोक्षः फलस्थानीयः ॥ पुष्पवत् तात्का-

१. स्वर्गः परः इष्टः येषां ते इति क्वचित् ।

लिकाकिञ्चित्सुखहेतुत्वात्स्वर्गः पुष्पस्थानीयः ॥ अतएव पुष्पसंपत्तिमात्ररमणीय-पुष्पित १ किंशुकवदापातरमणीया सा ॥ पुष्पितवृक्षवत्फलोद्भवं बोधयन्ती सा ॥ इमां जन्मकर्मफलप्रदामित्यादिना वक्ष्यमाणदोषां अध्ययनविध्युपात्तत्वेन प्रसिद्धां वा रंभादिसंभोगसंभूतगौरवत्रिदिवप्रतिपादकतया इर्शाब्दितस्य मन्मथस्य निरतिशयरतिसुखमयसाम्राज्यलक्ष्मीं प्रतिपादयन्तीम् ॥ ए. मन्मथस्य मा लक्ष्मीः यस्यां ता दृशीम् ॥ जन्म च तत्र तत्तत्कर्म च तस्य फलं च प्र पुनःपुन ददातीति तादृशीम् ॥ जन्मरूपकर्मफलप्रदां वा ॥ जन्मानि तेषु पूर्वकर्मफलानि च प्रददातीति तादृशीं वा ॥ जन्मकर्मरूपं फलं प्रददातीति तादृशीं वा ॥ कामानामानन्त्यात्तत्तद्धेतुकर्मविशेषैर्विस्तृतां च ॥ क्रियाविशेषाः बहुलाः यस्यां सा तादृशीं वा ॥ तां कर्मकाण्डात्मिकां वाचं भोग. स्रक्चन्दनवनितादिपदार्थोपभोग. तद्धेतुभूतमैश्वर्यं च तयोः २प्राप्तिं प्रति हेतुभूतां प्रवदन्ति प्रकृष्टतया वदन्ति ॥ प्रेत्यनेन कर्मकाण्डवचनमेव न दोषः ॥ किन्तु अपकृष्टायास्तस्याः परमप्रकृष्टतया वदनं दोष इति सूच्यते ॥ भुज्यन्त इति भोगाः स्रक्चन्दनवनितादयः तेषां ऐश्वर्यं स्वामित्वं तस्य प्राप्तिं प्रति इति वा ॥ भोगैश्वर्यगतिं प्रति वर्तमानां वाचामिति वा ॥ भोगैश्वर्यगतिं प्रति ये क्रियाविशेषाः तैर्बहुलामिति वा ॥ भोगैश्वर्यगतिं प्रति कामात्मान इति वा ॥ जन्मकर्मफलप्रदा क्रियाविशेषबहुला च या भोगैश्वर्यगतिः तां प्रति इति वा ॥ यां वाचमेत वदन्ति तया अपहृतमनसां कुतोऽपहृतमनसो भवन्तीति चेत् भोगैश्वर्यप्रसक्तानां व्यवसायरूपं ज्ञानं मन समाधानार्थं नोत्पद्यते ॥ सम्यक आधीयते भगवता सर्वमस्मिन पुरुषोपभोगाय इति वा सम्यक आधीयते पुरुषो विषयेषु अनेन इति वा समाधिर्मन तस्मिन् नोत्पद्यते ॥ सम्यगाधीयते सर्वमस्मिन् जगत् इति समाधि परमात्मा तस्मिन् विषये नोत्पद्यते ॥ बुद्धिः व्यवसायात्मिका सती समाधौ समस्थितौ नोत्पद्यते ॥ एकरूपतां न प्राप्नोति ॥ अहं ब्रह्मेति ब्रह्मात्मनाऽवस्थानं समाधि तदर्थं न विधीयते ॥ स... ...नुष्ठानकाले व्यवसायात्मिका बुद्धिः शुद्धचिन्मात्राकारा चित्तवृत्तिर्नोत्पद्यते ॥ व्यवसायात्मकबुद्धिरहितानां मोक्षो नास्त्येव ॥ अतः काम्यकर्मतत्फलप्रतिपादनेन प्रतारकाणां वचनात्तत्राऽऽसक्तधी

१. पुष्पितांविषलतावदापातरमणीया इति वा ॥ २ गति विशेष क्रियाविशेषशब्दोक्तसाधनविशेषात् भोगैश्वर्यरूपसाध्ये विशेषः इति केचित् ॥

काम्यं कर्म मोक्षार्थिभिर्नानुष्ठेयम् ॥ हे पार्थ महति क्षेत्रे महापुरुषादुत्पन्नत्वेन मोक्षार्हस्त्वं मनागपि काम्यकर्मगन्धं मा घ्रासीः ॥ कुरु त्वमकाम्यमेव कार्यं कर्म ॥ ४२ ॥ ४३ ॥ ४४ ॥

अर्जुनः ॥ यद्येवं काम्यकर्म निन्द्यं तत्कारिणस्तद्वादिनश्च निन्द्याः ॥ तर्हि मातापितृसहस्रेभ्योऽपि वत्सलतराः अकर्तव्यान्निवर्त्य कर्तव्ये प्रवर्त्य सर्वं तु स्वल्पा-जनेन सुखयितुं प्रवृत्ता वेदाः कुतः तादृशं निन्द्यं काम्यं कर्म प्रतिपादयन्ति ॥ कथं वा वेदोदितं कर्म त्यक्तुं शक्यम् ॥ वद ॥

कृष्णः ॥ त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ॥
निर्द्वन्द्वो नित्यसत्वस्थो निर्योगक्षेम आत्मवान् ॥ ४५ ॥

त्रैगुण्येति ॥ वेदाः त्रयाणां गुणानां संबन्धि त्रैगुण्यं त्रिगुणात्मकं स्वर्गादि-विषयः प्रतिपाद्योऽर्थः येषां ते त्रैगुण्यविषयाः ॥ हे अर्जुन त्वं त्रैगुण्यात् निष्क्रान्तः निस्त्रैगुण्यः भव ॥ द्वन्द्वेभ्यो निर्गतः निर्द्वन्द्वः भव ॥ सत्वे तिष्ठतीति सत्वस्थः नित्यं सत्वस्थः नित्यसत्वस्थः भव ॥ योगः अप्राप्तस्य प्राप्तिः क्षेमः तस्य रक्षणं योगश्च क्षेमश्च योगक्षेमौ ताभ्यां निर्गतः निर्योगक्षेमः भव ॥ आत्मा परमात्मा अस्यास्तीति आत्मवान् भव ॥ ४५ ॥

वेदाः काम्यं कर्म प्रतिपादयन्तीति सत्यम् ॥ तथाऽपि न तेषां काम्ये कर्मणि तात्पर्यम् ॥ किन्तु आपातत एव काम्यकर्मप्रतिपादनम् ॥ अतः वेदाः त्रैगुण्यविष-या ॥ त्रयाणां गुणानां सत्वरजस्तमसां संबन्धी यः स्वर्गादिः सः एषां विषय आपाततः प्रतीयमानोऽर्थः ॥ न तु तात्पर्यतः प्रतिपाद्यमानोऽर्थः ॥ वस्तुतस्तु ते कथं-भूता इति चेत् त्रैगुण्यविषयाः [illegible]तकर्मतत्फलज्ञानतत्फलमोक्षप्रतिपादनेन त्रैगु-ण्यरूपं विषं यान्ति यापयन्ति अपग[illegible]न्ति त्याजयन्ति तादृशाः ॥ त्वं तु वेदेभ्य आपा-ततः प्रतिपाद्यमानात् त्रैगुण्यात् क्षुद्रफलरूपात् निवृत्तो भव ॥ तात्पर्यविषयीभूतार्थं ज्ञात्वा तत्र निष्ठां कुरु ॥ आपाततः प्रतीयमाने अर्थे भ्रान्तिं मा कार्षीः ॥ त्रैगुण्या-न्निवृत्तस्य कथं सुखं सिध्येत् इति चेत् निर्द्वन्द्वो भव ॥ सुखदुःखादिद्वन्द्वेभ्यो निर्ग-तो भव ॥ समदुःखसुखो भव ॥ एतत् निर्द्वन्द्वत्वं कथं सिध्येदिति चेत् नित्यसत्व-

स्थो भव ॥ साधुगुणवत्त्वात्सत्त्वशब्दवाच्ये विष्णावेव नित्यस्थितिमान् भव ॥ नित्यं हरिसंश्रयणान्निर्द्वन्द्वत्वादिकं संस्यति ॥ केन प्रकारेण नित्यं हरिस्मरणं कर्तव्यमिति चेत आत्मवान् भव ॥ परमात्मानमात्मशब्दितस्वामित्वेनोपास्व ॥ १ 'आत्मेति तूपगच्छन्ति ग्राहयन्ति चे'ति सूत्रम्॥ अनवरतं योगक्षेमचिन्ताया सत्त्वात् कथमेवं नित्यं हरिस्मरणस्यावकाश इति चेत अप्राप्तप्राप्तिरूपाद्योगात् प्राप्तपरिरक्षणरूपात् क्षेमाच्च त्वं निवृत्तो भव ॥ योगक्षेमचिन्तारहितो भव ॥ वयमहं योगक्षेमचिन्तारहितः तूष्णीं हरिं स्मरन् वर्तेय तर्हि मदीययोगक्षेमस्य का गतिरिति चेत आत्मवान् भव ॥ आत्मशब्दितः परमात्मैव सर्वयोगक्षेमनिर्वाहक इति ज्ञानवान् भव ॥ वक्ष्यते च ॥ २ 'योगक्षेमं वहाम्यह'मिति ॥ वेदैरापाततः प्रतिपाद्यमानकाम्यकर्मापेक्षया वेदस्तात्पर्यतः प्रतिपाद्यमानं मोक्षहेतुज्ञानसाधनभूतमकाम्यं कर्म उत्थाय ॥ अतस्त्वं तदेव कुरु ॥ अन्यथा विशुद्धकर्मकारित्वरूपमर्जुनत्वं 'करोमि कर्म शुक्लं च तेन मामर्जुनं विदुः ॥' इति त्वयोक्तं तव न सिध्येत ॥ ४५ ॥

अ ॥ वेदा त्रैगुण्यविषया त्रयाणां गुणानां कर्म त्रयाणां गुणानां पुण्यपापव्यामिश्रकर्मतत्फलसंबन्धरूप समाहारो वा त्रैगुण्यं संसार त्रयाणां गुणानां संबन्धि त्रैगुण्यं स्वर्गादिरूपं फलं त्रयाणां गुणानां संबन्धि फलं ऊर्ध्वमध्याधोगतिरूपं संसरणम्॥ वक्ष्यते च ॥ ३ 'ऊर्ध्वं गच्छन्ति सत्त्वस्थाः मध्ये तिष्ठन्ति राजसाः ॥ जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ॥' इति॥ तद्रूपो विषय प्रकाशयितव्योऽर्थो येषां ते तादृशा ॥ कुतः काम्यं कर्म तत्फलं च प्रतिपादयन्तीति चेत् त्रैगुण्यविषया त्रैगुण्याः त्रिगुणात्मकाः सकामा ये अधिकारिणः ते विषया बोधयितव्याः उपदेशोद्देश्या येषां ते तादृशा ॥ तादृशाधिकारिणां काम्यतत्फलप्रतिपादकाः कुतस्ते षां कामात्मनामयोग्यानामर्थे काम्य कर्म तत्फलं च प्रतिपादनीयं इति चेत त्रैगुण्यविषया त्रैगुण्याख्यं विषं जन्ममरणपर्यवसायि येन विषतुल्यत्वात् ॥ तत उपनिषद्भागे मोक्षतत्साधनज्ञानतत्साधनाकाम्यकर्मप्रतिपादनेन यापयन्ति अपगमयन्ति ॥ शरीरायासद्रव्यव्ययादिभिरतिक्लेशसाधनेषु कर्मसु सहसा प्रवृत्तिर्नोदेति ॥ अतः गुडजिह्विकान्यायेन अनुभूयमानसुखसजातीयं स्वर्गादिसुखं

१. ४. १. ३. २. ९. २२. ३. १४. १८.

तत्साधनं काम्यं कर्म च प्रतिपाद्य तत्प्रशंसया तत्र प्रवर्त्य सुखं तत्साधनं चेमे वेदाः सम्यग्बोधयन्ति इति विश्वासमुत्पाद्य ततः स्वतात्पर्यविषयीभूतमोक्षतत्साधनज्ञानतत्साधनकर्मप्रतिपादनेन तत्र प्रवर्त्य संसारबन्धाद्विपाद्विमोच्य शाश्वतं स्वरूपसुखानुभवरूपममृतमनुभावयन्तीत्यहो वेदानां वात्सल्यम् ॥ विदितमेव हि सर्वेषां मातापित्रादयः अतात्पर्यविषयभूतं गुडमधुशर्करादिकं प्रदर्श्य स्ववशीकृत्य तात्पर्यविषयभूतं कटु भेषजं ग्राहयित्वा रोगाद्विमोच्य सुखं प्रापयन्तीति लोके ॥ अतो वेदानां आपाततस्तत्प्रतिपादनं युक्तम् ॥ प्रतिपादयन्तु नाम वेदास्तादृशाधिकारिण्यमर्थं त्रैगुण्यम् ॥ त्वन्तु तस्मात् त्रैगुण्यात् निर्गतो भव ॥ कथं निस्त्रैगुण्यो भवितुं शक्यं कर्मकरणे तत्स्वभावात् स्वर्गादिरूपतत्तत्फलोत्पादस्यापरिहार्यत्वात इति चेत् निस्त्रैगुण्यो भव त्रिगुणात्मकप्रकृतिकार्यकामरहितो भव ॥ न हि कर्मणां अनिच्छायामपि फलजनकत्वं स्वभावः ॥ किन्तु यो यत्फलकामनया करोति तस्य तत्फलजनकत्वमेव स्वभावः ॥ निष्कामनयाऽनुष्ठाने फलजननप्रसक्तिरेव नास्तीति निस्त्रैगुण्यो भवितुं शक्यमेव ॥ शीतोष्णादिद्वन्द्वप्रतीकाराय वस्त्राद्यपेक्षणात् कथं निष्कामत्वं सिध्येदिति चेत् निर्द्वन्द्वो भव कथं द्वन्द्वसहनं कर्तुं शक्यं इति चेत् नित्यं अचञ्चलं सत्त्वं धैर्यं तत्र स्थितिमान् भव ॥ धैर्यमवलंब्य द्वन्द्वं सहस्वेत्यर्थः ॥ नित्यं सत्वगुणे स्थितिमान् भव ॥ विवेकेन रजस्तमसी अभिभूय सत्त्वमात्रावलम्बनो भव इति वा ॥ शीतोष्णादिसहनेऽपि असह्यक्षुत्पिपासापरिहाराय अप्राप्तस्य संपादनं प्राप्तस्य परिरक्षणं चेत्येतदुभयं कर्तव्यं तदर्थं यत्ने क्रियमाणे कथं नित्यसत्वस्थत्वं सिध्येत् इति चेत् निर्योगक्षेमो भव ॥ यद्यहमेवं स्यां तर्हि कथमहं जीविष्यामि मदीया वा कथं जीविष्यन्तीति चेत् आत्मवान् भव ॥ परमात्मैव मदीययोगक्षेमनिर्वाहको वर्तते इति ज्ञानवान् भव ॥ निस्त्रैगुण्यः गुणत्रयातीतः भव ॥ गुणत्रयातीतो भव सत्वगुणस्थो भव इत्युभयोक्ति कथं युज्यते ॥ [सत्व]गुणस्थो गुणत्रयातीतो न भवेत् गुणत्रयातीतः सत्वगुणस्थो न भवेत् इति परस्परविरोधादिति चेत् रजस्तमसी अभिभूय सत्वमात्रस्थो भव ॥ मोक्षस्य तत्साधनज्ञानस्य तत्साधनस्य शमदमक्षान्त्यादेश्च सत्वगुणैकलभ्यत्वात् ॥ तच्च शुद्धं सत्वं ज्ञानमुत्पाद्य स्वयं नश्यतीति निस्त्रैगुण्यतासिद्धिरिति न विरोधः ॥ आत्मा अवधानं तद्वान् अप्रमत्तो भव ॥ आत्मा मनः तद्वान् प्रशंसायां मतुप् ॥ निश्चलचित्तो भव इति वा ॥ वेदः प्रलो-

भनार्थं प्रतिपाद्यमानं काम्यकर्म परित्यज्य तात्पर्येण प्रतिपाद्यमानमकाम्यमेव कर्म त्वया कर्तव्यम् ॥

एवं अकाम्यं कर्म कृत्वा ज्ञानेन मोक्षमाप्तुं कथं मया स्थातव्यं इति चेत् त्रैगुण्यविषया वेदाः त्रयो गुणा यस्य तत् त्रिगुणं त्रिगुणात्मकमव्यक्तं त्रिगुणादुत्पन्नं त्रैगुण्यं प्रकृतिपरिणामभूतं जगत् तदेव कर्मकांडं प्रतिपाद्यते ॥ त्वं तु तस्माज्जगत त्रैगुण्यशब्दिताान्निष्क्रान्तो भव ॥ सर्वसंन्यासं कुर्वित्यर्थः ॥ कृतेऽपि सर्वसंन्यासे बहिर्मुखस्य ज्ञाननिष्ठा न सिध्येत इति चेत् निर्द्वन्द्वो भव ॥ द्वन्द्वे नामरूपे ताभ्यां निर्गतो भव ॥ नामरूपयोर्ग्रहणं मा कुरु ॥ निद्रां कुर्वतोऽपि नामरूपग्रहणं न भवति तेन को विशेषो ज्ञानिन इति चेत् नित्यसत्वस्थो भव ॥ सतो ब्रह्मणो भावः सत्वं ब्रह्मत्वं नित्यं तत्र स्थितो भव ॥ सदा सर्वत्र ब्रह्मत्वानुसन्धानवान् भव ॥ तेन निर्योगक्षेमो भव ॥ देहयात्रानुकूलद्रव्यसंपादनं योगः तेन देहस्य पालनं क्षेमः ताभ्यां विनिर्गतो भव ॥ सर्वत्र ब्रह्मदृष्ट्या देहाभिमानं परित्यज ॥ तत्र ब्रह्मदृष्टौ आत्मवान् अप्रमत्तो भव ॥ तदर्थं आत्मवान् आत्मा ब्रह्माकारा बुद्धिः सर्वत्र तद्वान् भव ॥ आत्मानमेव अहंबुद्धेर्विषयं कुरु ॥ अनात्मानं अहंबुद्धेः क्वचिदपि कदाऽपि विषयं मा कुरु ॥ अनात्मानमात्मानं माज्ञासीरित्यर्थः ॥ एवं स्थितो विदेहकैवल्यं प्राप्स्यसि ॥ ४५ ॥

वि ॥ परमकारुणिकभगवदाज्ञारूपाणां वेदानां आमूलाग्रं अपरिमितदुःखदुर्दिनानुबन्धिसुखकणखद्योतसाधनोपदेशो विषसंपृक्तमधुभोजनोपदेशवदयुक्त इति चेत् वेदाः त्रैगुण्याः सत्वरजस्तम प्रचुराः सात्विकाः राजसाः तामसाश्च विषयाः उपदेशोद्देश्या येषां ते तादृशाः ॥ अतः त्रयाणामपि एषां उपदेशोद्देश्यत्वसाम्यात् तेषां त्रयाणामपि वत्सलतया हितमुपदेष्टव्यं वेदैः ॥ अतः यस्य यद्धितं तस्य तदुपदिशन्ति वेदाः ॥ सात्विकराजसतामसानां त्रयाणां पुत्राणां प्रसूः त्रयाणामपि तेषां पुत्रत्वसाम्यात् यस्य यद्धितं तदेव [illegible] करोति ॥ न तु सात्विकमेकं स्वीकृत्य राजसतामसौ परित्यजति ॥ यदि राजसतामसयोः हितं अन्नपानादिकं न विदध्यात्प्रसूः तर्हि तौ प्रसुवं सं च पितरं हित्वा स्वैरं तत्रतत्र भोजनादिकमाचरन्तौ प्रणश्येताम् ॥ तद्वत् वेदाः यदि राजसानां तामसानां च हितं नोपदिशेयुः ॥ तर्हि ते हितं तत्साधनं चाजानन्तः अनुपादेयमुपादेयं मन्यमानाः अपथे प्रवृत्ताः स्वयं प्रणश्येयुः ॥ अतस्तेभ्योऽपि हितमुपदिशन्ति वेदाः ॥ एकैकस्यापि हितमा-

चरन्त्यां जनन्यां वत्सलेयमावयोर्यद्धितं तद्विदधाति श्राम्यति च तेन इति प्रीति-मधिकां कुर्वन्तौ राजस तमसौ हितमित्यनया यत् क्रियते तदेवाऽऽवयोर्हितमिति मातृकस्य पुत्रस्य कृते तया क्रियमाणं सात्विकाहारमेव भुंजानौ आयुरारोग्यादि-रूपामैहिकीं सत्वशुद्ध्यादिद्वारा आमुष्मिकीं च सिद्धिं लभेते ॥ तद्वत् राजसास्ता-मसाश्च यद्धितमस्माकं तदुपदिशन्तीमे वेदाः अतो वत्सलतराः अतो यद्धितमि-त्येवैरुपदिश्यते तदेवास्माकं हितमिति समुपजातविस्रंभाः सात्विकानामर्थं वेदै-रुपदिश्यमाने मोक्षतत्साधनज्ञानतत्साधनताकाम्यकर्मरूपे मार्गे प्रवृत्ताः परमां सिद्धि-मधिगच्छन्ति ॥ अतो वेदास्त्रयाणामपि तेषां तामसराजससात्विकानां तत्तद्गुणानु-गुण्येन ऐहिकामुष्मिकापवर्गफलाभिलाषिणां हितमुपदिशन्ति ॥ उपदिशन्तु नाम ॥ त्वं तु निस्त्रैगुण्यो भव ॥ [1]अन्योन्यसङ्कीर्णगुणत्रयान्निर्गतो भव ॥ प्रकृतिबद्धेन कथं प्रकृतिगुणेभ्यस्त्रिभ्योऽपि निर्गन्तुं शक्यं इति चेत् नित्यं रजस्त-मोभ्यामनभिभवात् प्रवृद्धे सत्वे स्थितो भव ॥ सत्वगुणमेव वर्धय ॥ रजस्तमसी तु मा वर्धय ॥ नित्यसत्वस्थ इति रजस्तमोऽनभिभूतसत्वगुणवर्धनपरम् ॥ निस्त्रै-गुण्य इति अन्योन्यसंकीर्णसत्वादिगुणत्रयवर्धननिषेधपरम् ॥ अतो न विरोधः ॥ कथमेतत् सिध्येदिति चेत् निर्द्वन्द्वो भव ॥ पुण्यपापमूलकसांसारिकस्वभाव-वर्गद्वयान्निर्गतो भव ॥ सकलविधसांसारिकस्वभावेभ्यो निर्गतो भव ॥ क्रमेण मुक्तो भव ॥ साधनदशायां शीतोष्णादिद्वन्द्वसहिष्णुर्भव ॥ एवं सति योगक्षेमनिर्वाहः कथं स्यादिति चेत् निर्योगक्षेमो भव ॥ अप्राप्तस्य प्राप्तिर्योगः प्राप्तस्य परिरक्षणं क्षेमः ता-भ्यामुभाभ्यां निर्गतो भव तच्चिन्तारहितो भव ॥ अप्राप्तात्मस्वरूपप्राप्तितत्परिरक्षणा-भ्यामपि निर्गतेन भवितव्यं वा इति चेत् आत्मवान् भव ॥ आत्मस्वरूपान्वेषणपरो भूत्वा शुद्धात्मस्वरूपं लभस्व ॥ आत्मस्वरूपान्वेषणपरो भूत्वा तद्बहिर्भूतयोगक्षेम-चिन्तां परित्यज्य साधनदशायां शीतोष्णसुखदुःखादिद्वन्द्वसहिष्णुर्भूत्वा सत्वगुण-प्राचुर्यहेतुभूतसात्विकाहारादीन् सेवमानः सत्वगुणमभिवर्धयन् रजस्तमःप्राचुर्य-हेतुभूतराजसतामसाहारादीन् परित्यजन् रजस्तमसी अभिभूय नित्यप्रवृद्धशुद्धस-त्वस्सन् अन्योन्यसंकीर्णगुणत्रयातीतो भूत्वा सात्विकानामपवर्गाभिलाषिणामधि-

---

[1] यथा वातपित्तकफप्रकृतीन् त्रिविधान् पुरुषान् प्रति हितोपदेशिनो वैद्याः पर्यालोच्य तत्तत्प्रकृत्यनुगुणं भेषजभोजनादि विदधति तद्वदिति बोध्यम् ॥

कारिणामर्थं वेदैर्विहितानि अकाम्यकर्माण्येव कृत्वा तद्बललब्धसत्त्वशुद्धिस्सन् सकलसांसारिकधर्मेभ्यो विनिर्मुक्तो मुक्तो भव ॥ तथा भवितुं प्रयतस्व ॥ अर्जुनत्वात् त्वमेवं कर्तुमर्होऽसि ॥ ४५ ॥

अर्जुनः ॥ अकाम्यकर्म प्रशस्य काम्यकर्म च विगर्ह्य निस्त्रैगुण्यो भवेति काम्यकर्मत्याजनपूर्वकं अकाम्यं कर्म कुरु इत्युक्तं भवता कथमिदं युज्यते ॥ स्वर्गादिफलार्थं काम्यकर्मानुष्ठानं कर्ममार्गः ॥ मोक्षसाधनभूतज्ञानार्थमकाम्यकर्मानुष्ठानं ज्ञानमार्गः ॥ यथा कर्मिणां ज्ञानमार्गफलभूतो मोक्षो नास्ति तथा ज्ञानिनां कर्ममार्गफलभूतं स्वर्गादिकं नास्ति इति तयोस्साम्यात् ॥ समानयोर्मध्ये एकं विनिन्द्य अन्यस्मिन् विनियोजन न युक्तम ॥ वद ॥

कृष्णः ॥ यावानर्थ उदपाने सर्वतः संप्लुतोदके ॥
तावान सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥ ४६ ॥

यावानिति ॥ पीयतेऽस्मिन्निति पानं उदकस्य पानं उदपानं कूपादि तस्मिन उदपाने यावान अर्थः यावन प्रयोजनं भवति तावान अर्थः तावन प्रयोजनं सर्वतः सर्वत्र संप्लुतं पूर्णं उदकं यस्मिन तत संप्लुतोदकं समुद्रादि तस्मिन समुद्रादौ यथा भवति ॥ एवं सर्वेषु वेदेषु कर्मकाण्डात्मकेषु यावान अर्थः भवति तावान अर्थः विजानतः परोक्षज्ञानवतः तेन ब्राह्मणस्य ब्रह्म अणति गच्छति जानाति इति ब्राह्मणः तस्य अपरोक्षज्ञानवतः भवति ॥ ४६ ॥

उदपाने कूपे यावान् स्नानपानाऽऽचमनादिरूपोऽर्थः प्रयोजनं भवति तावान् अर्थः सर्वतः संप्लुतोदके समृद्धजले समुद्रे महानद्यादौ वा यथा भवति ॥ दृष्टान्तदार्ष्टान्तिकभावबलात एवमिति लभ्यते ॥ [illegible] यावान् अर्थः तावान् अर्थः इति च लभ्यते ॥ एवं सर्वेषु वेदेषु कर्मकांडात्मकेषु प्रवृत्तस्य काम्यकर्मभिर्यावानर्थः स्वर्गादिरूपः तावान् अर्थः विजानतः अकाम्यकर्मलब्धचित्तशुद्धिद्वारा लब्धपरोक्षज्ञानस्य तेन ज्ञानेन ब्राह्मणस्य लब्धापरोक्षज्ञानस्य भवति ॥ कूपप्रयोजनं समुद्रादौ यथा भवति तथा काम्यकर्मप्रयोजनं ज्ञाने भवति ॥ एवं समुद्रादौ यावानर्थः तावानर्थः उदपाने भवतीति काकुः न भवति ॥ विजानतः ब्राह्मणस्य ज्ञानमार्गे यावानर्थः

तावानर्थः वेदेषु काम्यकर्ममार्गे भवतीति काकुः न भवति ॥ अल्पोदककूपादि प्रयोजनं सर्वं समुद्रादौ भवति समुद्रादिप्रयोजनं सर्वं कूपादौ न भवति ॥ तथा काम्यकर्मफलं स्वर्गादिकं सर्वं ज्ञानमार्गे भवति ॥ ज्ञानमार्गफलं मोक्षादिकं सर्वं काम्यकर्ममार्गे न भवति ॥ स्वर्गादेर्ज्ञानफलैकदेशस्य कर्मणि सत्त्वेऽपि ज्ञानफलं सर्वं कर्मणि न भवति ॥ एतत्सूचनायैव यत्तच्छब्दप्रयोगमकृत्वा यावत्तावच्छब्द-प्रयोग कृतः ॥ अतो न काम्यकर्मज्ञानमार्गयोः साम्यम् ॥ किन्तु महद्वैषम्यम ॥ अतः सर्वतः सम्प्लुतोदकमहानदीसमुद्रादितुल्यत्वात ज्ञानमार्गस्य तद्धेतुभूतमकाम्यमेव कर्म कुरु इत्युक्तम् ॥ युक्तमेव हि नर! उत्कृष्टफलकोपायं साधितवत निकृष्टफलको-पायफलं करस्थ निकृष्टफलकोपायं साधितवत उत्कृष्टफलकोपायफलं कफोणी-गुडायितम् । अत उत्कृष्टफलक एवोपाय आश्रयणीय ॥ राजधानीस्थ प्रधानव्यव-हारस्थानीस्थप्रधानप्राड्विवाकसमक्षं व्यवहर्तृ पदं साधितवत शाखोपशाखाय-माननगरोपनगरस्थव्यवहारस्थानीस्थाप्रधानप्राड्विवाकसमक्षं व्यवहर्तृपदं कर-स्थम् ॥ इदं साधितवत नत्तु कफोणीगुडायितम ॥ इति विदितमेव लोके ॥ '१पुरुषार्थोऽतः शब्दादिति बादरायण ॥' इति सूत्रम ॥ २ 'ज्ञानादेव स्वर्गो ज्ञाना-देवापवर्गो ज्ञानादेव सर्वे कामाः सपद्यन्ते ॥' इति ॥ ३ 'यं यं लोकं मनसा संवि भाति विशुद्धसत्त्वः कामयते यांश्च कामान् ॥ तं तं लोकं जयते तांश्च कामान् तस्मादात्मज्ञं ह्यर्चयेद्भूतिकाम ॥' इति च श्रुतिः ॥ ४'संकल्पादेव च तच्छ्रुते ॥' इति सूत्रम् ॥ ५ 'स यदि पितृलोककामो भवति संकल्पादेवास्य पितर समुप-तिष्ठन्ति ॥' इति श्रुतिश्च ॥

६ 'सर्वतः संप्लुतोदके उदपाने महानद्यादौ यावानर्थः कूपादिप्रयोजनापे-क्षया परमोत्कृष्टप्रयोजनं भवति ॥ सर्वेषु वेदेषु विजानतो ब्राह्मणस्य तावा-नर्थः काम्यकर्मप्रयोजनस्वर्गाद्यपेक्षया परमोत्कृष्टं मोक्षरूपं प्रयोजनं भवति ॥ यदन्तरं कूपादेरल्पोदकस्य समु[illegible] संप्लुतोदकस्य च तदन्तरं काम्य[illegible]र्ममार्गस्य

१. ३. ४. १ २. कौठरव्यश्रु । ३. मु. ३. १०. ४. ४. ४. ८ ५. छा. ८. २. १
६. द्वितीयतृतीयतुरीययोजनासु यथैवंपदयोरध्याहार यावानतावानित्यनयोरावृत्तिश्च न ॥ इतरासु मतत्रययोजनासु तदुभयमप्यस्ति ॥

ज्ञानमार्गस्य च ॥ अत ज्ञानमार्गादवरत्वात् काम्यकर्ममार्गस्य तत्याजनपूर्वकं ज्ञानहेतुभूताकाम्यकर्मोपदेशः कृत ॥ सर्वतः संप्लुतोदके समुद्रादौ सति उदपाने कूपे यावानर्थः तावानेव विजानत अत ब्राह्मणस्य परमात्ममननशीलस्य तस्मिन् महामार्गे सति सर्वेषु वेदेषु कर्मकाण्डात्मकेषु अर्थः ॥ महानद्यादिकं यस्य संनिधे अस्ति तेन कूपोदकं यथा नाऽऽश्रीयते ॥ तथा ज्ञानतत्साधनकर्ममार्गयोग्यता यस्यास्ति तेन काम्यकर्ममार्गो नाऽऽश्रयणीय ॥ इति वा ॥

त्रैगुण्यविषया वेदा ध्यं तु निस्त्रैगुण्यो भवेत्यनेन वेदानामापातत प्रतीतो योऽर्थः तत्र विश्वासं मा कुरु ॥ तात्पर्येण प्रतिपाद्यमानो योऽर्थ तत्रैव विश्वासं कुरु इत्युक्त्वा तं चार्थं ज्ञानतत्साधनकर्मरूपं समुद्रादिदृष्टान्तेन प्रशस्य अतो वेदतात्पर्यविषयीभूते अकाम्यकर्मणि प्रवर्तस्वेत्युक्तम ॥ एवं उभयथा प्रतिपादनेन मनः खेदयन्तो नश्वरफलमापातत प्रतिपाद्य प्रलोभयन्तो वेदाः किमर्थमाश्रयणीया ॥ कुतस्ते न त्याज्या ॥ ब्रूहि इति चेन्न सर्वतः संप्लुतोदके प्रलयोदके स्थिते उत्कृष्टत्वात् उत पद्मांकितपालकग्राहित्वात अप सर्वव्यापकत्वात् अतः उभ्रासौ अपश्चासौ अतश्च उदपान परमात्मा तस्मिन् सर्वेषां भावानां लयकालेऽप्येतादृशे परमात्मनि सति तत्प्रसादेनेति यावत् ॥ भक्तिज्ञानवैराग्यमोक्षादिरूपो यावानर्थो भवति तावान् सर्वोऽप्यर्थ सर्वेषु वेदेषु विशेषेण ज्ञानवतो ब्राह्मणस्यैव भवति ॥ वेदतात्पर्यविषयीभूतार्थं ज्ञात्वा अकाम्यं कर्म कृत्वा तेन परोक्षज्ञानवान् भूत्वा तेन लब्धापरोक्षज्ञानस्यैव भवति ॥ परमात्मस्वरूपज्ञापने वेदा एव प्रभवन्ति ॥ नान्ये ॥ वक्ष्यते च मया ॥ १ 'यदक्षरं वेदविदो वदन्ति ॥ इति ॥ २ 'वेदैश्च सर्वैरहमेव वेद्यः' इति च ॥ ३ 'सर्वे वेदा यत्पदमामनन्ति' इति श्रुति ॥ अतो वेदा न त्याज्या ॥ किन्तु तेषामापातत: प्रतीयमानोऽर्थ एव त्याज्य ॥ स्वीकर्तव्यश्च तैः तात्पर्येण प्रतिपाद्यमानोऽर्थ. ॥ अत उक्तं युक्तम ॥ ४६ ॥

अ ॥ अर्जुनः ॥ वेदैः काम्यकर्मणां प्रतिपादनेऽपि त्वमकाम्यान्येव कर्माणि कुरु इत्युक्तम ॥ निष्फलानि तानि किमर्थं कर्तव्यानि ॥ न हि लोके निष्फलं कर्म कोऽपि कुर्यात् ॥ वद ॥

१. ८. ११. २. १५. १५. ३. का. २. १५.

कृष्णः ॥ अकाम्यकर्माणि न निष्फलानि ॥ किन्तु सफलान्येव ॥ फलान्यपेक्ष्य इन्द्राद्यवरदेवान् उद्दिश्य क्रियमाणानां काम्यकर्मणामेव फलवत्त्वं किं वाच्यं फलानपेक्षया साक्षात्परमात्मानमुद्दिश्य क्रियमाणानां अकाम्यकर्मणां फलवत्त्वमस्तीति ॥ किं तदकाम्यकर्मफलं इति चेत् अन्त करणशुध्यादीनि तानि प्रधानसाधनापरोक्षज्ञानफले अन्तर्भूतानि ॥ अङ्गानां प्रधानफलेनैव फलवत्त्वम् ॥ नांगेषु प्रत्येकं फलविचार कर्तव्य ॥ न हि यागादौ सन्ध्यावन्दनादौ च प्राङ्मुखत्वोदङ्मुखत्वादेः फलविचार क्रियते॥ यथा उदपाने यावानर्थ. तावानर्थ. सर्वत. संप्लुतोदके समुद्रादौ भवति॥ कूपादिषु यत्प्रयोजनं तत्प्रयोजनं समुद्रादिप्रयोजनं अन्तर्भवति ॥ तथा सर्वेषु वेदेषु वेदोक्ताकाम्यकर्मसु यावानर्थः तावानर्थः विजानत ब्रह्म सम्यक जानत. ब्राह्मणस्य ब्रह्मैवाहमिति साक्षात्कृतवत भवति ॥ अकाम्यकर्मफलं ज्ञानफले अन्तर्भवति ॥ वक्ष्यते च ॥ १' सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते॥ इति ॥ यद्येवं तर्हि फलवत्त्वादकाम्यत्वं न स्यात् इति चेत् सफलानि काम्यानि निष्फलान्यकाम्यानीति न विभागः ॥ किन्तु अभिसंहितफलानि काम्यानि अनभिसंहितफलान्यकाम्यानि इति ॥ अत फलमनपेक्ष्य अकाम्यानि कर्माणि कुरु इति युक्तमेवोक्तम् ॥ अर्थ दृष्टान्ते स्नानपानाचमनादि ॥ दार्ष्टान्तिके मनश्शुद्ध्यादि ॥

अकाम्यकर्मणां फलानि मन शुध्यादीनि तानि च तेषां फलानि प्रधानज्ञानफले अन्तर्भूतानि ॥ अतोऽकाम्यानि कर्माणि कर्तव्यान्येवेत्युक्तम ॥ अस्त्वकाम्यकर्मणां कर्तव्यत्वम ॥ काम्यानि कर्माणि न कर्तव्यानि इति यदुक्तं तत्कथम ॥ यदि काम्यानि कर्माणि न क्रियेरन् ॥ तर्हि तत्तत्काम्यकर्मजनितस्वाराज्यमहीराज्यगेहारामपशुपुत्रादितत्फलानुभवजन्यै सर्वविधैरानन्दैरहं विहीन स्यामिति चेत् यावानर्थ इत्यादि पूर्ववत् ॥ यथा कूपादिप्रयोजनं समुद्रादिप्रयोजने अन्तर्भवति ॥ तथा सर्ववेदोक्तकाम्यकर्मफलानुभवजन्यानन्दः विजानतो ब्राह्मणस्य ज्ञानफले महति मोक्षानन्दे अन्तर्भवति ॥ ब्रह्मानन्दे क्षुद्रानन्दानामन्तर्भावात् ॥ २'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति श्रुतिः ॥ मा भूवन्नाम तेन कर्मफलानुभवजन्या आनन्दा अक. . .यकर्मज्ञानसाक्षात्कारलभ्यमोक्षानन्दस्य अंशांशै-

१. ४. ३३. २. बृ. ३. ३. ३२.

कदेशाः खलु ते ॥ अतः क्षुद्रानन्दफलकानि काम्यानि कर्माणि परित्यज्य मोक्षानन्दफलकमकाम्यमेव कर्म कुर्विति युक्तमेवोक्तम् ॥ अर्थः दृष्टान्ते पुण्यविशेषः ॥ दार्ष्टान्तिके आनन्दः ॥

काम्यकर्मफलानुभवजन्य आनन्दः ब्रह्मानन्दस्यैकदेश इत्युक्तम् ॥ तत्कथं ब्रह्मादिपदानुभवजन्यपरमोत्कृष्टानन्दस्यापि काम्यकर्मफलत्वेन काम्यकर्मफलानुभवजन्यानन्दसामान्यस्य ब्रह्मानन्दैकदेशत्वासंभवात् इति चेत् यावानर्थ इत्यादि पूर्ववत् ॥ यथा कूपादिजलं समुद्रादिमहाजलांशांशैकदेशः तथा सर्वेषु शब्दस्पर्शादिविषयजातं विदन्तीति वेदाः पिपीलिकादिब्रह्मान्ताश्चेतनाः तेषु यावान् आनन्दः तावानानन्दः विजानतः ब्राह्मणस्य भवति ॥ तत्रतत्र विद्यमानः आनन्दः ब्रह्मानन्दांशांशैकदेश इत्युक्तं भवति ॥ अत उक्तं युक्तम् ॥ अर्थः दृष्टान्ते जलं दार्ष्टान्तिके आनन्दः ॥ अतस्तादृशब्रह्मानन्दावाप्तये निस्त्रैगुण्यो भूत्वा अकाम्यमेव कर्म कुरु ॥

निस्त्रैगुण्यो भूत्वा अकाम्यकर्मानुष्ठाय ज्ञानद्वारा मोक्षमाप्नुहीत्युक्तम् ॥ गुणत्रयसंबन्धिकर्मतत्फलप्रतिपादकवेदभागपरित्यागेन ज्ञानकाण्डात्मकवेदभागमात्राश्रयणात् कथं श्रेयः सिध्येत् इति चेत् सर्वतः संपूर्णोदके उदपाने जलाशयादौ अर्थः स्नानपानादि यावान् घटमात्रजलनिर्वर्त्यः न तु कृत्स्नजलाशयजलव्ययनिर्वर्त्यः भवति ॥ सर्वेषु वेदेषु विजानतः ब्रह्म बुभूषोः तावानर्थः श्रेयोरूपः वेदैकदेशोपनिषद्रूपज्ञानकाण्डमात्रनिर्वर्त्यः ॥ न तु कृत्स्नवेदभागनिर्वर्त्यः ॥ अतः निस्त्रैगुण्यो भूत्वा अकाम्यकर्म ज्ञानार्थं कुर्विति युक्तम् ॥

उक्तरीत्या वेदानामतिगहनतया परित्यज्य तान् अन्येषामेव ग्रन्थानामाश्रयणं क्रियतां इति चेत् उदपाने यावानर्थः तावानर्थः सर्वतः संप्लुतोदके महाह्रदादौ यथा भवति ॥ तथा सर्वेषु शास्त्रपुराणादिषु यावानर्थः तावानर्थो विजानतो ब्राह्मणस्य वेदेष्वेव भवति ॥ दृष्टान्ते अर्थः स्नानपानादिः दार्ष्टान्तिके कर्मनैष्कर्म्यादिः ॥ सर्वप्रमाणापेक्षया वेदानां प्राबल्यात्त एव सर्वथा आश्रयणीयाः ॥ अतस्तानाश्रित्य तैस्तात्पर्येण प्रतिपाद्यमानं निवृत्तिकर्मैव कुरु ॥ ४६ ॥

वि ॥ अर्जुनः ॥ सात्त्विकानां राजसानां तामसानां च यद्यद्धितं तत्तदखिलं अभिदधति वेदाः सर्वार्थं प्रवृत्तत्वात् ॥ त्वं तु नित्यप्रवृद्धसत्त्वप्रचुरो भूत्वा

सात्विकानामर्थं वेदैर्यदुच्यते तदेवोपादत्स्व इत्युक्तम् ॥ तत्कथम् ॥ प्रमाणतमेन वेदेन प्रतिपादितेष्वर्थेषु कस्यचिदंशस्य परित्यागे वेदत्यागी खलु स्याम् ॥ कथं वैदिकेन मया वेदोक्तं त्यक्तुं शक्यम् ॥ वद ॥

कृष्णः ॥ सर्वार्थपरिकल्पिते सर्वतः संपूर्णोदके कूपतटाकादौ स्नानपानादिकं चिकीर्षोः यावान् अर्थः तावानेव हि उपादीयते ॥ यावत्पानीयं प्रयोजनसाधनं तावदेव स्नानपानाद्यर्थमुपादीयते ॥ न सर्वमपि ॥ एवं सर्वेषु वेदेषु सर्वार्थप्रवृत्तेषु काम्याकाम्यकर्मतत्तत्फलप्रतिपादकेषु ब्राह्मणस्य वैदिकस्य विजानतो मुमुक्षोः यावानर्थः तावानेवोपादेयः । यदेव मोक्षसाधनं तदेवोपादेयम् ॥ नान्यत् ॥ सर्वार्थप्रवृत्तत्वादधिकमेव तत्र वर्तते ॥ यस्य यावदावश्यकं तेन तावदेवोपादातव्यम् ॥ न हि कूपादौ विद्यमानं सर्वं जलमुपादीयते केनापि ॥ किंतु स्वप्रयोजनाय यावदावश्यकं तावदेव ॥ अतस्त्वं अन्तःकरणशुद्धिज्ञानादिद्वारा मोक्षाधायिषु वेदेषु यदावश्यकं तव तदेवोपादत्स्व ॥ वेदोक्तपरित्यागाद्बिभेमीति चेत् वेदोक्तपरित्यागात् बिभ्यत् त्वं किं वेदोदितं स्त्रीधर्मं ब्रह्मचारियतिवानप्रस्थादिधर्मं चानुतिष्ठासि ॥ नेति चेत् कुतः अधिकारिभेदनियतत्वादुपदेशस्य क्षत्रियस्य गृहस्थस्य यदुपादेयं तदेवोपादीयते मया इति चेत् सात्विकेन त्वया यदुपादेयं तदेवाकाम्यकर्मादिकमुपादत्स्व इति युक्तमेवोक्तम् ॥ अनेकार्थपरिकल्पिते अन्नसूपरसभक्ष्यभोज्यशाकोपदंशादिराशावेकैकस्मिन्नपि स्वीयक्षुन्निवृत्तये यावदावश्यकं तावदेवैकैको भुंक्ते ॥ न त्वस्त्यधिकमिति कोऽप्यखिलमत्ति ॥ तथैवेदमित्यवधेहि ॥ ४६ ॥

॥ अर्जुनः ॥ फलानि परित्यज्य कर्माण्यकाम्यतया कर्तव्यानि इत्युक्तम् ॥ 'स्वर्गकामो यजेत' त्यादिविधिपदघटितवेदवाक्यनिर्दिष्टं फलं वैदिकोऽहं कथं परित्यजेयम् ॥ वद ॥

कृष्णः ॥ कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ॥
मा कर्मफलहेतुर्भूः मा ते सङ्गोऽस्त्वकर्मणि ॥ ४७ ॥

कर्मणीति ॥ ते तव कर्मण्येव अधिकारः फलेषु कदाचन कदाचिदपि मा न ॥ कर्मणि फलं हेतुः यस्य सः कर्मणः फलं कर्मफलं कर्मफलस्य हेतुः

वा कर्मफलहेतुः मा भूः ॥ ते तत्र न कर्म अकर्म विरुद्धं निषिद्धं काम्यं च तत्र कर्मणोऽभावः अकर्म कर्माकरणं तत्र च संगः इच्छा माऽस्तु ॥ ४७ ॥

कर्मण्येवाधिकारः पुरुषप्रयत्नसाध्यत्वरूपकार्यत्वम् ॥ फलकामनासु मा न ॥ अतः कर्मण्येवाधिकारः विधिः ॥ फलकामनासु मा न ॥ अत कर्मण्येव अधिकार अकरणे प्रत्यवायकथनम् ॥ फलकामनासु मा न ॥ अतः विध्युद्देश्यस्य त्वादृशस्य कर्मण्येव विधिविहिते अधिकारः प्रवृत्तियोग्यता कृतिविषयत्वात् ॥ विधिवाक्यनिर्दिष्टेष्वपि फलेषु कदाऽपि अधिकारो नास्ति ॥ फलकामनाया तत्तत्फलगतगुणविशेषाधीनत्वादविधेयत्वेन कृतिविषयत्वाभावात् ॥ कर्मण्येव विधिः न फले ॥ फलप्रदर्शनं तु कर्म कारयितुम् ॥ भेषजं ग्राहयितुं शर्कराप्रदर्शनवत् ॥ अतः कदाऽपि कर्मणि फलं हेतुर्यस्य तादृशो मा भूः ॥ फलकामनया कर्म मा कुरु ॥ कर्मणीव फलेऽपि विधिं मत्वा फलकामनया कर्म कुर्वाणास्तु यामिमामित्यादिना निन्दिताः॥ यद्येवं तर्हि किमकाम्यकर्मणा श्रममात्रजनकेन इति चेत् तव कर्माकरणे विरुद्धनिषिद्धकाम्यकर्मकरणे च सङ्गशब्दिता आसक्तिर्मास्तु ॥ ते असङ्गः इति छेदः ॥ अस्य भगवतः कर्म अकर्म अकाम्यकर्म तस्मिन् ते असङ्गः अनिच्छा मास्तु इति वा ॥ अल्पास्थिरस्वर्गपशुपुत्रादिफलाभावेऽपि अनल्पस्थिरमोक्षरूपपरमपुरुषार्थसाधनभगवज्ज्ञानभक्तिप्रसादरूपमहाफलानां भावात् ॥ तत्कामनायास्तु अनिन्द्यत्वेन शिष्टाचारावगतत्वात् ॥ १ 'वहिस्तूभयथाऽपिस्मृतेराचाराच्चे'ति सूत्रम् ॥ अस्त्वेवं अज्ञानिनो ज्ञानार्थिनः कर्माऽऽवश्यकम् ॥ लब्धज्ञानरूपकर्मफलेन ज्ञानिना किमर्थं कर्म कार्यमिति चेत् ज्ञानरूपफललाभेऽपि मोक्षे आनन्दातिशयरूपफललाभार्थं ज्ञानिनाऽपि कर्म कर्तव्यमेव ॥ अत ज्ञानिनः अज्ञानिनो वा ते अकर्मणि सङ्गो माऽस्तु ॥ २ 'भावं तु बादरायणोऽस्ति हि ॥' इति सूत्रम् ॥ अतः अकामनया कर्मकुर्विति युक्तमुक्तम् ॥

नित्यसत्वस्थः आत्मवान् इत्यनेन स्वामित्वेन हरिस्मरणं कर्तव्यमित्युक्तम् तथा ब्रह्मैवाहमित्यभेदेन हरिस्मरणं न कर्तव्यं इत्युक्तं भवति ॥ तत्कुत इति चेत् त्वादृशस्य सर्वस्यापि जीवस्य कर्मण्येव योग्यता ॥ कदापि फलेषु योग्यता नास्ति ॥

१. ३. ४. ४३. २. १. ३. ३३.

अतः फलदानशक्तत्वाशक्तत्वाभ्यां ईश्वरजीवयोर्भेदावश्यंभावाद्भेदासंभवेन कर्मफलहेतुरीश्वरो मा भूः ॥ त्वामीश्वरं मा मंस्थाः ॥ अभेदं माऽनुसन्धेहि ॥ १ 'फलमत उपपत्तेः ॥' इति सूत्रम् ॥ स्वामित्वेन हरिस्मरणेनैवालं किं कर्मणा इति चेत् तव अकर्मणि सङ्गो मास्तु ॥ कर्तव्याकरणहेतुकप्रत्यवायनिवृत्तये भगवत्प्रसादार्थं च कर्म कर्तव्यमेव ॥ न हि प्रसादजनकं किमपि कर्माकुर्वति स्वामित्वेन स्मरणमात्रात्प्रभुप्रसादो दृश्यते ॥ ४७ ॥

अ ॥ अर्जुनः ॥ मोक्षसाधनभूतज्ञानलाभार्थमकाम्यकर्माणि कुर्वित्युपदिश्यते ॥ मोक्षस्य अन्तरङ्गसाधनं ज्ञानमेवोपदिश्यताम् ॥ बहिरङ्गसाधनानि श्रमजनकानि कर्माणि कुर्विति किमर्थं निर्बध्नासि ॥ ४८ ॥

कृष्णः ॥ अशुद्धान्तःकरणस्य तवेदानीं कर्मण्येव अधिकारः योग्यता ॥ न ज्ञाने न वा कर्मसंन्यासे ॥ अतो बहिरङ्गसाधनं कर्मैव त्वया अनुष्ठेयम् ॥ तर्हि फलाभिलाषोऽपि स्यात् इति चेत् तव फलेषु अधिकारः कामः कदाऽपि मा भूत् ॥ कर्मण्येव ते अधिकारः मया इदं कर्तव्यमिति बोधः अस्तु ॥ फलेषु अधिकारः मयेदं फलं भोक्तव्यमिति बोधः माऽस्तु ॥ फलेषु ते सङ्गः मा भूत् ॥ सङ्ग इत्युत्तरार्धस्थमपकृष्यते ॥ इति वा ॥ फलकामनया काम्यकर्मकरणं बन्धहेतुः ॥ अतः कर्मफलस्य हेतुः मा भूः ॥ फलकामनायां कर्मफलहेतुः स्याः ॥ भवति हि स्वर्गकामी स्वर्गकामनया स्वर्गप्राप्तिहेतुः ॥ अतः यया फलकामनया फलप्राप्तिहेतुर्भवेः तां फलकामनां त्यज ॥ कर्मफलं स्वर्गपशुपुत्रादिकं हेतुः कर्मसु प्रवर्तकं यस्य तादृशो मा भूः ॥ फलापेक्षया कर्मकृन्मा भूः ॥ इति वा ॥ फलानपेक्षानिर्बन्धे कर्मैव माऽस्तु इति चेत् तव कर्माकरणं आसक्तिर्माऽस्तु ॥ कर्म कर्तव्यमेव ॥ फलं तु अनपेक्षणीयमेव ॥ श्रद्धत्स्वेदं मदीयं वचनम् ॥ कथमशुद्धान्तःकरणस्य मम कर्मणि इच्छा तत्फलेच्छानिच्छा जायेतेति चेत् मा भैषीः ॥ कर्मण्येव ते कामो भवतु तत्फलेषु कदाऽपि ते कामो मा भवतु ॥ कर्मफलहेतुर्मा भूः ॥ ते अकर्मणि सङ्गो माऽस्तु ॥ मदीयेयमाशीः ॥ अनया तव तथैव स्यात् ॥ इति वा ॥ ४७ ॥

वि ॥ अर्जुनः ॥ मुमुक्षोर्योगानर्थं तायानेव उपादेयः न ततोऽधिकं किमपि इत्युक्तम् ॥ कियानुपादेयः ॥ ब्रूहि ॥

१. ३. २. ३९

कृष्णः ॥ मुमुक्षोस्तव कर्मण्येवाधिकारः योग्यता ॥ स्वर्गपशुपुत्रादिरूपकाम्यकर्मफलेषु उपात्तदुरितक्षयाकरणनिमित्तप्रत्यवायपरिहारप्राजापत्यादिलोकावाप्त्यादिषु नित्यनैमित्तिककर्मफलेषु च न तवाधिकारः ॥ अतः फलं परित्यज्य कर्ममात्रमुपादाय तदकामनया कर्तव्यम् ॥ न केवलं फलपरित्यागेनालम् ॥ किंतु मा कर्मफलहेतुर्भूः ॥ कर्मणः फलस्य च नाहं हेतु किन्तु गुणाः सर्वेश्वरः परमात्मा वा हेतु इति आत्मन्यकर्तृत्वानुसन्धानमप्यावश्यकम् ॥ अकर्तृत्वानुसन्धानवान् भव ॥ किं मे परित्यक्तफलेन कर्मणा इति चेत् 'मा ते संगोऽस्त्वकर्मणि' ॥ कर्म करणं तदभावे अननुष्ठाने न योत्स्ये इत्यादिरूपेण संगो माऽस्तु ॥ युद्धादिविहितकर्मकरण एव संगशब्दितोऽभिलाषोऽस्तु ॥ ४७ ॥

अर्जुनः ॥ एतावता ज्ञानद्वारा मोक्षावाप्तये कर्म कर्तव्यमित्युक्तम् ॥ तत्कर्म कथं कर्तव्यम् ॥ वद ॥

कृष्णः ॥ योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय ।
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥ ४८ ॥

योगस्थ इति ॥ धनं जयतीति धनंजयः हे धनंजय पार्थ त्वं योगे तिष्ठतीति योगस्थः सन् सङ्गं अहङ्कारममकारफलेच्छारूपं त्यक्त्वा सिद्धिश्च न सिद्धिः असिद्धिः असिद्धिश्च सिद्ध्यसिद्धी तयोः सिद्ध्यसिद्ध्योः समः भूत्वा कर्माणि कुरु ॥ समस्य भावः समत्वं योगः उच्यते ॥ ४८ ॥

योगः ज्ञानोपायः तत्र स्थितः तदेकपरः सन् फलेच्छां कर्तृत्वाभिमानं च त्यक्त्वा फलस्य सिद्धौ असिद्धौ च हर्षशोकरहितो भूत्वा विहितकर्माणि कुरु ॥ कुत एवं कर्तव्यमित्युच्यते इति चेत् सङ्गत्यागयुक्तं समत्वं योगैकदेश उच्यते ॥ सङ्गत्यागसमत्वोपेतकर्मण एव योगत्वात् उक्तरीत्या कर्म कर्तव्यम् ॥ नान्यथा ॥ अयमेव योगस्थ इत्यत्रत्यो योग उच्यते ॥ इति वा ॥ योगः भगवत्सम्बन्धः भगवत्प्राप्तिरूपो मोक्षः तत्र स्थितः तदेकपरः सन् उक्तरीत्या कर्माणि कुरु ॥ कुत एवं कर्तव्यमिति चेत् निर्विकारस्वरूपचित्तसमाधानमत्र योगाङ्गत्वाद्योग उच्यते ॥ अत एवमेव कर्माणि कर्तव्यानि ॥ [1] समं ब्रह्म ॥ वक्ष्यते च ॥ [2] 'निर्दोषं हि समं

१. अ. ५. १९.

ब्रह्म' इति ॥ तस्य भाव समत्वं ब्रह्मत्वं तदेव योग ज्ञानेन युज्यते प्राप्यते इति व्युत्पत्त्या योगशब्दवाच्यं ज्ञानप्राप्यं परमं फलं उच्यते ॥ तस्मिन् योगे स्थित' सन् ब्रह्मभावाप्तिरूपमोक्षैककाम' सन् उक्तरीत्या कर्माणि कुरु ॥ इति वा ॥ धनं स्वर्गसुखं जयति तुच्छत्वेन त्यजतीति धनञ्जयोऽसि ॥ अत एव हि उर्वश्या प्रार्थितस्तद्भोगमुपेक्षिष्ठा' ॥ अतोऽकाम्यं कर्म कर्तुं समर्थोऽसि ॥ ४८ ॥

अर्जुनः ॥ अकाम्यमेव कर्म कर्तव्यमित्युक्तम ॥ ज्ञानयोगात् तद्धेतुभूताकाम्यकर्मयोगाच्च काम्यकर्म अवरमस्तु ॥ तथाऽपि तस्य कर्मत्वात् विहितत्वात सफलत्वात् सद्यःफलप्रदत्वेन ज्यायस्त्वात् कर्तव्यमेव तदपि इति भाति ॥ सत्यं हि लोके राजापेक्षया अवरा अपि अमात्यादय' तदवरा अधिकृताश्च प्रभुत्वात फलप्रदत्वात् सद्य'फलप्रदत्वेन ज्यायस्त्वाच्च परित्यज्य राजानम् ॥ वद ॥

कृष्णः ॥ दूरेण ह्यवरं कर्म बुद्धियोगाद्धनञ्जय ॥
बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥ ४९ ॥

दूरेणेति ॥ हे धनञ्जय अर्जुन कर्म, बुद्धिरूपो योगः बुद्धेः ज्ञानस्य योगः उपायः बुद्ध्या युक्तः कृतो वा योगः बुद्धियोगः तस्मात दूरेण नितरां अवरम ॥ बुद्धौ शरण वासं अन्विच्छ स्वीकुरु ॥ फल हेतुः येषां ते फलहेतवः फलस्य हेतवो वा कृपणाः दीनाः भवन्ति ॥ ४९ ॥

बुद्धियोगात् कर्म दूरेणावरम ॥ ज्ञानरूपयोगात बुद्धे ज्ञानस्य योगात उपायात् समत्वादिबुद्धिरूपयोगयुक्तात बुद्ध्या व्यवसायात्मिकया कृतो योगः तस्मात निवृत्तिकर्मयोगाच्च काम्यं कर्म दूरेण अत्यन्तं निकृष्टम ॥ दूरत्वेन तत्फलविपरीतरूपसंसारबन्धप्रापकत्वेन अवरम ॥ इति वा ॥ अत बुद्धौ ज्ञाने निवृत्तिकर्मबुद्धौ ज्ञानबुद्धौ च इति वा ॥ कर्म... क्रियमाणे उक्तरूपसमत्वबुद्धौ वा ...णं निवासं अन्विच्छ स्वीकुरु ॥ तत्रैव वर्तस्व ॥ तत्संपादनैकपरो भव ॥ बुद्धौ ज्ञाननिमित्तं शरणं ज्ञानदानेन रक्षितारं निवृत्तिकर्मयोगमाश्रय॥ इति वा॥ ज्ञाननिमित्तं शरणं सर्वरक्षकं परमात्मानमाश्रय॥ तदेकोद्देशेन कर्म कृत्वा तत्प्रसादेन ज्ञानं संपादय ॥ इति वा॥ काम्यकर्मणो ज्ञानात्तत्साधनभूतान्निवृत्तिकर्मणश्च अत्यन्तमवरत्वात्तन्न कार्यम ॥ कुत इति चेत फलहेतवः फलं कर्मणि हेतु' येषां ते तादृशाः फलकामनया फलस्य

हेतवो वा काम्यं कर्म कुर्वाणा इति यावत् ॥ कृपणाः दीना भवन्ति॥ १ 'यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात्प्रैति स कृपणः' इति श्रुतिः ॥ पुनःपुनः संसारचक्रे परिभ्रमन्ति ॥ २ 'नाकस्य पृष्ठे सुकृते तेऽनुभूत्वेमं लोकं हीनतरं चाविशन्ती' ति श्रुतिः ॥ वक्ष्यते च ॥ ३ 'क्षीणे पुण्ये मर्त्यलोकं विशन्ती' ति ॥ ४ 'गताऽऽगतं कामकामा लभन्ते ॥' इति च ॥ कर्मणा ज्ञानं संपादयेत्युक्त्या ज्ञानिन कर्म अनावश्यकं इति भाति ॥ तत्कथं इति चेत् बुद्धौ ज्ञाने जातायामपि शरणं सर्वरक्षकं परमात्मानं अन्विच्छ आराधय ॥ अभेदबुद्धिर्न कार्या इत्यभिहितं कर्मण्येवेत्यत्र ॥ अज्ञानदशायां व्यावहारिकभेदाऽऽश्रयणेन भेदबुद्धिः कार्या ज्ञानदशायां तु ब्रह्मैवाहमिति पारमार्थिकाभेदबुद्धिरेव कार्या इति चेत बुद्धौ जातायामपि विष्णु शरणं रक्षकमेव अन्विच्छ जानीहि ॥ रक्ष्यरक्षकभावेन भिन्नमेव भावय ॥ नत्वभिन्नम् ॥ कुतः इति चेत फलहेतुः ईश्वरः फलहेतवः ईश्वराभेदभावनावन्तस्तु कृपणाः दीनाः भवन्ति ॥ नम प्राप्नुवन्ति ॥ अतोऽभेदबुद्धिर्न कार्येति युक्तम् ॥ कृपणा जनाः अतिदुःखेन धनमार्जयन्ति तेन दानादिजनितं महत् सुखमसंपादयन्तो यत्किञ्चिद्दृष्टसुखमात्रेण वञ्चयन्त्यात्मानम् ॥ तथा काम्यकर्मकृतो महता दुःखेन कर्माणि कुर्वन्ति तेन महाफलमसंपादयन्तोऽल्पास्थिरस्वर्गादिफलभोगमात्रेण वञ्चयन्त्यात्मानम् ॥ अहो दौर्भाग्यं मौढ्यं च तेषाम् ॥ इति कृपणपदेन सूच्यते ॥ ५ योगस्थः कर्माणि कुर्वित्युक्तम् ॥ कियत्पर्यन्तं कर्म कर्तव्यं इति चेत मोक्षं प्रति साधनभूतात् ज्ञानयोगात ज्ञानसाधनतया परंपरासाधनभूतं अकाम्यमपि कर्म अत्यन्तमवरम ॥ मोक्षं प्रति दूरत्वेन व्यवहितत्वेन अवरम् ॥ अतः ज्ञान एव वासं स्वीकुरु ॥ ज्ञाने जाते तत्रैव वर्तस्व ॥ कर्मयोगं परित्यज ॥ वक्ष्यते च ॥ ६ ज्ञानयोगेन साङ्ख्याना मिति ॥ ७ 'योगारूढस्य तस्यैव शमः कारणमुच्यते' ॥ इति च ॥ अतः तावत्पर्यन्तं कर्मयोग कर्तव्यः ॥ तत्रापि अकाम्यमेव कर्म कर्तव्यम् ॥ न तु काम्यम् कुत इति चेत् फलहेतवः कृपणाः भवन्ति ॥ इति वा ॥ ४९ ॥

अर्जुनः ॥ ज्ञानयोगात् तत्साधनभूताकाम्यकर्मयोगाच्च कर्म दूरेणावरं इति

१. बृ. ५. ८. १०. २. मुं. २. १०. ३. ९. २१. ४. ९. २१. ५. अ. ॥ ६. ३. ३. ७. ६. ३.

ज्ञानतत्साधनकर्मणोर्महामाहात्म्यमुक्तम् ॥ तत्कीदृशम् ॥ तदुपपादय ॥

कृष्णः ॥ बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ॥
तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥ ५० ॥

बुद्धियुक्त इति ॥ इह बुद्ध्या युक्तः बुद्धियुक्तः सुकृतं च दुष्कृतं च सुकृतदुष्कृते उभे जहाति त्यजति ॥ तस्मात् योगाय युज्यस्व प्रयतस्व ॥ योगः कर्मसु कुशलस्य भावः कौशलं कुशलं श्रेष्ठं तदेव कौशलं इति वा ॥ ५० ॥

इह ज्ञान्यज्ञानिवर्गे ज्ञानयोगयुक्तः १ मोक्षप्रतिबन्धकं अत एवानिष्टं पुण्यं पापं च उभे परित्यजति ॥ इह लोके इति वा ॥ इहैव जन्मनि इति वा ॥ इह अकाम्यकर्मणि कृते सति तेन ज्ञानयोगयुक्त इति वा ॥ इह कर्मणि विषये समत्वबुद्धियोगयुक्तः इति वा ॥ २ मोक्षप्रतिबन्धकपुण्यपापोभयनिवृत्तिर्मैवर्णो नियावन् ॥ ज्ञानस्य उभयनिवर्तकत्वे ३ 'तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ॥' इति श्रुतिः ॥ ४ 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ इतरस्याप्येवमसंश्लेषः पाते तु ॥' इति सूत्रे च ॥ तस्मात् योगाय ज्ञानरूपोपायसम्पादनाय ज्ञानोपायभूताकाम्यकर्मयोगाय कर्मयोगाङ्गसमत्वबुद्धियोगाय प्रयतस्व ॥ यत्नेन योगं सम्पादय ॥ ज्ञानोपायः सम्पाद्यते अकाम्यकर्मयोगो माऽस्तु इति चेत् योगो ज्ञानोपायभूतो योगः कर्मसु मध्ये यत् कौशलं श्रेष्ठं निवृत्तिकर्म तदेव ॥ कर्मसु श्रेष्ठं निवृत्तिकर्मैव योगः इति वा ॥ अतः ज्ञानार्थं तदेव कर्तव्यम् ॥ यद्येवं तर्हि कुतः सर्वेऽपि समत्वयोगयुक्तमेव कर्म नानुतिष्ठन्ति इति चेत् कर्मसु वर्तमानस्य समत्वबुद्धियोगो य उक्तः स कुशलभावः सामर्थ्यं सामर्थ्यसाध्य इत्यर्थः ॥ साध्ये साधनवाचकशब्दप्रयोगः ॥ कर्मसु क्रियमाणेषु कर्मसु वर्तमानस्येति वा यः समत्वबुद्धिरूपयोगः स कौशलं चातुर्यम् ॥ बन्धकस्वभावानां कर्मणां फलपरित्यागादिना अबन्धकत्वसम्पादनं महत्कौशलं ॥ इति वा ॥ कर्मसु उक्तरूपं यत्कौशलं तदेव योगः उपायः ५ तस्मै युज्यस्व ॥ इति वा ॥ कुतो निवृत्तमेव कर्म कुरु इत्युच्यते

१. इदं च दुष्कृतसमभिव्याहारात् ॥ २. [illegible] चेदं 'ज्ञानाग्निः सर्वकर्माणि' 'न हि ज्ञानेन सदृशं' (४. ३७. ४. ३८.) इत्येतद्व्याख्यानावसरे ॥ ३. मुं ३. १. ३. ४. ४. १. १३. ५. उपायेन प्रयुज्यमानं कर्म इष्टफलसमर्थं भवति ॥ 'विज्ञाय सेवितश्चोरो मैत्रीमेति न चोरताम् ॥' इति वासिष्ठे ॥

इति चेत् योगः निवृत्तिकर्मयोगः कर्मसु मध्ये कुशलमेव कौशलं स्वसजातीयदुष्कर्मनाशनसमर्थम् ॥ अतस्तदेव कर्तव्यम् ॥ कर्मण उक्तरूपकुशलत्वोक्त्या हन्त परमाद्भुतमिदं जडमपि कर्म स्वसजातीयदुष्टनाशनं करोति ॥ चेतनोऽपि त्वं स्वसजातीयदुष्टचेतननाशनं न चिकीर्षसि ॥ इति सूच्यते ॥ कुत एवं महता यत्नेन समत्वबुद्ध्यादिसाधननिष्पाद्यकर्मयोगेन ज्ञानं सम्पाद्यं इति चेत् योगः ज्ञानयोग एव कर्मसु प्रतिबन्धकतया नाशनीयेषु उभयविधेषु विषये कौशलं नाशनसमर्थं साधनम् ॥ 'न हि ज्ञानेन सदृशं पवित्रमिह विद्यते ॥' इति वक्ष्यते ॥ इति वा ॥ ५० ॥

अर्जुनः ॥ कर्मयोगस्य मोक्षप्रतिबन्धकसुकृतदुष्कृतप्रहाणहेतुत्वात्तस्मिन्स्पृहयस्वेत्युक्तम् ॥ किं सुकृतदुष्कृतहानिरेव पुरुषार्थः ॥ किंच दुष्कृतप्रहाणमनिष्टनिवृत्तिरूपत्वादिष्टम् ॥ सुकृतहानं तु इष्टनाशरूपत्वादनिष्टम् ॥ कथं तस्य फलत्वेनोक्तिः ॥ ब्रूहि ॥

कृष्णः ॥ कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ॥
जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥ ५१ ॥

कर्मजमिति ॥ कर्मणा जायत इति कर्मजं फलं त्यक्त्वा बुध्या परोक्षज्ञानेन युक्ताः बुद्धियुक्ताः मनीषा अपरोक्षज्ञानं एषां अस्तीति मनीषिणः सन्तः जन्मैव बन्धः जन्मना बन्धो वा जन्मबन्धः तस्मात् वि विशेषेण निः निश्शेषं मुक्ताः जन्मबन्धविनिर्मुक्ताः सन्तः न विद्यते आमयः दोषः दुःखं च यस्मिन् तत् अनामयं पदं स्थानं पद्यते प्राप्यते इति पदं ब्रह्म वा गच्छन्ति प्राप्नुवन्ति ॥ ५१ ॥

समत्वादिबुद्धियुक्ताः कर्मजं फलं त्यक्त्वा फलानपेक्षया कर्म कृत्वा फलपरित्यागमात्रस्य ज्ञानमोक्षहेतुत्वात्प्रकरणादिदं लब्धम् ॥ मनीषिणः ज्ञानिनः सन्तः कर्मजं फलं त्यक्त्वा तेन बुद्धियुक्ताः परोक्षज्ञानिनः सन्तः तेन च मनीषिणः अपरोक्षज्ञानिनः सन्तः इति वा ॥ प्रशंसार्थकमत्वर्थीयेनिप्रत्ययादिदं लब्धम् ॥ तेन जन्माख्यबन्धात् निश्शेषं मुक्ताः जन्ममूलकबन्धशब्दितस्वच्छन्दत्वहानेर्मुक्ताः सन्तः जन्मना बन्धः संबन्धः यस्मिन् सः तादृशः संसारः तस्मान्मुक्ताः जन्मना बन्धः

संबन्धः यैस्तानि जन्मबन्धानि तेभ्यः पुनःपुनर्जन्मकर्मफलप्रदेभ्यः मोक्षप्रतिबन्धकेभ्यः कर्मभ्यः उक्तरीत्या मुक्ताः सन्तः अनामयं निर्दोषं निर्दुःखं मोक्षस्थानं पद्यते ज्ञायते प्राप्यते च इति व्युत्पत्त्या पदशब्दवाच्यं ज्ञेयं प्राप्यं च परं ब्रह्म तत्तुल्यं शुद्धात्मस्वरूपं वा गच्छन्ति प्राप्नुवन्ति ॥ प्रसिद्धमिदमुपनिषत्सु ॥ अतस्त्वं योगाय युज्यस्व ॥ कृत्वा च निवृत्तं कर्म तेन ज्ञानद्वारा मोक्षमाप्नुहि ॥ ५१ ॥

अ ॥ ज्ञानयोगादवरः अकाम्यकर्मयोगः किमर्थं करणीय इति चेत् बुद्धियुक्ताः ज्ञानयोगयुक्ताः अतः मनीषिणः विद्वांसः कर्मजं फलं त्यक्त्वा ज्ञानाग्निना सर्वकर्मणां दाहे सति 'निमित्तापाये नैमित्तिकस्याप्यपायः' इति न्यायेन त्यक्तकर्मफला सन्तः इत्यर्थ ॥ जन्मबन्धविनिर्मुक्ताः जन्मना बन्धः सम्बन्धो यस्य सः जन्मबन्धः देह तस्मात् मुक्ताः कारणाभावेन भाविदेहात् अभिमानाभावेन वर्तमानदेहाच्च मुक्ता ॥ जीवत्येव देहे जीवन्मुक्ताः सदेहकैवल्यं प्राप्ताः सन्तः अनामयं आध्यात्मिकादिसर्वोपद्रवरहितं पदं ज्ञानप्राप्यं परं ब्रह्म ॥ भावप्राधान्यात् ब्रह्मत्वं विदेहकैवल्यं गच्छन्ति प्राप्नुवन्ति ॥ प्रसिद्धमिदं वेदशास्त्रपुराणादिषु ॥ बुद्धिशब्दितज्ञानयोगस्य सदेहविदेहकैवल्यप्राप्तिहेतुत्वेन तत्प्राप्त्यर्थमवरोऽपि कर्मयोगः कर्तव्य एव इति च ॥ समत्वबुद्धियोगयुक्ताः कर्मजं फलं त्यक्त्वा अकाम्यं कर्म कृत्वा तेन मनीषिणः 'तत्त्वम'स्यादिवाक्यजन्याऽऽत्मज्ञानवन्त सन्तः जन्मबन्धात् निश्शेषं मुक्ताः ज्ञेयं प्राप्यं च अनामयं अविद्यातत्कार्यात्मकरोगरहितं परं ब्रह्म अभेदेन प्राप्नुवन्ति ॥ मोक्षप्रतिबन्धकत्वादनिष्टस्यैव सुकृतस्य समत्वबुद्धियोगयुक्ताकाम्यकर्मणा नाशः न तु ज्ञानद्वारा मोक्षसाधकत्वादिष्टस्य सुकृतस्य ॥ अतः ज्ञानद्वारा मोक्षमाप्तुं अकाम्यकर्मयोगः कर्तव्य एव ॥ अतः ज्ञानद्वारा मोक्षमाप्तुं त्वमकाम्यं कर्मानुतिष्ठ इति च ॥ ५१ ॥

द्वै ॥ अर्जुनः ॥ उक्तरीत्या कर्तव्यं निवृत्तिकर्म कियत्पर्यन्तं कर्तव्यम् ॥ वद ॥

कृष्णः ॥ यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ॥
तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥ ५२ ॥

यदेति ॥ ते तव बुद्धिः यदा मोह एव कलिलं दोषः मोहकलिलं व्यति-

वरिष्यति त्यक्ष्यति ॥ तदा त्वं श्रुतस्य श्रोतुं योग्यं श्रोतव्यं तस्य श्रोतव्यस्य च नितरां वेदः लाभः निर्वेदः तं वैराग्यं वा गन्तासि प्राप्स्यसि ॥ ५२ ॥

निवृत्तिकर्मणा शुद्धं तव मनः यदा विपरीतज्ञानरूपं दोषं त्यक्ष्यति ॥ तदा त्वं श्रुतस्य श्रोतव्यस्य च वेदशास्त्रपुराणादेः निर्वेदं नितरां लाभं गन्तासि प्राप्स्यसि ॥ अज्ञानसंशयविपर्ययनिवृत्तिपूर्वकं तत्वज्ञानप्राप्तिपर्यन्तं अकाम्यं कर्म कर्तव्यमिति यावत् ॥ ५२ ॥

अ ॥ अर्जुनः ॥ अन्तःकरणशुद्ध्यर्थं कर्माणि कर्तव्यानीत्युक्तम् ॥ कर्मफलभूता अन्तःकरणशुद्धिः कथं ज्ञायेत ॥ ब्रूहि ॥

कृष्णः ॥ ते बुद्धिः अन्तःकरणं यदा मोहकलिलं विपरीतज्ञानात्मकं दोषं, मोहः इष्टानिष्टवियोगसंयोगजपरितापजन्यवैचित्त्यं तदेव कलिलं कालुष्यमिति वा मोहः देहादिष्वात्मबुद्धिः तदेव कलिलं गहनं दुर्गं इति वा त्यक्ष्यति ॥ तदा श्रुतस्य श्रोतव्यस्य च कर्मफलस्य विषये निर्वेदं वैराग्यं प्राप्स्यसि ॥ फलभूतेन वैराग्येण कारणभूता अन्तःकरणशुद्धिः ज्ञायेत ॥ एतावन्तं कालं श्रुतदृष्टादीनां इतःपरं श्रोतव्यद्रष्टव्यादीनां च कर्मफलानां विषये यदा वैराग्यं प्राप्स्यसि तदा मया कृतेनाकाम्यकर्मणा शुद्धान्तःकरणोऽहमभूवमिति ज्ञास्यसि ॥ तावत्पर्यन्तं अकाम्यं कर्म कर्तव्यम् ॥ श्रुतस्य श्रोतव्यस्य च दृष्टस्य द्रष्टव्यस्य च ज्ञातस्य ज्ञातव्यस्य च गृहीतस्य ग्रहीतव्यस्य च शास्त्रार्थस्य विषये वैराग्यं गमिष्यसि ॥ मलिनायां बुद्धौ श्रुतश्रोतव्यादिकं व्यर्थम् ॥ अस्फुरणात् ॥ शुद्धायामपि बुद्धौ तद्व्यर्थम् ॥ सद्यः स्फुरणात् ॥ उक्तरूपकर्मणा चित्तशुद्धौ श्रवणादिकं त्यक्त्वा ध्याननिष्ठ एव भव ॥ इति वा ॥ ५२ ॥

वि ॥ अर्जुनः ॥ संगं त्यक्त्वा सिद्ध्यसिद्ध्योः समो भूत्वा कर्माणि कुर्वित्युक्तम् ॥ अन्तःकरणशुद्ध्यर्थं कर्मयोगः कर्तव्य इत्यप्युक्तम् ॥ अशुद्धान्तःकरणः चित्तशुद्ध्यर्थं कर्म कुर्वन् कथं अन्तःकरणशुद्धिसिद्धसंगत्यागादिसहितं कर्म कुर्यात् ॥ किंच अन्तःकरणशुद्धौ संगत्यागादिसहितकर्मानुष्ठानं तादृशकर्मानुष्ठाने अन्तःकरणशुद्धिः इत्यन्योन्याश्रयदोषोऽपि ॥ अतः कथमिदम् ॥ वद ॥

कृष्णः ॥ तव बुद्धिः विपरीतज्ञानरूपदोषं यदा त्यक्ष्यति तदा त्याज्यतया मम सकाशात् श्रुतस्य श्रोतव्यस्य चार्थस्य विषये निर्वेदं हेयसंगोपादेयवैतृष्ण्य-मूलकं स्वावमाननं तेन हेये वैराग्यं उपादेयोपादित्साजनकं प्राप्स्यसि ॥ त्याज्य-तया श्रुतस्य श्रोतव्यस्य च कृते तन्निमित्तं तत्परित्यागार्थं वैराग्यं प्राप्स्यसि ॥ त्याज्यतया श्रुतस्य उपादेयतया श्रोतव्यस्य च कृते त्याज्यं त्यक्तुं उपादेयं उपादातुं च वैराग्यं प्राप्स्यसीति वा ॥ उपक्रमे अशुद्धांतःकरणतया संगत्यागादिसहित-कर्मकरणासमर्थस्त्वं संगत्यागादिराहितमेव कर्म कर्तुमारभस्व ॥ कुर्वंश्च कर्मयोगं तत्कर्म मय्यर्पय ॥ कृतेन शुद्धेन मय्यर्पितेन कर्मणाऽहं प्रसन्नो, मदुक्तानि कर्माणि करोत्ययं ॥ मनस्त्वशुद्धमेनं अल्पास्थिरफलतृष्णोत्पादनेन महाफलाच्च्यावयितुमुद्यु-ङ्क्ते ॥ अतः अस्य मनो निगृह्य अस्य वशे नेयम् ॥ इत्यालोच्य स्वयमहमशुद्धं मनः शुद्धं करोमि ॥ शुद्धे च मनसि वैराग्यमुत्पद्यते ॥ तेन च संगत्यागादिपूर्वककर्मानु-ष्ठाने प्रवृत्तिर्जायते ॥ तदा यथोक्तकर्मानुष्ठानं भविष्यति ॥ अतः श्रद्धया कर्मयो-गमारभस्व ॥ क्रमेण स सांगः सफलश्च भविष्यति ॥ ५२ ॥

द्वै ॥ अर्जुनः ॥ तत्त्वज्ञानोदयपर्यन्तं कर्म कर्तव्यमित्युक्तम् ॥ लब्धपरोक्ष-ज्ञानेन पुंसा कर्म कर्तव्यं वा न वा ॥ ब्रूहि ॥

कृष्णः ॥ श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला ॥
समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥ ५३ ॥

श्रुतीति ॥ श्रुतिभिः वेदवाक्यैः श्रवणैर्वा विप्रतिपन्ना विरुद्धतया जाता विशेषेण जाता वा ते बुद्धिः ज्ञानं मनो वा यदा निश्चला सती समाधौ संप्रज्ञातासंप्र-ज्ञातलक्षणे सति अचला स्थास्यति ॥ सं सम्यक् आधीयते सर्वं अस्मिन इति समाधिः परं ब्रह्म तस्मिन यदा अचला स्थास्यति ॥ इति वा ॥ बुद्धिः ज्ञानं सम्यक् आधीयते सर्वं अस्मिन इति समाधिः मनः तस्मिन यदा अचला स्थास्यति ॥ इति वा ॥ तदा योगं कर्मफलसंबन्धं अवाप्स्यसि प्राप्स्यसि ॥ ५३ ॥

श्रुतिभिः आपाततो विरुद्धार्थकत्वेन प्रतीयमानैः वेदवाक्यैः विप्रतिपन्ना इदमदो वेति संशयेन विपरीतज्ञानेन च कलुषिता बुद्धिः परोक्षज्ञानं मनो

वा यदा श्रुतीनामैकार्थ्यज्ञानेन संशयविपर्ययरहिता सती असच्छास्त्रप्रसंगकोलाहलैः चालयितुं न शक्यते तदा तन्निश्चलं परोक्षज्ञानमित्युच्यते ॥ इयं परोक्षज्ञानकाष्ठा ॥ एवं यदा बुद्धिशब्दितं परोक्षज्ञानं मनो वा दृढतामापद्यते तदैव संप्रज्ञातसमाधिशब्दितं खण्डध्यानं सिध्यति ॥ तदर्थं परोक्षज्ञानदार्ढ्यपर्यन्तं परोक्षज्ञानिना कर्म कर्तव्यम् ॥ संप्रज्ञातसमाधौ सति तदनन्तरं बुद्धिः अपरोक्षज्ञानमुत्पद्यते ॥ प्राप्तपरोक्षज्ञानकाष्ठेन संप्रज्ञातसमाधिद्वारा अपरोक्षज्ञानोदयपर्यन्तं कर्म कर्तव्यम् ॥ ततः असंप्रज्ञातसमाधिर्भवति ॥ असंप्रज्ञातसमाधौ सति बुद्धिः मनः भगवति अचला चलनहीना अवतिष्ठते ॥ इयमपरोक्षज्ञानकाष्ठा ॥ तदा योगं कर्मयोगानुष्ठानफलं प्राप्स्यसि ॥ उपायेन लब्धफलो भविष्यसि ॥ स्थितप्रज्ञो भविष्यसि ॥ लब्धापरोक्षज्ञानेन असंप्रज्ञातसमाधिद्वारा भगवति मनसो निश्चलावस्थानसिद्धिपर्यन्तं कर्म कर्तव्यम् ॥ श्रुतौ विशेषेण प्रतिपन्ना श्रुत्यर्थविनिश्चयं प्राप्ता बुद्धिः मनः यदा निश्चला संशयादिरहिता स्थास्यति तदा समाधिः समाधानं श्रुत्यर्थनिश्चयः तस्मिन् सति अपरोक्षज्ञानेन सा बुद्धिः भगवति अचंचला भवति ॥ तदा योगं भगवद्योगं मुक्तिं प्राप्स्यसि ॥ एवं मुक्तिप्राप्तिपर्यन्तं कर्म कर्तव्यम ॥ एवं कर्मयोगावधिर्दर्शित ॥ ५३ ॥

अ ॥ अर्जुनः ॥ कर्मजा अन्तःकरणशुद्धिः वैराग्येण लक्षणेन ज्ञातव्येत्युक्तम ॥ तादृशान्तःकरणशुद्धिपरिपाकजन्या ज्ञाननिष्ठा कदा जायते जातेति केन ज्ञातव्या ॥ वद ॥

कृष्णः॥ तव बुद्धिः मन श्रुतिभिः कर्मतत्फलज्ञानतत्फलसगुणब्रह्मतन्माहात्म्यनिर्गुणब्रह्मतन्माहात्म्यप्रतिपादकनानाविधवेदवाक्यैः नानाविधार्थश्रवणैर्वा फलश्रवणैर्वा विप्रतिपन्ना विविधतया जाता विरुद्धतया जाता वा संशयविपर्ययादिदूषिता सती मननादिजनिततत्वनिश्चयेन यदा समाधौ सम्यक् आधीयते चित्तमस्मिन्निति वा सर्वं जगत् आधीयते आरोप्यते अस्मिन्निति वा समाधिः प्रत्यगात्माभिन्नः परमात्मा तस्मिन् निश्चला विक्षेपशब्दितविपर्ययरहिता अचला विकल्पशब्दितसंशयरहिता च सती स्थास्यति निवातदीपवत् स्थिरा भविष्यति ॥ वक्ष्यते च ॥ १ ' यथा दीपो निवातस्थः ' इति ॥ तदा योगं कर्मजन्यान्तःकरणशुद्धि-

१. ६. १९.

परिपाकजन्यां तत्त्वमस्यादिमहावाक्यार्थग्रहणजन्यां ब्रह्मात्मैक्यज्ञानलक्षणां ज्ञानयोगनिष्ठां स्थितप्रज्ञतालक्षणां प्राप्स्यसि ॥ निश्चला जाग्रत्स्वप्नदर्शनलक्षणविक्षेपरहिता अचला सुषुप्तिमूर्च्छास्तब्धीभावादिरूपलयलक्षणचलनरहिता इति वा ॥ निश्चला असंभावनाविपरीतभावनारहिता अचला दीर्घकालादरनैरन्तर्यसत्कारसेवनैः विजातीयप्रत्ययादूषिता इति वा ॥ निश्चला कुतर्करनास्कन्दिता अचला विक्षेपरहिता इति वा ॥ श्रुतिभिः विप्रतिपन्ना ते बुद्धिः श्रुतौ रोचनार्थायां फलश्रुतौ विप्रतिपन्ना त्यक्तादरा समाधौ परब्रह्मणि निश्चला कृतनिश्चया अचला विक्षेपरहिता च यदा स्थास्यति तदा योगं परमात्मना योगं ऐक्यलक्षणसंबन्धं प्राप्स्यसि ॥ इति वा ॥ श्रुतिभिः तत्त्वमस्यादिवेदवाक्यैः विप्रतिपन्ना विशेषेण प्रतिपत्तिमती विशिष्टज्ञानवती ते बुद्धिः यदा निश्चला विक्षेपरहिता सती समाधौ असंप्रज्ञातसमाधौ अचला निवातदीपवत् स्थास्यति तदा योगं स्थितप्रज्ञतारूपां प्रज्ञास्थैर्यलक्षणां ज्ञानयोगनिष्ठां प्राप्स्यसि॥ इति वा ॥ अन्तःकरणशुद्ध्या श्रवणादि जायते ॥ सति श्रवणादौ संशयादिकमुत्पद्यते ॥ मननादिना संशयादिनिवृत्त्या ब्रह्मैवाहमिति ब्रह्मात्मैकत्वज्ञानेन मनसो विक्षेपलयराहित्येन ब्रह्मणि स्थिरतरमवस्थानं तेन मोक्ष इति क्रमः ॥ उक्तरूपा स्थितप्रज्ञतालक्षणा अपरोक्षज्ञाननिष्ठा [१] 'प्रजहाति यदा कामा'नित्यादिना वक्ष्यमाणेन लक्षणेन समाधावचलाबुद्धिरित्युक्तेन [२] ज्ञातव्या ॥ अतस्त्वं कर्मानुष्ठाय स्थितप्रज्ञो भव ॥ ५३ ॥

त्रि ॥ अर्जुनः ॥ समत्वबुद्धियोगयुक्तकर्मणो मोक्षहेतुत्वोक्त्या तद्धेतुभूतापरोक्षज्ञानहेतुत्वमुक्तं भवति॥ तत्कथं॥ परोक्षज्ञानसाध्यं ह्यपरोक्षज्ञानम् ॥ कथमल्पमतिरहं परोक्षज्ञानद्वारा अपरोक्षज्ञानमाप्नुयाम् ॥ वद ॥

कृष्णः ॥ मा भैषीः ॥ मा च कुरु चिन्ताम् ॥ त्वं तु कृतार्थोऽभूः ॥ यतोऽस्मन्मुखात् श्रवणभाग्यं लब्धवानसि॥ वक्ष्यते च ॥ [३] 'देहभृतां वर' इति ॥ [४] 'एतद्बुध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत' इति च ॥ श्रुतिविप्रतिपन्ना श्रुतिः श्रवणं अर्थात् अस्मत्त इति लभ्यते ॥ अस्मत्तः श्रवणेन विशेषतः प्रतिपन्ना तव

१. २. ५५. २. ज्ञानयोगनिष्ठालाभेन बुद्धिप्रमादो ज्ञेयः । इति चित्तशुद्धिलिङ्गान्तराविष्कारमिति केचित् ॥ ३. ८. ४. ४. १५. २०.

बुद्धिः शास्त्रश्रवणजन्यं परोक्षज्ञानं स्वयमचला एकरूपार्थविषयत्वादेकरूपा विषयान्तररहिता च सती सम्यक् आधीयते आत्मज्ञानमस्मिन्निति व्युत्पत्त्या समाधिशब्दिते तैलधारावदविच्छिन्नस्मृतिहेतुभूते मनसि यदा निश्चला स्थास्यति ॥ अचला पूर्वोक्तबहुशाखत्वानन्तत्वरूपदोषरहिता इति वा ॥ श्रुतिविप्रतिपन्ना श्रवणेन सम्यगुत्पन्ना निश्चला मननेन स्थिरीकृता अचला कुतर्कैरकंपनीया इति वा ॥ परोक्षज्ञानकाष्ठारूपा स्थितप्रज्ञताख्यज्ञानयोगनिष्ठा यदा ते भविष्यति तदा तद्द्वारा योगं आत्मावलोकनाख्यमात्मसाक्षात्कारं प्राप्स्यसि ॥ सिद्धमिदानीं तव श्रवणसाध्यं परोक्षज्ञानं अस्मत्तः श्रवणात् ॥ तत्र मननादिना संशयविपर्ययपरिहारः परं कार्यं ॥ समत्वबुद्धियोगयुक्तकर्मानुष्ठानविशोधितेन मनसा मननादिना तत्करणे च स्थितप्रज्ञताख्यज्ञानयोगनिष्ठा सेत्स्यति ॥ तत्सिद्धौ च स्वत एव आत्मावलोकनरूपं साक्षात्कारशब्दितं अपरोक्षज्ञानमुदेष्यति ॥ अतो न भेतव्यम् ॥ परोक्षज्ञानसाध्यत्वेऽपि साक्षात्कारस्य कर्मसाध्यत्वोक्तिर्युक्ता ॥ कर्मणः शास्त्रजन्याऽऽत्मविषयकपरोक्षज्ञानपूर्वकत्वात् ॥ तत्काष्ठारूपज्ञाननिष्ठाहेतुत्वाच्च ॥ उक्तं हि मया ॥ १ 'व्यवसायात्मिका बुद्धिरेकेहे'ति ॥ वक्ष्यते च ॥ २ 'यं संन्यास इति प्राहुर्योगं तं विद्धि पाण्डव ॥' इति च ॥ आत्मविषयकपरोक्षज्ञानेन कर्मयोग ॥ तेन च स्थितप्रज्ञताख्या परोक्षज्ञानकाष्ठा ॥ तया च आत्मावलोकनं तेन च भगवति भक्तिः तया च तस्य साक्षात्कारः तेन च तत्प्राप्तिरूपो मोक्ष ॥ अतः मोक्षहेतुभगवदपरोक्षज्ञानहेतुभूतात्मावलोकनसाधनपरोक्षज्ञानकाष्ठामवाप्तुं कर्मयोगः कर्तव्य ॥ ५३ ॥

ॐ ॥ अ ॥ सञ्जयः ॥ उक्तरूपं अकाम्यं कर्म कुर्वतः परोक्षज्ञानद्वारा अपरोक्षज्ञानं तेन च मोक्षप्राप्ति फलमित्युक्तम् ॥ श्रुत्वा यदि मोक्षहेतुभूतापरोक्षज्ञानस्य गरिमाऽज्ञास्यत तर्हि तत्संपादने प्रवृत्तिरुदपत्स्यत सर्वेषामिति मत्वा लोकोपकारार्थं अपरोक्षज्ञानिलक्षणं अजानान इव पृच्छति भगवन्तं पार्थः ॥

अर्जुन उवाच ॥

स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ॥
स्थितधीः किं प्रभाषेत किमासीत व्रजेत किं ॥ ५४ ॥

१. २. ४१. २. ६. २.

**स्थितेति** ॥ हे केशव कृष्ण समाधौ तिष्ठतीति समाधिस्थः तस्य स्थिता प्रज्ञा यस्य सः स्थितप्रज्ञः तस्य भाषा लक्षणं का किं ॥ स्थिता धीः प्रज्ञा यस्य सः स्थितधीः सः किं कथं प्रभाषेत ॥ किं कथं आसीत उपविष्टः स्यात् ॥ किं कथं व्रजेत व्रजेत् ॥ ५४ ॥

**द्वै** ॥ समाधिस्थस्य असंप्रज्ञातसमाधिस्थत्वरूपलक्षणवत्तया उक्तस्य स्थितप्रज्ञशब्दितस्यापरोक्षज्ञानिनः लक्षणं किम् ॥ वद ॥ लक्षणमित्यनुक्त्वा भाषेत्युक्तिः कुत इति चेत् भाष्यते व्यवह्रियतेऽनयेति भाषा व्यवहारहेतुभूतं लक्षणमित्यर्थलाभाय ॥ तर्हि अनीदृशं लक्षणं किमप्युक्तं पूर्वमिति भाति इति चेत् उक्तमेवैकं लक्षलक्षणम् ॥ किं तदिति चेत् असंप्रज्ञातसमाधिस्थत्वम् ॥ तर्हि तेनैव व्यवहारसिद्ध्या व्यवहारोपयोगिलक्षणान्तरप्रश्नः किमर्थमिति चेत् असंप्रज्ञातसमाधिस्थत्वलक्षणस्य तादात्विकत्वाद्यावद्द्रव्यभावित्वेन व्यवहारानुपयोगितया यावद्द्रव्यभावित्वेन व्यवहारोपयोगिलक्षणान्तरं ब्रूहीति प्रश्नाशयः ॥ येनायमपरोक्षज्ञानीति व्यवह्रियेत तल्लक्षणं ब्रूहि ॥ असंप्रज्ञातसमाधिस्थत्वरूपलक्षणस्य संप्रज्ञातसमाधिस्थे व्युत्थिते च ब्रह्मज्ञानिनि असत्वादव्याप्तिश्च ॥ अतो लक्षणान्तरं ब्रूहि ॥ इति पृच्छ्यते ॥ तर्हि उक्ताल्लक्षणादन्यत्किमपि अपरोक्षज्ञानिनो लक्षणमुच्यतामिति प्रष्टव्यम् ॥ समाधिस्थस्य ज्ञानिनो लक्षणं ब्रूहि इति तु पृच्छसि ॥ किं असंप्रज्ञातसमाधिमान् विवक्षितः उत संप्रज्ञातसमाधिमान् ॥ आद्ये अपरोक्षज्ञानिमहिम्नो जिज्ञासितत्वेन अपरोक्षज्ञानिसामान्यस्य लक्षणस्य वक्तव्यतया यत्, 'दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ॥' 'तत्तत्प्राप्य शुभाशुभम् ॥ नाभिनन्दति न द्वेष्टि ॥' इति लक्षणं वक्ष्यते ॥ तस्य असम्भवः स्यात् ॥ असंप्रज्ञातसमाधिस्थस्य सुखदुःखशुभाशुभप्राप्तेरभावेन तस्य तस्मिन्नसत्वात् ॥ द्वितीये संप्रज्ञातसमाधिस्थत्वाभाववति व्युत्थिते समाधिरहिते अपरोक्षज्ञानिमात्रे 'प्रजहाति यदाकामा' नित्यादिना वक्ष्यमाणलक्षणस्य सत्त्वादतिव्याप्तिः स्यात् ॥ किं ब्रवीषि ॥ इति चेत् समाधिस्थस्येति विशेषणं न तादृशस्य स्थितप्रज्ञस्य लक्षणजिज्ञासयाऽभिहितम् ॥ किंतु यस्यापरोक्षज्ञानिनः पूर्वश्लोके असंप्रज्ञातसमाधिस्थत्वरूपं लक्षणमुक्तं तस्य लक्षणान्तरं ब्रूहीत्याशयेन पूर्वोक्तासंप्रज्ञातसमाधिस्थत्वरूपलक्षणानुवादेन प्रश्नः ॥ सर्वमिदं लक्षणमित्यनुक्त्वा भाषेत्युक्त्या लभ्यते ॥ समाधिस्थ-

स्य समाधिशब्दितमनस्समाधानवतः इति वा॥ समाधिशब्दिते परमात्मनि निष्ठावतः इति वा ॥ स्थितधीः स्थितप्रज्ञः किं प्रयोजनं प्रति प्रभाषेत किं प्रति समाधिं विहाय उपविशेत् ॥ किं प्रति च गतागतं कुर्यात् ॥ तस्य ब्रह्मानन्दमग्नत्वेन प्रयोजनान्तरानपेक्षणात् न भाषणादौ प्रवृत्तिर्युक्ता ॥ दृश्यते च सा ॥ शुकादौ दर्शनात् ॥ अतः अपरोक्षज्ञानिनः असंप्रज्ञातसमाधिना ब्रह्मानन्दमग्नत्वोक्तिरयुक्ता इत्युत्तरार्धे आक्षेपः ॥ बलवत्कारणवशात् प्रवृत्तिरिति चेत् तत्कारणं किमिति प्रश्नः ॥ त्वं ब्रह्मरुद्रयोरपि प्रेरकत्वात्केशवोऽसि ॥ अतस्त्वं जिज्ञासितसकलार्थबोधनशक्तोऽसि ॥ ५४ ॥

अ ॥ हे केशव स्थिता स्थितिं प्राप्ता प्रज्ञा अहं ब्रह्मास्मि इत्येवंरूपं अपरोक्षज्ञानं यस्य तस्य असंप्रज्ञातसमाधियोगे स्थितस्य अपरोक्षज्ञानिनः भाषा भाषणं का किं किंमूलकं भाषणं वचनं व्यवहार ॥ केन लक्षणेन अयमपरोक्षज्ञानीति परैर्व्यवह्रियेत ॥ लक्षणेन हि व्यवहार ॥ अपरोक्षज्ञानी इति व्यवहारहेतुभूतं लक्षणं किमिति यावत् ॥ स्थितप्रज्ञः कथं प्रभाषेत ॥ कथमासीत ॥ कथं व्रजेत गतागतं कुर्यात् ॥ तस्य भाषणादीनि विलक्षणानि हि स्युः ॥ कीदृशानि तानि ॥ समाधिस्थस्येति विशेषणेन स्थितप्रज्ञताख्यज्ञानयोगनिष्ठायां असंप्रज्ञातसमाधिना ब्रह्मानन्दामृतरसमग्नता मनस संस्यतीत्यतः तत्साधनमुपदेष्टव्यमिति प्रश्नाशयः इति सूच्यते ॥ यद्येवं साधनजिज्ञासया प्रश्नः तर्हि साधनं किमित्येव प्रष्टव्यम् ॥ लक्षणं किमिति तु पृच्छसि ॥ कथमिदामिति चेत् अयत्नासिद्धतया यान्यपरोक्षज्ञानिनो लक्षणानि यत्नसाध्यतया तानि अपरोक्षज्ञानं संपिपादयिषो. १ साधनानि ॥ अतः साधनप्रश्न एवायम् ॥ यद्येवं साधनप्रश्ने तात्पर्यं तर्हि मुमुक्षोः साधनमेव साक्षादपृष्ट्वा अपरोक्षज्ञानिलक्षणप्रश्नमुखेन तत्प्रश्नः कुतः इति चेत् अपरोक्षज्ञानिलक्षणानामुक्तौ श्रोतॄणां अस्माभिस्तादृशैर्भवितव्यमिति तथाभवितुमपरोक्षज्ञानसम्पादने स्वरसतः प्रवृत्ति स्यादिति मुमुक्षूणां

१. अत एवोक्तमभियुक्तैः ॥ ' विद्यास्थितये प्राग्ये साधनभूताः प्रयत्ननिष्पाद्याः ॥ लक्षणभूतास्तु पुनः स्वभावतस्ते स्थिताः स्थितप्रज्ञे ॥ जीवन्मुक्तिरितीमां वदन्त्यवस्थां स्थितात्मसंबोधां ॥ बाधितभेदप्रतिभामबाधितात्मप्रबोधसामर्थ्यात् ॥' इति ॥

अपरोक्षज्ञानसाधनसंसाधाने प्रवृत्तिमुत्पादयितुं लक्षणप्रश्नः ॥ स्थिता ब्रह्माकारेण निश्चला बाह्यविषयानवगाहिनी प्रज्ञा बुद्धिर्यस्य तस्य आरूढस्य भाषा आरूढत्वेन भाषणं का कदा स्थितप्रज्ञ इति भाष्येत इति वा ॥ का भाषा किं लक्षणं ॥ किं प्रभाषेत कथं व्यवहरति ॥ किमासीत व्युत्थानेन विक्षिप्तानां बहिरिन्द्रियाणां निग्रहदशायां कथमुपविशति ॥ किं व्रजेत बहिरिन्द्रियनिग्रहाभावदशायां कथं विषयानाप्नोति ॥ ज्ञाननिष्ठो द्विविधः समाधिस्थ व्युत्थितश्चेति ॥ तत्र समाधिस्थविषये काभाषेत्येकः प्रश्नः ॥ व्युत्थितस्य विषये किंप्रभाषेतेत्याद्यास्त्रयः प्रश्नाः ॥ इति चत्वारोऽत्र प्रश्नाः ॥ सर्वान्तर्यामित्वात्त्वमेवेदृशप्रश्नप्रतिवचनसमर्थोऽसि ॥ अतस्सम्यगिदमुपदिश ॥५४॥

वि ॥ सञ्जयः ॥ स्थितप्रज्ञताख्यपरोक्षज्ञाननिष्ठाकाष्ठामवाप्स्यसीत्युक्तं श्रुत्वा तस्य स्थितप्रज्ञस्य स्वरूपं अनुष्ठानं च ब्रूहि इति पृच्छति भगवन्तं पार्थः ॥

कृष्णः ॥ हे केशव समाधिस्थस्य समाधि मनः तत्र स्थितस्य तद्वशीकरणेनावस्थितस्य स्थितप्रज्ञस्य भाषा का भाष्यते उच्यते अनयेति भाषा वाचकः शब्दः कः ॥ तस्य स्वरूपं कीदृशमिति यावत् ॥ वाचकशब्दप्रश्नेन स्वरूपं कीदृशमिति स्वरूपप्रश्नो लभ्यते ॥ तत्कुत इति चेत् केनचित् वाचकशब्देन प्रकारभूतप्रवृत्तिनिमित्तविशिष्टस्वरूपं निर्देष्टव्यम् ॥ स्वरूपनिर्देशको वाचकः शब्दः क इति प्रश्ने तेन निर्देष्टव्यम् स्वरूपं कीदृशमिति प्रश्नः पर्यवस्यति ॥ स्थितधीः स्थितप्रज्ञः किं कथं प्रभाषेत कथमासीत कथं व्रजेत ॥ पूर्वार्धे स्वरूपप्रश्नः ॥ उत्तरार्धे किंप्रभाषेतेति वाचिकानुष्ठानस्य किमासीतेति १ मानसानुष्ठानस्य किं व्रजेतेति कायिकानुष्ठानस्य च प्रश्नः ॥ इति चत्वारोऽत्र प्रश्नाः ॥ ५४ ॥

द्वै ॥ सञ्जयः ॥ एवं पार्थेन पृष्टो भगवान् स्थितप्रज्ञ २ लक्षणमाह ॥ प्रजहातीत्यादिना ॥

॥ श्रीभगवानुवाच ॥

प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतान् ॥
आत्मन्येवाऽऽत्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥ ५५ ॥

१. ध्यानार्थत्वाज्ज्ञान्यासनस्य किमासीतेत्यस्य मानसानुष्ठानप्रश्नपरत्वं ॥ २. उत्तरार्धे कृताऽऽक्षेपस्य परिहारस्तु ' यानिशा ' इति वक्ष्यते ॥

प्रजहातीति ॥ हे पार्थ अर्जुन मनः गताः मनोगताः तान् मनोगतान् सर्वान् कामान यदा प्र निःशेषं जहाति त्यजति ॥ आत्मना मनसा स्वेनैवेति वा आत्मन्येव आत्मस्वरूप एव परमात्मन्येवेति वा तुष्टः संतुष्टश्च वर्तते ॥ तदा स्थितप्रज्ञः उच्यते ॥ तुष्टः सन कामान प्रजहाति ॥ इति वा ॥ ५५ ॥

यदा मनोगतान् सर्वान् कामक्रोधादीन् निरवशेषं जहाति ॥ यदा परमात्मन्येव स्थितः सन् परमात्मप्रसादेन ब्रह्मानन्दानुभवादन्यत्रालंबुद्धिं प्राप्तो भवति ॥ तदा स्थितप्रज्ञः उच्यते ॥ ज्ञानिनामपि धर्माविरुद्धकामदर्शनाद्विरुद्धकामप्रहाणमत्र विवक्षितम् ॥ विरुद्धकामस्यापि क्वचिद्दर्शनात् प्रायो विरुद्धकामप्रहाणमत्र विवक्षितम् ॥ ज्ञानोदये कामादिनिवृत्तिः कुत इति चेत कामादयो यस्मिन्मनसि वर्तन्ते तस्मिन्मनसि १ तद्विरोधिनो ज्ञानस्योदये कामादिनिवृत्तेरवश्यंभावात् मनोगतान् कामान् प्रजहातीत्युक्तम् ॥ निवर्तनशक्तस्य विरोधिनः प्रबलस्य स्वावासस्थाने स्थापने निवर्तनीयः सदनमाक्रम्य त्यक्तुमनीहया विवदमानः पुमान् तेन सहावस्थातुमशक्नुवान स्वयमेव निवर्तते ॥ एतद्युक्तिसूचनायैव मनोगतानित्युक्तिः ॥ 'योगे त्विमां शृणु' ॥ इति ज्ञानोपायोपदेशं प्रतिज्ञातवतो मम, कृतेऽपि लक्षणप्रश्ने प्रकरणमिदं ज्ञानोपायोपदेशप्रकरणमिति ज्ञानोपायानेव वक्ष्यामीत्यनुक्त्वा प्रजहातीत्यादिना अभ्युपगम्य लक्षणप्रश्नं लक्षणवचनमनुचितमिति चेत् यानि ज्ञानिनो लक्षणानि तानि जिज्ञासोर्ज्ञानसाधनानि इत्याशयेन लक्षणोपदेशः ॥ ज्ञानिनो लक्षणत्वेनोच्यमानस्य विरुद्धकामप्रहाणादे जिज्ञासौ उपायत्वेन विद्यमानत्वादतिव्याप्तिर्लक्षणस्य स्यात् ॥ न हि अतिव्याप्तमलक्षणं भवितुमर्हतीति चेत् ज्ञानिनोऽयत्नसिद्धं लक्षणं जिज्ञासोर्यत्नसाध्यं साधनमिति भेदसत्त्वान्नोक्तदोषः ॥ पार्थेदमवधेहि ॥ ५५ ॥

अर्जुनः ॥ लक्षणमिदं विवरणेन विस्पष्टय ॥

कृष्णः ॥ दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ॥
वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥ ५६ ॥

दुःखेष्विति ॥ यः दुःखेषु प्राप्तेष्वपि न उद्विग्नं अनुद्विग्नं अनुद्विग्नं

१. रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥' इति विरोधो वक्ष्यते ॥

मनः येषां ते अनुद्विग्नमनाः सुखेषु विगता स्पृहा इच्छा यस्मात् सः विगतस्पृहः रागश्च भयं च क्रोधश्च रागभयक्रोधाः वीताः रागभयक्रोधाः यस्य सः वीतरागभयक्रोधः सः मुनिः ज्ञानी स्थितधीः उच्यते ॥ ५६ ॥

दुःखेषु प्राप्तेषु अनुद्विग्नमनाः अक्षुभितचित्तः सुखेषु विषये विगतस्पृहः अशोभने शोभनत्वभ्रमो रागः रागभयक्रोधादिदोषरहितः सन् सदा भगवन्मननशीलः स्थितप्रज्ञ उच्यते ॥ ५६ ॥

कृष्णः ॥ यः सर्वत्रानभिस्नेहः तत्तत्प्राप्य शुभाशुभम् ॥
नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥ ५७ ॥

य इति ॥ यः सर्वत्र न विद्यते अभिस्नेहः यस्य सः अनभिस्नेहः सन् तत्तत् शुभं च अशुभं च अनयोः समाहारः शुभाशुभं प्राप्य नाभिनन्दति न द्वेष्टि ॥ तस्य प्रज्ञा प्रतिष्ठिता ॥ सः स्थितप्रज्ञः ॥ ५७ ॥

सर्वेषु विषयेषु स्नेहरहितः अतएव तत्तत्प्राप्तिविगमरूपं शुभाशुभं प्राप्यापि नाभिनन्दति तोषेण न प्रशंसति ॥ न द्वेष्टि द्वेषेण न निन्दति ॥ तस्य प्रज्ञा प्रतिष्ठिता ॥ सः स्थितप्रज्ञः ॥ लिङ्गशरीरनाशात्प्राक् किञ्चिद्देहाभिमानस्य सत्वात्सर्वत्रस्नेहराहित्यं कथं इति चेत् किंचित्स्नेहस्यावर्जनीयत्वात् अतिस्नेहराहित्यमत्र विवक्षितम् ॥ अतएव अस्नेह इत्यनुक्त्वा अनभिस्नेह इत्युक्तम ॥ ५७ ॥

कृष्णः ॥ यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः ॥
इन्द्रियाणीन्द्रियार्थेभ्यः तस्य प्रज्ञा प्रतिष्ठिता ॥ ५८ ॥

यदेति ॥ अयं, कूर्मः कच्छपः अङ्गानीव सर्वशः सर्वाणि सर्वैः प्रकारैर्वा इन्द्रियाणि इन्द्रियाणां अर्थाः विषयाः इन्द्रियार्थाः तेभ्यः यदा संहरते निवर्तयति ॥ तदा तस्य प्रज्ञा प्रतिष्ठिता ॥ सः स्थितप्रज्ञः ॥ ५८ ॥

अयं ज्ञानी विषयेषु प्रसृतानि सर्वाणि इन्द्रियाणि कूर्मः प्रसृतान् करचरणाद्यवयवानिव उपसंहरति च तदा अयं स्थितप्रज्ञ उच्यते ॥

विषयेभ्यः इन्द्रियाणां निवर्तनं जिज्ञासोर्यत्नसाध्यमपि ज्ञानिनोऽयत्नसाध्यमिति सूचयितुं कूर्मोऽङ्गानीति दृष्टान्तः ॥ प्रजहातीत्युक्तं लक्षणं श्लोकत्रयेण विवृतम् ॥ ५८ ॥

अ ॥ सञ्जयः ॥ एवमर्जुनेन पृष्टो भगवान् चतुर्णां प्रश्नानां १ क्रमेणोत्तरमाह ॥

कृष्णः ॥ आत्मन्येव परमानन्दरूपे प्रत्यगात्मस्वरूप एव स्थितः आत्मना स्वेनैव बाह्यविषयलाभनैरपेक्ष्येण तुष्टः २ स्वात्मानन्दरसानुभूत्यैव संतोषं प्राप्तः यदा मनसि स्थितान् मनोधर्मान् अनात्मधर्मत्वात्प्रहाणयोग्यान् सर्वान् इच्छाभेदान् विषयान्वा निरवशेषं सवासनं त्यजति तदा सः स्थितप्रज्ञः अपरोक्षज्ञानी उच्यते ॥ आत्मन्येव न तु तुच्छे ॥ आत्मना स्वप्रकाशचिद्रूपेण तेन न तु वृत्त्या तृप्त इति वा ॥ इदं समाधिस्थस्य का भाषेत्यस्योत्तरम् ॥ ५५ ॥

कृष्णः ॥ व्युत्थितविषयकप्रश्नत्रये प्रथमस्योत्तरं वच्मि ॥ ज्वरशिरोवेदनादिनिमित्तकेषु आध्यात्मिकेषु चोरव्याघ्रसर्पादिनिमित्तकेषु आधिभौतिकेषु वर्षवातातपनिमित्तकेषु आधिदैविकेषु च दुःखेषु प्राप्तेषु अक्षुभितचेताः तथा आध्यात्मिकादिषु त्रिविधेषु सुखेषु प्राप्तेषु स्पृहाशब्दिततृष्णाभिवृद्धिरहित ॥ इन्धनाधानादग्नेरिव सुखप्राप्तेस्तृष्णाया अभिवृद्धिर्भवति तद्रहित ॥ रागभयक्रोधादिरहितः सर्वं ब्रह्मतया मनुते न तु तत्तदाकारेणेति मुनिः ब्रह्मनिष्ठः यदा भवति तदा स्थितप्रज्ञ उच्यते ॥ दुःखेषु दुःखहेतुषु प्राप्तेषु अक्षुभितचित्तः सुखेषु सुखहेतुषु प्राप्तेषु विगतस्पृहः आदररहितः इति वा ॥ दुःखेषु रजःपरिणामात्मकचित्तवृत्तिविशेषेषु प्राप्तेषु

१. 'प्रजहाती'ति प्रथमस्य, 'दुःखे'ष्वित्यादिद्वाभ्यां द्वितीयस्य, 'यदे'त्यादिषड्भिः तृतीयस्य 'रागद्वेष'त्याद्यष्टाभिः चतुर्थस्य च प्रश्नस्योत्तरं बोध्यं ॥ 'प्रजहाती'ति प्रथमस्य, 'दुःखे'ष्विति द्वितीयस्य 'या निशे'त्यादिद्वाभ्यां तृतीयस्य, 'विहाये'ति चतुर्थस्य इति केचित् ॥ 'प्रजहाती'ति प्रथमस्य 'यस्सर्वत्रे'ति द्वितीयस्य 'यदे'ति तृतीयस्य, 'विहाये'ति चतुर्थस्य च इत्यपरे ॥ 'प्रजहाती'ति लक्षणं ॥ 'दुःखे'ष्विति लक्षणान्तरं ॥ 'यस्सर्वत्रे'ति लक्षणान्तरं ॥ इति केचित् ॥ २. अत्र 'न केचनजगद्भावाः तत्वज्ञरञ्जयन्त्यमी ॥ नागरं नागरीकान्तं कुग्रामललना इव ॥' इति वासिष्ठवचनमनुसन्धेयम् ॥

अनुद्विग्नमनाः अहो पापोऽहं धिङ्मां दुरात्मानं एतादृशदुःखभागिनं को मे दुःखं निराकुर्यादित्यनुतापात्मकश्चित्तवृत्तिविशेषः उद्वेगः तद्रहितचित्त ॥ सुखेषु सत्त्वपरिणामात्मकचित्तवृत्तिविशेषेषु प्राप्तेषु विगतस्पृहः तत्सजातीयागामिसुखविषयतृष्णारहितः अहो धन्योऽहं यस्य ममेदृशसुखमुपस्थितं को वा मया तुल्यस्त्रिभुवने केनोपायेन ममेदं सुखं न विच्छिद्येतेत्येवमात्मकः उत्फुल्लतारूप हर्षात्मकः चित्तवृत्तिविशेषः स्पृहा तद्रहित इति वा ॥ अशोभने शोभनाध्यासनिमित्तको विषयाभिनिवेशरूपश्चित्तवृत्तिविशेषो रागः ॥ तद्विषयविनाशके समुपस्थिते तन्निवारणासामर्थ्यमात्मनो मन्यमानस्य दैन्यात्मकश्चित्तवृत्तिविशेषो भयम् ॥ तद्विषयविनाशके समुपस्थिते तन्निवारणसामर्थ्यमात्मनो मन्यमानस्य ज्वलनात्मकश्चित्तवृत्तिविशेषः क्रोधः ॥ उक्तरूपरागभयक्रोधरहितः मुनिः स्थितप्रज्ञ उच्यते ॥ मुमुक्षुः दुःखेनोद्विजेत् ॥ सुखे च न प्रहृष्येत ॥ वीतरागभयक्रोधश्च भवेत् ॥ इति साधनविधिरपि बोध्यः ॥ एवमुत्रत्रापि ॥ ५६ ॥

कृष्णः ॥ यः सर्वत्र देहगेहधनाऽऽरामजीवितादौ अत्यासक्तिरहितः सन् तत्तत् शुभं अशुभं वा प्राप्यापि नाभिनन्दति न हृष्यति न द्वेष्टि न विषीदति तस्य प्रज्ञा प्रतिष्ठिता ॥ सः स्थितप्रज्ञः ॥ अन्यविषयः प्रेमापरपर्यायो मनोवृत्तिविशेषः स्नेहः ॥ यस्मिन् सति परस्य दुःखं सुखं च स्वस्मिन्नारोपयति ॥ तद्रहित ॥ शुभं अशुभं च शुभं सुखहेतुं विषयं शुभप्रापयितारं वा अशुभं दुःखहेतुं विषयं अशुभप्रापयितारं वा प्राप्यापि नाभिनन्दति न प्रशंसति न द्वेष्टि न निन्दति ॥ गुणकथनादिप्रवर्तिका मनोवृत्तिरभिनन्दः ॥ निन्दादिप्रवर्तिका मनोवृत्तिर्द्वेषः ॥ तदुभयरहितः इति वा ॥ आपत्सु संपत्सु च न किमपि भाषते ॥ किंतु तूष्णीमिव तिष्ठतीति, शिष्यशिक्षार्थं अनुद्वेगनिस्पृहत्वादित्वाचः प्रभाषते स्तुतिनिन्दारूपा वाचो न भाषते इति वा, किं प्रभाषेत इत्यस्योत्तरमुक्तम् ॥ ५७ ॥

कृष्णः ॥ व्युत्थितविषयकद्वितीयप्रश्नस्योत्तरं वच्मि ॥ अयं ज्ञानी कूर्म अङ्गानीव सर्वाणि इन्द्रियाणि श्रोत्रादीनि वागादीनि च यदा विषयेभ्यः संहरते निवर्तयति सङ्कोचयति तदा तस्य प्रज्ञा प्रतिष्ठिता ॥ स स्थितप्रज्ञः स्थितप्रज्ञो व्युत्थितः ॥ प्रारब्धकर्मवशात व्युत्थानेन विक्षिप्तानीन्द्रियाणि समाध्यर्थं

पुनरुपसंहरन्नासीत ॥ इन्द्रियाणां विषयेभ्यो व्यावर्तनं [1]ज्ञानसाधनमिति बोध्यम् ॥ ५८ ॥

वि ॥ संजयः ॥ मोक्षहेतुभगवदपरोक्षज्ञानहेतुभूता-मावलोकनसाधन-परोक्षज्ञाननिष्ठाकाष्ठां स्थितप्रज्ञताख्यामवाप्नुं कर्मयोगं कुरु इत्युक्तं स्ववचनं श्रुतवता पार्थेन कर्मयोगफलभूतां स्थितप्रज्ञताख्यां परोक्षज्ञाननिष्ठाकाष्ठां प्राप्तस्य स्वरूपमनुष्ठानं च ब्रूहीति पृष्टो भगवान् प्रश्नानामुत्तरमाह ॥

कृष्णः ॥ यदा आत्मना मनसा आत्मस्वरूप एव प्रीतिमान् आत्मस्वरूप एव स्थितेन मनसा तुष्ट अन्यत्र जातालंप्रत्ययः सन् सर्वान् मनोगतान् इच्छाभेदान् प्र अपुनरंकुरं यथातथा जहाति तदा स स्थितप्रज्ञः उच्यते ॥ इदं, आत्मैकानुसन्धानरूपं तदासन इत्येवं किमासीतेत्यस्य प्रश्नस्य उत्तरभूतं, आत्मैकरतित्वरूपं तत्स्वरूपं इत्येवं का भाषेत्यस्याप्युत्तरं भवति ॥ अतः तस्य स्वरूपं कीदृशं तस्य मानसानुष्ठानप्रकार कीदृश इति द्वयोः प्रश्नयोरुत्तरभूतोऽयं श्लोक ॥ परोक्षज्ञाननिष्ठस्य चतस्रोऽवस्थाः ॥ तत्र तत्काष्ठारूपा वशीकारसंज्ञाख्या चतुर्थी दशा ॥ तद्धेतुभूता ततोऽर्वाचीना एकेन्द्रियसंज्ञाख्या तृतीया दशा ॥ तद्धेतुभूता ततोऽर्वाचीना व्यतिरेकसंज्ञाख्या द्वितीया दशा ॥ तद्धेतुभूता ततोऽर्वाचीना यतमानसंज्ञाख्या प्रथमा दशा ॥ पूर्वपूर्वा उत्तरोत्तरनिष्पाद्या ॥ परोक्षज्ञाननिष्ठस्य या तत्काष्ठारूपा वशीकारसंज्ञाख्या चतुर्थी अवस्था सा 'प्रजहाती'ति श्लोके प्रतिपादिता ॥ ५५ ॥

कृष्णः ॥ तद्धेतुभूतां ततोऽर्वाचीनां एकेन्द्रियसंज्ञाख्यां तृतीयां दशां शृणु ॥ प्रियविश्लेषादिदुःखहेतुषु संनिहितेषु प्राप्तेष्वपि अचलितचेताः निर्दुःखचित्तो वा प्रियसंश्लेषादिसुखहेतुषु संनिहितेषु प्राप्तेष्वपि विगतेच्छः विगतात्यादरः अनागतेषु विषयेषु इच्छा रागः प्रियविश्लेषाप्रियसंश्लेषहेतुदर्शनजं दुःखं भयं प्रियविश्लेषाप्रियसंश्लेषहेतुभूत [2]चेतनान्तराणां दुःखोत्पादनहेतुभूतो मनोविकारः क्रोधः तद्रहितः एवं भूतः आत्ममननशीलः स्थितप्रज्ञ उच्यते ॥ अत्र मानसानुष्ठानप्रकार उच्यते ॥ अतः इदमपि किमासीतेति प्रश्नस्य

---

१ यद्यपि वैराग्यं मोक्षेच्छा तत्परत्वं चेत्येतत्त्रयमेव ज्ञानयोगसिद्धं साधनं ॥ तथापि इन्द्रियजयमन्तरेण वैराग्यादेरनुदयादिन्द्रियजयोऽपि ज्ञानसाधनमुच्यत इति बोध्यं ॥ २. क्रोधादात्महननाद्यपि परपीडाभिप्रायेणेति भावः ॥

उत्तरम् ॥ तृतीयचतुर्थ्योरुभयोरप्यवस्थयोः कामक्रोधादिविरहसाम्येऽपि तृतीयस्यां दशायां भस्मच्छन्नदहनवदौत्सुक्यमात्रहेतुभूतवासनाशेषस्य विद्यमानत्वात् तृतीयस्याश्चतुर्थीतो भेदः ॥ चतुर्थ्यां समस्तवासनाविलयादौत्सुक्यमात्रमपि नावतिष्ठते ॥ ५६ ॥

कृष्णः ॥ तद्धेतुभूतां ततोऽर्वाचीनां व्यतिरेकसंज्ञाख्यां द्वितीयां दशां शृणु ॥ यः सर्वेषु प्रियेषु विषये अनभिस्नेहः स्नेहातिशयहेतुकप्रवृत्तिरहितः सन् दैवात् तत्तत् प्रियसंश्लेषरूपं शुभं प्रियविश्लेषरूपं अशुभं प्राप्यापि नाभिनन्दति न द्वेष्टि च ॥ शुभं प्राप्य नाभिनन्दति ॥ प्राप्तप्रियवस्तुसंबन्धिषु कालान्तरेषु च प्रीत्यनुवृत्तिहेतुभूतं मनोविकासं न प्राप्नोति ॥ अशुभं प्राप्य न द्वेष्टि ॥ अत्राप्यभीति विवक्षितं नाभिद्वेष्टीति ॥ प्राप्ताप्रियवस्तुसंबन्धिषु कालान्तरेषु च अप्रीत्यनुवृत्तिहेतुभूतं मनस्संकोचं न प्राप्नोति ॥ तस्य प्रज्ञा प्रतिष्ठिता सः स्थितप्रज्ञः ॥ अत्र मानसानुष्ठानप्रकारस्य भाषणं च आत्मतत्त्वैकविषयमिति वाचिकानुष्ठानप्रकारस्य प्रवृत्तिश्च आत्मप्राप्त्यर्थैवेति कायिकानुष्ठानप्रकारस्य चोक्त्या करणत्रयानुष्ठानविषयप्रश्नत्रयोत्तरमिदम् ॥ ५७ ॥

कृष्णः ॥ तद्धेतुभूतां ततोऽर्वाचीनां यतमानसंज्ञाख्यां प्रथमां दशां शृणु ॥ यदा अयं परोक्षज्ञाननिष्ठः विषयेषु प्रवृत्तानि प्रवर्तितुमुद्युक्तानि च इन्द्रियाणि इन्द्रियग्राह्यतत्तद्विषयेभ्यः कूर्मः अंगानीव सर्वशः सर्वैः प्रकारैः विलोकनभाषणविलासपरिहासकेलिपरिरम्भादिसकलविधव्यापारैः सह दोषदर्शनादिभिः नानाप्रकारैः सर्वैर्हेतुभिर्वा संहरते तानि उपसंहृत्य आत्मन्येव मनोऽवस्थापयति ॥ वक्ष्यते च ॥ 'तानि सर्वाणि सम्यम्य युक्त आसीत मत्परः ॥' इति ॥ तस्य प्रज्ञा प्रतिष्ठिता ॥ सः स्थितप्रज्ञः ॥ पूर्वत्र आत्मन्येव भाषणं आत्मन्येवानुसन्धानं आत्मन्येव प्रवृत्तिरिति करणत्रयानुष्ठनप्रकारः उक्तः ॥ अत्र तु अन्यविषये भाषणं न अन्यविषयं मनःप्रवृत्तिर्न अन्यविषये गमनमुपादानादिकं च न इति करणत्रयानुष्ठानप्रकार उच्यते ॥ इति भेदः ॥

पार्थ इदमत्रावधेहि ॥ यथा पिता दुष्टैराकृष्य दुर्विषयेषु प्रवर्त्यमानं पुत्रं दुर्विषयेभ्यो निवर्तयितुं प्रथमं आकर्षकान दुष्टानेव दूरीकरोति न तु पुत्रं निर्बध्नाति वैरस्य प्रसङ्गात ॥ दूरीकृत्य च तान दुष्टान् पुत्रं तैरनाकृष्टं स्वसदन एवावस्थाप्य सन्मार्गे प्रवर्तयति ॥ तथा शास्त्रजन्यपरोक्षज्ञाननिष्ठावान्

प्रत्यवायज्ञानाभावेन भयाभावादपथे प्रवृत्य स्वयमनुभूय तत्र मनः समाकृष्य पातयितुं प्रवृत्तानि प्रवर्तितुमुद्युक्तानि च बाह्येन्द्रियाणि. भयाभावदशायां प्रसारितानि स्वीयकरचरणादीनि भये समुत्पन्ने सद्य एव कूर्म इव उपसंहृत्य इन्द्रियैरनाकृष्टं मनः स्वस्थान एवावस्थाप्य स्वात्मन्येव प्रवर्तयेत॥ इयं यतमानसंज्ञाख्या परोक्षज्ञाननिष्ठायाः प्रथमाऽवस्था॥ यथा पिता दुष्टान् दूरीकृत्य स्वगृह एवावस्थापितस्य पुत्रस्य तत्संसर्गात्सञ्जातापथरुचेः समये तैः सह बहिर्गमननिवारणाय हितोपदेशादिना औदासीन्यानभिनन्दनादिकमुत्पाद्य तदीयव्यापारानुपरमयति ॥ तथा सावशेषरागद्वेषादिदोषकलुषितस्य मनसः इन्द्रियैर्बहिर्गमननिवारणार्थं पक्कावशिष्टरागद्वेषादिदोषपचनाय औदासीन्यानभिनन्दनादिना मनोव्यापारानुपरमयेत् ॥ इयं व्यतिरेकसंज्ञाख्या द्वितीयाऽवस्था ॥ यथा पिता उपरतव्यापारस्यापि पुत्रस्य दुष्टसंसर्गकालिकविषयानुभवभावितवासनया विषयेषु भोग्यत्वबुद्धिरूपया कदाचिद्विषयेषु मनः प्रवर्तेत तन्माभूदिति परमभोग्यं अनिषिद्धं विहितमुचितं विषयं प्रदर्श्य तत्र तं प्रवर्त्य तत्र रुचिमुत्पाद्य तदन्यत्र वासनामुन्मूलयति ॥ तथा मनसः परमभोग्यमात्मवस्तु यथावदुपपाद्य तत्र तस्य रुचिमुत्पाद्य तदितरबाह्यविषयेषु वासनामुन्मूलयेत् ॥ इयं एकेन्द्रियसंज्ञाख्या तृतीयाऽवस्था ॥ यथा पिता उचितविहितविषयरुच्या उन्मूलितदुर्विषयवासनाबलेन पुत्रेण अमन्दमानन्दमनुभवति॥ तथा परमभोग्यात्मवस्तुनि जातया रुच्या समुन्मूलितबाह्यविषयवासनाजालेन मनसा आत्मन्येव तुष्येत् ॥ इयं वशीकारसंज्ञाख्या चतुर्थी अवस्था॥ इयं च परोक्षज्ञाननिष्ठायाः काष्ठा स्थितप्रज्ञताख्या ॥ सेयं योगाख्यमात्मावलोकनं साधयति ॥ तच्चात्मावलोकनं भगवदपरोक्षसाक्षात्कारद्वारा परमपुरुषार्थभूतमोक्षाय कल्पते ॥

यथा पिता स्वगृहे स्थितां मातापितृबन्धुभिरितरैश्चाऽऽप्तैः स्वस्वगृहान् प्रति नीयमानां तत्रैव कंचित्कालं स्थित्वा पुनरागच्छन्तीं परिणययोग्यवयसः प्राप्तौ तत्रतत्र गमनं निरुध्य स्वगृह एवावस्थाप्य हठात्तत्रतत्रगमननिवारणाय हितमुपदिश्य औदासीन्यानभिनन्दनादिकमुत्पाद्य तदीयव्यापारानुपरमय्य कस्मैचित्तां प्रदाय तद्गृहं प्रति प्रेषितां पूर्वानुभूतमातापितृतदीयबन्धुरूपविषयवासनया तत्र रुचिमलभमानां स्वयं तत्र गत्वा सह तया तत्र स्थित्वा तत्र सुखं प्रदर्श्य तत्र रुचिमुत्पाद्य तया समुन्मूलिताशेषतदितरवस्तुवासनां तत्रैव रममाणां तदेकालंबनां स्व-

कन्यां दृष्ट्वा हृष्यति ॥ तथा परोक्षज्ञानवान् स्वबुद्धिं क्रमात् आत्मैकालंबनां कृत्वा तत्र रमयन् स्वयं तुष्येत् ॥ इत्यपि बोध्यम् ॥ विषयाणां अदर्शनं तुरीयदशायाम् ॥ दृश्यमानेष्वपि तेषु निस्संगता तृतीयदशायाम् ॥ संगलेशेन भुज्यमानेष्वपि तेषु नातिस्नेहो द्वितीयदशायाम् ॥ प्रचुरे रागे तन्निरोधसंरंभः प्रथमदशायाम् ॥ इति विवेकः॥ तदेवं स्थितप्रज्ञताख्यपरोक्षज्ञाननिष्ठावतः आत्मरतित्वरूपं स्वरूपमिति तत्स्वरूप प्रश्नस्य तदेकविषयं भाषणं तदनुसन्धानरूपं तदासनं तत्प्राप्त्यर्थप्रवृत्तिरूपं तद्व्रजनं इति तदनुष्ठानत्रयप्रकारप्रश्नत्रयस्य च चतुर्भिरेतैः श्लोकैरुत्तरं दत्तमित्यवधेयम् ॥५८॥

द्वे ॥ अर्जुनः ॥ सर्वान् कामाननायासेन प्रजहातीति ज्ञानिनो लक्षणमुक्तम् ॥ तेन, ज्ञानेन कामक्रोधाद्यनर्थनिवृत्तिरनायासेन भवतीत्युक्तं भवति ॥ यद्येवं तर्हि सर्वैस्तदर्थं ज्ञानमेव संपादनीयम ॥ न च कामक्रोधादियुक्ताः तन्निवृत्तये ज्ञानसंपादनाय यतन्ते ॥ तत्कुतः ॥ वद ॥ 'यदा संहरते चाय'मिति इन्द्रियजयस्याऽऽवश्यकता उक्ता ॥ तस्य उपायं ब्रूहि ॥

कृष्णः ॥ विषया विनिवर्तन्ते निराहारस्य देहिनः ॥
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥ ५९ ॥

विषया इति ॥ निर्गतः आहारः यस्मात् सः निराहारः तस्य निराहारस्य देहः अस्यास्तीति देही तस्य देहिनः पुरुषस्य रसः रागः तं वर्जयित्वा रसवर्जं विषयाः विनिवर्तन्ते ॥ अस्य रसोऽपि परं ब्रह्म दृष्ट्वा निवर्तते ॥ ५९ ॥

ज्ञानं इन्द्रियजयसाध्यं इन्द्रियजयस्तु महायाससाध्यः ॥ अतः इन्द्रियजयसाध्यस्य ज्ञानस्य दुःसंपादत्वान न तत्संपादनाय यतन्ते ॥ किमिन्द्रियजयस्तादृशः इति चेत् आहाररहितस्य उपवासिनः विषयाः विनिवर्तन्ते ॥ निराहारस्य कस्याप्यर्थस्य सिद्धिः न भवति ॥ वक्ष्यते च ॥ 'न चैकान्तमनश्नतः ॥' इति इति चेत् महानुभावस्य विषये तथा अतादृशस्य विषये तु अल्पाहारस्येत्यर्थः ॥ दृश्यते चाल्पधने निर्धन इति प्रयोगः ॥ अनिराहारस्य इति छेदः ॥ निः नितरां आहारः यस्य स निराहारः न निराहारः अनिराहार तस्य मिताहारस्येत्यर्थः ॥ वक्ष्यते च ॥ 'युक्ताऽऽहारविहारस्ये'ति ॥ इति वा ॥ तादृशस्य देहाभिमानवत आत्मनः विषयाः विषयभोगशक्तिमन्ति इन्द्रियाणि निवर्तन्ते ॥ निराहारत्वेन कथमिन्द्रि-

याणि निवर्तेरन् इति चेत् 'स विशेषणे ही 'ति न्यायात् इन्द्रियाणां विषयभोगशक्तयो निवर्तन्ते इत्यर्थः । किं निराहारस्य विषयाऽऽशाऽपि निवर्तते इति चेत् रसवर्जं रसो विषयेच्छा तां वर्जयित्वा ॥ निराहारस्यापि विषयाऽऽशा न निवर्तते ॥ रसस्य कदा निवृत्तिरिति चेत् अस्य रसोऽपि परमात्मानं साक्षात्कृत्य निवर्तते ॥ चक्षुःश्रोत्रजिह्वाघ्राणत्वगाख्यानां पञ्चानामपीन्द्रियाणां विषयभोगशक्तिनिवृत्तिः परं निराहारत्वेन भवति ॥ विषयाऽऽशानिवृत्तिस्त्वपरोक्षेणैव भवति ॥ केषाञ्चिदेवम् ॥ केषाञ्चित्तु रसवर्जं रसनेन्द्रियं वर्जयित्वा तदितरेषां चतुर्णामिन्द्रियाणां विषयभोगशक्तिः विषयाऽऽशा च निराहारत्वेन निवर्तते ॥ रसोऽपि रसनेन्द्रियस्य रसभोगशक्तिः रसेच्छा च अपरोक्षेणैव निवर्तते ॥ रसनेन्द्रियेतरेन्द्रियाणां विषयभोगशक्तिनिवृत्तिः विषयाशानिवृत्तिश्च निराहारत्वेन भवति ॥ रसनेन्द्रियस्य रसभोगशक्तिनिवृत्तिः रसेच्छानिवृत्तिश्च अपरोक्षेणैव भवति ॥ शक्तिनिवृत्तिरूपः स्थूलजयः निराहारत्वेन भवति ॥ रागनिवृत्तिरूपः सूक्ष्मजयस्तु अपरोक्षज्ञानेन भवति ॥ अत इन्द्रियजयस्य महाऽऽयाससाध्यत्वान्न तत्साध्ये ज्ञाने प्रयतन्ते ॥ ज्ञानकामैस्तु महता प्रयत्नेन इन्द्रियजयः संपादनीयः ॥ ५९. ॥

अ ॥ अर्जुनः ॥ इन्द्रियाणां विषयेभ्यो व्यावर्तनं ज्ञाननिष्ठायाः साधनमित्युक्तम् ॥ तत्कथम् ॥ इन्द्रियाणां विषयेभ्यो व्यावर्तनेऽपि रागरूपप्रतिबन्धकसत्वेन ज्ञाननिष्ठाऽनुदयात् ॥ अन्यथा इन्द्रियैर्विषयाननाहरतः आतुरस्य कष्टे तपसि वर्तमानस्य च विद्याविहीनस्य सुषुप्तस्यापि ज्ञानोदयापत्तेः ॥ वद ॥ आवश्यकस्येन्द्रियजस्य उपायं ब्रूहि ॥

कृष्णः ॥ आहारशब्दितविषयस्वीकाररहितस्य [1] विषयानस्वीकुर्वतः देहिनः विषयाः इन्द्रियाणि विषया वा विषयाशावर्जं विनिवर्तन्ते ॥ तादृशस्य रागरूपप्रतिबन्धकसत्वान्न ज्ञानोदयः ॥ अस्य प्रतिबन्धको रसशब्दितो रागोऽपि परं ब्रह्म अहमेव तदित्यपरोक्षतो ज्ञात्वा निवर्तते ॥ रागरूपप्रतिबन्धकनिवृत्तौ ज्ञानं ज्ञाने प्रतिबन्धकरागनिवृत्तिः इत्यन्योऽन्याश्रयः इति चेत् अस्य रसः परं ब्रह्म दृष्ट्वा परोक्षतो ज्ञात्वा निवर्तते ॥ इयं स्थूलरागनिवृत्तिः ॥ ततः निवृत्तस्थूलरागस्य रसः परं

१. उपवासपरस्य इति केचित् ॥

दृष्ट्वा अपरोक्षतो ज्ञात्वा निवर्तते ॥ इयं सूक्ष्मरागनिवृत्तिः ॥ अपिशब्दाद्विषयाश्च निवर्तन्ते ॥ परोक्षज्ञानेन स्थूलरागनिवृत्तिः ततोऽपरोक्षज्ञाननिष्ठा तया च सूक्ष्मरागनिवृत्त्या मोक्षः इति नान्योऽन्याश्रयः ॥ आह्रियन्ते गृह्यन्ते विषया एभिरित्याहारा इन्द्रियाणि तेभ्यो निर्गतः निराहारः इन्द्रियनिग्रहवान् तस्य विषयाः, रसः विषयेषु भोग्यत्वभावना तद्वर्जं विनिवर्तन्ते ॥ अस्य रसः भोग्यत्वभावना तु परं दृष्ट्वा निवर्तते ॥ इति वा ॥ विषयाणामनाहरणादिन्द्रियजयः जितेन्द्रियस्य परोक्षापरोक्षज्ञानाभ्यां स्थूलसूक्ष्मरागनिवृत्त्या मोक्षः ॥ अत इन्द्रियजयस्य ज्ञानसाधनत्वोक्तिर्युक्ता ॥ ५९ ॥

त्रि ॥ अर्जुनः ॥ स्थितप्रज्ञताख्या परोक्षज्ञाननिष्ठाकाष्ठा इन्द्रियजयसाध्या ॥ इन्द्रियजयस्तु परमदुश्शकः ॥ अतः सा दुष्प्रापा ॥ कथं मम सा सेत्स्यति ॥ इन्द्रियजयद्वारा तत्प्राप्त्युपायं ब्रूहि ॥

कृष्णः ॥ आह्रियन्ते इत्याहारा विषयाः तेभ्यो निर्गतः निराहारः १ विषयेभ्यः प्रत्याहृतेन्द्रियः तस्य देहिनः विषयाः रागवर्जं विनिवर्तन्ते ॥ अस्य रागोऽपि परं विषयेभ्यः परमभोग्यं आत्मस्वरूपं दृष्ट्वा निवर्तते ॥ आत्मदर्शनं इन्द्रियजयद्वारा ज्ञाननिष्ठाकाष्ठाप्राप्तावुपाय ॥ महता प्रयत्नेन आत्मदर्शनं संपादय ॥ तेन चेन्द्रियजयद्वारा ज्ञाननिष्ठाकाष्ठा सेत्स्यति ॥ मा भैषीः ॥ ५९ ॥

द्वे ॥ अर्जुनः ॥ इन्द्रियजयस्य निराहारत्वेन अपरोक्षज्ञानेन च साध्यत्वोक्त्या असाध्यत्वमुक्तं भवति ॥ तच्चायुक्तम् ॥ विनैव निराहारतां इन्द्रियाणां विचरतां विषयेषु स्वभावतः ॥ बलादाहरणं तेषां प्रत्याहारः स उच्यते ' ॥ इत्युक्तप्रत्याहाररूपसाधारणयत्नमात्रेण तेषां विषयेभ्यो निवृत्तिसंभवेन, तथा विनैवापरोक्षज्ञानं नित्यानित्यवस्तुविवेकरूपसाधारणज्ञानमात्रेण मनसो रागनिवृत्तिसंभवेन चेन्द्रियजयस्य सुसाधत्वात् ॥ अस्तु वा इन्द्रियजयो दुःसाध । तच्चाविदुषः विदुषां तु

१. 'न चैकान्तमनश्नतः' (६. १६) युक्ताहारविहारस्य' (६. १७) इति वक्ष्यमाणत्वान्नात्र प्रसिद्धाहारनिषेधः ॥ प्रसिद्धाहारवर्जनस्य कतिपयविषयनिवृत्तिहेतुत्वेऽपि सकलविषयनिवृत्त्यहेतुत्वाच्च ॥

विवेकादिन्द्रियजयः सुसाध्यः ॥ अतो न विद्वद्भिरिन्द्रियजयार्थं महान् यत्नः कार्यः ॥ यत्र ॥

कृष्णः ॥ यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः ॥
इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥ ६० ॥

यतत इति ॥ हे कौन्तेय अर्जुन विपश्चित् विद्वान तस्य विदुषोऽपि यततोऽपि यत्नं कुर्वतोऽपि पुरुषस्य प्रमथ्नन्तीति प्रमाथीनि इन्द्रियाणि प्रसभं बलात्कारेण मनः हरन्ति ॥ हि प्रसिद्धम ॥ हिशब्दा हेतौ वा ॥ ६० ॥

विपश्चितोऽपि परोक्षज्ञानजन्यविवेकवतोऽपि यततोऽपि प्रत्याहाररूपसाधारणप्रयत्नं कुर्वतोऽपि पुरुषस्य देहाभिमानवतः पुंसः स्त्रियाश्च जीवस्य प्रमथनशीलानि इन्द्रियाणि मनः बलात्कारेण हरन्ति विषयान् प्रापयन्ति ॥ विषयाभिमुखीकृत्य तदनुरक्तं कुर्वन्ति ॥ हरत् इति सुबन्तं तत्र प्रथमाबहुवचनान्तमिदं हरन्तीति ॥ इन्द्रियाणि मनः हरन्ति सन्ति प्रमथनशीलानि भवन्ति ॥ इति वा ॥ 'बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति' ॥ इति हि वदन्ति ॥ अतः निराहारताऽपरोक्षज्ञानरूपमहाप्रयत्नसाध्य एवेन्द्रियजयः ॥ पुरुषस्येत्यनेन इन्द्रियजयस्य दुःसाध्यत्वे देहाभिमान एव हेतुरिति सूच्यते ॥ अत उक्तं युक्तम ॥ ६० ॥

अ ॥ अर्जुनः ॥ इन्द्रियजयस्य ज्ञानसाधनत्वमुक्तम् ॥ समर्थितं च ॥ मनस एकस्य वशीकरणादेव ज्ञानोदयसंभवात किमनेकेषामिन्द्रियाणां वशीकरणाऽऽयासेन ॥ ब्रूहि ॥

कृष्णः ॥ विवेकविज्ञानवतोऽपि सर्वं मायिकमसत् तुच्छमिति विजानतोऽपि विषयेषु भूयोभूयो दोषदर्शनरूपप्रयत्नं कुर्वतोऽपि पुरुषस्य आत्मनः प्रमथनशीलानि विषयान् प्रत्यनुधावनशीलानि पार्थ विदितमेव हीदं सर्वेषाम् ॥ विषयदर्शनमात्रेण व्याकुलीकरणशीलानि अतिबलीयस्त्वाद्विवेकोपमर्दनक्षमाणि इन्द्रियाणि अवशीकृतानि निर्विकारं कृतमपि मनः बलात्कृत्य विषयान् प्रत्याकृष्य तेषु पातयित्वा विकारं प्रापयन्ति ॥ विवेकविज्ञानदोषदर्शनरूपप्रयत्नवतोऽपि अवशीकृतैरिन्द्रियैराकृष्यमाणस्य मनसो वशीकरणासंभवेन ज्ञानोदयासंभवात् तदर्थमिन्द्रियाणां वशीकरणमावश्यकम् ॥ अतः 'यदेन्द्रियाणि संहरते तदा तस्य प्रज्ञा प्रतिष्ठिता' ॥

इति पूर्वेण वा, अतः 'तानि सर्वाणि संयम्य युक्त आसीत मत्परः' ॥ इत्युत्तरेण वाऽन्वयः ॥ हिशब्दो हेतौ ॥ पश्यत्येव धनिनि स्वामिनि धनरक्षणाधिकृते च प्रमाथिनो दस्यवो यथा प्रसभमभिभूय धनं हरन्ति तथा पश्यत्येव विपश्चिति स्वामिनि विवेके च रक्षके प्रसभमिन्द्रियाणि मनो हरन्ति ॥ प्रसिद्धिद्योतको हिशब्दः ॥ ६० ॥

त्रि ॥ अर्जुनः ॥ इन्द्रियाणां विषयेभ्यः प्रत्याहरणमलं किं मनसो रागनिवर्तनप्रयत्नेन ॥ ब्रूहि ॥

कृष्णः ॥ शास्त्रजन्यहेयोपादेयविवेकवतोऽपि इन्द्रियजये यत्नं कुर्वाणस्यापि पुरुषस्य प्रमाथीनीन्द्रियाणि प्रसभं मनो हरन्ति ॥ 'बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ॥' इति प्रसिद्धं हि लोके ॥ मनसो रागसत्वे प्रत्याहृतान्यपीन्द्रियाणि प्रसभमवसरे विषयान् प्रति मनः कर्षेयुः ॥ अतो रागनिवर्तनपर्यन्तमिन्द्रियजयाभावेन यत्नाद्रागनिवर्तनमावश्यकम ॥ पूर्वश्लोके रागनिवृत्त्येन्द्रियजयस्याऽऽत्मदर्शनहेतुकत्वमुक्तम् ॥ अत्र तु रागनिवृत्तिपर्यन्तमिन्द्रियैर्मनसः कर्षणसम्भवादात्मदर्शनं नेति रागनिवृत्त्येन्द्रियजयहेतुकत्वमात्मदर्शनस्योच्यते ॥ अतो रागनिवृत्त्येन्द्रियजयादात्मदर्शनं आत्मदर्शनाद्रागनिवृत्त्येन्द्रियजय ॥ इत्यन्योन्याश्रितत्वादिन्द्रियजयात्मदर्शनयोः इन्द्रियजयसाध्या आत्मदर्शनसाधनभूता स्थितप्रज्ञताख्यपरोक्षज्ञाननिष्ठा दुष्प्रापा ॥ ६० ॥

द्वे ॥ अर्जुनः ॥ विवेकज्ञानप्रत्याहाररूपसाधारणयत्नाभ्यामिन्द्रियजयस्याशक्यत्वोक्त्या पूर्वोक्तनिराहारताऽपरोक्षज्ञानैकसाध्यत्वमुपपादितं भवति ॥ ततश्चाशक्यत्वमेवेन्द्रियजयस्याऽऽपद्यते ॥ निराहारस्य देहावस्थानासम्भवादिन्द्रियजयासम्भवः ॥ अपरोक्षज्ञानादिन्द्रियजय इन्द्रियजयादपरोक्षज्ञानमित्यन्योऽन्याश्रयाच्च तेनेन्द्रियजयसंभव ॥ ततश्च तत्साध्यापरोक्षज्ञानस्यासंभव एव ॥ ततश्च तदर्थकं शास्त्रं व्यर्थमापद्यते ॥ का गतिः ॥ वद ॥

कृष्णः ॥ तानि सर्वाणि संयम्य युक्त आसीत मत्परः ॥
वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥ ६१ ॥

तानीति ॥ सर्वाणि तानि संयम्य अहं परो यस्य सः मत्परः युक्तः मयि मनोयोगयुक्तः सन् आसीत ॥ यस्य इन्द्रियाणि वशे स्युः तस्य प्रज्ञा प्रतिष्ठिता ॥ सः स्थितप्रज्ञः ॥ हि प्रसिद्धमिदम ॥ ६१ ॥

अहं परो यस्य सः मत्परः युक्तः मयि मनोयोगयुक्तः सन् सर्वोत्तमत्वज्ञानपूर्वकं भगवति मयि निरन्तरमनोयोजनरूपप्रयत्नवान् सन् उक्तविधया जेतुमशक्यानि सर्वाणि तानीन्द्रियाणि 'विविक्तसेवी लघ्वाशी' (१८. ५२.) इति वक्ष्यमाण प्रयत्नेन विषयेभ्यः प्रतिसंहृत्य जित्वा तिष्ठेत् ॥ निराहारताऽपरोक्षज्ञानयोः साधनताऽसंभवेऽपि तत्प्रतिनिधिना उक्तसाधनान्तरेणेन्द्रियाणां जेतुं शक्यत्वान्न तत्साध्येन्द्रियजयस्य तत्साध्यापरोक्षज्ञानस्य चाऽसंभवः ॥ नापि तदर्थकशास्त्रस्य वैयर्थ्यम् ॥ यद्यत्रोक्तेन यत्नेन शक्यः स्यादिन्द्रियजय. तर्हि तस्य निराहारताऽपरोक्षज्ञानाभ्यां साध्यत्वोक्तिरयुक्ता इति चेत् केषाञ्चिन्महानुभावानां ताभ्यामपीन्द्रियजयो भवतीति वस्तुस्थितिप्रदर्शनार्थं तथोक्तिः ॥ न तु ताभ्यां जायमानस्येन्द्रियजयस्यापरोक्षज्ञानसाधनताऽभिप्रेता ॥ अतो नानुपपत्तिः ॥ उक्तहेतुना इन्द्रियजयः तेन चापरोक्षज्ञानमिति नान्योऽन्याश्रयः ॥ एवं इन्द्रियाणि यस्य वशे स्युः ॥ यो जितेन्द्रियः इति यावत् ॥ तस्य प्रज्ञा अपरोक्षज्ञानं प्रतिष्ठिता भवति ॥ प्रसिद्धमिदम् ॥ नाजितेन्द्रियस्यापरोक्षज्ञानमुत्पद्यते ॥ इन्द्रियजयस्तु उक्तरीत्या महाप्रयत्नसाध्यः ॥ अतस्तत्साधनभीरवो न तेन तदर्थं प्रयतन्ते ॥ ज्ञानकामैस्तु महता प्रयत्नेनेन्द्रियजयः संपादनीयः ॥ ६१ ॥

अ ॥ अर्जुनः ॥ अवशीकृतानीन्द्रियाणि मनो हरन्ति अतस्तान्यपि वशीकरणीयानीत्युक्तम् ॥ प्रमथनशीलानां तेषां वशीकरणं कथं कर्तुं शक्यम् ॥ 'निराहारस्य देहिनः' इति विषयाणामस्वीकरणं तत्रोपायतयोक्तं इति चेत् प्रमाथित्वादिन्द्रियाणां विषयानाहरणमशक्यम् ॥ 'परं दृष्ट्वा निवर्तते' इति ज्ञानं तत्रोपायतयोक्तं इति चेत् ज्ञानादिन्द्रियजयः इन्द्रियजयाच्च ज्ञानं इत्यन्योन्याश्रयान्नेन्द्रियजयज्ञानयोः साध्यसाधनभाव उपपद्यते ॥ अतस्तानि येनोपायेन वशं नेयानि तं तादृशं बलवन्तमनपायमुपायं ब्रूहि ॥

कृष्णः ॥ अहं सर्वात्मा वासुदेव एव परः उत्कृष्टोपादेयो यस्य स तादृशः सन् अहमेव परः १ इष्टः यस्य स तादृश सन् इति वा मय्यर्पितमना सन् इति यावत् ॥ तानि सर्वाणि इन्द्रियाणि संयम्य विषयैरसंगतानि कृत्वा संगतान्यपि विषयैस्तेभ्यः प्रत्याहृत्य युक्तः निगृहीतमनाः आसीत उपविष्टो भवेत् ॥ परमेश्वरे मयि समर्पित-

१. परं इष्टं इति व्याख्यातं 'विप्रतिषेधे परं कार्यं' इति (१. ४. २) सूत्रे महाभाष्ये ॥

मप्युद्धमपि मनः १ निरस्ताशेषकल्मषमतिविमलं भवति ॥ विषयरागरहितं मनः सर्वाण्यपीन्द्रियाणि वशतामापादयति ॥ यथा निग्रहीतुमशक्या दस्यवो बलवन्तं राजानमाश्रित्य निगृह्यन्ते ॥ ततो राजाऽऽश्रितोऽयमिति मत्वा ते स्वयमेव तद्वशा भवन्ति ॥ तथा भगवन्तमाश्रित्य तदनुग्रहेण दुष्टानीन्द्रियाणि निग्राह्याणि ॥ ततो भगवदाश्रितोऽयमिति मत्वा स्वयमेव तानि तद्वशानि भवन्ति ॥ उक्तरीत्या वशीकृतेन्द्रियस्तत्वज्ञानाय प्रभवति ॥ अजय्यानामिन्द्रियाणां उक्तोपायेन वशीकरणं किमर्थं इति चेत् यस्येन्द्रियाणि वशे स्युः तस्यैव प्रज्ञा प्रतिष्ठिता ॥ स एव स्थितप्रज्ञताऽऽख्यापरोक्षज्ञाननिष्ठावानिति यावत् ॥ अतो मत्परः तानि संयम्य युक्त आसीत ॥ इन्द्रियाणां वशीकरणानन्तरं किं कर्तव्यं इति चेत् तानि संयम्य युक्तः निगृहीतमनाः सन् मत्परः अहं सर्वप्रत्यगात्मा वासुदेवः परः स्त्र्यादिभ्यो बाह्येभ्यः देहेन्द्रियादिभ्यः आन्तरेभ्यश्च उत्कृष्टः प्रियतमः आत्मा यस्य सः तादृशः ॥ आत्मा हि सर्वस्य सर्वेभ्यः प्रियतमो लोके ॥ नान्यस्तस्मादहमित्यभेदानुसन्धानं कुर्वन् आसीत ॥ अभेदानुसन्धानं कुर्वन्नासीतेत्युच्यतां तानि संयम्येतीन्द्रियजयानन्तरकरणीयता कुत उच्यते इति चेत् यस्येन्द्रियाणि वशे स्युः तस्यैव ब्रह्मैवाहमहमेवब्रह्मेत्यपरोक्षज्ञाननिष्ठासिद्धिः ॥ अतः तानि संयम्य मत्परः आसीत इति इन्द्रियजयानन्तरकरणीयता तस्योक्ता ॥ तदेवं इन्द्रियाणां मनसश्च वशीकरणमावश्यकम् ॥ अतस्त्वं तानि तच्च वशीकर्तुमुक्तरुपायैः प्रयतस्व ॥ ६१ ॥

त्रि ॥ अर्जुनः ॥ इन्द्रियजयाऽऽत्मदर्शनयोरन्योऽन्याश्रितत्वात् ज्ञाननिष्ठा दुष्प्रापेत्युक्तम् ॥ दुष्प्रापाऽपि साऽवश्यं संपादनीया ॥ येन सा संपादयितुं शक्या तं निर्बाधमुपायं ब्रूहि ॥

कृष्णः ॥ सर्वाणि तानि दुर्जयानीन्द्रियाणि विषयेभ्यः प्रत्याहृत्य विषयसंस्पर्शरहितानि कृत्वा अहं परः विषयेभ्यः परमभोग्यो यस्य सः तादृशः शुभाश्रयभूते मयि अर्पितमनाः तेन युक्तः चित्तसमाधानवान् तिष्ठेत् ॥ मय्यर्पितं मनो

१. अत्र, 'यथाऽग्निरुद्धतशिखः कक्षं दहति सानिलः ॥ तथा चित्तस्थितो विष्णुः योगिनां सर्वकिल्बिषं ॥' इति (वि. ६. ७. ७४.) 'मालिन्यशालिन्यपि मानसं मे विश प्रभो तच्च विधेहि शुद्धं ॥ दीपो गृहे किं तिमिरोपरुद्धे नाऽऽयाति तत्किं न परिष्करोति ॥' इत्यादिकं चानुसन्धेयम् ॥

मदधिष्ठानमहिम्ना दग्धाशेषकल्मषतया विमलीकृतं उज्झितविषयरागं सत् इन्द्रियाणि वशे करोति ॥ एवं यस्येन्द्रियाणि वशेस्युः तस्यैव स्थितप्रज्ञताख्यपरोक्षज्ञाननिष्ठाकाष्ठा प्रतिष्ठिता भवति ॥ अतो मत्पर आसीत ॥ अशुद्धस्यापि मनसो मय्यर्पणेन विनैवाऽऽत्मदर्शनं स्थूलरागनिवृत्त्या स्थूलेन्द्रियजयः तेन च स्थितप्रज्ञता तया चात्मदर्शनं तेन च सूक्ष्मरागनिवृत्त्या सूक्ष्मेन्द्रियजयः तेन च परमपुरुषार्थरूपममृतत्वमित्यन्योऽन्याश्रयाभावादिन्द्रियजयस्य स्थित प्रज्ञतोत्पादनद्वारा आत्मावलोकनाख्यापरोक्षज्ञानहेतुत्वसंभवेन, दुष्प्रापायास्तस्याः प्राप्तये उक्तोपायेन वशीकरणमिन्द्रियाणां संपादय ॥ तेन च सा सुप्रापा भविष्यति ॥ ६१ ॥

द्वै ॥ अर्जुनः ॥ भगवति मनोयोजनरूपप्रयत्नेन जेतव्यानीन्द्रियाणीत्युक्तम् ॥ रागद्वेषादिदोषदुष्टस्य मनसः कथं भगवति योजनं संभवति ॥ रागद्वेषादिदोषाः परिहरणीयाः इति चेत् कथं तेषां परिहार सम्भवति ॥ ब्रूहि ॥

कृष्णः ॥ ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते ।
सङ्गात्सञ्जायते कामः कामात् क्रोधोऽभिजायते ॥ ६२ ॥

क्रोधाद्भवति संमोहः संमोहात् स्मृतिविभ्रमः ।
स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात् प्रणश्यति ॥ ६३ ॥

ध्यायत इति ॥ विषयान ध्यायतः पुरुषस्य तेपु विषयेपु सङ्गः इच्छा उपजायते ॥ सङ्गात कामः उत्कटेच्छा संजायते ॥ कामात् क्रोधः कोपः अभिजायते ॥ क्रोधात् संमोहः भवति ॥ संमोहात् स्मृतेः स्मरणस्य विभ्रमः भ्रंशः भवति ॥ स्मृतिभ्रंशात बुद्धेः नाशः बुद्धिनाशः भवति ॥ बुद्धिनाशात् प्रणश्यति ॥ ६२ ॥ ६३ ॥

विषयाणां दर्शने श्रवणे वा जुगुप्सितविषयदर्शनादाविव उदासीनैर्भवितव्यम् ॥ न तु तेषां ध्यानं कर्तव्यम् ॥ कुत इति चेत् रूपादीन् विषयान् ध्यायतः पुंसः तेषु तत्सदृशेषु च सङ्गः इच्छा जायते ॥ सङ्गात् कामः इच्छा सञ्जायते उत्कटो भवति॥ कामात् केनाचित् प्रतिहतो कामो यैः प्रतिहन्यते तेषु क्रोध अभिजायते नितरामुत्पद्यते ॥ क्रोधात् संमोहः परहिंसनाद्यकार्यकरणेच्छा अधर्मे धर्मबुद्धिर्वा भवति ॥

संमोहात् प्रतिषेधादिस्मृतेर्नाशो भवति ॥ स्मृतिरूपो विभ्रमो वा ॥ हंसादेरधर्मत्वाभिधायकश्रुतिस्मृत्याद्यर्थस्य ज्ञानस्याप्यन्यथास्मृतिरिति यावत् भवति ॥ स्मृतिभ्रंशात् बुद्धिशब्दितदोषज्ञानस्य सर्वात्मना नाशो भवति ॥ बुद्धिनाशात् प्रणश्यति ॥ अधर्मकरणे प्रवृत्तः सन् अधर्मकरणान्नरकाद्यनर्थं प्राप्नोति ॥ अयमेवाऽऽत्मनः प्रकृष्टो नाश ॥ विषयध्यानात् रागद्वेषादेरुत्पत्तिः ॥ रागद्वेषादेर्नरकाद्यनर्थप्राप्तिः ॥ रागद्वेषादिना नरकाद्यनर्थप्राप्तिर्भवतीति ज्ञाते रागद्वेषादीनां परिजिहीर्षा जायते ॥ रागद्वेषादेः कारणं विषयध्यानं इति ज्ञाते कारणभूतस्य तस्याकरणं संपद्यते ॥ अकरणे च कारणस्य कार्यस्य रागद्वेषादेरनुदय उदितस्य तस्य परिहरणं च संपद्यते ॥ परिहृतरागद्वेषादिदोषस्य मनसः भगवति योजनं संभवति ॥ तेन चोक्तरीत्या इन्द्रियजयः संपद्यते ॥ भगवति मनोयोजनाद्रागद्वेषादिनिवृत्तिः रागद्वेषादिनिवृत्तेर्भगवति मनोयोजनं इत्यन्योन्याश्रयस्तु पूर्ववत् स्थूलसूक्ष्मभेदाश्रयणात्परिहरणीयः ॥ ६२ ॥ ६३ ॥

अ ॥ अर्जुनः ॥ तानि सर्वाणि संयम्य युक्त आसीतेति इन्द्रियनियमनपूर्वकं भगवति योजनेन मनसो नियमनमपि कर्तव्यमित्यभिहितम् ॥ उभयोः करणमशक्यं अलमेकेन बाह्येन्द्रियनियमनेन ॥ सति बाह्येन्द्रियनियमने उत्खातदंष्ट्रोरगवदनर्थहेतुत्वाभावेन मनसो नियमनस्यानावश्यकत्वात् ॥ ब्रूहि ॥

कृष्णः ॥ निगृहीतबाह्येन्द्रियस्यापि अवशीकृतमनसः पुंसः मनः पूर्वानुभूतान् विषयान् ध्यायेत् ॥ मनसा विषयान ध्यायतः पुंसः तेषु संगः सुखहेतुत्वज्ञानलक्षणा प्रीतिः जायते ॥ संगात् कामः भोगेच्छा सञ्जायते ॥ सङ्ग इच्छा कामः सङ्गस्य उत्कृष्टावस्था यामापन्नः पुमान अभोज्यं कलञ्जादिकं अभोग्यां स्त्रियं स्वसारं मातरं वा अभुक्त्वा स्थातुं नोत्सहते ॥ कामात् प्रतिहतात् कामितविषयानुभवप्रतिबन्धकेषु क्रोध जायते ॥ क्रोधात कार्याकार्यविवेकाभाव भवति ॥ संमोहात् शास्त्राचार्योपदेशगृहीतार्थस्मरणस्य भ्रंशः भवति ॥ स्मृति भ्रंशात् बुद्धेः मनसः नाशः कार्याकार्यविवेकायोग्यतारूप भवति ॥ बुद्धिनाशात् पुरुषार्थायोग्यो भवति ॥ स्मृति वेदान्तश्रवणजन्यज्ञानजन्या ब्रह्मैवाहमिति ब्रह्माकारेण परिणता बुद्धिवृत्तिः तस्याः विभ्रमः अनुत्पत्तिः ॥ स्मृतिभ्रंशात् बुद्धिनाशः सर्वस्य ब्रह्मत्वावगाहिनी अखण्डात्मिका बुद्धिवृत्तिः बुद्धिः तस्याः नाशः अनुत्पत्तिः भवति॥

बुद्धिनाशात् उक्तरूपात् हेतोः विद्वानपि न कदाचिदपि मुक्तिं प्राप्नोति ॥ इति वा ॥ विषयध्यानमनर्थमूलम् ॥ अतस्तत्परिहर्तव्यम् ॥ तत्परिहरणमनिगृहीतमनसोऽशक्यम् ॥ अतः निगृहीतबाह्येन्द्रियस्यापि मनोनिग्रहाभावे ईदृशानर्थसद्भावादिन्द्रियनियमनानन्तरं मनोनियमनमप्यावश्यकम् ॥ अतः 'संयम्य युक्त आसीते'त्युक्तं युक्तम् ॥ एवं निगृह्य बाह्येन्द्रियाणि वशीकृतमना सन्नासीतेति षड्भिः श्लोकैः स्थिधीः कथमासीतेति प्रश्नस्योत्तरमुक्तम् ॥ ६२ ॥ ६३ ॥

वि ॥ अर्जुनः ॥ मनसो भगवत्यर्पणरूपोपायेन वशीकरणमिन्द्रियाणां संपादनीयमित्युक्तम् ॥ अनिवेश्यैव भगवति मनो यत्नान्तरेण तन्न संपाद्यताम् ॥ तथाकरणे का हानिः संपद्येत ॥ ब्रूहि ॥

कृष्णः ॥ मय्यनिवेशितमनसः अपरिहृतरागद्वेषादिकषायस्य यत्नान्तरेणेन्द्रियाणि संयम्यावस्थितस्यापि पुंसः अनादिविषयवासनया विषयध्यानं नियमेन स्यात् ॥ विषयान् ध्यायतः पुंसः तेषु सङ्गः इच्छा जायते ॥ सङ्गात् कामः सञ्जायते॥ कामो नाम सङ्गस्य विपाकदशा यां दशामापन्नः पुरुषो विषयाननुभूय स्थातुं न शक्नोति ॥ कामात् प्रतिहतात् विषयानुभवालाभे विषयानुभवप्रतिबन्धकान् प्रति कामान्ध्यात्कर्तव्याकर्तव्यमौढ्येन तदात्वसन्निहितासन्निहितानन्यान् प्रत्यपि क्रोधः जायते ॥ दर्शिता चेयं कामिनां रीतिः १ 'सदेवगन्धर्वमनुष्यपन्नगं जगत्सशैलं परिवर्तयाम्यहम् ॥' इति वदता श्रीरामेण ॥ क्रोधात् कार्याकार्यविवेकराहित्यरूपः संमोहः भवति ॥ तेन सर्वमविशंकं करोति ॥ 'क्रुद्धः पापं न कुर्यात् कः क्रुद्धो हन्याद्गुरूनपि ॥' इति हि स्मरन्ति ॥ अतः कोपो बलवान् वैरी ॥ वक्ष्यते च ॥ २ 'विद्ध्येनमिह वैरिणम' ॥ इति ॥ अतः स सर्वथा वर्जनीयः ॥ अत एव वदन्ति ॥ 'अपकारिणि चेत्कोपः कोपे कोपः कुतो न ते ॥ धर्मार्थकाममोक्षाणां प्रधानपरिपन्थिनि ॥' इति ॥ संमोहात् स्मृतिविभ्रमः आत्मदर्शनोपायभूतस्य इन्द्रियजयादिप्रयत्नस्य आरब्धस्य विस्मरणं भवति ॥ स्मृतिभ्रंशात् उपायभूतप्रयत्नविषयकस्मरणनाशात् उपायस्मृतिसाध्यायाः आत्मदर्शनोपायानुष्ठानव्यवसायरूपबुद्धेः नाशः भवति ॥ बुद्धिनाशात् प्रणश्यति परो-

१. रामा. आ. ६४ सर्गे ॥ २. ३. ३७.

क्षज्ञाननिष्ठाऽनुदयेन पुनः पुनः संसारे निमग्नः शुद्धात्मस्वरूपदर्शनं आत्मावलोकनाख्यं साक्षात्कारापरपर्यायं न लभते ॥ अनिवेश्य भगवति मानसमात्मपौरुषेणेन्द्रियजये प्रवर्तमानस्य पुंसः ईदृशानर्थसद्भावात् मनसो भगवद्विषयीकरणरूपेणैवोपायेनेन्द्रियजये प्रयतितव्यमित्युक्तं युक्तम् ॥ इन्द्रियजयस्य आत्मदर्शनहेतुकत्वोक्तिः सूक्ष्मरागनिवृत्त्या सूक्ष्मेन्द्रियजयाभिप्राया ॥ उक्तोपायसाध्यत्वोक्तिस्तु स्थूलरागनिवृत्त्या स्थूलेन्द्रियजयाभिप्राया ॥ उक्तोपायलब्धस्थूलेन्द्रियजयनिष्पन्नपरोक्षज्ञाननिष्ठानिष्पन्नमात्मदर्शनं सूक्ष्मेन्द्रियजयद्वारा भगवदपरोक्षसाक्षात्कारमुत्पाद्य तेन मुक्तिं प्रापयति ॥ अतो मनसो भगवद्विषयीकरणेन इन्द्रियजये प्रयतस्व ॥ ६२ ॥ ६३ ॥

अर्जुनः ॥ रागद्वेषादिना नरकाद्यनर्थो भवतीत्यनिष्टप्राप्तिरभिहिता ॥ रागद्वेषादिनिवृत्त्या लभ्यमानं इष्टं फलं ब्रूहि ॥ उभयमपि विदन्नेव स्वरसतस्तन्निवर्तने प्रयतेत ॥ किञ्च यद्येवं स्थगयेत तर्हि सुखाननुभवात् आत्मद्रोहः स्यात् ॥ 'अनिषिद्धसुखत्यागी पशुरेव न संशयः' ॥ इति हि स्मरन्ति ॥ अतः किं कर्तव्यम् ॥ वद ॥

कृष्णः ॥ रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् ॥
आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥ ६४ ॥

रागेति ॥ रागश्च द्वेषश्च रागद्वेषौ ताभ्यां वियुक्तानि रागद्वेषवियुक्तानि तैः वशे भवानि वश्यानि आत्मनः स्वस्य मनसो वा वश्यानि आत्मवश्यानि तैः इन्द्रियैः विषयान् चरन् अनुभवन् पुरुषस्तु विधेयः स्वाधीनः आत्मा मनः यस्य सः विधेयात्मा सन् प्रसादं मनोनैर्मल्यं अधिगच्छति प्राप्नोति ॥ ६४ ॥

उक्तोपायेन रागद्वेषादिपरिहारे सति रागद्वेषरहितैः आत्मनः स्वस्य मनसो वा वश्यैः अधीनैः आत्मनः क्षोभानापादकैः इन्द्रियैः विषयान् शरीरयात्रानिर्वाहमात्रोपयोगिनो रूपरसादीन् चरंस्तु अनुभवन्नपि एवमनुभवनो विशेषसूचको वा तुशब्दः ॥ विधेयात्मा वशीकृतमनाः सन् प्रसादं विनाऽपि प्रयत्नं प्रायोविषयेष्वप्रवृत्तिरूपं मनसो नैर्मल्यं प्राप्नोति ॥ रागद्वेषादिनिवृत्त्या मनोनैर्मल्यरूपमिष्टं फलं लभ्यते ॥ रागद्वेषरहितैरिन्द्रियैः उचितविहितविषयानुभवेन सुखानुभवान्नाऽऽत्मद्रोहोऽपि भवति ॥ अतो न काऽप्यनुपपत्तिः ॥ इन्द्रियाणां मनसश्च वशीकरणीयत्वोक्त्या सर्वथा विष-

यानुभवादात्मद्रोहः कार्यः इति मयोच्यते इति मा मंस्थाः ॥ न मम तादृशः प्रद्वेषः प्राणिषु ॥ परित्यज्य दुर्विषयाऽऽशां उचितविहितविषयानुभवादनिषिद्धं सुखमनुभवेत्यादराडुच्यते मयेत्यवधेहि ॥ 'आत्मवश्यैः विधेयाऽऽत्मे'ति अनुवादरूपत्वेऽपि यः उक्तोपायेन त्यक्तरागद्वेषादिः सः रागद्वेषवियुक्तैः इन्द्रियैः शरीरयात्रामात्रोपयोगिनो विषयान् चरति ॥ स तेन विधेयात्मा भवति ॥ तस्य तेनेन्द्रियाणि वश्यानि भवन्ति ॥ इति वाक्यवृत्त्या विधिरूपत्वं बोध्यम् । विषयान् चरन्नपीत्युक्त्या देहयात्रामात्रोपयुक्तविषयानुभवो न दोषायेति सूच्यते ॥ ६४ ॥

अ ॥ अर्जुनः ॥ विषयध्यानमनर्थमूलं अतो निगृह्य मनस्तत्परिहर्तव्यमित्युक्तम् ॥ स्मरणमपि चेद्विषयाणामनर्थकारणं सुतरां तर्हि भोग ॥ अकरणे च तस्य शरीरयात्रानिर्वाहोऽपि न स्यात् ॥ उक्तानर्थमूलपरिहारोपायश्च कः ब्रूहि ॥

कृष्णः ॥ व्युत्थितविषयकतृतीयप्रश्नस्य उत्तरमग्रेभिरुच्यते ॥ शृणु तदवधानेन ॥ दोषदर्शनेन रागद्वेषाभ्यां वियोजितैः अतः स्ववशैः श्रोत्रादिभिः शरीरयात्रानिर्वाहहेतुभूतान् अवर्जनीयान् विषयान् अनुभवन् अतः विधेयात्मा सन् प्रसादं मनस्स्वास्थ्यं परमात्मसाक्षात्कारयोग्यतारूपां मनसः स्वच्छतां प्राप्नोति ॥ रागद्वेषाभ्यां वियोजनमिन्द्रियाणां उक्तानर्थमूलपरिहारोपायः ॥ ताभ्यां वियोजितैरिन्द्रियैः अवर्जनीयशरीरयात्रानिर्वाहमात्रोपयोगिविषयानुभवो न दोषाय ॥ तेन शरीरयात्रानिर्वाहोऽपि ॥ न केवलमेतावदेव ॥ किंतु एवंभूतस्य मनःप्रसादरूपफललाभोऽपि ॥ अत उक्तानर्थमूलपरिहारोपायत्वात् शरीरयात्रानिर्वाहहेतुत्वात् प्रसादरूपफलसाधनत्वाच्च उक्तरूपा स्थितिरवश्यं संपादनीया ॥ बाह्येन्द्रियाणामनिग्रहे तानि विषयेषु प्रवर्तेरन् ॥ प्रवर्तन्तां नाम ॥ सा च प्रवृत्तिर्न दोषाय भवति ॥ भवति च दोषाय रागद्वेषाभ्यां प्रवृत्ति ॥ तादृशी प्रवृत्तिरिन्द्रियाणां निगृहीतमनसो न भवति ॥ निगृहीते मनसि रागद्वेषयोरनुदयात् ॥ रागद्वेषरहितानामिन्द्रियाणां अवर्जनीयशरीरयात्रानिर्वाहमात्रोपयोगिविषयेषु प्रवृत्तिस्स्यात् ॥ तादृशैरिन्द्रियैस्तादृशविषयानुभवो न दोषाय ॥ अतो निगृहीतमनसो बाह्येन्द्रियजयाभावेऽपि न दोषः ॥ स्वाधीनैरिन्द्रियैर्विषयाननुभवतीति 'स्थितधीः किं व्रजेते'ति प्रश्नस्योत्तरमिदम् ॥ ६४ ॥

वि ॥ स्वपौरुषेणेन्द्रियजये प्रयतमानस्य उक्तानर्थसद्भावात् मनसो भगवद्विषयीकरणेनैवे [1] न्द्रियजयः संपादनीयः इत्युक्तम् ॥ तथा संपादितस्येन्द्रियजयस्य किं फलम् ॥ ब्रूहि ॥

कृष्णः ॥ उक्तोपायेन आत्मनो वश्यैः अतः रागद्वेषाभ्यां वियोजितैः इन्द्रियैः विधेयात्मा सन् विषयान् चरन् विषयान् [2] तिरस्कृत्य वर्तमान एव पुरुषः प्रसादं आत्मावलोकनविरोधिदोषराहित्यरूपं मनसो नैर्मल्यं प्राप्नोति ॥ इन्द्रियजयस्य मनोनैर्मल्यं फलम् ॥ अत उक्तोपायेन रागद्वेषनिरसनद्वारा स संपादनीयः ॥ ६४ ॥

अर्जुनः ॥ रागद्वेषवर्जनस्य मनोनैर्मल्यरूपं फलमुक्तम् ॥ किं तेन ॥ तस्य भावाभावाभ्यां इष्टानिष्टयोरुक्त्वा तस्याऽऽवश्यकतामुपपादय ॥

कृष्णः ॥ प्रसादे सर्वदुःखानां हानिरस्योपजायते ॥
प्रसन्नचेतसो ह्याशु बुद्धिः [3] पर्यवतिष्ठति ॥ ६५ ॥

प्रसाद इति ॥ हि यस्मात् प्रसन्नं चेतः यस्य सः प्रसन्नचेताः तस्य प्रसन्नचेतसः पुंसः बुद्धिः अपरोक्षज्ञानं आशु शीघ्रं पर्यवतिष्ठति प्रतिष्ठिता भवति तस्मात् प्रसादे सति अस्य सर्वाणि च तानि दुःखानि च सर्वदुःखानि तेषां हानिः नाशः उपजायते ॥ ६५ ॥

मनोनैर्मल्यसद्भावे इष्टप्राप्तिमुपपादयामि ॥ मनःप्रसादे सति अस्य प्राप्तमनःप्रसादस्य सर्वदुःखानां हानि अविलंबेन जायते ॥ प्राप्तमनःप्रसादो निर्दुःखो भवतीति यावत् ॥ अन्तरेण मुक्तिं सर्वदुःखहानेरसंभवात् कथं प्रसादमात्रेण सा इति चेत् प्राप्तमनःप्रसादस्य पुंसः बुद्धिः अपरोक्षज्ञानं अविलंबेन पर्यवतिष्ठते सम्यग्भव-

१. इन्द्रियजयस्य उक्तोपायकार्यत्वे तस्य व्यपा तत्पूर्वकालत्वोक्तिः कथं इति चेत् संयम्येत्यनेन विषयस्पर्शनिवारणमेवोच्यते न त्विन्द्रियजयः । अतो न दोषः ॥ २. कृतेऽपि प्रतिषेधे चापल्याद्विषयानुभवे प्रवर्तमानान् प्रति अनुभवाभ्यनुज्ञा बाधिका ॥ अत एवं व्याख्यातं ॥ चरतिर्गत्यर्थः आक्रमणरूपगतिपरः ॥ भक्षणार्थो वा संहारपरः ॥ उभयथाऽपि तिरस्कारोऽत्र विवक्षितः ॥ तिरस्कारोऽत्रानादरः ॥ 'अनादरः परिभवः परीभावस्तिरस्क्रिया ॥' इत्यमरः ॥ ३. पर्यवतिष्ठते इति पाठान्तरं ।

ति ॥ तेन मुक्तो भवति ॥ अतः दुःखानां हानिः जायते ॥ १ 'तरति शोकमात्मवि' दिति श्रुतिप्रसिद्धिद्योतको वा हिशब्दः ॥ प्रसादशब्दितमनोनैर्मल्यस्य अपरोक्षज्ञानजननद्वारा मोक्षरूपपरमेष्टफलप्राप्तिहेतुत्वात् तदवश्यमुक्तविधया संपादनीयम्॥ प्रसादसंपादने यत्नाधिक्यचिकीर्षोत्पादनाय मुखतः प्रसादस्य सर्वदुःखहानिहेतुत्वोक्तिः ॥ 'वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥' इति ज्ञानफलकत्वमिन्द्रियजयस्योक्तं किमर्थमत्र पुनरुच्यते इति चेत् इन्द्रियजयस्य प्रसादद्वारा ज्ञानं फलमिति वक्तुं प्रसादं मध्येकृत्य पुनरत्र तदुक्तिः॥ ज्ञानस्य इन्द्रियजयसाध्यत्वोक्तिप्रकरणे ज्ञानरूपं इन्द्रियजयफलमेव वाच्यं 'सर्वदुःखानां हानिः उपजायते' इति दुःखनिवृत्तिरूपं ज्ञानफलमपि किमर्थमुच्यते इति चेत् बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते॥' इति सुकृतदुष्कृतहानेः ज्ञानफलत्वोक्तया जातायां, सुकृतदुष्कृतहानिः न ज्ञानस्य फलं भवितुमर्हति इष्टप्राप्त्यनिष्टपरिहारान्यतरत्वाभावात् ॥ तयोरन्यतरदेव हि फलं भवितुमर्हति इति शंकायाः, ज्ञानफलभूतदुःखरूपानिष्टपरिहारहेतुत्वेन सुकृतदुष्कृतहानेः ज्ञानफलत्वोक्तिर्युक्ता इति परिहारार्थं दुःखहानिरूपज्ञानफलस्याप्युक्तिः ॥ प्रसादस्य अत्र ज्ञानद्वारा दुःखरूपानिष्टनिवृत्तिफलकत्वोक्त्या उत्तरत्र सुखरूपेष्टप्राप्तिफलकत्वोक्त्या च आवश्यकतां वक्तुं दुःखहानेः प्रसादफलत्वेन वक्तव्यत्वान्नावक्तव्योक्तिदोषोऽपि ॥ अतएवात्र मोक्षस्य दुःखहानिरूपतया उत्तरत्र सुखरूपतयाचोक्तिः ॥ इत्यादिकमवधेयम् ॥ ६५ ॥

अ ॥ प्रसादे प्राप्ते सति अस्य सर्वेषां दुःखहेतूनां विक्षेपाणां हानिः उपजायते ॥ अतः प्रसन्नचेतसः बुद्धिः सर्वत्र ब्रह्मदर्शिनी प्रज्ञा ब्रह्मात्मैक्यज्ञानं वा पर्यवतिष्ठति ॥ विपरीतभावनादिप्रतिबन्धकाभावात् नैश्चल्येन प्रतिष्ठिता भवति ॥ मनःप्रसादस्य विक्षेपनिरसनद्वारा प्रज्ञासिद्धिरूपेष्टफलहेतुत्वादुक्तोपायेन स संपादनीयः ॥ इति च ॥ ६५ ॥

वि ॥ बुद्धिः आत्मावलोकनरूपा पर्यवतिष्ठते स्थितिं लभते ॥ तस्मात् प्रसादे सति अस्य सर्वदुःखानां हानिः उपजायते ॥ सर्वानर्थहेतुभूतप्रकृतिबन्धमूलकः संसारबन्धो निवर्तते ॥ प्रसन्नचित्तो मुक्तो भवतीति यावत् ॥ मनःप्रसादस्य

१. छां ७. १. ३.

आत्मावलोकनद्वारा सर्वदुःखनिवृत्तिरूपेष्टफलहेतुत्वादुक्तोपायेन सोऽवश्यं संपादनीयः ॥ ६५ ॥

कृष्णः ॥ नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना ॥
न चाभावयतः शान्तिः अशान्तस्य कुतः सुखम् ॥ ६६ ॥

नास्तीति ॥ युक्तः मनःप्रसादवान् न युक्तः अयुक्तः तस्य बुद्धिः नास्ति ॥ अयुक्तस्य भावना च नास्ति ॥ न भावयन् अभावयन् तस्य अभावयतः शान्तिश्च नास्ति ॥ न शान्तः अशान्तः तस्य अशान्तस्य सुखं कुतः ॥ नेत्यर्थः ॥ ६६ ॥

मनःप्रसादाभावे अनिष्टप्राप्तिमुपपादयामि॥ प्रसादाभावे अप्रसन्नचेतसो युक्तिः चित्तनिरोधशब्दिता मनस एकाग्रता नास्ति ॥ अयुक्तस्य युक्तिशब्दितचित्तैकाग्र्यरहितस्य बुद्धिः अपरोक्षज्ञानं नास्ति ॥ कुतः इति चेत् अयुक्तस्य भावना ध्यानं नास्ति ॥ अभावयत ध्यानयोगरहितस्य बुद्धिः अपरोक्षज्ञानं नास्ति ॥ तदभावे शान्तिः मोक्षः नास्ति ॥ अशान्तस्य अमुक्तस्य सुखं सुखेपूत्तमं सुखं कुतः ॥ नास्तीत्यर्थः ॥ चशब्दौ समुच्चये ॥ अभावयत शान्तिः भगवदेकनिष्ठबुद्धिता नास्ति ॥ अशान्तस्य तद्रहितस्य बुद्धिः अपरोक्षज्ञानं नास्ति ॥ अबुद्धेः अपरोक्षज्ञानहीनस्य सुखं सुखरूपो मोक्षः कुतः ॥ नेत्यर्थः ॥ १ 'नान्यः पन्था अयनाय विद्यते' इति ॥ २ 'तरति शोकमात्मवित्' इति च श्रुतिः ॥ ३ 'विद्यैव तु निर्धारणात्' ॥ इति सूत्रम् ॥ वक्ष्यते च ॥ ४ 'ददामि बुद्धियोगं तं येन मामुपयान्ति ते' ॥ इति ॥ अयुक्तस्येति द्विरुक्तिः युक्तेरावश्यकतासूचनाय ॥ प्रसादाभावे उक्तविधया महानर्थाऽऽपत्त्या सोऽवश्यमुक्तोपायेन संपादनीयः ॥ ६६ ॥

अ ॥ अयुक्तस्य योगशब्दितमनःप्रसादरहितस्य आत्मस्वरूपापरोक्षज्ञानं नास्ति ॥ अयुक्तस्य भावना आत्मज्ञानाभिनिवेशः आत्मज्ञाने शब्दादापाततो जाते स्मृतिसन्तानहेतुभूतः साक्षात्कारार्थमभिनिवेशः न भवति ॥ अभावयतः तादृशभावनारहितस्य शान्तिः विषयतृष्णानिवृत्तिः न भवति ॥ अशान्तस्य तद्रहितस्य सुखं कुतः ॥ नेत्यर्थः ॥ परोक्षज्ञानेनैवापरोक्षज्ञानसिद्धेः किं प्रमादेन इति चेत् अयु-

१. ना. आ. २. १२. २. छा. ७. १. ३. ३. ब्र. ३. ३. ४८. ४. गी. १०. १०.

क्तस्य बुद्धिः परोक्षज्ञानं नास्ति ॥ बहुधा कृतादपि श्रवणात् जातं ज्ञानं पदवाक्यतदर्थगोचरमेव भवति ॥ न वस्तुगोचरम् ॥ तथा जातमपि न स्थिरमवतिष्ठते ॥ अयुक्तस्य भावना ब्रह्मैवाहमिति ब्रह्मण्यात्मत्वाभिनिवेशरूपसाक्षात्कारः न भवति॥ अभावयतः भावनाशब्दितापरोक्षज्ञानहीनस्य शान्तिः अनात्मतादात्म्यतत्कार्यसंबन्धादर्शनरूपा न भवति ॥ अशान्तस्य अनात्मानमेवात्मानं द्वैतं च पश्यतः सुखं ब्रह्मानन्दरसानुभवः कुतः ॥ अभावयतः सर्वं ब्रह्मैवेत्यपश्यतः शान्तिः चिदानन्दैकरसब्रह्मरूपेणावस्थितिरूपा विदेहमुक्तिः न भवति ॥ अशान्तस्य विदेहमुक्तिमप्राप्तस्य सुखं कुतः ब्रह्मभावमप्राप्तस्य ब्रह्मानन्दोनेत्यर्थः ॥ अयुक्तस्य योगशब्दितमनोवशीकरणरहितस्य तत्कार्यप्रसादरहितस्य बुद्धिः श्रवणमननजन्यं परोक्षज्ञानं नास्ति ॥ अयुक्तस्य भावना निदिध्यासनात्मिका विजातीयप्रत्ययानन्तरितसजातीयप्रत्ययप्रवाहरूपा न भवति ॥ अभावयतः उक्तरूपभावनारहितस्य शान्तिः सकार्याविद्यानिवृत्तिरूपो ब्रह्मात्मैक्यसाक्षात्कार न भवति ॥ अशान्तस्य सुखं मोक्षानन्दः कुतः ॥ अयुक्तस्येति द्विरुक्तिः युक्तेरावश्यकतासूचनाय ॥ अयुक्तस्य श्रवणमननयोः १ अयोजितमनसः बुद्धिः ब्रह्मात्मैक्यनिश्चय परोक्षज्ञानरूपः नास्ति ॥ अयुक्तस्य २ असमाहितमनसः भावना ध्यानं नास्ति ॥ अभावयतः ध्यानमकुर्वतः शान्तिः सर्वदुःखोपरमः न भवति ॥ अशान्तस्य सुखं कुतः ॥ उक्तविधानर्थपरंपराहेतुत्वादप्रसादस्य यत्नतः प्रसादः संपादनीयः ॥ ६६ ॥

वि ॥ अयुक्तस्य 'युक्त आसीत मत्परः ॥' इत्युक्तभगवद्विषयीकृतमनस्त्वरहितस्य तत्प्रयुक्तेन्द्रियजयलभ्यमनःप्रसादरहितस्य बुद्धिः शुद्धात्मस्वरूपविज्ञानं नास्ति ॥ न सेत्स्यति ॥ अयुक्तस्य अयुक्तत्वहेतुकबुद्ध्यभाववतः भावना ध्यानं न भवति अभावयतः शुद्धात्मस्वरूपभावनामकुर्वतः शान्तिः विषयस्पृहानिवृत्ति न भवति ॥ अशान्तस्य विषयस्पृहायुक्तस्य सुखं नित्यनिरतिशयमोक्षसुखं कुतः ॥ न भवतीत्यर्थः ॥ अप्रसन्नचेतस ईदृशानर्थसद्भावात् प्रसादो यत्नतः संपादनीयः ॥ ६६ ॥

अर्जुनः ॥ अयुक्तस्य बुद्धिर्नास्ति अयुक्तस्य भावना न भवति इत्युक्तम् ॥ तत्कथम् ॥ कृतश्रवणादिकस्य भावनाया बुद्धेश्च संभवात् ब्रूहि ॥

१. युजिर् योगे इति धातुः ॥ २. युज समाधौ इति धातुः ॥ अतो न द्विरुक्तिशंका ॥

कृष्णः ॥ इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते ॥
तदस्य हरति प्रज्ञां वायुर्नावमिवांभसि ॥ ६७ ॥

इन्द्रियाणामिति ॥ चरतां इन्द्रियाणां अनु पृष्ठतः मनः विधीयते इति यत्, इन्द्रियाणां मध्ये यत् इन्द्रियं मनः अनुविधीयते इति वा तत् अस्य प्रज्ञां वायुः अंभसि जले नावमिव हरति ॥ ६७ ॥

कृष्णः ॥ विषयेषु चरतां इन्द्रियाणां चक्षुरादीनां अनु पृष्ठतः मनः विधीयते ईश्वरेण तत्तदिच्छावता पुरुषेण वा प्रवर्त्यते इति यत् ॥ अनुविधीयते अनुप्रवर्तते इति यत् इति वा कर्मकर्तरि लकारः ॥ तत् मनसः इन्द्रियानुसरणं, यत् मनः अनुविधीयते तत् इन्द्रियानुप्रवृत्तं मनः इति वा प्रतिकूलो वायु जले नावमिव अस्य प्रज्ञां परोक्षज्ञानं परोक्षज्ञानहेतुभूतां विवेकबुद्धिं वा हरति कर्षति अपनयति वा ॥ उत्पत्स्यमानं परोक्षज्ञानं प्रतिबध्नाति ॥ उत्पन्नमपि तत् ध्यानयोगानुपयुक्तं करोति ॥ यथा प्रतिकूलो वायुः मार्गे गच्छन्तीं नावं आकृष्य अमार्गे नीत्वा आवर्तादौ पातयित्वा विध्वंसयति तथा प्रसादरहितं मन अस्य बुद्धिं अपरोक्षज्ञानतत्साधनमार्गे गच्छन्तीं बलादाकृष्य नीत्वा विषयादिषु पातयित्वा विध्वंसयति ॥ अतः अयुक्तस्य बुद्धिर्नास्ति ॥ अयुक्तस्य भावना न भवति ॥ अतः युक्तिशब्दितो मनःप्रसादः यत्नतः संपादनीयः ॥ इन्द्रियाणामिति बहुवचनेन मनसा बह्विन्द्रियानुसरणमनर्थहेतुः नैकेन्द्रियानुसरणमिति भाति ॥ एकमपीन्द्रियं मनसाऽनुसृतमनर्थमावहति ॥ अत कथमिदं इति चेत् इन्द्रियाणां मध्ये यत् एकं इन्द्रियं मनः अनुविधीयते तत् मनसाऽनुसृतं एकमपीन्द्रियं अस्य प्रज्ञां हरति ॥ किमु वक्तव्यं मनसाऽनुसृतानि बहूनीन्द्रियाणि प्रज्ञां हरन्तीति ॥ वायोः नौहरणमंभस्येवेति प्रसिद्धं अतः अंभसीति किमर्थं इति चेत् यथा वायोः अंभस्येव नौहरणसामर्थ्यं न भुवि तथा अंभस्स्थानीये मनश्चाञ्चल्ये सत्येव मनस इन्द्रियानुसरणस्य मनसाऽनुसृतस्येन्द्रियस्य वा प्रज्ञाहरणसामर्थ्यं न भूस्थानीये मनस्स्थैर्ये सति इति सूचनायांभसीत्युक्तम् ॥ इन्द्रियं प्रतिकूलवायुः मनः नाविकः प्रज्ञा नौः ॥ यदि नाविकः प्रतिकूलवायुमनुसृत्य नावं नयति तदा नाविकानुसृतः प्रतिकूलवायु नावमन्यत्र नीत्वा नाशयति ॥ तथा यदि मनः इन्द्रियमनुसृत्य प्रज्ञां नयति तदा मनसाऽनुसृतं इन्द्रियं प्रज्ञामन्यत्र

नीत्वा नाशयति ॥ अतः मनसा नाविकेनेव सावधानेन भवितव्यम् ॥ अयमेव मनसः प्रसादः। स चेष्टप्राप्त्यनिष्टपरिहारौ कामयमानेन यत्नतः संपादनीयः ॥ ६७ ॥

अर्जुनः ॥ एतावता किं निष्पन्नम् ॥ वद ॥

कृष्णः ॥ तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः ॥
इन्द्रियाणीन्द्रियार्थेभ्यः तस्य प्रज्ञा प्रतिष्ठिता ॥ ६८ ॥

**तस्मादिति** ॥ महान्तौ बाहू यस्य सः महाबाहुः हे महाबाहो अर्जुन यस्य सर्वशः सर्वाणि इन्द्रियाणि सर्वैः व्यापारैः सह सर्वैः प्रकारैः इन्द्रियाणां अर्थाः इन्द्रियार्थाः तेभ्यः इन्द्रियार्थेभ्यः निगृहीतानि ॥ तस्य प्रज्ञा ज्ञानं प्रतिष्ठिता ॥ ६८ ॥

**द्वै** ॥ यस्मात् उक्तविधया इन्द्रियनिग्रहवत एव प्रसादद्वारा ध्यानयोगसिद्धिः नानिगृहीतेन्द्रियस्य तस्मात् यस्य सर्वाणीन्द्रियाणि समनस्कानि सर्वेभ्यो विषयेभ्यो व्यावर्तितानि तस्यैव प्रज्ञा प्रतिष्ठिता ॥ स एवापरोक्षज्ञानी ॥ 'विषया विनिवर्तन्ते' इत्यादिना ज्ञानस्य महाऽऽयाससाध्येन्द्रियजयसाध्यत्वं यदुक्तं तस्योपसंहारोऽयम् ॥ महाबाहुनाऽपि त्वया ज्ञानार्थं दुर्जयानामिन्द्रियाणां जयाय महान् प्रयत्नः कार्यः ॥ 'प्रजहाती'ति ज्ञानिलक्षणम् ॥ 'दुःखेष्वि'त्यादिभिस्त्रिभिस्तद्विवरणम् ॥ 'विषया' इत्यादिभिस्त्रिभिस्तदसंभवशंकानिरासाय ज्ञानस्य महाऽऽयाससाध्येन्द्रियजयसाध्यत्वोक्तिः ॥ 'ध्यायत' इत्यादिभिः सप्तभिस्तद्विवरणमिति विवेकः ॥ ६८ ॥

**अ** ॥ यस्मात् अनिगृहीतेन्द्रियस्य उक्तविधया ज्ञानाभावः तस्मात् यस्य सर्वाणीन्द्रियाणि सर्वैः प्रकारैः सर्वेभ्यो विषयेभ्यो निगृहीतानि स एवापरोक्षज्ञानी ॥ तस्येति सिद्धस्य साधकस्य च ग्रहणम् ॥ साधकः साधनेनानेन अपरोक्षज्ञानी भवति ॥ सिद्धः लक्षणेनानेन अपरोक्षज्ञानी ज्ञेयः ॥ मुमुक्षोः साधनं ज्ञानिनो लक्षणं चेत्युभयमिह विवक्षितम् ॥ अतस्तयोर्द्वयोरत्रोपसंहारः ॥ ज्ञानिनो लक्षणत्वात् मुमुक्षोः साधनत्वाच्च इन्द्रियजयः संपादनीयः ॥ महाबाहुत्वादन्तःशत्रुनिबर्हणसमर्थ एवेन्द्रियजयद्वारा ज्ञानी भवति ॥ महाबाहुत्वेन सर्वशत्रुनिबर्हण-

समर्थस्त्वं दुर्जयेन्द्रियशत्रुनिबर्हणेऽपि क्षमोऽसि ॥ सत्यपि चतुर्थप्रश्नोत्तरशेषे मुमुक्षोरिन्द्रियजयरूपसाधनोक्तिप्रकरणोपसंहारोऽयमिति बोध्यम् ॥ ६८ ॥

वि ॥ तस्मात् इन्द्रियानुविधायिनो मनसः प्रज्ञाहारित्वात् यस्य सर्वाणीन्द्रियाणि विलोकनादिभिः सर्वैर्व्यापारैः सह दोषदर्शनादिभिः सर्वैः प्रकारैर्वा सर्वेभ्यो विषयेभ्यो व्यावर्तितानि तस्यैव प्रज्ञाशब्दिता परोक्षज्ञाननिष्ठाकाष्ठा स्थितप्रज्ञताख्या प्रतिष्ठिता ॥ उक्तविधया इन्द्रियजयवत एव स्थितप्रज्ञताख्यपरोक्षज्ञाननिष्ठोदयात्तदर्थमिन्द्रियजयः संपादनीयः ॥ 'यदा संहरते चायं' इत्यादिना यदुक्तमिन्द्रियजयस्य ज्ञानसाधनत्वं तस्योपसंहारोऽयम् ॥ महाबाहुत्वात्तवेदं साध्यम् ॥ अतस्तदर्थं प्रयतस्व ॥ ६८ ॥

द्वै ॥ अर्जुनः ॥ 'प्रजहाती' त्यादिनोक्तं अपरोक्षज्ञानिलक्षणं बुद्ध्यारोहाय पिण्डीकृत्य ब्रूहि ॥ 'स्थितप्रज्ञस्य का भाषे'ति कृतप्रश्नस्योत्तरमुक्तम् ॥ 'स्थितधीः किं प्रभाषेते'त्यादिना कृताक्षेपस्य परिहारं ब्रूहि ॥

कृष्णः ॥ या निशा सर्वभूतानां तस्यां जागर्ति संयमी ॥
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥ ६९ ॥

येति ॥ सर्वाणि च तानि भूतानि च सर्वभूतानि तेषां सर्वभूतानां या निशा निशेव तस्यां संयमः इन्द्रियनिग्रहः अस्यास्तीति संयमी जागर्ति बुध्यते भूतानि प्राणिनः यस्यां जाग्रति बुध्यन्ते सा मुनेः पश्यतः ज्ञानिनः निशा निशेव ॥ ६९ ॥

या ईश्वरस्वरूपलक्षणा व्यक्तिः ईश्वरस्वरूपरूपः पदार्थः सर्वप्राणिनां निशेव तस्यां ईश्वरस्वरूपविषये संयमी इन्द्रियनिग्रहसाध्यापरोक्षज्ञानवान् जागरूको वर्तते ॥ सर्वेषां ज्ञानाविषयं भगवत्स्वरूपं स्वैभ्यगापरोक्ष्येण पश्यति ॥ यस्यां विषयलक्षणायां व्यक्तौ विषयरूपे पदार्थे सर्वे प्राणिनो जागरूका वर्तन्ते सा विषयरूपः पदार्थः मुनेः परोक्षज्ञानवतः तेन पश्यतः अपरोक्षज्ञानिनः निशेव प्राणिभिर्दृश्यमानान् श्रूयमाणान् अनुभूयमानांश्च विषयान् न पश्यति न शृणोति न चानुभवति ॥ 'यत्तु सर्वाऽऽत्मनाऽज्ञानं सा निशा परिकीर्त्यते ॥' इति हि वदन्ति ॥ सदा भगवदनुभव-

वत्तया तदितरविषयानुभवाभाववत्त्वं ज्ञानिनो लक्षणम् ॥ निशादृष्टान्तेन ज्ञानिनोऽज्ञानिवद्विषयदर्शनाभावेऽपि प्रारब्धकर्मणा ईषत्तिरोहितब्रह्मस्वरूपस्य वासनया प्रायोऽल्पाभिसन्धिपूर्वकं मत्तस्येव भाषणासनगमनादि[1] प्रवृत्तिरुपपद्यते इति प्रवृत्त्यव्याक्षेपस्य परिहारोऽप्यर्थाल्लभ्यते ॥ मुनेः अत एव पश्यतः इति हेतुहेतुमद्भावेनान्वयः ॥ मननादेर्दर्शनसाधनत्वस्य पूर्वं स्पष्टमनुक्तत्वादिह तदुक्तिः ॥ इदं च तत्त्वाभिमानिदेवेतरज्ञानिविषयम् ॥ अन्यथा सर्वप्रेरकाणां तेषां भगवदितरत्राभिसन्ध्यभावे लोकयात्रोच्छेदापातात् ॥ ६९ ॥

अ ॥ अर्जुनः ॥ इन्द्रियजयस्य आत्मदर्शनसाधनत्वमुक्तं उपपादितं उपसंहृतं च ॥ तेन साधनेनाऽऽत्मदर्शननिष्ठां प्राप्तस्य तादृशं फलं किम् ॥ ब्रूहि ॥

कृष्णः ॥ या व्यक्तिः परमार्थतत्त्वरूपः पदार्थः आत्मदर्शनहीनानां सर्वप्राणिनां अप्रकाशस्वरूपत्वान्निशेव ॥ तस्यां परमार्थतत्त्वविषये संयमी इन्द्रियनिग्रहवान् जागर्ति प्रबुद्धो वर्तते ॥ यथा नक्तंचराणां दिवाऽन्धानामुलूकानां अप्रकाशस्वरूपत्वान्निशाभूतेऽपि स्वतःप्रकाशभूते अह्नि तदितरे जाग्रति तथा अज्ञानामप्रकाशस्वरूपत्वान्निशातुल्येऽपि स्वतःप्रकाशे परमात्मतत्त्वे वशीकृतेन्द्रियोऽज्ञाननिद्रातः प्रबुद्धो जागर्ति ॥ इन्द्रियनिग्रहवान् आत्मदर्शनवान् भवतीति यावत् ॥ इन्द्रियनिग्रहवान् अपरोक्षज्ञानी भवतीति प्रागुक्तस्य तात्पर्यात्पुनरत्रानुवादः ॥ यस्यां द्वैतदर्शनलक्षणायां अविद्यानिशायां भूतानि प्राणिनः जाग्रति निशायां सुप्ताः स्वाप्नपदार्थानिव मिथ्याभूतानेवार्थाननुभवन्ति ॥ सा द्वैतदर्शनलक्षणा अविद्यानिशा पश्यतः आत्मदर्शनवतः मुनेः ज्ञानिनः निशेव नाज्ञानामिव मिथ्याभूतानर्थान् प्रकाशयति ॥ यथा स्वतोऽप्रकाशस्वरूपत्वान्निशाऽपि रात्रिः स्वाप्नपदार्थप्रकाशकत्वादहस्तुल्या भवति

१. उक्तश्चापरोक्षज्ञानिनः प्रवृत्तिप्रकारो भागवते कृष्णोद्धवसंवादे ( ११. १३. ) 'देहं च नश्वरमवस्थितमुत्थितं वा सिद्धो न पश्यति यतोऽध्यगमत्स्वरूपं ॥ दैवादुपेतमथ दैववशादपेतं वासो यथा परिकृतं मदिरामदान्धः ॥ १ ॥ देहोऽपि दैववशगः खलु कर्म यावत् स्वारंभकं प्रतिसमीक्षत एव सासुः ॥ तं सप्रपञ्चमधिरूढसमाधियोगः स्वाप्नं पुनर्न भजते प्रतिबुद्धवस्तुः ॥' इति ॥ परिवृतं ॥ प्रतिबुद्धवत् सः ॥ इति पाठान्तरम् ॥

तथा स्वतोऽप्रकाशस्वरूपत्वान्निशातुल्याऽपि द्वैतदर्शनलक्षणा अविद्या स्वाप्नपदार्थवन्मिथ्याभूतानामर्थानां प्रकाशकत्वादज्ञानामहस्तुल्या भवति ॥ पश्यतस्तु मुनेः सा कस्याप्यर्थस्याप्रकाशकत्वान्निशातुल्यैव भवति ॥ आत्मदर्शनवतः निरवशेषमविद्या तत्कार्यनिवृत्तिर्भवतीति यावत् ॥ इन्द्रियजयस्य आत्मदर्शनं फलं तस्य च निःशेषमविद्यातत्कार्यनिवृत्तिः फलम ॥ अत उक्तफललाभाय इन्द्रियजयः संपादनीयः ॥ आत्मदर्शनवतः निरवशेषमविद्यातत्कार्यनिवृत्त्युक्त्या सर्वकर्मनिवृत्तिरुच्यते ॥ कर्मणामविद्याकार्यत्वात् ॥ अविद्यादशायां क्रियाकारकफलभेदप्रतिभानात्कर्मकरणं निवृत्तौ त्वविद्यायास्तदभावात्सर्वकर्मसंन्यासः ॥ असति विद्योदये बाधकाभावादविद्या प्रमाणतया गृहीता कर्माणि प्रवर्तयति ॥ सति तु तस्मिन् अप्रमाणतया गृहीता सा कर्माणि निवर्तयति ॥ इत्यादिकमवधेयम ॥

या ब्रह्मविद्या निशेव स्वयंप्रकाशरूपाऽपि अज्ञानां निशातुल्या भवति ॥ द्युमणिद्युतिरिव सुदृष्टिहीनानाम् ॥ तस्या निशायां संयमी जागर्ति ॥ यथा प्रसिद्धनिशा स्वीयतमश्शक्त्या नामरूपभेदमपोह्य सर्वं वस्तुजातं तमोमात्रं कृत्वा स्वयमेव सर्वत्र विजृम्भते तथा स्वीयचिच्छक्त्या नामरूपभेदमपोह्य सर्वं वस्तुजातं चिन्मात्रं कृत्वा स्वयं विजृम्भणान्निशातुल्यायां ब्रह्मविद्यायां जागर्ति ॥ अवहितस्सन्नास्ते ॥ पश्यतः सर्वं मिथ्यैवेति पश्यतः ॥ यथा ब्रह्मविद्यया ब्रह्मैवाहमिति स्वमात्मानं आनन्दैकरसपरब्रह्मतया विषयीकर्तुमज्ञा नशक्नुवन्ति तथा ब्रह्मविन् अहं ममेदमिति देहेन्द्रियादिकं विषयीकर्तुं न शक्नोति ॥ अत एव नास्य लौकिके वैदिके च कर्मण्यधिकारः ॥ अयोग्यत्वात् ॥ देहतदाश्रितवर्णजात्यादावभिमानवतः फलकामनावतः क्रियासु गुणदोषदर्शनवत एव कर्मणि योग्यत्वात् ॥ ब्रह्मतादात्म्यभावनामापन्नस्य च तदभावात् ॥ वस्तुनः सत्यत्वनिश्चयपूर्विकायाः प्रवृत्तेः मिथ्यात्वदर्शनस्य च परस्परविरुद्धत्वाच्च ॥ तस्मादस्य चिदानन्दैकरसब्रह्मतादात्म्यभावनामन्तरेण न किञ्चित्कर्तव्यमस्तीति सिद्धम् ॥

या परदेवता नितरां शेरतेऽस्यां प्राणिनः इति निशा रात्रिः सेव व्यवहर्तुमशक्यत्वान्निशातुल्या ॥ नितरां शं सुखं यस्याः सा निशा तस्यां अत्यन्तसुखरूपायां परस्यां देवतायां परब्रह्मणि संयमी जागर्ति तदन्ये तु शेरते ॥ श्रुतवेदान्ता अप्यवशीकृतेन्द्रियाः न किमपि जानन्तीत्यर्थः ॥ यस्यां अविद्यायां जाग्रति भेदेन

व्यवहरन्ति सा द्वैतदर्शनलक्षणा अविद्या पश्यतः सर्वं ब्रह्म पश्यतः मुनेः ब्रह्मनिष्ठस्य निशेव ॥ लौकिकं वैदिकं वा भेदेन व्यवहारं न करोति ॥

या अहं ब्रह्मास्मीति प्रज्ञा अप्रकाशरूपत्वात् निशेव ॥ यथा राञ्यन्धस्य काकस्य दिनमुलूकस्य दिवान्धस्य निशा तथा ॥ तस्यां संयमी इन्द्रियजयसाध्यापरोक्षज्ञानवान् जागर्ति ॥ सावधानो वर्तते ॥ यस्यां द्वैतदर्शनलक्षणायां अविद्यायां प्राणिनो जाग्रति ॥ भ्रमनिमित्तव्यवहारं कुर्वन्ति ॥ सा अविद्या पश्यतः आत्मतत्त्वमपरोक्षतया पश्यतः मुनेः स्थितप्रज्ञस्य निशेव ॥ यथा दिवान्धस्य रात्री पश्यत उलूकस्य दिनं राञ्यन्धस्य काकस्य निशा तथा ॥ अपरोक्षज्ञानी भ्रमनिमित्तकं कमपि व्यवहारं न करोति ॥ १ 'यत्र वा अन्यदिव स्यात् तत्रान्योऽन्यं पश्येत् ॥' इति २ 'यत्र त्वस्य सर्वं मात्मैवाभूत्तत्केन कं पश्येत् ॥' इति च श्रुतिः ॥ ३ 'आविद्यकक्रियाकारकादिव्यवहाराभावात् स्थितप्रज्ञस्य स्वत एवेन्द्रियजयसिद्धिः ॥ इन्द्रियजयो मुमुक्षोर्यत्नसाध्यं साधनम् ॥ स एव स्थितप्रज्ञस्यायत्नसिद्धं लक्षणम् ॥ मुमुक्षोः साधनं ज्ञानिनो लक्षणं इत्येतदुक्तमपि तात्पर्यात्पुनरत्रोक्तमिति बोध्यम् ॥

या सर्वप्राणिनां ४ आत्मविषयकाज्ञानरूपा रात्रिः तस्यां संयमी जागर्ति ॥ यस्यां जाग्रदवस्थायां भूतानि व्यवहारं कुर्वन्ति सा व्यवहारमपश्यत आत्मदृष्टेः निशा ॥ व्युत्थितसमाधिस्थोभयानुगतं ज्ञानिलक्षणमिदमिति बोध्यम् ॥ ६९ ॥

वि ॥ अर्जुनः ॥ स्थितप्रज्ञताख्यां परोक्षज्ञाननिष्ठां प्राप्तस्य अवस्थाचतुष्टयमुक्तं उपपाद्योपसंहृतं च ॥ तदापन्नः कीदृशो भवति ॥

कृष्णः ॥ इन्द्रियसंयमादिरहितानां प्राणिनां या आत्मविषया बुद्धिः अप्रसूतदशाऽऽपन्नत्वान्निशेवाप्रकाशा तस्यां बुद्धौ संयमी इन्द्रियसंयमसाध्यमनः-

१. बृ. ६. ३. ३१. २. बृ. ६. ५. १५. ३. अत्र 'कारकव्यवहारे हि शुद्धं वस्तु न वीक्ष्यते ॥ शुद्धे वस्तुनि सिद्धे च कारकव्याप्रृतिस्तथा ॥ १ ॥ काकोलूकनिशेवायं संसारोऽज्ञाऽऽत्मवेदिनोः ॥ 'या निशा सर्वभूताना'मित्यवोचत् स्वयं हरिः ॥' इत्येतदनुसन्धेयम् ॥ ४. अत्र, 'आत्मा न हि स्फुरति सर्वशरीरभाजां तेषां निशा भवति सा खलु तत्र योगी ॥ जागर्ति जाग्रति न ते व्यवहारजाते तन्न स्फुरत्युरुधियः क्षणदाऽस्य सा तु ॥' इत्यनुसन्धेयम् ॥

प्रसादादिमान् उक्तावस्थाचतुष्टयवान् जागर्ति अवहितो वर्तते ॥ सततमात्मानवलोकयन्नास्ते ॥ तद्विषयकप्रकाशमानप्रसृतबुद्धिविशिष्टो भवति ॥ यस्यां शब्दादिविषयायां बुद्धौ सर्वभूतानि जाग्रति सा शब्दादिविषयविषयकबुद्धिः पश्यतः उक्तावस्थाचतुष्टयसिद्धाऽऽत्मावलोकनवतः मुनेः ज्ञानिनः निशेवाप्रकाशा ॥ स मुनिः शब्दादिविषयादर्शनवान् भवति ॥ उक्तावस्थाचतुष्टयस्याऽऽत्मावलोकनं फलं आत्मावलोकनस्य शब्दादिविषयादर्शनं फलम् ॥ अत उक्तावस्थाचतुष्टयं यत्नतः साधनीयं ॥ उक्तमपीदं तात्पर्यात्पुनरत्रोक्त्वा निगमितं ॥ इन्द्रियजयमनःप्रसादयोरुक्तस्य फलस्य तात्पर्यात्पुनरनुवादेन प्रशंसेयमित्यवधेयम् ॥ ६९ ॥

छे ॥ अर्जुनः ॥ अस्तूक्तरीत्या स्थितप्रज्ञस्य गमनादिप्रवृत्त्युपपत्तिः ॥ तस्य दृश्यमानो विषयानुभवः कथमुपपद्यते ॥ विषयाननुभवतस्तस्य कथं मोक्षः ॥ विषयानुभवस्य मोक्षप्रतिबन्धकत्वात् ॥ ब्रूहि ॥

कृष्णः ॥ आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत् ॥
तद्वत्कामा यं प्रविशन्ति सर्वे स शान्तिमाप्नोति न कामकामी ॥७०॥

आपूर्यमाणमिति ॥ आपूर्यमाणं न चला अचला प्रतिष्ठा स्थितिः स्वभावो वा यस्य सः अचलप्रतिष्ठः तं समुद्रं आपः जलानि यद्वत् यथा प्रविशन्ति तद्वत् तथा सर्वे काम्यन्त इति कामाः विषयाः यं ज्ञानिनं प्रविशन्ति ॥ सः ज्ञानी शांतिं मोक्षं आप्नोति ॥ कामेषु कामः कामकामः कामकामः अस्यास्तीति कामकामी शान्तिं नाऽऽप्नोति ॥ ७० ॥

नानानदीजलैरापूर्यमाणमपि अचलस्वभावं सरित्प्रवेशजनितवृद्धिविशेषराहित्येन स्वभावेनैवावस्थितं इति यावत् ॥ इदमुपलक्षणम् ॥ सरितामप्रवेशनिमित्तशोषरहितं सरितामागमनाय प्रयत्नमकुर्वन्तं च समुद्रं आपः यथा प्रविशन्ति ॥ तथा सर्वैः काम्यमानत्वात्कामशब्दिताः विषयाः स्थितप्रज्ञं प्रविशन्ति ॥ विषयैः आपूर्यमाणमपि अचलप्रतिष्ठं इच्छाभावादुत्सेकहीनं विषयालाभेऽपि शोषहीनं विषयलाभाय अयतनमकुर्वन्तं च समुद्रमिव गंभीरं यमेवं सर्वे विषयाः प्रविशन्ति ॥ य एवं विषयाननुभवती 'ति यावत् ॥ सः स्थितप्रज्ञः शान्तिं मोक्षं प्राप्नोति ॥ कामेषु

विषयेषु कामः इच्छा तद्वान् शान्तिं नाऽऽप्नोति ॥ स्थितप्रज्ञः पुमान् अनिच्छया यदृच्छयोपनतान् विषयाननुभवति ॥ अनिच्छया विषयानुभवो न मोक्षं प्रतिबध्नाति ॥ विषयेच्छा हि मोक्षस्य प्रतिबन्धिका ॥ सः शान्तिं आप्नोति यतः कामकामी न ॥ तस्यापि भगवत्प्रसादादिकामकामित्वात् कथं कामकामी नेत्युच्यते इति चेत् का कुत्सिता निषिद्धा इति मा ज्ञानं यस्यां सा कामा निषिद्धा इति ज्ञानविषयभूता निषिद्धेच्छा साऽस्यास्तीति कामकामी निषिद्धेच्छावान् न इत्युच्यते ॥ अतो न दोषः ॥ धर्माविरुद्धकामो न दोषाय ॥ वक्ष्यते च ॥ १ 'धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ॥' इति ॥ नास्य ज्ञानिनः फलोक्तौ तात्पर्यं ॥ किन्तु तस्य प्रशंसायाम् ॥ अतः 'प्रसादे सर्वदुःखानां हानिरस्योपजायते ॥' इत्यनेन न पुनरुक्तिः ॥ तत्र ज्ञानिनः फलमुच्यते ॥ अत्र तु ज्ञानिनः अनिच्छया यदृच्छयोपनतविषयानुभवो न ज्ञानफलं प्रतिबध्नातीत्युच्यते ॥ इति भेदान्नैव पुनरुक्तिशङ्काऽवकाशः ॥ ज्ञानिनोऽज्ञानिवद्विषयेच्छाऽभावेऽपि विनैव प्रयत्नं स यदृच्छयोपनतविषयान् उत्सेकानुत्सेकराहित्येन वारिनिधिरिवापगा अनुभवति ॥ 'अतस्तस्य दृश्यमानो विषयानुभव उपपद्यते ॥ एवं विषयानुभवस्य मोक्षं प्रत्यप्रतिबन्धकत्वान्न मोक्षानुपपत्तिरपि ॥ इति बोध्यम् ॥ ७० ॥

अ ॥ अर्जुनः ॥ 'सा निशा पश्यतो मुनेः' इति स्थितप्रज्ञस्य सर्वकर्मनिवृत्तिः विषयादृष्टिश्चोक्ता ॥ यद्येवं तर्हि तस्य विषयानुभवो नोपपद्येत ॥ दृश्यते च विषयानुभवः स्थितप्रज्ञस्यापि ॥ कथमिदमुपपद्यते ॥ वद ॥

कृष्णः ॥ आपः तत्तन्नद्याः वृष्ट्यादिप्रभवाश्च जलैः पूर्णमपि आगतैः नानानदीजलैः पूर्यमाणमपि २ अचलत्वेन स्थितिमन्तं उदकात्मकस्वकीयप्रतिनियतस्वरूपस्थं अचला प्रतिष्ठा स्थितिर्यस्य तादृशं च वृद्धिरूपविकाररहितमेव सन्तं अनापूर्यमाणमपि ह्रासरूपविकाररहितमेव सन्तं गांभीर्यातिशयात् अचलानां मैनाकादीनां प्रतिष्ठा यस्मिन् तादृशं च समुद्रं ३ यथा प्रविशन्ति तथा सर्वे कामाः इच्छाविशेषाः काम्यमानाः शब्दादिविषया वा आपूर्यमाणमपि विषयसन्निधिमन्त-

१. ७. ११. २. भावप्रधानं ॥ अचलेन अचलत्वेन प्रतिष्ठा यस्य तं ॥ ३. येन विकारानापादकत्वप्रकारेण ॥

मपि अचलप्रतिष्ठं लाभालाभयोः वृद्धिह्रासरूपविकाररहित्येन स्वभावत एवावस्थितं निर्विकारमेव सन्तं यं स्थितप्रज्ञं अवर्जनीयतया प्रारब्धवशात् प्रविशन्ति समुद्रमिवाऽऽपोऽविकुर्वन्त एव प्रविशन्ति ॥ समुद्र इवापस्तस्मिन् प्रविलीयन्ते ॥ न तु स्ववशीकृत्य विकारमापादयन्ति ॥ सः शान्ति मोक्षं सर्वलौकिकालौकिककर्मविक्षेपनिवृत्तिं अविद्यातत्कार्यनिवृत्तिं च आप्नोति ॥ कामान् विषयान् कामयितुं शीलं अस्य कामकामी शान्ति नाप्नोति ॥ अपि तु लौकिकालौकिककर्मविक्षेपेण महति क्लेशजलधौ निमग्नो भवति ॥ सर्वकर्मसंन्यासिनः समुद्रवन्निर्विकारस्य ज्ञानिनो मोक्षः ॥ नासंन्यासिनः इच्छया विषयाननुभवतो मोक्षः ॥ अनिच्छया दैवादुपनतविषयभोगस्तस्येति न विषयभोगानुपपत्तिः ॥ सर्वकर्मसंन्यासः सर्वविक्षेपनिवृत्तिरूपा जीवन्मुक्तिः दैवादुपनतविषयभोगेऽपि निर्विकारता च तस्य संपद्यत इत्यहो महिमा ज्ञानस्य ॥

आपः नानाविधवर्णरसगन्धगुणफलवन्ति गंगादिनामामहानदीजलानि निजस्वरूपरूपजलैः पूर्णमपि आगतनिजनिजप्रवाहैः आपूर्यमाणमपि चलनवर्जितजलस्थितिमन्तं समुद्रं यथा प्रविशन्ति ॥ स्वकीयशुक्लनीलादिवर्णमधुरादिरसपरिमलादिगन्धलघुत्वादिगुणद्विचिकृच्छ्रादिसमानपुण्यफलगंगादिनामपरित्यागपूर्वकं समुद्रभावमेव गच्छन्ति ॥ नामरूपगुणादिविशेषैः समुद्रान्न भिद्यन्ते ॥ तथा सर्वे काम्यन्ते नामरूपादिभेदेन विविच्य गृह्यन्ते इति कामाः भोग्यपदार्थाः सूपापूपरसान्नादयः सर्वतोऽनिच्छाप्रारब्धवशादापतितैः अनेकैः नामरूपादिभेदभिन्नैः भोग्यविशेषैः [१]आपूर्यमाणमपि मां गृहाण मां गृहाणेति दातृजनद्वारा व्याकुलीक्रियमाणमपि अचला निर्विकल्पा विपरीतभावनाशून्या व्युत्थानदशायामाहारादावपि ब्रह्माकारतामापाद्य स्थिता प्रतिष्ठा स्थितिः यस्य तादृशं विपरिणामरहितान्तःकरणं अचले ब्रह्मणि प्रतिष्ठा स्थितिः यस्य तं इति वा यं स्थितप्रज्ञं प्रविशन्ति ॥ यं प्रविष्टाः अध्यात्मदृष्ट्या प्रविलापिताः चिदेकरसतामापन्नाः स्वकीयनामरूपादिपरित्यागपूर्वकं समुद्रं प्रविष्टा आपगाः समुद्रभावमिव ब्रह्मभावं गच्छन्ति ॥ स एव अविद्याप्रपंचोपशमलक्षणां शान्तिं विदेहमुक्तिं आप्नोति ॥ कामाः विषयाः तान् कामयते इति कामकामी ब्रह्मनिष्ठां परित्यज्य शुक्तौ रजतमिव ब्रह्मणि कल्पयित्वा

१. निरतिशयस्वात्मानन्देनैव परिपूर्ण अत निर्विकार इति कश्चित् ॥

अहं भोक्ता इदं भोग्यं इति ममताऽहन्ताभ्यां इदमिष्टं इदमनिष्टं इति भेदबुद्ध्या नामरूपादिभेदेन च पदार्थग्राही द्वैतदर्शी शान्तिं नाऽऽप्नोति ॥ तस्य अविद्यावत्त्वेन मुक्तेरनुपपद्यमानत्वात् ॥ बाल्ये स्वजनसन्निधौ स्थिता स्वजनैर्लाल्यमाना प्रौढा भूत्वा विहाय मातापितृभ्रात्रादीन् स्वजनान् भर्तारमेकमेवाऽऽश्रिता पतिव्रता कन्येव यस्य ब्रह्मविदः प्रज्ञा पूर्वं विषयविषया स्थिता पश्चात् प्रौढा भूत्वा प्रविहाय देहं प्राणमिन्द्रियजातं च सर्वं दूरतः चिदानन्दैकरसं परं ब्रह्मैकमेवाऽऽश्रिता तेनैव तृप्यन्ती हृष्यन्ती नन्दन्ती नान्यं स्पृहयन्ती पश्यन्ती शृण्वन्ती स्मरन्ती तत्रैव रममाणा तिष्ठति ॥ स एव विदेहमुक्तिमाप्नोति ॥ नेतरः ॥ अतः कैवल्यार्थिनः सर्वत्र ब्रह्मदृष्टिः सर्वकर्मसंन्यासश्चेत्युभयं कर्तव्यं संपन्नं इति बोध्यम् ॥ ७० ॥

वि ॥ अर्जुनः ॥ स मुनिः शब्दादिविषयादर्शनवान् भवतीत्युक्तं ॥ तादृशी दशा कथं संपद्येत ॥ ब्रूहि ॥

कृष्णः ॥ आपः तत्तन्नादेय्यः आपूर्यमाणमपि विनैव नादेयीनामपां प्रवेशं स्वत एव सम्यक् पूर्यमाणमपि वृद्धिह्रासराहित्येन एकरूपतयाऽवस्थितं समुद्रं यथा येन प्रवेशेऽप्रवेशे च विशेषानापादकत्वप्रकारेण प्रविशन्ति ॥ तथा तेन प्रकारेण सर्वे कामाः शब्दादिविषयाः यं इन्द्रियजयमनःप्रसादादिमन्तं प्रविशन्ति ॥ तदीयतत्तदिन्द्रियगोचरतां यान्ति ॥ सः शब्दादिविषयेन्द्रियगोचरतामापन्नेषु अनापन्नेषु च यः स्वाऽऽत्मावलोकनतृप्त्या न विकारमाप्नोति ॥ स संयमी शान्तिं विषयानुभवनिवृत्तिं 'सानिशे'ति पूर्वश्लोकोक्तां मोक्षं वा आप्नोति ॥ कामान् कामयितुं शीलमस्य सः कामकामी यः शब्दादीनां प्रवेशाप्रवेशाभ्यां विकारं आप्नोति सः शान्तिं नाप्नोति ॥ विषयदर्शनेऽपि निर्विकारतारूपा ततोऽर्वाचीना दशेयं ॥ अनया विषयादर्शनरूपा दशा संपद्यते ॥ नित्यनिरवद्यनिरतिशयस्वात्मानुभवानन्दसन्दोहमग्नो न नश्वरदुःखमिश्रसातिशयविषयानुभवानन्दबिन्दुषु सज्जते ॥ अतः आत्मावलोकनाय यत्नः कार्यः ॥ इति सिद्धम् ॥ ७० ॥

द्वै ॥ अ ॥ अर्जुनः ॥ कामाः समुद्रमाप इव यं प्रविशन्ति स शान्तिमाप्नोतीत्युक्तं ॥ विषयाननुभवतः कथं मोक्षः ॥ विस्पष्टं ब्रूहि ॥

कृष्णः ॥ विहाय कामान् यः सर्वान् पुमांश्चरति निस्स्पृहः ॥
निर्ममो निरहंकारः स शान्तिमधिगच्छति ॥ ७१ ॥

विहायेति ॥ यः पुमान् जीवः निर्गतः अहंकारः यस्मात् सः निरहंकारः निर्गतं मम ममकारः यस्मात् सः निर्ममः निर्गता स्पृहा तृष्णा यस्मात् सः निस्स्पृहः तादृशश्च सन सर्वान् कामान विषयान विहाय अहंकारादिकं विहाय चरति अनुभवति ॥ सः शान्तिं मोक्षं अधिगच्छति प्राप्नोति ॥ ७१ ॥

निस्स्पृहः अनिषिद्धेऽपीच्छामकुर्वन् निर्ममः विषयेषु स्वस्य स्वामित्वबुद्धिरहितः निरहंकारः अहमनुभवामीति कर्तृत्वाभिमानरहितः तादृशश्च सन् सर्वान् अनिषिद्धान् विषयान् विहाय तेषु स्पृहां ममतां अहन्तां च त्यक्त्वा चरति अनुभवति ॥ विहायेति निषेधः स्पृहादेरेव न कामानां ॥ विशिष्टे निषेधस्य सति विशेष्ये बाधे विशेषणनिषेध एव पर्यवसानात् ॥ चरतीत्यनुभवोक्त्या विशेष्ये निषेधस्य बाधितत्वात् ॥ सः शान्तिं आप्नोति ॥ यः एवमनुभवति स एव पुमान् अन्यस्तु १ पशुः ॥ स पुमान् इति प्रशंसा ॥ अतो न स्त्रीणां व्यावृत्तिः ॥ २ 'स्त्रियो वैश्यास्तथा शूद्राः तेऽपि यान्ति परां गतिं ॥' इति स्त्रीणामपि हि मोक्षो वक्ष्यते ॥ एवं विषयानुभवो न मोक्षस्य प्रतिबन्धकः ॥ अतः स्थितप्रज्ञस्य दृश्यमानो विषयानुभव उपपद्यते ॥ दार्ढ्यार्थमुक्तस्यैवायं प्रपंचः ॥ ७१ ॥

अ ॥ यः पुमान् सर्वान् विषयान् परित्यज्य शरीररक्षणमात्रेऽपि स्पृहारहितः दैवादुपनते शरीरजीवनमात्रार्थेऽपि परिग्रहे ममेदमिति ममतारहितः अहमीदृश इत्यात्मसंभावनारहितश्च सन् चरति ॥ देशविशेषे नियतावस्थाने रागद्वेषादिसंभवेन जीवनमात्रचेष्टाशेषः सन् पर्यटति ॥ स एव शान्तिं सर्वसंसारदुःखोपरमलक्षणां निर्वाणाख्यां मुक्तिं प्राप्नोति ॥ अतो मोक्षार्थिना एवं भवितव्यम् ॥ इति च ॥

यः पुमान् यो ब्रह्मवित् ब्रह्मविदेव हि पुमान् निरहङ्कारः ब्रह्मैवाहमिति ब्रह्मण्येव निरूढाऽऽत्मत्वाभिनिवेशेन देहादावहंबुद्धिरहितः निर्ममः देहतद्धर्मादौ ममतारहितः स्वस्य निरन्तरब्रह्मानन्दामृतरसेनैव तृप्तत्वात् अनात्माऽऽत्मीयत्वेन निश्चितान् देहादीनुद्दिश्य सुखेच्छाऽसंभवाच्च विषयेषु स्पृहारहितश्च सन् सर्वान् कामान् विहाय

१. अत्र, 'कस्तं त्वनादृत्य परानुचिन्तां ऋते पशुन्वसतीं नाम युञ्ज्यात् ॥ पश्यन् जनं पतितं वैतरण्यां स्वकर्मजान् परितापान् जुषाणं ॥' इति भाग. २. २. श्लोकोऽनुसन्धेयः ॥

शुक्तिरजततुल्यैस्तैः प्रयोजनाभावात् तानिन्द्रियैरगृहीत्वा चरति ॥ १ 'कामान्नी कामरूप्यनुसञ्चरन् ॥' इत्याद्युक्तप्रकारेण सर्वत्रासंगः पर्यटति ॥ स शान्तिं विदेहमुक्तिं आप्नोति ॥ नेतरः ॥ इति च ॥ एवमीदृशं स्थितप्रज्ञस्य व्रजनमिति 'किं व्रजेते'ति चतुर्थप्रश्नस्योत्तरमष्टभिः श्लोकैरुक्तमिति बोध्यम् ॥ ७१ ॥

वि ॥ अर्जुनः ॥ विषयादर्शनरूपदशाहेतुभूता ततोऽर्वाचीना विषयदर्शनेऽपि निर्विकारतारूपा दशोक्ता ॥ सा च कथं संपद्यते ॥ वद ॥

कृष्णः ॥ यः पुमान् विषयेषु निस्पृहः निर्ममश्च सन् निरहङ्कारः देहे आत्माभिमानरहितश्च सन् सर्वान् विषयान् विहाय चरति वर्तते ॥ सः शान्तिं आप्नोति ॥ विषयसंग्रहणस्पृहाममकारदेहाऽऽत्मभ्रमनिवृत्तिरूपा ततोऽर्वाचीना दशेयम् ॥ अनया आत्मदर्शनं लब्ध्वा तेन विषयदर्शनेऽपि निर्विकारतारूपां दशामवाप्य तया विषयादर्शनरूपां दशां प्राप्नोति ॥ पूर्वश्लोकौ आत्मदर्शनवत्पुरुषविषयौ ॥ अयं तु आत्मदर्शनार्थिपुरुषविषयः ॥ इति विवेकः ॥ ईदृशमहाफलसद्भावादुक्तावस्थाचतुष्टयं यत्नतः संपाद्य स्थितप्रज्ञताऽऽख्या परोक्षज्ञाननिष्ठाकाष्ठा संपादनीया ॥ इति 'प्रजहाती'त्यादेरस्य प्रकरणस्याऽऽशयः ॥ इति बोध्यम् ॥ ७१ ॥

अर्जुनः ॥ अस्याः एतदध्यायोक्तायाः परमदुर्लभायाः महता प्रयत्नेन संपादितायाः स्थितेः किं फलम् ॥ ब्रूहि ॥

कृष्णः ॥ एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति ॥ ७१॥ ॥

एषेति ॥ हे पार्थ एषा स्थितिः ब्रह्मणि भवा ब्रह्मणः इयं वा ब्राह्मी ॥ एनां प्राप्य न विमुह्यति ॥ मोहं न प्राप्नोति ॥ ७१॥ ॥

द्वै ॥ ब्रह्मज्ञानिसंबन्धिनी परब्रह्मविषया वा स्थितिः लक्षणं एषा 'प्रजहाती'त्यादिना 'या निशे'त्यन्तेन ग्रन्थेन उक्तप्रकारा ॥ एनां स्थितिं उक्तं लक्षणं प्राप्य न विमुह्यति ॥ मोहनिमित्तकं संसारबन्धं न प्राप्नोति ॥ मुक्तो भवती-

१. तै. ३. १०.

ति यावत् ॥ स्थितेरस्याः मोक्षः फलम् ॥ अत इयं यत्नतः संपादनीया ॥ पार्थेदमवधेहि ॥ ७१॥ ॥

अ ॥ एषा उक्ता ब्रह्मविदः सर्वकर्मसन्न्यसनपूर्वकं ब्रह्मरूपेणावस्थानरूपा स्थितिः ब्रह्मणि भवा ब्राह्मी ब्रह्मनिष्ठा ॥ ब्राह्मी ब्रह्मविषया स्थितिः अपरोक्षज्ञानलक्षणा ॥ स्थितिः ज्ञानरूपा ब्राह्मी ब्रह्मप्रापिका ॥ एनां प्राप्य परमार्थविवेकराहित्यरूपं विमोहं न प्राप्नोति ॥ वि विशिष्टो मोहः अहमित्येवंरूपः यस्मिन् सः विमोहः देहः तं इति वा ॥ ईदृशफलवत्त्वादियं संपादनीया ॥ ७१॥ ॥

वि ॥ एषा आत्मयाथात्म्यज्ञानपूर्वकाकाम्यकर्मानुष्ठानरूपा स्थितप्रज्ञताऽऽत्म्यपरोक्षज्ञाननिष्ठाकाष्ठाहेतुभूता स्थितिः कर्मनिष्ठा ब्राह्मी ब्रह्मप्रापिका ॥ एनां पूर्वोक्तप्रकारां कर्मनिष्ठारूपां स्थितिं प्राप्य न विमुह्यति ॥ मोहमूलकं संसारबन्धं नाऽऽप्नोति ॥ अत इयमनुष्ठेया कर्मनिष्ठा ॥ ७१॥ ॥

द्वै ॥ अर्जुनः ॥ कियत्पर्यन्तमस्यां स्थितौ स्थातव्यम् किमिदं लक्षणं प्राप्तवतो ज्ञानिनः तद्देहपातानन्तरमेव मुक्तिः ॥ उत देहान्तराणि प्राप्य ॥ वद ॥

कृष्णः ॥ स्थित्वाऽस्यामन्तकालेऽपि ब्रह्म निर्वाणमृच्छति ॥ ७२ ॥

स्थित्वेति ॥ अस्यां स्थितौ अन्तस्य कालः अन्तश्चासौ कालश्च स वा अन्तकालः तस्मिन् अन्तकालेऽपि स्थित्वा अन्तकाले स्थित्वाऽपि निर्वाणं निर्गतं वाणं प्राकृतशरीरं यस्मात् तत् अप्राकृतशरीरं ब्रह्म परं ब्रह्म ऋच्छति प्राप्नोति ॥ निर्वाणं आनन्दरूपं ब्रह्म ॥ ब्रह्मनिर्वाणं इत्येकं पदम् ॥ ब्रह्मणः ब्रह्मणि वा निर्वाणं आनन्दं ब्रह्मणि निर्वाणं लयं वा प्राप्नोति ॥ निर्वाणं सुखैकरूपं ब्रह्म शुद्धात्मानं प्राप्नोति ॥ ७२ ॥

अस्यां स्थितौ भगवदनुस्मृत्यादिरूपज्ञानिलक्षणे अन्तकाले देहत्यागसमयेऽपि स्थित्वा वाणं शरीरं वबयोरभेदात् वाणं शरीरं प्राकृतशरीरादिरहितं अप्राकृतदिव्यमङ्गळविग्रहं ब्रह्म ऋच्छति प्राप्नोति ॥ मुक्तो भवति ॥ ब्रह्मप्राप्तिरेव हि मोक्षः ॥ यदि शरीरवियोगसमये भगवदनुस्मृत्यादिकं स्यात् तर्हि तद्देहपातानन्तरमेव मोक्षः ॥ य-

दि तदानीं तन्नस्यात् नर्हि देहान्तराणि प्राप्य मोक्षः॥ वक्ष्यते च॥ १ 'अन्तकाले च मामेव स्मरन्मुक्त्वा कलेबरम्॥ य प्रयाति स मद्भावं याति नास्त्यत्र संशयः॥' इत्यादि ॥ यस्य ज्ञानिनः प्रारब्धं कर्म सावशेषं अन्तकाले, न तस्येयं स्थितिरन्तकाले स्यात्॥ यस्य तु तदन्तकाले निरवशेषं भवति तस्येयं स्थितिरन्तकाले स्यात्॥ २ 'ज्ञानिनां कर्मयुक्तानां कायत्यागक्षणो यदा॥ विष्णुमाया तदा तेषां मनो बाह्यं करोति हि॥' इति स्मरन्ति॥ ३ 'बहुजन्मविपाकेन भक्तिज्ञानेन ये हरिम्॥ भजन्ति तत्स्मृतिं त्वन्ते देवो याति न चान्यथा॥' इति वचनान्नसर्वसाधारणीयमन्तिमस्मृतिः॥ ४ 'विद्वानमृतमाप्नोति नात्र कार्या विचारणा॥ अवसन्नं यदाऽऽरब्धं कर्म तत्रैव गच्छति॥ न चेद्बहूनि जन्मानि प्राप्यैवान्ते न संशयः॥' इति स्मरन्ति॥ ५ 'ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात्॥' इति ६ 'भोगेन त्वितरे क्षपयित्वाऽथ संपत्स्यते॥' इति च सूत्रे॥ भीष्मादीनां अन्तकाले भगवदनुस्मृत्यादेस्सत्त्वेऽपि नान्तिमक्षणे तत्सत्त्वं॥ अतो न तेषां तद्देहपातानन्तरं मोक्षः॥ ७'स्मरन्मुक्त्वा कलेबरं'॥ ८ 'स्मरन् त्यजत्यन्ते कलेबरं॥' ९ 'मामनुस्मरन्॥ यः प्रयाति त्यजन्देहं॥' इति स्मरणदेहत्यागयोः समानकालत्वं वक्ष्यते॥ तात्पर्यात् न विमुह्यतीत्येतद्विवरणरूपा पुनः फलोक्तिः॥ निरन्तराभ्यासाद्यावज्जीवमन्तिमक्षणेऽप्यस्यां स्थितौ स्थातव्यम्॥ वक्ष्यते च॥' १० 'सदा तद्भावभावितः॥' ११ 'सर्वेषु कालेषु मामनुस्मर॥' १२ 'अभ्यासयोगयुक्तेन चेतसा॥' १३ 'अनन्यचेताः सततं यो मां स्मरति नित्यशः॥' इत्यादि॥

तस्मात् देहस्य सर्वथा नाशेन आत्मनश्च नाशाभावेन भीष्मादीनामशोच्यत्वात् अभिमानवर्जनेन दुःखस्य परिहर्तुं शक्यत्वात् युद्धस्य स्वधर्मत्वात् स्वधर्मानुष्ठानस्य पुण्यहेतुत्वात् प्रत्युत तदननुष्ठानस्यैव पापहेतुत्वात् स्ववर्णाश्रमोचितविहितधर्मानुष्ठानरूपकर्मयोगस्य पुमर्थशिरोरत्नमोक्षसाधनभूतापरोक्षज्ञानहेतु-

१. ८. ५. अत्र, एतावान् साङ्ख्ययोगाभ्यां स्वधर्मपरिनिष्ठया॥ जन्मलाभः परः पुंसामन्ते नारायणस्मृतिः॥' इति भाग. २. १. वचनमनुसंधेयं॥ २. गारुडे॥ ३. ब्रह्मवैवर्ते॥ ४. नारायणाध्यात्मे॥ ५. ३. ४. ५०.॥ ६. ४. १. १९. ७. ८. ५. ८. ८. ६. ९. ८. १३. १०. ८. ६. ११. ८. ७. १२. ८. ८. १३. ८. १४.

त्वाच त्वया त्वदीयवर्णाश्रमोचितं विहितं युद्धादिकं कर्म करणीयम् ॥ स्यात्तेन ते सकलमपि मङ्गलम् ॥ ७२ ॥

अ ॥ अर्जुनः ॥ ईदृशीं ईदृशस्य महतः फलस्य हेतुभूतां एतां स्थितिं प्राप्तुमप्रयतमानः इयन्तमनेहसं मुधा यापितवानस्मि ॥ अहो मे दौर्भाग्यम् ॥ अन्तकाले प्राप्येमां स्थितिं किं प्रयोजनं लभेय ॥ ब्रूहि ॥

अ ॥ कृष्णः ॥ अन्तकाले १ चरमे वयसि आयुषश्चतुर्थभागे अस्यां स्थितौ स्थित्वाऽपि निर्वाणं निष्क्रियं नित्यानन्दैकरसं परं ब्रह्म ऋच्छति अभेदेन प्राप्नोति ॥ निर्गतं वानं गमनं यत् प्राप्य तत् निर्वाणम् ॥ वक्ष्यते च ॥ २ 'यं प्राप्य न निवर्तन्ते तद्धाम परमं मम ॥' इति ॥ ३ 'यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥' इति च ॥ ब्रह्म ब्रह्मनिर्वाणं ब्रह्मानन्दं ब्रह्मणि निर्वाणं लयं ब्रह्मरूपं सुखं वा ऋच्छति प्राप्नोति ॥ किमु वक्तव्यं आबाल्यात् स्थितावास्यां तिष्ठन् ब्रह्म प्राप्नोतीति ॥ तदेवं तत्त्वंपदयोरर्थौ ब्रह्मजीवौ तयोरैक्यं महावाक्यार्थः तत्सिद्धिः परमपुरुषार्थः साक्षात्तत्साधनमपरोक्षज्ञाननिष्ठा तद्धेतुश्च कर्मनिष्ठा इत्युपायोपेयभूतं निष्ठाद्वयं तवोदिष्टम् ॥ अतः स्वरूपं प्रकाश्य मृत्युसंसारात् पातीति पः परमात्मा तमेव अर्थयते इति पार्थः हे तादृश अर्जुन त्वमिदमवधेहि ॥ अखण्डाद्वितीयानन्दैकरसपरब्रह्मतादात्म्यापत्तिरूपमहाफलहेतुभूतां महतीमेतां स्थितिं प्राप्तुं वर्णाश्रमोचितविहितकर्मानुष्ठानरूपः कर्मयोगस्त्वया कर्तव्यः ॥ स्यात्तेन ते मङ्गलम् ॥ ७२ ॥

वि ॥ कृष्णः ॥ अस्यां स्थितौ उक्तरूपायां कर्मनिष्ठायां अन्तिमे वयसि स्थित्वाऽपि निर्वाणं सुखैकरूपं ब्रह्म शुद्धात्मानं ऋच्छति प्राप्नोति ॥ किंपुनर्वक्तव्यं आबाल्यादस्यां स्थितौ तिष्ठन् ब्रह्म प्राप्नोतीति ॥ आत्मयाथात्म्यं युद्धाख्यकर्मणस्तज्ज्ञानसाधनतां चाजानतो देहात्माभिमानेन मोहितस्य तेन च मोहेन युद्धा-

१. अत्र 'यस्त्वत्यन्तव्यवसितमतिः संजिघृक्षत धर्मं खट्वाङ्गादेर्विद्वान् न किमलं तस्य यामार्धमायुः ॥ दुष्पाण्डित्यादपहृतमतिर्यः पुनः मशयात्मा कस्मै तस्य प्रभवतु कथं कोकवद्दीर्घमायुः' ॥ इति शान्तिविलासश्लोकोऽनुसन्धेयः ॥ 'विज्ञाय चरमावस्था खट्वाङ्गो राजसत्तमः ॥ वसिष्ठादात्मविज्ञानं मुहूर्तान्मुक्तिमेयिवान्' ॥ इति वचनं चानुसन्धेयम् ॥ २. ८. २१. ३. १५. ६.

भिवृत्तस्य तव तन्मोहशान्तये कर्मणि प्रवर्तनाय च ' एषा तेऽभिहिता साङ्ख्ये बुद्धिः' इत्युक्ता साङ्ख्यबुद्धिशब्दिता नित्याऽऽत्मविषया बुद्धिः 'योगे त्विमां शृ'ण्वित्युक्ता स्थितप्रज्ञताऽऽख्यपरोक्षज्ञानयोगनिष्ठाहेतुभूता साङ्ख्यबुद्धिपूर्वकाकाम्यकर्मानुष्ठानरूपकर्मयोगविषया बुद्धिश्चेत्युभयं तवोपदिष्टम् ॥ अतस्त्वं विहितमुचितमकाम्यं युद्धादिकमनुतिष्ठ ॥ स्यात्तेन ते मङ्गळम् ॥ ७२ ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे कृष्णार्जुनसंवादे साङ्ख्ययोगो नाम द्वितीयोऽध्यायः ॥ १ ॥

इतीति ॥ श्रीमदित्यादि पूर्ववत् ॥ साङ्ख्ययोगो नाम साङ्ख्ययोग इति प्रसिद्धः द्वितीयोऽध्यायः इति समाप्तः ॥

सङ्ख्या ज्ञानं सैव साङ्ख्यं तद्रूपः योगः मोक्षोपायः यस्मिन् सः सङ्ख्ययोगः सङ्ख्या ज्ञानं तस्या इमानि साङ्ख्यानि ज्ञानसाधनानि तेषां योगः प्रतिपाद्यतया संबन्धो यस्मिन् सः साङ्ख्ययोगः साङ्ख्यस्य ज्ञानस्य योगः उपायभूतः निवृत्तिकर्मयोगः यस्मिन् सः सङ्ख्ययोगः सङ्ख्यया ज्ञानेन प्राप्यः साङ्ख्यानां ज्ञानिनां प्राप्यः मोक्षः साङ्ख्यः तस्य ज्ञानफलत्वेन प्रतिपाद्यतया संबन्धो यस्मिन् सः साङ्ख्ययोगः इति प्रसिद्धः द्वितीयोऽध्यायः इति संपूर्णः ॥ ॐ तत्सत् ॥

इति श्रीमद्भगवद्गीतोपन्यासदर्पणे लक्ष्मणाचार्यविरचिते साङ्ख्ययोगाध्यायार्थप्रदर्शको द्वितीयः प्रतिबिंबः ॥

॥ ओंतत्सत् ॥



श्रीः

## ॥ अथ तृतीयोऽध्यायः ॥



द्वै ॥ संजयः ॥ १ 'नत्वेवाह'मित्यादिना ज्ञानयोगमभिधाय २ 'योगे त्विमां शृणु' इति तदुपायभूतस्य कर्मयोगस्य वचनं प्रतिज्ञाय तत्र ३ 'नेहाभिक्रमनाशोऽस्ति' इत्यादिना निवृत्तं कर्म प्रशस्य ४ 'यामिमां पुष्पितां वाच'मित्यादिना प्रवृत्तं कर्म विनिंद्य ५ 'कर्मण्येवाधिकारः' इत्यादिना निवृत्तिकर्मानुष्ठानरूपः कर्मयोगोऽभिहितः ॥ तत्र ६ 'तस्माद्युध्यस्व भारते'ति युद्धविधिविधानं श्रुतवानर्जुनः ७ 'सर्व एते पुण्यलोका भवंती'ति विहितानां सर्वेषां कर्मणां काम्यत्वात् ८ 'हतो वा प्राप्स्यसे स्वर्गं जित्वा वा भोक्ष्यसे महीम् ॥' इति युद्धस्य काम्यत्ववचनाच्च युध्यस्वेति भगवता विधीयमानं युद्धरूपं कर्म काम्यं कर्म ॥ तच्च ९ 'दूरेण ह्यवरं कर्मे'त्यादिना अनिष्टफलकमवरमुक्तम् ॥ किं युद्धाख्ये काम्ये कर्मणि अनिष्टफलकेऽवरे मां नियोजयति ॥ फलाश्रवणादकाम्येषु शमदमादिषु ह्यहं नियोक्तव्यः ॥ ज्ञानार्थं हि कर्मयोगमभिधातुमुपाक्रमत ॥ ज्ञानार्थं हि कर्म वाच्यम् ॥ शमदमादीनि हि १० 'शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वा आत्मन्येवाऽऽत्मानं पश्यती'ति ज्ञानार्थानि श्रूयन्ते॥ इति मन्वानः ११ 'योगे त्विमां शृणु' इति ज्ञानार्थं कर्मयोगं वक्ष्यामीति प्रतिज्ञाय १२ 'कर्मण्येवाधिकारस्ते' इति कर्मयोगोऽभिहितः ॥ १३ त्यक्त्वोत्तिष्ठ परन्तप ॥' १४ 'तस्माद्युध्यस्व भारत ॥' १५ 'धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते ॥' १६ 'सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम् ॥' १७ 'अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि ॥ ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥' १८ 'तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः ॥' १९ 'ततो युद्धाय युज्यस्व नैव पापमवाप्स्यसि ॥' इत्यादिभिः युद्धरूपं कर्मैव मम कर्तव्यमभिहितम् ॥ कुतः ज्ञानार्थानि विहाय

१. २. १२. २. २. ३९. ३. २. ४०. ४. २. ४२. ५. २. ४७. ६. २. १८. ७. छा. २. २३. १. ८. २. ३७. ९. २. ४९. १० बृ ४. ४. २३. ११. २. ३९. १२. २. ४७. १३. २. ३. १४. २. १८. १५. २. ३१. १६. २. ३२. १७. २. ३३. १८. २. ३७. १९. २. ३८.

शमदमादीनि काम्यत्वादनिष्टाल्पास्थिरफलके काम्ये कर्मणि तत्रापि दुष्टे युद्धाख्ये मां नियोजयसि ॥ ब्रूहि ॥ इति भगवन्तं पृच्छति ॥

## अर्जुन उवाच

ज्यायसी चेत् कर्मणस्ते मता बुद्धिर्जनार्दन ॥
तत्किं कर्मणि घोरे मां नियोजयसि केशव ॥ १ ॥

ज्यायसीति ॥ जनान् जनं जननं वा अर्दयति नाशयतीति जनार्दनः हे जनार्दन कृष्ण ते तव कर्मणः सकाशात् बुद्धिः ज्ञानं ज्यायसी श्रेष्ठा मता चेत् तत् तर्हि कश्च ईशश्च केशौ तौ वर्तयति प्रवर्तयतीति केशवः हे केशव कृष्ण घोरे कर्मणि मां किं कमर्थं नियोजयसि प्रेरयसि ॥ १ ॥

हे कृष्ण फलश्रवणेन सर्वेषां कर्मणां काम्यत्वात् कर्मणः पञ्चमी कर्मणः सकाशात् बुद्धिः ज्ञानं ज्यायसी श्रेष्ठा इति ते मता चेत् ॥ तर्हि कर्मणि किं किमर्थं मां नियोजयसि ॥ तत्रापि युद्धाख्ये घोरे कर्मणि किं मां नियोजयसि ॥ १ 'दूरेण ह्यवरं कर्म बुद्धियोगाद्धनञ्जय ॥ बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥' २ 'यावानर्थ उदपाने सर्वतः संप्लुतोदके ॥ तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानत ॥' इत्यादिवचनादवगम्यते कर्मापेक्षया ज्ञानं ज्याय इति त्वं मन्यसे इति ॥ तथा मन्वानः परमाप्ततमस्त्वं परमाप्ततमाय मह्यं ज्यायस्त्वेनाभिमतं ज्ञानयोगं तदर्थं शमदमादिकं च कर्तव्यमनभिधाय अवरत्वेनाभिमतं कर्मयोगं किमर्थमभ्यधाः॥ वद ॥

कर्मणः प्रवृत्तिकर्मणः सकाशात् ज्ञानं श्रेयस्त्वेनाभिमतं चेत् ज्ञाने मामनियुज्य हिंसारूपत्वेन घोरे युद्धाख्ये प्रवृत्तिकर्मणि किं मां नियोजयसीति वा ॥

'बुद्धया युक्तो यया पार्थ कर्मबन्धं प्रहास्यसी' त्युक्तया निवृत्तिकर्मणः षष्ठी बुद्धिशब्दिता उक्तिः श्रेष्ठा इति ते मता चेत् निवृत्तिकर्मणि मां अनियुज्य कुतः प्रवृत्तिकर्मणि युद्धाख्ये नियोजयसि ॥

कर्मणः पञ्चमी परंपरया मोक्षसाधनात् निवृत्तिकर्मणः ते कर्मणः त्वामुद्दिश्य क्रियमाणात् त्वदुद्देश्यकात् कर्मणः निवृत्तिकर्मणः इति यावत् ॥ इति वा ॥ तदपेक्षया बुद्धिशब्दितं ज्ञानं साक्षान्मोक्षसाधनत्वेन ज्याय इति ते मतं चेत् तर्हि घोरे

१. २. ४९. २. २. ४६.

गहने अत्यायाससाध्ये परंपरासाधने कर्मणि मां कुतो नियोजयसि ॥ ब्रूहि ॥ दुष्टनिग्रहशिष्टपरिपालनधर्मस्थापनभूभारपरिहरणाद्यर्थं किलावतीर्णोऽहम् ॥ वक्ष्यते च ॥ १ 'परित्राणाय साधूनां विनाशाय च दुष्कृताम् । धर्मसंस्थापनार्थाय संभवामि युगेयुगे '॥ इति ॥ तदर्थं त्वामहं युद्धे नियोजयामि ॥ त्वं यथेच्छसि तथा कुरु इति चेत् कशब्दितस्य ब्रह्मण ईशस्य च प्रवर्तकत्वात्केशवोऽसि त्वम् ॥ तादृशेन त्वया प्रेरितोऽहं तदकृत्वा कथं स्थातुं शक्नुयाम् ॥ जनार्दनत्वात्तथा प्रेरणं तवोचितमेव ॥ २ 'कथं भीष्ममहं ' इत्याद्युक्तरीत्या युद्धमनिच्छन्नहं मां विसर्जय मा निर्बंधानेति याचे भवन्तं अतो मैवं भूयो वादीः ॥ १ ॥

कृष्णः ॥ काम्यमपि कर्म श्रुतस्य फलस्य परित्यागादकाम्यं भवति ॥ अकाम्यं च कर्म ज्ञानद्वारा मोक्षाय भवति ॥ ३ 'कर्मणा ज्ञानमातनोति ज्ञानेनामृतीभवति अथामृतानि कर्माणी'ति श्रुतिः ॥ ४ 'सुखदुःखे समे कृत्वा ' इत्याद्युक्तरीत्या अकाम्य एव युद्धाख्ये कर्मणि त्वं नियोज्यसे ॥ साक्षान्मोक्षसाधनज्ञानयोगानर्हत्वात् ॥ युक्तं चेदम् ॥ कुत एवं पृच्छसि ॥ वद ॥

अर्जुनः ॥ व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे ॥
तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥ २ ॥

व्यामिश्रेणेति ॥ व्यामिश्रेणेव स्थितेन वाक्येन मे बुद्धिं मोहयसीव ॥ तत् तस्मात् तयोर्मध्ये इति वा येन अहं श्रेयः आप्नुयां लभेय तत् एकं निश्चित्य वद ॥ निश्चित्य श्रेयः आप्नुयां इति वा ॥ २ ॥

यद्येवं तर्हि क्वचित् कर्मप्रशंसा क्वचित् ज्ञानप्रशंसा क्वचित् युद्धस्य स्वर्गाद्यर्थत्ववचनं क्वचित् युद्धस्य ज्ञानार्थत्ववचनं इति, तव वचनं व्यामिश्रं संशयोत्पादकमेव ॥ तेन मे बुद्धिं मोहयसि ॥ मां संशयादिमन्तं करोषि ॥ युक्तं तु श्रुतस्य फलस्य परित्यागादकाम्यं भवति ॥ तदपरित्यागे काम्यं भवति ॥ ततश्च वैकल्पिककाम्यं तत् इति निष्पन्नम् ॥ 'श्येनेनाभिचरन् यजेते'त्यादिभिर्विहितानि श्येनयागादीनि नित्य-

१. ४. ८. २. २ ४. ३. .. ... ४ २. ३८. ५. द्वं ॥ वि ॥ श्रेणेवेति पाठः ॥ अ ॥ श्रेणेवेति पाठः ॥

काम्यानि ॥ फलाश्रवणान्नित्याकाम्यानि शमदमादीनि ॥ युद्धादीनि तु वैकल्पिककाम्यानि ॥ फलेच्छानिच्छाभ्यां काम्यत्वाकाम्यत्वयोरुभयोरपि संभवात् ॥ सन्तु नित्याकाम्येषु शमदमादिषु रागद्वेषादिप्रसक्तिहीनेषु किमर्थं वैकल्पिककाम्ये रागद्वेषादिदोषदुष्टे हिंसारूपे युद्धकर्मणि मां नियोजयतीति संशयो मे जायते ॥ अतः तत् तयोः ज्ञानकर्मणोर्मध्ये येन अहं श्रेयः मोक्षं तत्साधनं ज्ञानं वा आप्नुयाम् तत् एकं निश्चित्य वद ॥ मैवं भूयो व्यामिश्रं वादीः ॥ तत् तस्मादिति वा ॥ किमहो यत्रकुत्रापि गत्वा ज्ञानं संपाद्य तेन ज्ञानकर्मणोरन्यतरस्य तत्वं निश्चित्य तुभ्यमुपदेष्टुमागन्तव्यम् मया इति चेत् 'तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयामि'ति मयोक्ते निश्चित्येत्यस्य वदेत्यनेनान्वयं मत्वा किमेवमकाण्डे कुप्यसि ॥ येन तव वाक्येन अहं कर्तव्यमिदमिति निश्चित्य श्रेय आप्नुयां तत् एकं वाक्यं ज्ञानकर्मणोः अन्यतरप्रतिपादकं वद ॥ इति खलु मया प्रार्थ्यसे ॥ अस्यायमर्ह इति मदीययोग्यतां निश्चित्य वदेति वा ॥ परमात्पः सर्वज्ञोऽहं ते बुद्धिं मोहयेयं वा इति चेत् अत एव हि [1] इवशब्दः प्रयुक्तः त्वं तु न मोहयेः मम तु मदीयबुद्धिदोषात् मोहयसीति भाति ॥ इति खलु निवेद्यते ॥ अतो विस्पष्टमेकं ब्रूहि ॥ २ ॥

अ ॥ संजयः ॥ द्वितीये अध्याये सांख्यबुद्धिर्योगबुद्धिश्चेति द्वे बुद्धी उपदिष्टे ॥ तत्र सांख्यबुद्धिर्ज्ञानविषया ॥ 'एषा तेऽभिहिता सांख्ये बुद्धि'रित्युक्ता ॥ योगबुद्धिस्तु कर्मयोगविषया ॥ 'योगे त्विमां शृणु' इत्युक्ता ॥ तत्र सांख्यबुद्धिः ॥ साक्षान्मोक्षसाधनत्वादुत्तमा ॥ योगबुद्धिः परंपरया मोक्षसाधनत्वादवरा तत्र सांख्यबुद्धिः [2] 'प्रजहाति यदा कामानित्याद्युक्तलक्षणलक्षितेभ्योऽन्येभ्य उक्ता अर्जुनाय च [3] 'कर्मण्येवाधिकारस्ते' इति सांख्यबुद्ध्यनधिकारोक्तिपुरःसरं योगबुद्धिरुक्ता ॥ सांख्यबुद्धिमाश्रितानां [4] 'एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति ॥ स्थित्वाऽस्यामन्तकालेऽपि ब्रह्म निर्वाणमृच्छतीति मोक्षप्राप्तिरुक्ता ॥ न तथा योगबुद्धिमाश्रितानां मोक्षप्राप्तिरुक्ता ॥ एवमुपदिष्टमर्थं श्रुतवानर्जुनः उपादिक्षद्भगवान् द्वे निष्ठे ज्ञानकर्मात्मिके मह्यमेकस्मै ॥ एकं मां प्रति तयोर्द्वयोरुपदेशादेकाधिकारिके ते इति भाति ॥ न च तयोरेकाधिकारिकत्वं संभवति ॥ तेजस्तिमिरयोरिव परस्परविरुद्धयोः तयोरेकत्र समावेशायोगेन समु-

१. श्रणवात पाठमाश्रित्यद ॥ २. २. ५५. ३. २. ४७. ४. २. ७२.

च्चयासंभवात् ॥ १ 'नान्यः पन्था अयनाय विद्यते ॥' इति श्रुतिश्च समुच्चयाभावं वक्ति ॥ उत्कृष्टापकृष्टयोः भिन्नफलकयोः इदं वा इदं वा इति विकल्पासंभवाच्च ॥ एकफलकयोः समयोर्हि विकल्प उपपद्यते ॥ एकाधिकारिकत्वे समुच्चयो विकल्पो वा वक्तव्यः ॥ न च तौ संभवतः उक्तयुक्तेः ॥ अतो भिन्नाधिकारिकत्वं वाच्यम् ॥ भिन्नाधिकारिकत्वे एकं मां प्रत्युभयोपदेशो न युक्तः अतः कथमिदम् ॥ समुच्चयविकल्पयोरयोगादेकाधिकारिकत्वानुपपत्त्या भिन्नाधिकारिकत्वे एकस्मै उभयोपदेशानुपपत्त्या मह्यमेकमेव परमाप्ततमेन कृष्णेन वाच्यम् ॥ यदुत्तमं तद्धि आप्ताय आप्तेन वाच्यम् ॥ ज्ञानकर्मणोरुभयोर्मध्ये ज्ञानद्वारा साधनत्वेन मोक्षं प्रति परंपरासाधनात् उक्तफलजननियमरहिततयाऽनैकान्ति २ काच्च कर्मयोगात् साक्षान्मोक्षसाधनभूतः ३ ऐकांतिकः ज्ञानयोग एवोत्तमः ॥ अतः परमाप्तेन कृष्णेन भक्ताय आस्तिकाय परमाप्ताय मह्यं स एव ज्ञानयोग उपदेष्टव्यः ॥ सति चैवं कथं मह्यं भगवान् ज्ञानमनुपदिश्य कर्मैवोपादिक्षत् ॥ अयुक्तं चेदं तस्य इति मत्वा किमेवं कृतमिति भगवन्तं पृच्छति ॥

अर्जुनः ॥ कर्मणः परंपरासाधनात् अनैकान्तिकात् निवृत्तिकर्मणः बुद्धिः साक्षात्साधनं ऐकान्तिकं ज्ञानं ज्यायसी श्रेष्ठा इति ते तव मता चेत् तर्हि कर्मणि तत्रापि घोरे आयाससाध्ये गहने हिंसादिदोषदुष्टे युद्धाख्ये कर्मणि परंपरासाधने अनैकान्तिके मां प्रेरयसि ॥ इदं ते न युक्तम् ॥ ब्रह्मरुद्रादिप्रवर्तकत्वात्केशवस्त्वं सर्वैः स्वाभिलषितनिर्वहणाय याच्यमानत्वेन जनार्दनत्वात् अनुलंघनीयशासनः भक्तजनभवभयविध्वंसकश्च भवान् भक्तं प्रपन्नं च मामेवं कर्मण्यवरे न नियोजयितुमर्हतीत्येवं सादरमभ्यर्थ्यसे ॥ १ ॥

कृष्णः ॥ ४ 'बुद्धौ शरणमन्विच्छे'ति त्वां प्रति ज्ञानयोगोऽप्युपदिष्ट एव ॥ कुत एवं पृच्छसि वद ॥

अर्जुनः ॥ क्वचित्कर्मप्रशंसा क्वचित् ज्ञानप्रशंसा इति हेतोः ५ एकं मां प्रति 'कर्मण्येवाधिकारस्ते' 'बुद्धौ शरणमन्विच्छ' इत्युभयोपदेशाच्च हेतोः ते वचनं व्यामिश्रं ज्ञानकर्मसमुच्चयाभिप्रायकमिव भाति ॥ तथा भासमानेन वाक्येन मम बुद्धिं मोहयसीव ॥ संशयादिदोषदुष्टां करोषीव ॥ सर्वज्ञस्य प्रविविक्ताभिधायिनस्ते

१. तै. आ. १२. २. व्यभिचरितात् ॥ ३. अव्यभिचारितात् ॥ ४. २. ४९. ५. २. ४७.

वचनं न व्यामिश्रं स्यात् ॥ परमातस्त्वं मां न मोहयेः ॥ अथापि मदीयबुद्धिदोषात् ते वचनं व्यामिश्रमिव भाति ॥ तेन त्वं मोहयसीति भाति ॥ क्षन्तव्यमिदम् ॥ तयोर्मध्ये येन अहं श्रेयः आप्नुयां तत् एकं कर्म ज्ञानं वा निश्चित्य वद ॥ येन निश्चित्य श्रेय आप्नुयां तदेकं वदेति वा ॥ इदमस्यानुरूपमिति मदीययोग्यतां निश्चित्य तयोरन्यतरत् वदेति वा ॥ २ ॥

वि ॥ संजयः ॥ द्वितीये अध्याये कर्मयोगस्य तदन्तर्गतज्ञानयोगस्य चाभिधानमुखेन प्राप्तुः प्रत्यगात्मनः तन्नित्यताज्ञानपूर्वकाकाम्यकर्मनिष्पाद्यज्ञानयोगसाध्यं १ 'अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाती'त्यादिषु मोक्षसाधनपरमात्मज्ञानसाधनतया निर्दिष्टं फलान्तररहितं प्रत्यगात्मदर्शनरूपं साधनं सम्यगभिहितम् ॥ स्थितप्रज्ञताप्रकरणे कर्मणः स्थितप्रज्ञताख्यज्ञाननिष्ठाहेतुत्वं तस्याश्च आत्मावलोकनशब्दितप्रत्यगात्मदर्शनसाधनत्वं च स्पष्टमुक्तम् ॥ उक्तमिममर्थं श्रुतवानर्जुनः साक्षादात्मावलोकनसाधने ज्ञानयोगे प्रवृत्तिं कांक्षमाणः तद्विरुद्धे कर्मयोगे प्रेरणमनुचितं कृष्णस्येति मन्वानः कृष्णमाक्षिपन् पृच्छति ॥

अर्जुनः ॥ कर्मणः अकाम्यकर्मणः सकाशात् साक्षादात्मावलोकनसाधनं बुद्धिशब्दितं ज्ञानं श्रेष्ठं इति ते मतं चेत् तर्हि आत्मावलोकनविरोधिनि कर्मणि किमर्थं मां प्रेरयसि ॥ सिषाधयिषितस्य इन्द्रियव्यापारोपरतिनिष्पाद्यस्य आत्मावलोकनस्य अव्यवधानेन निष्पादिकां अतः कर्मणो ज्यायसीं ज्ञाननिष्ठां मह्यमनुपदिश्य आत्मावलोकनविरोधिनि सर्वेन्द्रियव्यापाररूपे कर्मणि किं मां नियोजयसि ॥ भक्तजनजनिनिरासकस्य ब्रह्मरुद्रादिपितुस्तव भक्तं प्रपन्नं तव प्राणायमानं मां प्रति कर्मणि नियोजनमनुचितम् ॥ कुत एवं कृतम् ॥ मैवं भूयो वादीः ॥ १ ॥

कृष्णः ॥ ज्ञानयोगोऽप्युपदिष्टः खलु ते किमेवं पृच्छसि ॥

अर्जुनः ॥ व्यामिश्रेणैव ज्ञानयोगतद्विपर्ययरूपकर्मयोगविधायकत्वात् परस्परविरुद्धेनैव वाक्येन त्वं मे बुद्धिं मोहयसीव ॥ परमकारुणिकस्त्वं न मे बुद्धिं मोहयेः मदीयबुद्धिदोषात् त्वं मोहयसीति मे भाति ॥ तस्मात् येन वाक्येन ज्ञानकर्म

१. का. २. १२.

णोरन्यतरस्य कर्तव्यताप्रतिपादकेन अहमनुष्ठेयं निश्चित्य अनुष्ठाय श्रेय आप्नुयाम् ॥ तत् एकं वाक्यं ज्ञानस्य कर्मणो वा प्रतिपादकं वद ॥ २ ॥

संजयः ॥ एवमर्जुनेन पृष्टो भगवान् सत्यं कर्मयोगात् ज्ञानयोगः श्रेष्ठ एव ॥ तथाऽपि तव ज्ञानयोगानर्हत्वात् कर्मयोगार्हत्वाच्च त्वद्योग्यतामनुसृत्य कर्मयोग एव त्वं नियोजितः ॥ इत्युत्तरं अधिकारिभेदेन ज्ञानकर्मनिष्ठाविभजनमुखेनाह ॥

श्रीभगवानुवाच

कृष्णः ॥ लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ ॥
ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम् ॥ ३ ॥

लोक इति ॥ न विद्यते अघं पापं यस्य सः अनघः हे अनघ निर्दोष अर्जुन सांख्यानां ज्ञानयोगाधिकारिणां ज्ञानमेव योगः उपायः तेन योगः कर्मयोगः एषां अस्तीति योगिनः कर्मयोगाधिकारिणः तेषां योगिनां कर्मैव योगः उपायः कर्मयोगः तेन इति, अस्मिन् लोके निष्ठा द्वे विधे प्रकारौ यस्याः सा द्विविधा पुरा पूर्वं पूर्वाध्याये वा मया प्र सम्यक् उक्ता प्रोक्ता ॥ ३ ॥

द्वै ॥ किंचिद्वच्मि शृणु ॥ मा कुरु कोपमेवम् ॥ हे निर्दोष अर्जुन अस्मिन् मोक्षाधिकारिणि जने निष्ठा स्वरूपेणावस्थितिः संसारगतिनिवृत्तिर्वा ॥ ष्ठा गतिनिवृत्ताविति धातु ॥ मुक्तिरिति यावत् ॥ द्विविधा ज्ञानकर्मरूपद्विविधसाधनसाध्या मया पुरा प्रोक्ता ॥ पूर्वमेवं मया व्यवस्थापितमस्तीति वा पूर्वाध्यायोक्तस्य अयमेवाशयः इति वा विद्धि ॥ केषां केन साधनेन साध्या इति चेत् सांख्यानां ज्ञानयोगार्हाणां देवानां सनकादीनां तत्सदृशानां च सम्यक् ख्यातिः संख्या ज्ञानं तत्र भवाः संख्यैव सांख्यं तत्संबन्धिनः इति वा व्युत्पत्तिः ॥ ज्ञानयोगेन कर्मनिरपेक्षज्ञानरूपोपायेन निष्ठा मुक्तिः योगिनां कर्मरूपोपायवतां कर्मयोगार्हाणां जनकादीनां प्रियव्रतादीनां तत्सदृशानां त्वदादीनां च कर्मयोगेन कर्मसहितो योगः कर्मयोगः तेन कर्मसहितज्ञानयोगेन निष्ठा ॥ इत्येवं पुरा निष्ठा द्विविधा प्रोक्ता ॥ ज्ञानप्रचुरो योगः ज्ञानयोगः अप्रचुरकर्मोपेतः प्रचुरज्ञानरूपो योगः तेन ॥ कर्मप्रचुरो योगः कर्मयोगः अप्रचुरज्ञानोपेतः प्रचुरकर्मरूपो योगः तेन इति वा ॥ उभयेषामपि योगिनां मोक्षार्थं

ज्ञानमावश्यकम् ॥ तत्र ज्ञानयोगिनां ज्ञानं प्रचुरं कर्म अप्रचुरम् ॥ कर्मयोगिनां तु कर्म प्रचुरं ज्ञानमप्रचुरम् ॥ परस्परसमुन्मिश्रितेन ज्ञानेन कर्मणा वा मोक्षार्हा उभयेऽपि योगिनः ॥ उभयोरपि योगयोः प्रत्येकमुभयात्मकत्वात् कथमेकांशनिर्देश इति चेत् क्षीरनीरन्यायेन तथा निर्देशः॥ नीरमिश्रिते क्षीरे क्षीरांशस्याधिक्यात् क्षीरमिदं इति व्यवहारः ॥ क्षीरमिश्रिते नीरे नीरांशस्याधिक्यात् नीरमिदमिति व्यवहारः ॥ तथा ज्ञानयोगे ज्ञानांशस्याधिक्यात् ज्ञानयोग इति निर्देशः ॥ कर्मयोगे कर्मांशस्याधिक्यात् कर्मयोग इति निर्देशः॥ 'प्रधान्याद्व्यपदेश' इति न्यायः ॥ इति वा ॥ ज्ञानमेव कर्मापेक्षया श्रेष्ठम्॥ अहं तु तव आप्तः त्वं तु मम आप्ततमः तथाऽपि त्वद्योग्यतामनुसृत्य तुभ्यं कर्मैव कर्तव्यमभिहितम् ॥ परमाप्ततमस्य पुत्रमपि वरिष्ठकक्ष्यापाठपठनानर्हं बालं तदीययोग्यतामनुरुध्य प्रथमकक्ष्यायामेव योजयति प्रधानोपाध्यायः इति स्पष्टमेव लोके ॥ तथा अप्रचुरज्ञानोपेतप्रचुरकर्मरूपयोगार्हत्वात् कर्मैव तुभ्यमुपदिष्टम् ॥ सति संशये पृष्टाऽऽचार्यं तस्य परिहरणमुचितम् ॥ अतो नात्र त्वामपराधिनं मन्ये ॥ न च त्वया भीः कार्या ॥ अतोऽसंशयं कर्म कुरु ॥ एतेन मदीयप्रश्नस्य किमुत्तरमुक्तं भवति विस्पष्टं ब्रूहीति चेत् इदमुक्तं भवति ॥ यद्यपि कर्मणः सकाशात् ज्ञानं ज्याय इति मम मतम् ॥ तथाऽपि कर्मणि तत्रापि युद्धाख्ये कर्मणि तव नियोजनमुचितम् ॥ तस्य अभिसन्धिभेदात् निवृत्तिकर्मत्वेन ज्ञानमार्गानुप्रवेशात् ॥ यद्यपि प्रवृत्तिकर्मणः सकाशात् ज्ञानं ज्याय इति मम मतम् ॥ तथाऽपि युद्धाख्ये कर्मणि तव प्रेरणमुचितम् । तस्य प्रवृत्तिकर्मत्वाभावस्यापि संभवात् ॥ यद्यपि निवृत्तिकर्मणः सकाशात् ज्ञानं ज्याय इति मम मतम् ॥ तथाऽपि गहने निवृत्तिकर्मणि तव नियोजनमुचितम् ॥ ज्ञानार्थत्वेन मुक्तावानन्दोद्रेकहेतुत्वेन च तस्यापि ज्यायस्त्वात् ॥ यद्यपि निवृत्तिकर्मणः बुद्धिशब्दितं वचनमेव ज्याय इति मम मतम् ॥ तथाऽपि युद्धाख्ये कर्मणि तव नियोजनमुचितम् ॥ तस्य अभिसन्धिभेदेन निवृत्तिकर्मत्वसंभवात् ॥ किंच क्वचिद्युद्धस्य स्वर्गार्थत्वप्रतिपादनेन प्रवृत्तिकर्मत्वप्रतिपादनम् ॥ क्वचित् ज्ञानार्थत्वप्रतिपादनेन निवृत्तिकर्मत्वप्रतिपादनम् ॥ क्वचित् ज्ञानप्रशंसनेन तस्य ज्यायस्त्वप्रतिपादनम् ॥ क्वचित् कर्मप्रशंसनेन तस्य ज्यायस्त्वप्रतिपादनम्॥ इत्येवं मम वाक्यं व्यामिश्रं इति मा मंस्थाः॥ अधिकारिभेदेन युद्धस्य वैकल्पिककाम्यस्य उभयरूपत्वसंभवात् ज्ञानकर्मणोरुभयोरपि मोक्षसाधनतत्साधनज्ञानसाधनताऽभिप्रायेण अधिकारिभेदेन प्रचुरसाधनताऽभिप्रायेण च प्रशंसनीयत्वाच्च ॥

किंच मोक्षाधिकारिणो द्विविधाः गृहस्थादिकर्मत्यागेन ज्ञाननिष्ठाः अप्रचुरकर्मोपेतप्रचुरज्ञानरूपज्ञानयोगाधिकारिणः सनकादिवत् ॥ गृहस्थादिकर्मात्यागेन ज्ञाननिष्ठाः अप्रचुरज्ञानोपेतप्रचुरकर्मरूपकर्मयोगाधिकारिणः जनकप्रियव्रतादिवत् ॥ त्वं तु जनकप्रियव्रतादिवत् आधिकारिकः ॥ अतः अप्रचुरज्ञानोपेतप्रचुरकर्मरूपकर्मयोगे अधिकृतः अत एव पूर्वाध्याये ज्ञानयोगं कर्मयोगं चोपदिश्य मया कर्मयोग एव त्वं नियोजितः ॥ अप्रचुरज्ञानोपेतप्रचुरकर्मरूपकर्मयोगाधिकृतत्वेऽपि मम नित्याकाम्येषु हिंसादिदोषगन्धविधुरेषु यत्याश्रमधर्मभूतेषु शमदमादिषु कर्मसु नियोजनमुचितम् ॥ किमर्थं तान् विहाय वैकल्पिककाम्ये युद्धे अहं नियोजितः इति चेत् अप्रचुरज्ञानोपेतप्रचुरकर्मरूपयत्याश्रमधर्मभूतशमदमादिनित्याकाम्यकर्मयोगः कर्मयोगिषु अनाधिकारिकाणामेव॥ आधिकारिकाणां तु आश्रमत्रयधर्मभूतवैकल्पिककाम्ययुद्धादिकर्मयोग एव॥ त्वं तु आधिकारिकः॥ अतः तव युद्धादिवैकल्पिककाम्यकर्मयोग एव ॥ माऽस्तु ममाऽऽधिकारिकत्वं इति चेत् भगवता तवाऽऽधिकारिकत्वेनैव क्लृप्तत्वात् ॥ अत एव यत्याश्रमस्वीकारे प्रवृत्तः प्रियव्रतः १ प्रतिषिद्धः आधिकारिकत्वयुक्त्युक्त्या पितामहेन ॥ तस्मात् त्वां निवृत्तिकर्मणि तत्रापि स्वधर्मभूते युद्धाख्ये कर्मणि नियोजयामि ॥ वक्ष्यते च ॥ २ 'श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठिता 'दिति ॥ अतः तव युद्धे नियोजनमुचितम् ॥ ३ ॥

अ ॥ हे अनघ निर्दोष अर्जुन अस्मिन् लोके शुद्धाशुद्धान्तःकरणभेदेन द्विविधे मोक्षाधिकारिजने निष्ठा ज्ञानपरत्वकर्मपरत्वान्यतररूपा मोक्षपरता ३ रूपा वा स्थितिः सांख्यानां सङ्ख्या आत्मानात्मविवेकबुद्धिः तद्वतां ब्रह्मचर्यादेव संन्यासाऽऽश्रमं प्राप्तवतां वेदान्तविज्ञानसुनिश्चितार्थानां ४ ज्ञाननिष्ठायाः परां काष्ठामारूढानां ५ ज्ञानयोगेन ज्ञानमेव योगः ब्रह्मप्राप्त्युपायः तेन भवति ॥ योगिनां अशुद्धान्तःकरणानां ज्ञाननिष्ठामनारूढानां आश्रमत्रयस्थितानां तत्तद्विहितकर्मानुष्ठानाधिकारवतां ६ कर्मयोगिनां कर्मयोगेन कर्मैव योगः अन्तःकरणशुद्ध्युपायः तेन भवति॥

१. भाग. ५ स्कं. १ अध्याये ॥ २. ३. ३५ ३. सर्वमिदं अहं च ब्रह्मैवेति ब्रह्माऽऽकारवृत्त्या नैश्चल्येनस्थितिर्वा ॥ ४. वेदान्तैः सम्यक् ख्यायते प्रतिपाद्यते इति सांख्यं ब्रह्म तत् आत्मत्वेन जानतां ब्रह्मात्मैक्यज्ञानयोगानुष्ठानाम् ॥ ५. ज्ञानाय योगः ज्ञानस्य योगः इति वा ज्ञानयोगः जपध्यानादिः तेन वा ॥ ६. 'समत्वं योग उच्यते' इत्युक्तममत्वबुद्धिरूपयोगवतां वा ॥

इति द्विविधा ॥ सांख्यानां ज्ञानपरतारूपा स्थितिः ज्ञानयोगेन कर्मयोगिनां कर्मपरतारूपास्थितिः कर्मयोगेन इति, मोक्षपरतारूपा स्थितिः सांख्यानां ज्ञानयोगेन कर्मयोगिनां तु कर्मयोगेन इति वा द्विप्रकारा ॥ पुरा सर्गादौ वेदादिरूपेण मया प्रोक्ता ॥ पूर्वाध्याये १ 'तानि सर्वाणि संयम्य युक्त आसीत मत्परः ॥' इत्यादिना २ 'धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते ॥' इत्यादिना च स्पष्टमुक्ता इति वा ॥ अनघत्वान्मत्तः साक्षादुपदेशार्होऽसि ॥ एतेन किमुक्तं भवतीति चेत् इदमुक्तं भवति ॥ यदि ज्ञाननिष्ठा कर्मनिष्ठा चेत्युभे निष्ठे परस्परनिरपेक्षे स्वतन्त्रे एव मया तुभ्यमुपदिष्टे स्याताम् तर्हि प्रश्नोऽयं त्वदीयः सङ्गच्छेत ॥ न च तथोपदिष्टं मया ॥ किंतु एकैव साध्यसाधनभावापन्ना निष्ठा एकस्यैवाधिकारिणः अन्तःकरणशुद्ध्यशुद्धिरूपावस्थाभेदेन द्विप्रकारा अभिहिता ॥ द्वयोस्साध्यसाधनभावापन्नयोरेकत्वमिति सूचयितुं निष्ठेत्येकवचनेन निर्देशः ॥ वक्ष्यते च ॥ ३ 'एकं साङ्ख्यं च योगं च यः पश्यति स पश्यति ॥' इति ॥ अत एव एकं त्वां प्रति 'एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु ॥' इत्युभयोरपि निष्ठयोरुपदेशो युज्यत एव ॥ परस्परविरुद्धयोस्तयोः समुच्चयायोगेन भिन्नफलकयो उत्कृष्टापकृष्टयोस्तयोर्विकल्पायोगेन च कथमेकाधिकारिकत्वं तयोर्युज्यते ॥ एकेन युगपदनुष्ठातुमशक्ययोस्तयोराधिकारिभेद एव ह्युचितः ॥ न चाधिकारिभेदस्त्वयाऽभिहितः ॥ प्रत्युत 'एषा तेऽभिहिता सांख्ये बुद्धियोगे त्विमां शृणु ॥' इति द्वयोस्तयोरेकं मां प्रत्युक्त्युक्त्या ४ 'योगस्थः कुरु कर्माणि ॥' ५ 'बुद्धौ शरणमन्विच्छे'ति द्वयोस्तयोरेकस्मै मह्यमुपदेशाच्च एकाधिकारिकत्वमेव त्वयाऽभिहितम् ॥ अतः कथमिदमिति चेत् एकेन युगपदनुष्ठातुं अशक्ययोस्तयोर्भिन्नाधिकारिकत्वमेव ममाभिप्रेतम् ॥ सूचितं च तत् मया ॥ ६ 'एषा तेऽभिहिता सांख्ये बुद्धियोगे त्विमां शृणु ॥' इति वदता ॥ न च तदनवधानेन त्वया गृहीतं ॥ भिन्नाधिकारिकयोस्तयोरेकं मां प्रत्युपदेशादिकं कथं युज्यते इति चेत् 'एषा तेऽभिहिते'त्यादिना उभयोरेकं त्वां प्रत्युक्तिः भिन्नाधिकारिकत्वेऽपि घटते ॥ अनेनेदं कर्तव्यं अनेनेदं कर्तव्यं इति द्वाभ्यां कर्तव्ययोरेकं प्रत्युपदेश उपपद्यते ॥ ७ 'कुरु कर्माणि' ८ 'बुद्धौ शरणमन्विच्छे'त्युपदेशास्तु कर्म कुरु तस्य ज्ञानमेव फलमन्विच्छ न तु स्वर्गादिक-

१. २. ६१. २. २. ३१. ३. ५. ५. ४. २. ४८. ५. २. ४९. ६. २. ३९. ७. २. ४८. ८. २. ४९.

मित्येवं मोक्षसाधनज्ञानफलकाकाम्यकर्मकर्तव्यतानियमनपरः न तु उभयोः कर्तव्यतोपदेशपरः ॥ १ 'कृपणाः फलहेतवः ॥' इति हेतूक्त्यनुरोधात् ॥ यद्येवं मां प्रत्येकस्यैवोपदेशो तात्पर्यमिति ब्रूषे ॥ तर्हि ज्ञानयोग एव कुतो मे नोपदिष्टः ॥ उपदिष्ट एव ज्ञानयोगस्ते ॥ अत एव हि 'एषा तेऽभिहिता सांख्ये बुद्धि'रित्युक्तं इति चेत् २ 'कर्मण्येवाधिकारस्ते' इति ज्ञानानधिकारित्वेन निर्णीतस्य मे ज्ञानाधिकारिपुरुषान्तरकर्तव्यज्ञाननिष्ठोपदेशः कथं घटत इति चेत् भिन्नाधिकारिकयोः परस्परविरुद्धयोर्द्वयोः कार्ययोः व्यक्तिभेदेन अनेनेदं कर्तव्यं तेन तत्कर्तव्यं इत्युक्तिवत् अवस्थाभेदेन अनेनेदानीं इदं कर्तव्यं अनेनैव तदानीं तत्कर्तव्यमित्युक्तिरपि युज्यते॥ भिन्नाधिकारिकपरस्परविरुद्धकार्यद्वयोपदेशो न व्यक्तिभेदमात्रप्रतिनियतः। किं तु व्यक्तिभेदावस्थाभेदसाधारणः ॥ अत एव त्वामेकं प्रति परस्परविरुद्धयोर्ज्ञानकर्मणोरुभयोरपि अन्तःकरणाशुद्धिरूपावस्थायां कर्मकर्तव्यं अन्तःकरणशुद्धिरूपावस्थायां ज्ञानयोगः कर्तव्य इत्युपदेशो युज्यते ॥ अत एव तवेदानीं अन्तःकरणाशुद्धिरूपावस्थावत्त्वेन चित्तशुद्ध्याधायके वर्णाश्रमोचितविहितकर्मानुष्ठानरूपे कर्मयोग एवाधिकारात् उचितमेव ज्ञानतोऽपकृष्टे कर्मणि तव नियोजनं मम ॥ अत उक्तं युक्तम् ॥ न चात्र कश्चिदनुपपत्तिलेशोऽपीति सम्यगवधारय ॥ २ ॥

वि ॥ हे अनघ निर्दोष पार्थ अस्मिन् लोके विविधाधिकारियुक्ते द्विविधा निष्ठा ज्ञानयोगकर्मयोगान्यतरविषया स्थितिः, सङ्ख्या आत्मैकविषया बुद्धिः तद्युक्ताः सांख्याः तेषां सांख्यानां ज्ञानयोगेन ॥ योगिनां अतदर्हाणां कर्मयोगाधिकारिणां योगिनामित्यत्र मत्वर्थीयेनिप्रत्ययार्थः संबन्धो योग्यतारूपो विवक्षितः ॥ कर्मयोगेन परमपुरुषाराधनरूपेण ॥ ३ 'यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ॥ स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥' इति उचितविहितकर्मणः परमपुरुषाराधनरूपत्वं वक्ष्यते॥ इति पुरा पूर्वकाले पूर्वाध्याये वा मया यथाधिकारमसङ्कीर्णैवाभिहिता॥ मद्वचनमर्म न सम्यगवधृतं त्वया ॥ एतेन किमुक्तं भवतीति चेत् इत्युक्तं भवति ॥ जन्मान्तराचरितविविधसुचरितपरिमृदितमनोमलानां अव्याकुलबुद्धीनां विनैव कर्मयोगं ज्ञानयोगं प्रभवितुं शक्तानां ज्ञानयोगाधिकारिणां ४ 'प्रजहाति यदा कामान्' इत्यादिना ज्ञानयोगः ॥ अतथाविधानां ज्ञानयोगे अशक्तानां विषयव्याकुलबुद्धियुक्ता-

१. २. ४९. २ २. ४७ ३. १८. ४६ ४. २. ५५.

नां मनोमलनिर्हरणाय 'कर्मण्येवाधिकारस्ते' इत्यादिना कर्मयोगः ॥ इत्युभयमसङ्कीर्णमेव तुभ्यमुपदिष्टं मया ॥ त्वं च ज्ञानयोगे अशक्तत्वात् कर्मण्येवाधिकृतत्वेन कर्मण्येव नियोजितः ॥ अतो न किञ्चिदिह व्यामिश्रमभिहितं ते ॥ त्वमनघोऽसि ॥ अतः कर्मयोगयोग्योऽसि ॥ यदा यथावदनुष्ठितेन कर्मणा अनघतरः संपत्स्यसे तदा ज्ञानयोगयोग्यो भविष्यसि ॥ अतस्त्वदीयां योग्यतामनुसृत्य उचितावेहि कर्मयोगे युद्धानुष्ठानरूपे तव नियोजनं ममोचितमिति तमनघेत्यग्रहि ॥ अवधार्ये इं विहितं कर्म युद्धाख्यमनुतिष्ठ ॥ ३ ॥

ह्वे ॥ अर्जुनः ॥ तव कर्मयोगयोग्यत्वात् ज्ञानद्वारा मोक्षहेतुभूते वर्णाश्रमोचिते युद्धाख्ये कर्मणि त्वं नियोजित इत्युक्तम् ॥ कर्माकरणेनैव मोक्ष सिध्यति॥ मोक्षो हि कर्माकरणेन प्राप्यः कुत इति चेत् मोक्षो नैष्कर्म्यशब्देनोच्यते कर्मणोऽभावो निष्कर्म तेन प्राप्यं नैष्कर्म्यं इति हि तदर्थः ॥ एवं कर्माकरणेनैव मोक्षसंभवात् तदर्थं ज्ञानसंपादनस्य अनावश्यकत्वेन तत्फलके कर्मणि मे नियोजनमनुचितम् ॥ किं ब्रूषे ॥

कृष्णः ॥ न कर्मणामनारंभान्नैष्कर्म्यं पुरुषोऽश्नुते ॥
न च संन्यसनादेव सिद्धिं समधिगच्छति ॥ ४ ॥

नेति ॥ पुरुषः जीवः कर्मणां न आरंभः अनारंभः तस्मात् निर्गतं कर्म यस्मात् सः निष्कर्मा निष्कर्मणो भावः नैष्कर्म्यं मोक्षं ज्ञानयोगनिष्ठां वा नाश्नुते न प्राप्नोति ॥ संन्यसनादेव निवृत्तिकर्मकरणमात्रादेव संन्यासाश्रमादेव सिद्धिं मोक्षं ज्ञानयोगनिष्ठां वा न समधिगच्छति च ॥ संन्यसनात् आरब्धस्य परित्यागात् सिद्धिं कर्मसिद्धिं नैव समधिगच्छति च॥ इति वा ॥ ४ ॥

पुरुषो जीवः कर्तव्यानां कर्मणां अनारंभात् अकरणात् नैष्कर्म्यशब्दितं मोक्षं न प्राप्नोति ॥ किमुक्तं भवतीति चेत् इदमुक्तं भवति ॥ पुरं देहं सरति प्राप्नोतीति पुरुषः इति पुरुषपदेनोच्यमानः प्रारब्धकर्मनिर्मितप्राकृतदेहवान् जीवः कर्माकरणेन मोक्षं नाप्नोति ॥ कर्माकरणेन मोक्षप्राप्तेरसंभवात् ॥ यदि कर्माकरणेन मोक्षः स्यात् तर्हि अस्य मोक्षसाधनभूतकर्मकरणानर्हतिर्यक्स्थावराद्यनेकदेहेषु कर्माकरणसंभवान्मुक्त्यवश्यंभावेन पुरुषपदोक्तपरिदृश्यमानदेहवत्त्वं न युज्यते ॥ दृश्यते चायं

इदानीममुक्तः प्राकृतदेहवान् ॥ अतः कर्माकरणेन प्राप्यो मोक्ष इति न युक्तं वक्तुं ॥ तर्हि मोक्षस्य नैष्कर्म्यशब्देनोक्तिः कथमिति चेत् प्रवृत्तिकर्माकरणेन प्राप्यत्वान्नैष्कर्म्यशब्दनिर्देशः ॥ मुक्तेर्नैष्कर्म्यशब्दवाच्यत्वस्य अन्यथोपपत्तिकल्पनेऽपि कारणान्तरेण मुक्तेः कर्माकरणेन प्राप्यत्वं स्यादेव ॥ कथमिति चेत् कर्म हि संसारबीजं तदकरणे संसारबीजाभावात् असंसाररूपमोक्षस्स्यादेव इति चेत् अयं जीवः पुराणि देहान् सरतीति पुरुषः इति पुरुषपदेनोच्यमानः प्रारब्धकर्मनिर्मितानेकदेहवान् कर्माकरणेन मोक्षं न प्राप्नोति ॥ कर्माकरणेन मोक्षप्राप्त्यनुपपत्तेः ॥ कर्माकरणेन मोक्षस्य प्राप्यत्वे कदाऽप्यस्य मोक्षो न स्यात् ॥ कुत इति चेत् वर्तमानदेहे कर्माकरणेऽपि संसारबीजभूतकर्मकरणाहानन्तदेहसंभवात् तत्तद्देहकृतानामनेकेषां कर्मणां भावेन संसारबीजभूतकर्माभावासंभवात् ॥ भोगेन कर्मणां क्षये मोक्षो भविष्यतीति चेत् एकैकस्मिन्नपि अनेकदेहारंभककर्मकरणात्कर्मणामसमाप्तेः ॥ अतः कर्माकरणप्राप्यत्वं मोक्षस्य नाङ्गीकर्तुं शक्यम् ॥ एवं मुक्तेः कर्माकरणप्राप्यत्वस्य कदाऽपि मोक्षासंभवापत्तियुक्त्या निवारणेऽपि कारणान्तरेण मुक्तेः कर्माकरणेन प्राप्यत्वं स्यादेव ॥ कथमिति चेत् भवति हि निवृत्तिकर्मकरणेन मोक्षः ॥ उक्तं च त्वया ॥ १ 'बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसी'ति ॥ २ 'कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ॥ जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥' इति ॥ ३ 'तदा योगमवाप्स्यसी'ति च ॥ 'निवृत्तं सेवमानस्तु ब्रह्माभ्येति सनातनम् ॥' इत्यभियुक्ताः स्मरन्ति ॥ भवति हि संन्यासाश्रमेणापि मोक्षः ॥ ४ 'वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्वाः ॥ ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे ॥' इति श्रुतिः ॥ मोक्षस्य निवृत्तिकर्मसंन्यासाश्रमाभ्यां प्राप्यत्वात् कर्माकरणेनापि स प्राप्यो भवति ॥ फलाभाववत्वेन कर्माकरणस्य निवृत्तिकर्मसंन्यासाश्रमाभ्यां साम्यात् ॥ आयासाभावरूपगुणवत्त्वेन ताभ्यामाधिक्याच्च ॥ कर्मणोऽकरणे प्रत्यवायस्स्यादिति चेत् प्रत्यवायोक्तिरमुमुक्षुविषया ॥ न हि मुमुक्षोरनुष्ठेये निवृत्तिकर्मणि प्रत्यवायो जायते ॥ उक्तं च त्वया ॥ ५ 'प्रत्यवायो न विद्यते ॥' इति ॥ तत्साम्येन मुमुक्षोर्मोक्षसाधनतयाऽभिप्रेते कर्माकरणे प्रत्यवायो न जायते ॥ इति चेत् संन्यसनादेव सन्यासशब्दवाच्यकाम्यकर्मपरित्यागोपलक्षिताकाम्यकर्मकरण-

१. २. ३९. २. २. ५१. ३. २. ५३. ४. ना १२. ५. २. ४०.

मात्रादेव संन्यासाश्रममात्रादेव वा सिद्धिं मोक्षं न प्राप्नोति च ॥ किमुक्तं भवतीति चेत् इदमुक्तं भवति ॥ यदि निवृत्तिकर्ममात्रेण संन्यासाश्रममात्रेण वा मोक्षः स्यात् तर्हि फलाभाववत्त्वात्तत्समेन कर्माकरणेनापि मोक्षः स्यात् ॥ न च तथा ॥ किन्तु चित्तशुद्धिविषयवैराग्यश्रवणमनननिदिध्यासनज्ञानभगवत्प्रसादद्वारैव ताभ्यां मोक्षः ॥ न तयोरिव कर्माकरणस्य चित्तशुद्ध्यादिहेतुत्वं संभवति ॥ अतस्तत्प्रतिबन्धा कर्माकरणस्य मोक्षहेतुत्वं वक्तुं युक्तम् ॥ न हि फलानिच्छया प्रभोराराधनवत् तदकरणेन गृहे तूष्णीमवस्थानं च फलानपेक्षासाम्यात् प्रभुप्रसादैकलभ्यफलजनकं भवति ॥ किंतु आराधनमेव प्रसादजनकत्वात् फलं जनयति ॥ तदकरणं तु प्रसादाजनकत्वात्फलं न जनयति ॥ अतः फलमनपेक्षणीयं भगवदाराधनरूपं कर्म च कर्तव्यम् ॥ तादृशेन कर्मणैव मोक्षसिद्धिरिति स्थितम् ॥ ज्ञानार्थत्वान्निवृत्तिकर्मणस्तत्र त्वं नियोजित इत्युक्तम् ॥ तदयुक्तम् ॥ ज्ञानस्य निवृत्तिकर्मणेव तदन्येन हिंसादिदोषरहितेन केनचित्साधनेन वा काम्यकर्माकरणमात्रेण वा संन्यासाश्रमेण वा साधनसंभवात् इति चेत् तस्यापि इदमेवोत्तरम् ॥ 'न कर्मणा'मित्यादि ॥ उक्त एवार्थः ॥ ज्ञानं चित्तशुद्धिमूलकवैराग्यश्रवणादिसाधनलभ्यम् ॥ चित्तशुद्धिश्च अकाम्यकर्मान्वयव्यतिरेकानुविधायिनी ॥ अतः निवृत्तिकर्मकरण एव चित्तशुद्धिमूलकवैराग्यादिहेतुकज्ञानद्वारा मोक्ष इति तत्करणे त्वं नियोजितः ॥ आधिकारिकस्य त्वादृशस्य संन्यास एव न संभवति ॥ अनाधिकारिकस्य संन्याससंभवात् तस्य विनैव कर्मयोगं तेनैव ज्ञानद्वारा मोक्षः सिध्येदिति चेत् न संन्यासाश्रममात्रेण ज्ञानद्वारा मोक्षः ॥ किंतु तदाश्रमोचितकर्मानुष्ठानादेव चित्तशुद्ध्यादिद्वारा ज्ञानद्वारेण मोक्षः ॥ तर्हि अस्य संन्यासाश्रमस्वीकारो व्यर्थ इति चेत् संन्यासाश्रमोऽस्य आश्रमान्तरधर्मव्यापृतिमूलकाविघ्नपरिहारेण सततं वेदान्तविचारनैयत्यसौकर्याय ॥ एवं सति सर्वैरनाधिकारिकैः आश्रमान्तरधर्मकरणानिच्छायां सत्यां संन्यासाश्रमं स्वीकृत्य तदुचितकर्म कर्तव्यं संपद्येत इति चेत् चित्तशुद्ध्यादिरहितसंन्यासाश्रमस्य भ्रष्टतापादकत्वात् चित्तशुद्ध्यर्थं स्वस्वाश्रमोचितं कर्म कर्तव्यं ॥ माऽस्तु संन्यासाश्रममात्रान्मोक्षः अस्तु च तत्रापि कर्मानुष्ठानादेव ॥ अहं स्वीकृत्य संन्यासाश्रमं तदुचितं कर्म चिकीर्षामि ॥ न घोरं युद्धरूपं कर्म करिष्यामि इति चेत् आधिकारिकस्य तव संन्यासासंभवेन तथा वक्तुमयुक्तं ॥ अतः कर्म वर्णाश्रमोचितं कर्तव्यमेवेति स्थितम् ॥ ४ ॥

अ ॥ अर्जुनः ॥ अन्तःकरणाशुद्धिरूपावस्थावत्वात्तव चित्तशुद्ध्याधायके कर्मण्येव तव नियोजनमुचितमिति त्वं तत्र नियोजितो मयेत्युक्तं ॥ सत्यं ॥ तथाऽपि हिंसादिदोषदुष्टं कर्म परिहाय चित्तशुद्ध्यादिद्वारा ज्ञानसाधनभूतं कमप्यन्यमेवोपायं ब्रूहि ॥

कृष्णः ॥ पुरुषः चित्तशुद्ध्यादिद्वारा ब्रह्मज्ञानसाधनतयाऽभिहितानां वर्णाश्रमोचितविहितकर्मणां अनारंभात् अननुष्ठानात् नैष्कर्म्यं निष्कर्मा कर्मशून्यः तस्य भावो नैष्कर्म्यं कर्मशून्यतां ज्ञानयोगनिष्ठामिति यावत् ॥ न हि ज्ञानयोगनिष्ठः कर्मवान् भवति ॥ वक्ष्यते च ॥ १ 'तस्य कार्यं न विद्यते'॥ इति ॥ नाश्नुते न प्राप्नोति ॥ निष्कर्म निष्क्रियं ब्रह्म तस्य भावः नैष्कर्म्यं निष्क्रियाखंडाद्वितीयपरब्रह्मभावापत्तिरूपां मुक्तिमिति यावत् ॥ नाऽऽप्नोतीति वा ॥ मोक्षस्य ज्ञानैकनियतत्वात् ज्ञानस्य च चितशुद्ध्यादिसाधनैकनियतत्वात् चित्तशुद्ध्यादेश्च कर्मयोगैकनियतत्वात् वर्णाश्रमोचितविहितकर्माननुष्ठाने चित्तशुद्ध्यादिद्वारा ज्ञानं तद्द्वारा मोक्षं वा नाप्नोति ॥ २ 'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः'॥ इति श्रुत्या कर्मणो मोक्षसाधनत्वं नास्तीत्युच्यते ॥ उच्यते च मोक्षसाधनत्वं संन्यासाश्रमनियतस्य कर्मसंन्यासस्य ३ 'वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्वाः ॥ ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे'॥ इति श्रुत्या ॥ अतः संन्यास एवाहं नियोज्यः न कर्मयोगे इति चेत् संन्यसनादेव संन्यासमात्रात् चित्तशुद्धिं विना कृतात् केवलात् ज्ञानरहिताद्वा कर्मत्यागात् सिद्धिं ज्ञानयोगनिष्ठारूपं फलं मोक्षं वा न समधिगच्छति प्राप्नोति ॥ न संन्यासस्य मोक्षहेतुत्वं तस्यापि कर्मरूपत्वेन मोक्षहेतुत्वासंभवात् ॥ संन्यासयोगादिति श्रुतेः का गतिरिति चेत् संन्यासः ब्रह्मण्यारोपितनामरूपग्रहणत्यागः ॥ न कर्मत्यागः तस्य यतय इत्यनेनैव सिद्धेः ॥ यतयः संन्यासाश्रमनियतकर्मत्यागवन्तः संन्यासयोगात् ब्रह्मण्यारोपितनामरूपत्यागरूपात् सम्यज्ज्ञानयोगात् मोक्षं प्राप्नुवन्तीति श्रुत्यर्थ ॥ नापि ज्ञाननिष्ठाहेतुत्वं संन्यासस्य ॥ तस्याः चित्तशुद्ध्यादिसाधनान्वयव्यतिरेकानुविधायित्वात् ॥ चित्तशुध्यादेश्च कर्मयोगैकसाध्यत्वात् ॥ कर्मस्वलसतया दुःखबुद्ध्या च कर्मत्यागाय स्वीकृत्य संन्यासाश्रमं कर्मपरित्यागमात्रान् अकृतचित्तशुध्यादिहेतुभूतवेदान्तश्रवणा-

१. ३. १७. २. ना १२. ३. ना १२.

देर्यतेः ज्ञानानुत्पत्तिदर्शनाच्च ॥ संन्यासाश्रमज्ञानयोगयोः कार्यकारणभावाभावे असंन्यासिनो ज्ञानमेव नोत्पद्यते इति प्राचां प्रवादस्य का गतिरिति चेत् स प्रवादः विक्षेपककर्मत्यागरूपसंन्यासविषयः ॥ न तु काषायपरिधानादिमात्रविषयः वसिष्ठादीनां तद्रहितानामपि ज्ञानोत्पत्तिदर्शनात् ॥ अतो ज्ञानार्थं उचितं विहितं कर्म कर्तव्यमेव ॥ 'न कर्मणे' त्यादिश्रुतिस्तु कर्मणो न साक्षान्मोक्षसाधनत्वं ॥ किंतु ज्ञानद्वारा इति वक्ति ॥ अत. चित्तशुध्यादिद्वारा ज्ञानं तद्द्वारा मोक्षं च साधयतः कस्यापि कर्मेतरस्य साधनस्याभावात् कर्मण्येव तव नियोजनमुचितमिति कर्मण्येव त्वं नियोजितोऽसि मयेति सर्वं सुस्थम् ॥ ४ ॥

वि ॥ अर्जुनः ॥ ज्ञानार्थं कर्तव्यं कर्मानुतिष्ठेत्युक्तम् ॥ विनैव कर्मयोगं संपादयामि कथंचित् ज्ञानयोगम् ॥ किं कर्मणा ॥ वद ॥

कृष्णः ॥ लौकिकः पुरुषः शास्त्रे. कर्तव्यतया विहितानां अकाम्यकर्मणां अनारंभात् अननुष्ठानात् निष्कर्मा पर्यवसितकर्मा ज्ञानयोगी ज्ञान एव हि कर्मणः पर्यवसानम् ॥ वक्ष्यते च ॥ १ 'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥' इति ॥ तस्य भावः नैष्कर्म्यं ज्ञानयोगनिष्ठां नाश्नुते न प्राप्नोति ॥ कारणभूतस्य कर्मणोभावात् ॥ युद्धाख्यस्य विहितकर्मणः उपक्रान्तत्वात् रथारोहणकुरुक्षेत्रागमनशंखध्मानधनुरुद्यमनज्यारोपणशरसन्धानपर्यन्तस्य तस्य कृतत्वाच्च कृतमेव कर्म तेनैव ज्ञानयोगः संपद्यते इति चेत् संन्यसनात् आरब्धानां कर्मणां २ परित्यागाच्च नैष्कर्म्यं पुरुषो नाश्नुते ॥ कुत इति चेत् आरब्धस्य कर्मणः परित्यागात् सिद्धिं ३ कर्मसिद्धिं सम्यक् नैव अधिगच्छति ॥ आरब्धस्य समापने हि कर्मसिद्धिः स्यात् ॥ अतः कारणभूतस्य कर्मणोऽसिद्धत्वेन न नैष्कर्म्यसिद्धिः ॥ कर्माभावे परमपुरुषप्रीत्यभाव तदभावे च पापसञ्चयानुपरमः तदनुपरमे च रजस्तमोमयमनोमलानपगमः तदनपगमे च रागद्वेषादिदोषानिवृत्ति तदनिवृत्तौ च नेन्द्रियव्याकुलताशान्तिः तदशान्तौ च न प्रत्यगात्मज्ञाननिष्ठा इति ज्ञानयोगं प्रति

---

१. ४. ३३. २. कर्मणां संन्यासादित्यन्वयः ॥ संन्यसनादित्युक्त्या आरब्धानां इति लभ्यते ॥ ३. नैष्कर्म्येरवानुषंगसंभवेऽपि पुनः सिद्धिपदोपादानात् सिद्धिपदेन कर्मसिद्धिमभिप्रेत्य आवृत्त्या एवं योजना कृता ॥

कर्मयोगस्य कारणत्वेन कर्मणां अनुपक्रमे उपक्रान्तानां मध्यतस्त्यागे वा न ज्ञानयोगसिद्धिः ॥ न हि कारणस्यानुपक्रमे मध्यतस्त्यागे वा कार्योत्पत्तिर्दृश्यते ॥ १ 'नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ॥ स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥' इति, उपक्रान्तस्य मध्ये विच्छिन्नस्यापि फलाधायकत्ववचनं प्रधानफलेतरावान्तरफलजनकत्वाभिप्रायकम् ॥ वक्ष्यते च ॥ २ 'प्राप्य पुण्यकृतां लोका'नित्यादि ॥ आरभ्य समापितं हि एकं कर्म भवति ॥ तथाविधस्य कर्मणो हि नामनिर्देशेन अस्येदं फलमित्युच्यते ॥ आरभ्य असमापितं कर्मैव न भवति ॥ कुतस्तस्य तदीयफलप्रसक्तिः॥ फलमनभिसन्धाय मामेवोद्दिश्य कर्म कर्तुमुपाक्रमतायमिति करुणया किमप्यवान्तरं फलं प्रयच्छति भगवानीश्वरः ॥ वक्ष्यते च ॥ ३ 'न हि कल्याणकृत्कश्चित् दुर्गतिं तात गच्छति ॥' इति ॥ 'प्राप्य पुण्यकृतां लोकान्' इत्यादि च ॥ किंच आरभ्य युद्धं मध्ये पलायनमधर्मः अपलायनं धर्मः ॥ वक्ष्यते च ॥ ४ 'युद्धे चाप्यपलायनम् ॥' इति ॥ अतः उपक्रममात्रस्य फलाधायकत्ववचनं युद्धेतरविषयम् ॥ अतो न तद्विरोधः ॥ किंच 'बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि ॥' इति प्रशस्य 'नेहाभिक्रमनाशोऽस्ति' इति मध्यतो विच्छेदेऽप्युपक्रममात्रस्य फलजनकत्वोक्त्या तद्वचनं दैवादशक्त्यादिना वा आपतितविच्छेदाभिप्रायकम् ॥ अतः सत्यां शक्तौ असत्यामनुपपत्तौ आरब्धं कर्म समापितं चेदेव सफलं भवेत् ॥ अत आरब्धं युद्धमांतमनुष्ठेयं त्वया ज्ञानयोगलाभाय ॥ विना कर्मयोगं ज्ञानयोगमेव साधयामीति च न वक्तव्यम् ॥ सप्तभौमस्य प्रासादस्य सप्तमं तलं प्रथमं चिकीर्षुरिवापहास्यो भविष्यसि ॥ अतो मैवं वादीः ॥ विमृशेदम् ॥ ४ ॥

द्वै ॥ अर्जुनः ॥ आशङ्कितं मुक्तेः कर्माकरणप्राप्यत्वं उक्तविधया परिहृतम् ॥ तथाऽपि प्रकारान्तरेण कर्माकरणप्राप्यत्वं मुक्तेः स्यादेव ॥ कुत इति चेत् कर्म बन्धकत्वान्मोक्षप्रतिबन्धकम् ॥ स्मरन्ति हि ॥ 'कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते ॥ तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः॥' इति॥ कर्म प्रतिबन्धकं तत्करणरूपस्तदभावः प्रतिबन्धकाभावः प्रतिबन्धकाभावः कार्यं प्रति कारणम् ॥ अतः कर्माकरणस्य कारणत्वात्तत्प्राप्यत्वं मुक्तेर्युक्तं ॥ वद ॥

कृष्णः ॥ न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् ॥

१. २. ४०. २. ६ ४१. ३. ६. ४०. ४. १८. ४३.

कार्यते ह्यवशः कर्म [illegible]तेजैर्गुणैः ॥ ५ ॥

न हीति ॥ जातु कदाचिदपि कश्चित् कोऽपि क्षणमपि कर्म करोतीति कर्मकृन् न कर्मकृत् अकर्मकृत् न तिष्ठति ।। हि प्रसिद्धम ॥ न वशः अवशः अस्वतन्त्रः अन्य परमाऽऽत्मनो वशः अधीनः अवशः तादृशः सर्वः प्राणी प्रकृतेः जायन्ते इति प्रकृतिजाः तैः गुणैः सत्वादिभिः कर्म कार्यते ॥ हि प्रसिद्धम ॥ हि यस्मात् तस्मादिति वा ॥ ५ ॥

जातु सर्वावस्थास्वपि क्षणमपि कोऽपि किमपि कर्म अकुर्वन्न तिष्ठति ॥ प्रसिद्धमिदम् ॥ वक्ष्यते च ॥ १ 'न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः ॥' इति ॥ कुतः सदा कर्म कुर्वन्नेव वर्तते इति चेत् सर्वो जनः सात्विको राजसस्तामसो वा प्रकृतेः ईश्वरस्य गुणैरिच्छादिभिः प्रकृतेः जीवस्य गुणैः अदृष्टादिभि प्रकृतेः जडप्रकृतेः गुणैः सत्वादिभिः कर्म कार्यते ॥ कुत इति चेत् अवशः अस्वतन्त्रो हि सः ॥ कस्य वश इति चेत् अवशः अशब्दवाच्यस्य हरेर्वशः ॥ सर्वः अवशः इति प्रथमा तृतीयार्थे ॥ स्वतन्त्रकर्त्रा ईश्वरेण प्रकृतेः गुणैः करणैः अस्वतन्त्रकर्त्रा जीवेन सात्विकं राजसं तामसं वा कर्म कार्यते ॥ अतः अकर्मकृत् कोऽपि न ॥ यदि मुक्तिः कर्माकरणप्राप्या स्यात् तर्हि सर्वेषां सर्वदा कर्मसद्भावात् न कस्यापि मुक्तिरिति मोक्षशास्त्रानर्थक्यम् ॥ अतः प्रतिबन्धकत्वभिया कर्मसामान्यस्य त्यक्तुमशक्यत्वेन कर्तव्यमेव विहितं कर्म ॥ प्रतिबन्धकत्वबोधकस्मृतेः का गतिरिति चेत् २ 'यज्ञार्था'दिति वक्ष्यते ॥ ५ ॥

अ ॥ अर्जुनः ॥ अज्ञस्य अशुद्धचित्तस्य कुतः संन्यसनात् ज्ञानयोगस्य मोक्षस्य वा सिद्धिर्नेत्युच्यते ॥ तद्विविच्य ब्रूहि ॥

कृष्णः ॥ अज्ञस्य संन्यासमभ्युपेत्य संन्यासी भवन्नज्ञः अन्तःकरणाशुद्ध्या ज्ञानाभावान्न मुच्यते इत्युक्तम् ॥ इदानीमज्ञस्य अशुद्धचित्तस्य संन्यास एव न संभवति ॥ अतस्तथोक्तमित्युच्यते ॥ शृणु ॥ जाग्रति स्वप्ने वा कोऽप्यज्ञः क्षणमपि किमपि अन्तर्बहिर्वा कर्म अकुर्वन् न तिष्ठति ॥ हि प्रसिद्धम् ॥ कुत इति चेत्, सर्वः

---

१. १८. ११. २. ३. ९.

प्राणी अज्ञः अवशः अजितेन्द्रियः अस्वतन्त्रो वा सन् प्रकृतेः सकाशात् कार्यरूपेणाभिव्यक्तैः १सत्वादिभिर्गुणैः प्रकृतिः स्वभावः तद्धेतुकैः गुणैः रागद्वेषादिभिर्वा कर्म कञ्चरणादिचेष्टारूपं सात्विकं राजसं तामसं वा कायिकं वाचिकं मानसिकं वा दुर्मनोरथादिकं वा लौकिकं वैदिकं वा बाह्यं आन्तरं वा नानाविधं २ कार्यते ॥ अतः किमप्यकुर्वन्न तिष्ठति ॥ ईदृशस्य कर्माकरणादशुद्धचित्तस्य अज्ञस्य संन्यासाश्रमनियतः कर्मसंन्यास एव न संभवति ॥ अनधिकारेण संन्यासाश्रमस्वीकारस्यैवासंभवात् ॥ अतः संन्यसनादज्ञस्य अशुद्धचित्तस्य ज्ञानयोगो मोक्षो वा नेत्युक्तम् ॥ विदुषः कर्मसंन्यासे अधिकारादज्ञस्यैवात्र संन्यासो निषिध्यते ॥ 'संन्यस्य श्रवणं कुर्या'दित्यादिविविदिषासंन्यासशब्दिताविद्वत्कर्तृकज्ञानाङ्गभूतामुख्यसंन्यासवचनानां का गतिरिति चेन्न अज्ञो द्विविधः शुद्धचित्तः अशुद्धचित्तश्चेति ॥ तत्र अशुद्धचित्तस्य हठात्संन्यासोऽत्र निषिध्यते ॥ एतज्जन्मकृतेन वा जन्मान्तरकृतेन वा कर्मयोगेन शुद्धचित्तस्याज्ञस्य वेदान्तविचारसौकर्याय क्रियमाणो विविदिषासंन्यासो न निषिध्यते ॥ तस्य च कर्मयोगस्य च तारतम्यपरीक्षायां कर्मयोग एव श्रेयानज्ञस्येति ३ 'तयोऽस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते' ॥ इति वक्ष्यते ॥ ५ ॥

त्रि ॥ अर्जुनः ॥ ज्ञानयोगाय कर्तव्यं कर्म त्वयेत्युक्तम् ॥ किं कर्मणा ॥ विनैव कर्मयोगं संपादयामि कथंचित् ज्ञानयोगमिति मयाऽभिहितेन त्वया विनैव कर्मयोगं ज्ञानयोगं संपिपादयिषुस्त्वं सप्तभौमस्य प्रासादस्य प्रथमादीनि तलान्यकृत्वा प्रथममेव सप्तमं तलं चिकीर्षुरिवापहास्यो भविष्यसीति वदता प्रथमादीनि तलानि विना प्रथमं सप्तमतलविरचनमिव विना कर्मयोगं ज्ञानयोगकरणमशक्यमित्युक्तं भवति ॥ कुतस्तथा ॥ तदेवोपपादय ॥

कृष्णः ॥ सर्वोऽपि लौकिकः पुरुषः न किंचित्करोमीति कृतव्यवसायोऽपि प्रकृतिसंभवैः सत्वरजस्तमोगुणैः प्राक्तनकर्मानुगुणं प्रवृत्तैः सात्विकं राजसं तामसं वा तत्तद्गुणोचितं यत्किंचित् कर्म प्रति अवशः अस्वतंत्रः कार्यते प्रवर्त्यते ॥ अतः विविधाधिकारियुक्ते अस्मिन् लोके कश्चिदपि लौकिकः पुरुषः कदाचिदपि

१. द्रव्यवासनाः गुणवासनाः कर्मवासनाः जातिवासनाः रागद्वेषादयश्च गुणाः तैः ॥ इति केचित् ॥ २. व्यर्थं तत्कुर्वन्ति न त्ववश्यानुष्ठेयं सत्कर्म इत्याश्चर्यमेतत् ॥ ३. ५. २.

क्षणमपि किमपि कर्म अकुर्वाणो न तिष्ठति ॥ अतो न कर्मणामनारंभात् आरभ्य त्यागाच्च ज्ञाननिष्ठां नाऽऽप्नोति ॥ अशुद्धचित्तस्य सत्वादिगुणपरतन्त्रतया ज्ञानयोगानर्हस्य लौकिकस्य पुरुषस्य सत्वादिगुणानां मोक्षार्थप्रवृत्त्यनुकूलताऽऽपादनरूपवशीकरणाय कर्मयोग आवश्यकः ॥ उक्तरूपविहितकर्मयोगेन प्राक्तनकुकर्मनाशः ॥ तेन सत्वादिगुणानां उक्तरूपं वशीकरणम् ॥ ततो मोक्षार्थप्रवृत्त्या श्रवणादिभिर्ज्ञानयोगलाभः ॥ इति कर्मयोगस्य प्राक्तनकुकर्मनाशादिद्वारा ज्ञानयोगं प्रति हेतुत्वात् न तेन विना ज्ञानयोगलाभः ॥ अतो ज्ञानाय कर्मानुतिष्ठ ॥ अशक्यं ज्ञानयोगकरणम् विना कर्मयोगात् ॥ ५ ॥

द्वै ॥ अर्जुनः ॥ कर्मसामान्यस्य त्यक्तुमशक्यत्वेन कर्तव्यमेव कर्मेत्युक्तम् ॥ सत्यं सामान्यतः कर्म त्युक्तुमशक्यमेव ॥ अतः कर्मसामान्यं 'कर्मणा बध्यते जन्तु'रिति त्यागशास्त्रविधेरविषयः ॥ 'नाऽशक्ये शास्त्रविधि'रिति न्यायात् ॥ तथाऽपि वर्णाश्रमोचितविहितकर्मणां त्यक्तुं शक्यत्वेन त्यागशास्त्रविधिविषयत्वसंभवात् त्याज्यमेवाकाम्यं कर्म युद्धादिकमिति भाति ॥ ब्रूहि ॥

कृष्णः ॥ कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ॥
इंद्रियार्थान् विमूढाऽऽत्मा मिथ्याऽऽचारः स उच्यते ॥ ६ ॥

यस्त्विन्द्रियाणि मनसा नियम्याऽऽरभतेऽर्जुन ॥
कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते ॥ ७ ॥

कर्मेन्द्रियाणीति ॥ वि विशेषेण मूढः विमूढः आत्मा अन्तःकरणं यस्य सः विमूढाऽऽत्मा यः कर्मणः इन्द्रियाणि कर्मेन्द्रियाणि संयम्य मनसा इन्द्रियाणां अर्थाः इन्द्रियार्थाः तान् स्मरन् सन् आस्ते तिष्ठति ॥ सः मिथ्या आचारो यस्य सः मिथ्याऽऽचारः कपटाऽऽचारः उच्यते ॥ ६ ॥

यस्त्विति ॥ हे अर्जुन यः मनसा इन्द्रियाणि नियम्य कर्मेन्द्रियैः कर्मरूपो योगः कर्मयोगः तं न सक्तः असक्तः सन् आरभते करोति सः तु विशिष्यते श्रेष्ठो भवति ॥ तुशब्दो विशेषसूचकः ॥ ७ ॥

यः कर्माकरणादशुद्धचित्तः कर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थाऽऽख्यानि उपलक्षणया ज्ञानेन्द्रियाणि च चक्षुःश्रोत्रजिह्वाघ्राणत्वगाख्यानि 'इन्द्रियार्थान् मनसा स्मर'न्नित्युक्त्या ज्ञानेन्द्रियाणामपि नियमनमिह विवक्षितम् ॥ नियम्य दर्शनश्रवणादिरूपं प्रवचनपूजनादिरूपं च दर्शनश्रवणस्पर्शनवचनग्रहणादिसाध्यं युद्धादिकं च कर्म त्यक्त्वेति यावत् ॥ इन्द्रियगोचरान् रूपशब्दरसगन्धस्पर्शान् मनसा स्मरन् आस्ते उपविष्टो वर्तते ॥ जितेन्द्रियो महात्माऽयं न किमपि कुर्वन् सुखमास्ते इति द्रष्टॄणां बुद्धिमुत्पादयन् स्वस्मिन्नविद्यमानं महत्वं प्रकाशयन् सः विविधमोहयुक्तमानसः मिथ्याचारः कपटाचारः दांभिक उच्यते ॥ स्वस्मिन्नल्पत्वं ज्ञात्वाऽपि अविद्यमानमहत्त्वप्रदर्शनं दंभः ॥ कस्तर्हि विशिष्यत इति चेत् यः इन्द्रियाणि चक्षुरादीनि मनसा नियम्य मनसा सह चक्षुरादीनि नियम्येति वा स्थातुमिति शेषः ॥ विषयेषु असक्तः सङ्गरहितः फलसङ्गाविरहितः सन्निति यावत् ॥ कर्मयोगं आरभते करोति ॥ 'नेहाभिक्रमनाशोस्ती' त्युक्तरीत्या उपक्रममात्रमपि फलाय भवति ॥ इति सूचनाय आरभत इत्युक्तम् ॥ सः विशिष्यते अतिरिच्यते ॥ यथाधिकारं कर्मकरणोपक्रमात् मनःशुद्ध्या[illegible]स्तया उत्कृष्टो भवति ॥ तुशब्दो विशेषसूचकः ॥ इतरेन्द्रियाणां कथञ्चिन्नियमनेऽपि मनसो नियमनमशक्यम् ॥ अनियमने च तस्य [1]'ध्यायतो विषयान् पुंसः' इत्याद्युक्तरीत्या प्रणाश एवाऽऽत्मनो भवति ॥ अतो मनसः शुद्धिरावश्यकी ॥ शुद्धिश्च मनसः कर्मणैव ॥ तच्च कर्म न चेष्टालक्षणं किंतु विहितं कर्मैव ॥ अतः त्यक्तविहिताकाम्यकर्मयोगः चित्तशुद्ध्याद्यभावेन ज्ञानाभावान्न मोक्षमाप्नोति ॥ प्रत्युत नरकाद्यनर्थमाप्नोति ॥ उक्तं च मया ॥ 'ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते ॥ सङ्गात्संजायते कामः कामात् क्रोधोऽभिजायते ॥ क्रोधाद्भवति संमोहः संमोहात् स्मृतिविभ्रमः ॥ स्मृतिभ्रंशात् बुद्धिनाशः बुद्धिनाशात् प्रणश्यति ॥' इति ॥ आरभमाणस्तु कर्मयोगं चित्तशुद्ध्यादिना ज्ञानलाभान्मोक्षमाप्नोति ॥ उक्तं च मया ॥ 'कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ॥ जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥' इति ॥ वक्ष्यते च ॥ [2]'ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ॥ श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ॥ ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ॥ सर्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतसः ॥' इति ॥ अतो विहितानामकाम्य-

---

१. २. ६२. २. ३. ३१.

कर्मणां त्युक्तुं शक्यत्वेऽपि न त्यागशास्त्रविधिविषयत्वम् ॥ प्रतिबन्धकत्वाद्धि तत्र कर्मणां त्यागो विधीयते ॥ विहितानि तु कर्माणि न मोक्षस्य प्रतिबन्धकानि ॥ किंतु साधकानि ॥ यत्सत्वे कार्यस्यानुत्पत्तिः यदभावे च कार्यस्योत्पत्तिः तत् तस्य प्रतिबन्धकम् ॥ यत्सत्वे कार्यस्योत्पत्तिः यदभावे च कार्यस्यानुत्पत्तिः तत् तस्य साधकम् ॥ कर्मयोगसत्वे चित्तशुद्धिज्ञानद्वारा मोक्षरूपकार्यस्योत्पत्तिः ॥ तदभावे तस्यानुत्पत्तिः ॥ अतः मोक्षं प्रति कर्मयोगस्य साधकत्वेन प्रतिबन्धकत्वाभावात् न विहितकर्मणां त्यागशास्त्रविधिविषयत्वम् ॥ अतः कर्तव्यान्येव विहितानि कर्माणि ॥ मनसा सह इन्द्रियाणि नियन्तुं कर्माऽऽरभते इत्युच्यतामिति चेत् नियम्य असक्तः इत्यन्वयेन फलसङ्गत्यागः इन्द्रियमनोनियमनसाध्यः इत्यर्थसूचनाय नियम्येत्युक्तिः ॥ इन्द्रियमनोनियमनेन फलसङ्गादिरहितकर्मयोग तेन च इन्द्रियमनोनियमनं इत्यन्योन्याश्रय इति चेत् स्थूलनियमनं कर्मयोगकारणं सूक्ष्मनियमनं तु कर्मयोगकार्यं इति विवक्षणान्न दोषः ॥ नियम्य मनः कर्मयोगकरणं ज्ञानिनां संभवति ॥ अतः चित्तशुद्ध्यादिना ज्ञानयोगं प्राप्तस्यापि परोक्षज्ञानिनः तद्दार्ढ्यार्थं तद्वत् अपरोक्षज्ञानार्थं अपरोक्षज्ञानिनः तद्दार्ढ्यार्थं तद्वतः मुक्तावानन्दोत्साहार्थं कर्मयोग आवश्यक इति सूचनाय नियम्येत्युक्तिः ॥ उक्तं चेदं मया ॥ १ 'यदा ते मोहकलिलं' इत्यादिना २ 'तदा योगमवाप्स्यसि ॥' इत्यन्तेन ॥ पार्थेदं स्मर ॥ ६ ॥ ७ ॥

अ ॥ अर्जुनः ॥ अज्ञस्याशुद्धचित्तस्य संन्यास एव न संभवतीत्युक्तम् ॥ तत्कथं ॥ विहाय कर्माणि सुखेन तिष्ठासया कथञ्चिदौत्सुक्यादिना हठात्संन्यासाश्रमस्वीकारस्य कर्तुं शक्यत्वात् ॥ वद ॥

कृष्णः ॥ हे अर्जुन यः अज्ञः विमूढाऽऽत्मा भ्रान्तचित्तः रागद्वेषादिदूषितान्तःकरणः सन् कर्मेन्द्रियाणि संयम्य इन्द्रियाणि दश संयम्य तैः साध्यं कर्म च संयम्य इति वा ॥ संन्यासाश्रमं स्वीकृत्य कर्माणि संन्यस्येति यावत् ॥ मनसा इन्द्रियार्थान् शब्दादीनेव न तु ब्रह्म स्मरन् ध्यायन् आस्ते सः मिथ्याऽऽचारः कपटाऽऽचारः दांभिकः 'त्वंपदार्थविवेकाय संन्यासः सर्वकर्मणां ॥ श्रुत्येहविहितो

---

१. २. ५२. २. २. ५३.

यस्मात् १ तच्चारी पतितो भवेत् ॥' इत्याद्युक्तविधया पापहेतुविपरीताचारो वा उच्यते ॥ यस्त्वज्ञः कर्मयोगे अधिकृतः मनसा इन्द्रियाणि ज्ञानेन्द्रियाणि चक्षुरादीनि नियम्य मनसा सह नियम्येति वा ॥ अत एव असक्तः सन् कर्मेन्द्रियैः वागादिभिः कर्मयोगं आरभते करोति ॥ सः कर्म कुर्वन् औत्सुक्यमात्रेण कृतसंन्यासादज्ञादतिरिच्यते ॥ तुशब्दो विशेषद्योतकः ॥ विशिष्यत इत्युक्त्या चित्तशुद्धिमदज्ञकर्तृकात् विविदिषासंन्यासादपि कर्मयोगः श्रेयानिति सूच्यते ॥ हठात्संन्यासाश्रमस्वीकारस्य पातित्यहेतुत्वेन उत्कर्षावधित्वासंभवात् ॥ न हि पतितादग्निहोत्रादिकं कुर्वन् विशिष्यते इति वदन्ति ॥ किंतु अग्निहोत्रादिकमकुर्वतः सामान्यद्विजादग्निहोत्रादिकं कुर्वन् विशिष्यत इति वदन्ति ॥ स्पष्टं चेदं वक्ष्यते ॥ २ 'तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते ॥' इति ॥ अज्ञेन अशुद्धचित्तेन कथंचिदौत्सुक्यादिना कृतः कर्मसंन्यासः फलाय न भवति ॥ किंतु अन्तःकरणाशुद्ध्या विषयध्यानादिद्वारा नरकाद्यनर्थाय भवति ॥ उक्तं च मया ॥ ३ 'ध्यायतो विषयान् पुंसः' इत्यादि ॥ अज्ञेन कृत कर्मयोगस्तु चित्तशुद्ध्यादिद्वारा ज्ञानमुत्पाद्य तद्द्वारा मोक्षाय भवति ॥ उक्तं च मया ॥ ४ 'कर्मजं बुद्धियुक्ता ही'त्यादि ॥ अतः हठात् संन्यासाश्रमस्वीकारस्य कर्तुं शक्यत्वेऽपि तस्य उक्तविधया पातित्यहेतुत्वादकर्तव्यत्वाऽऽशयेन स न संभवतीत्युक्तं युक्तम ॥ अतः अज्ञस्याशुद्धचित्तस्य तव संन्यासासंभवात् कर्मयोग एवोचित इति त्वं कर्मण्येव नियोजितः ॥ अतस्तदेव कुरु ॥ त्वमर्जुनोऽसि ॥ शास्त्रीयस्य विहितस्य कर्मणोऽकरणे 'करोमि कर्म शुक्लं च तेन मामर्जुनं विदुः ॥' इति त्वया निरुक्तमर्जुननाम तवापगच्छेत् ॥ कथमन्यथा त्वमर्जुनः स्याः ॥ अतः कर्म कुरु ॥ ६ ॥ ७ ॥

वि ॥ अर्जुनः ॥ कर्मयोगकरणं प्राक्तनकुकर्मनाशनद्वारा ज्ञानयोगं साधयतीति करणे साधकमुक्तं ॥ अकरणे बाधकं किमप्यस्ति वा ॥ वद ॥

कृष्णः ॥ हे अर्जुन यः अन्तरेण कर्मयोगं ज्ञानयोगमाप्तुं अशक्तः पुरुषः कर्मेन्द्रियाणि वागादीनि संयम्य कर्मयोगमकृत्वेति यावत् ॥ आत्मज्ञानाय प्रवृत्तः सन् विमूढाऽऽत्मा आत्मावलोकनपराङ्मुखमना· सन् मनसा रूपादीन् विषयान्

१. संन्यस्य श्रवणादिकमकुर्वन् ॥ १. ५. ५. २ ३. ६२. ३ २. ५१

स्मरन् ध्यायन् तिष्ठति ॥ सः मिथ्याऽऽचारः अन्यथा संकल्प्य अन्यथाऽऽचारवत्त्वात् विपरीताऽऽचारः॥ अन्यथात्वमेव हि सर्वत्र सर्वस्य मिथ्यात्वमुच्यते॥ आत्मावलोकनाय प्रवृत्तः तद्विरुद्धाऽऽचारवान् 'ध्यायतो विषया'नित्याद्युक्तविधया विनष्टो भवति ॥ करणे साधकं अकरणे बाधकं चोक्तम् ॥ अस्ति किं सौकर्यं कर्मकरणाय इति चेत् शृणु ॥ यस्तु आत्मावलोकनप्रवृत्तेन मनसा इन्द्रियाणि नियम्य मनसा सह इन्द्रियाणि नियम्येति वा कर्मेन्द्रियैः स्वत एव कर्मसु प्रवृत्तैः इन्द्रियैः पूर्वाभ्यस्तसजातीये शास्त्रीये कर्मणि प्रवर्तितैः फलसङ्गादिरहितः सन् कर्मयोगं आरभते सः पूर्वोक्तात्पुरुषात् विशिष्यते ज्ञानद्वारा आत्मावलोकनासिद्ध्या श्रेयान् भवति ॥ इन्द्रियाणि सर्वाणि स्वत एव स्वस्वकर्मस्वशास्त्रीयेषु प्रवृत्तानि ॥ तेषां पूर्वाभ्यस्तसजातीयेषु शास्त्रीयेषु कर्मसु प्रवर्तनं सुशकम् ॥ विजातीये ज्ञानयोगे प्रवर्तनं तु दुःशकम् ॥ दृढोपलशकलसङ्घट्टनसुदृढीकृते अध्वनि अभ्यस्तसञ्चारस्य वाजिनः तत्सजातीये अन्यस्मिन्नध्वनि प्रवर्तनं सुशकम् ॥ विजातीये पङ्किले शर्करिले सिकतिले वा अध्वनि प्रवर्तनमशक्यं च दृष्टं लोके ॥ एतत्सूचनायैव कर्मसंबन्धित्वमुक्तं इन्द्रियाणां कर्मेन्द्रियैरिति ॥ एवं सौकर्यसत्वाच्च कृत्वैव कर्मयोगं ज्ञानयोगे प्रवर्तितव्यम् ॥ ज्ञानयोगाशक्तस्यैवमस्तु ज्ञानयोगशक्तेन कथं करणीयमिति चेत् ज्ञानयोगशक्तस्यापि कर्मयोगकरणमेव श्रेयः ॥ ज्ञानयोगशक्तत्वेन ज्ञानयोगानिष्ठादपि ज्ञानयोगशक्तोऽपि कर्मयोगं कुर्वन् विशिष्टो भवति॥ अतएव विशिष्यते इति कर्मयोगिनः प्रशंसा क्रियते ॥ न हि निन्दितानिन्दितकर्मकारिणोरुभयोर्मध्ये कश्चन प्रशस्यते ॥ किंतु अनिन्दितविहितकर्मकारिणोर्मध्ये सुकरस्याप्रमादस्य नियतफलकस्य शीघ्रफलप्रदस्य कर्मणः कर्ता प्रशस्यते । ज्ञानयोगो दुष्करः संभाव्यमानप्रमादः अनियतफलकः विलंबेन फलप्रदः ॥ कर्मयोगस्तु उक्तरीत्या सुकरः असंभाव्यमानप्रमादः नियतफलकः अविलंबेन फलप्रदः ॥ अतः सत्यामपि ज्ञानयोगानुष्ठानशक्तौ यः सौकर्यासौकर्यप्रमादाप्रमादफलनैयत्यानैयत्यशैघ्र्याशैघ्र्यपर्यालोचनेन अकृत्वा ज्ञानयोगनिष्ठाप्रवृत्तिं कर्मयोग एव प्रवर्तते सः ज्ञानयोगनिष्ठाप्रवृत्तादपि उक्तहेतुभिर्वरिष्ठो भवति ॥ अतो ज्ञानयोगनिष्ठाशक्तेन तदशक्तेन वा त्वया कर्मयोग एव प्रवर्तितव्यमिति मया त्वं तत्रैव नियोजित इति 'ज्यायसी चेत्कर्मण' इत्यादेः सम्यगुत्तरं दत्तमित्यवधेहि ॥ ६ ॥ ७ ॥

द्वै ॥ अ ॥ अर्जुनः ॥ अस्त्वेवमखिलं ततः किं प्रकृते ॥ ब्रूहि ॥

कृष्णः ॥ नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः ॥
शरीरयात्राऽपि च ते न प्रसिध्येदकर्मणः ॥ ८ ॥

नियतमिति ॥ त्वं नियतं विहितं कर्म कुरु ॥ कर्मणोऽभावः अकर्म कर्माकरणं तस्मात् कर्म विहितं कर्म कर्म करणं वा ज्यायः श्रेष्ठं ॥ हि प्रसिद्धं ॥ हि यस्मात् तस्मात् इति वा ॥ अकर्मणः कर्माकरणात् ते तव शरीरस्य यात्रा रक्षणं साऽपि न प्र प्रकर्षेण सिध्येत् ॥ न विद्यन्ते कर्माणि यस्य सः अकर्मा तस्य अकर्मणः तादृशस्य तव इति वा ॥ न कर्म अकर्म ज्ञानं तस्मात् अकर्मणः ज्ञानयोगात् कर्म ज्यायः इति वा ॥ ८ ॥

मोक्षहेतुज्ञानसाधनभूतायाः चित्तशुद्धेः कर्मयोगैकसाध्यत्वात् त्वं कर्म कुरु ॥ करोमि कर्मयोगं युद्धं केवलं मास्तु इति चेत् नियतं वर्णाश्रमानुरोधेन विहितं यत् तदेव नियतं नियमेन कर्तव्यम् ॥ वक्ष्यते च ॥ १ 'श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् ॥ स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥' इति ॥ २ 'श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् ॥ स्वभावनियतं कर्म कुर्वन्नाऽऽप्नोति किल्बिषं ॥' इति च ॥ विहितं तु तव क्षत्रियस्याऽऽधिकारिकस्य युद्धमेव ॥ कर्मकरणाभ्युपगमे युद्धमेव शिरसि मे निपतति ॥ अतः कर्मैव मास्त्विति चेत् अकर्मणः कर्मणोऽकरणात् कर्म उक्तरीत्या ज्यायः श्रेष्ठम् ॥ उक्तं हि मया ॥ 'न च संन्यसनादेव सिद्धिं समधिगच्छति ॥' इति ॥ अस्तु यद्वा तद्वा यथा तथा वा ॥ नांगीकुर्यामहं युद्धमिति चेत् अकर्मणः हिंसात्मकं कर्मेदमिति युद्धरूपं कर्म अकुर्वतस्तव शरीररक्षणमपि न प्र प्रकर्षेण स्वधर्मवृत्त्या सिध्येत् ॥ कर्माकरणात् न केवलमन्तःकरणशुद्ध्यलाभमात्रम् ॥ किंतु शरीरयात्रानिर्वाहासिद्धिरपि ॥ अनेनापि हेतुना कर्म कर्तव्यम् ॥ शरीरयात्रायाः धनार्जनतण्डुललवणाद्याहरणपाकभोजनादिव्यापार..त्रसाध्यत्वेन तदर्थं कुतो युद्धमनुष्ठेयमिति चेत् हिंसातो बिभ्यत्त्वं यदि युद्धं तित्यक्षसि तर्हि सर्वाण्यपि शरीरयात्रानिर्वाहार्थानि कर्माणि त्वया त्यक्तव्यानि ॥ सर्वेषामपि यथाकथा वाऽपि विधया दुष्टत्वात् ॥ ततश्च तव शरीरयात्रानिर्वाहो न सिध्येत् ॥ स-

१. ३. ३५. २. १८. ४७.

र्थं,'दुष्टत्वसाम्येऽपि मदिष्टैरकष्टैरन्यैरेव शरीरयात्रानिर्वाहो भविष्यति ॥ किमनिष्टेन कष्टेन युद्धेन इति चेत् शरीरस्य जडत्वनाशिष्णुत्वादिदोषदुष्टत्वेऽपि 'शरीरमाद्यं खलु धर्मसाधन'मित्याद्युक्तविधया ऐहिकामुष्मिकसर्वश्रेयःसाधनधर्मानुष्ठानसाधनत्वादात्मरक्षणहेतुत्वेन तद्रक्षणार्थानां कर्मणां करणमङ्गीकुर्वता त्वया शरीरनाशेऽप्यविनश्यतश्चेतनस्याऽऽत्मनो रक्षणार्थानां वर्णाश्रमोचितविहितकर्मणां करणमवश्यमभ्युपगन्तव्यमेव ॥ हिंसादोषदुष्टमन्तरेण युद्धमन्यान्यभ्युपगच्छामीति चेत् युद्धस्येव सर्वेषामपि विहितकर्मणां दुष्टत्वात् ॥ वक्ष्यते च ॥ १ 'सर्वाऽऽरम्भा हि दोषेण धूमेनाग्निरिवाऽऽवृताः ॥' इति ॥ सर्वेषामपि दुष्टत्वेन युद्धादनिष्टादिष्टमन्यदेव किमप्यस्तु इति चेत् दुष्टत्वेऽपि स्वभावनियतत्वरूपविशेषसत्त्वेन स्वस्य यद्विहितं तदेव कर्तव्यम् ॥ तत्करणस्याऽऽवश्यकत्वात् ॥ तस्यात्याज्यत्वात् ॥ तत्करणे प्रत्यवायाभावाच्च ॥ वक्ष्यते च ॥ २ 'स्वे स्वे कर्मण्यभिरत संसिद्धिं लभते नरः ॥' ३ 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥' ४ 'स्वभावनियतं कर्म कुर्वन्नाऽऽप्नोति किल्बिषम् ॥' ५ 'सहजं कर्म कौन्तेय सदोषमपि न त्यजेत् ॥' इत्यादि ॥ अतो यद्विहितं युद्धं तदेवावश्यं कुरु ॥

'कर्मणा बध्यते जन्तु'रित्यादित्यागशास्त्रेण कर्मणां बन्धकत्वावगमादकरणमेव तेषां वरं करणात् ॥ सति चैवं कथमुच्यते 'कर्म ज्यायो ह्यकर्मणः ॥' इति ॥ इति चेत् त्यागशास्त्रगतकर्मशब्दस्य असंकुचितवृत्तित्वमभ्युपेत्य कर्मसामान्यत्यागे तव शरीरयात्राऽपि न सिध्येत् ॥ असंकुचितवृत्तित्वे 'न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृ'दिति कर्मसामान्यस्य त्यक्तुमशक्यत्वमेकं बाधकमुक्तम् ॥ शरीरयात्राऽसिद्धिरूपमपरं बाधकमनेनोच्यते ॥ एवं बाधकद्वयसद्भावात् संकुचितवृत्तित्वमभ्युपेत्य त्यागशास्त्रस्य गतिर्वाच्या ॥ गतिस्त्वनुपदं वक्ष्यते ॥ ८ ॥

अ ॥ हे अर्जुन त्वं ६ नियतं विहितं कर्म युद्धादिकं कुरु ॥ अकर्मणः कर्म करणं अकर्म अकरणं अननुष्ठानात् कर्म करणं कर्मानुष्ठानं ज्यायः श्रेष्ठं ॥ अतः कुरु ॥ अकर्मणः कर्माकरणात् कर्म विहितमकाम्यं कर्म श्रेष्ठं ॥ न विद्यते कर्म येन यस्मिन्वा सः अकर्मा कर्मसंन्यासः तस्मात् अन्तःकरणाशुद्धिमद्विद्वत्कर्तृकात् कर्म श्रेष्ठं ॥ अतः कर्म कुरु ॥ इति वा ॥ कुतः अकर्मणः कर्म ज्यायः इति चेत् अकर्मणः

१. १८. ४८. २. १८. ४५. ३. १८. ४६. ४. १८. ४७. ५. १८. ४८. ६. नियमेन इति वा।

पंचमी कर्माकरणात् तव शरीररक्षणमपि च न प्रसिध्येत् न जायेत ॥ करचरणादि-चेष्टासाध्यगमनादानादिव्यापारकरणे हि शरीरमवतिष्ठत ॥ नान्यथा ॥ अकरणात् शरीरयात्रैव न सिध्येत् किमुत प्रयोजनान्तरं ॥ अतः अकरणात्करणं ज्यायः ॥ अतः कुरु ॥ 'अकर्मणः पंचमी' कर्मसंन्यासात् तव शरीरयात्राऽपि न सिध्येत् ॥ अनात्मभूतशरीररक्षणार्थानां कर्मणां कर्तव्यत्वाभ्युपगमे जननमरणप्रवाहे पतित्वा मुहुर्मुहुः क्लिश्यत आत्मनः ज्ञानद्वारा संसारसागरादुद्धरणरूपस्य परित्राणस्य ततोऽप्यावश्यकतया तदर्थानां विहितानां युद्धादीनां कर्मणां कर्तव्यत्वं सुतराम-भ्युपगन्तव्यं त्वया ॥ वक्ष्यते च ॥ १ 'उद्धरेदात्मनाऽऽत्मानं नाऽऽत्मानमवसादयेत्॥' इति ॥ अतः कर्मसंन्यासात् कर्मकरणं वरं ॥ अतः विहितं कर्म कुरु ॥ अकर्मा बहुव्रीहि षष्ठी युद्धादिविहितकर्मरहितस्य तव शरीरयात्राऽपि न प्रकर्षेण सिध्येत्॥ भिक्ष्याशनादिना कथञ्चित् सिध्येत ॥ न तथा शरीररक्षणं प्रशस्तं क्षत्रियस्य तव ॥ अतो युद्धादिविहितकर्म तदकरणात् ज्यायः ॥ अतः अशुद्धान्तःकरणः त्वं विहितं अकाम्यं युद्धादिकं कर्म कुरु ॥ ८ ॥

वि ॥ अर्जुनः ॥ ज्ञानस्य कर्मापेक्षया ज्यायस्त्वात्तदेव मे वक्तुमुचितं सति चैवं अवरे कर्मणि कुतो मां नियोजयसीति मया पृष्टेन वस्तुतः कर्मणोऽवरत्वात्, तस्य ज्यायस्त्वाच्चैवं तत्र मया नियोज्यसे इति वक्तुमपारयता भवता तस्य साक्षादु-त्तरमनभिधाय प्रकारान्तरेण किमपि किमपि अन्यदेवोच्यते ॥ साक्षादुत्तरं ब्रूहि ॥ किञ्च ज्ञानयोगाशक्तेन ज्ञानार्थं कर्म कर्तव्यमिति वक्तुं युक्तम् ॥ उक्तं च त्वयाऽपि तथैव ॥ २ 'न कर्मणामनारंभान्नैष्कर्म्यं पुरुषोऽश्नुते ॥' इत्यादि वदता ॥ उत्कृष्टे ज्ञानयोगे प्रवर्तितुं शक्तः कुतस्तस्मादवरे कर्मयोगे प्रवर्तेत ॥ अतः ज्ञानयोगशक्त्येन ज्ञानयोगे प्रवर्तमानादपि यः ज्ञानयोगशक्तोऽपि उक्तहेतुभिः कर्मयोग एव प्रवर्तेत स विशिष्यत इति वचनं अनुचितम ॥ अतो युक्तमुत्तरं ब्रूहि ॥

कृष्णः ॥ हे पार्थ ज्ञानयोगशक्तोऽपि त्वं कर्मैव कुरु ॥ कुतः सत्यामपि ज्ञान-योगकरणशक्तौ कर्मैव कुरु इत्युच्यते इति चेत प्रकृतिसंसृष्टस्य तव कर्मैव हि नियतं अभ्यस्ततया व्याप्तं पूर्वाभ्यस्तसजातीये प्रवर्तनमिन्द्रियाणां सुकरमिति

१. ६. ५ २. ३. ४

चोक्तम् ॥ पूर्वमनभ्यस्तात् पूर्वाभ्यस्तकर्मविजातीयात् अकर्मशब्दितात् ज्ञानयोगादपि पूर्वाभ्यस्तसजातीयं कर्म श्रेष्ठम् ॥ सुकरत्वात् अप्रमादत्वात् अन्तर्गताऽऽत्मयाथात्म्यज्ञानकत्वाच्च ॥ अतः ज्ञानयोगशक्तेनापि त्वया सुकरत्वादिगुणयुक्तं कर्मैव कर्तव्यं ॥ अवरत्वात्कर्मयोगस्य तत्र किं मां नियोजयसीति त्वं मामप्राक्षीः ॥ ज्यायस्त्वात्कर्मयोगस्य त्वं तत्र नियोज्यसे इत्युत्तरं दत्तमवधेहि ॥ दुष्करेऽपि ज्ञानयोगे महता प्रयत्नेन प्रवर्तेय न कुर्यां कर्मयोगं इति चेत् अकर्मणः युद्धादिस्वोचितविहितकर्मरहितस्य तव शरीरस्थितिर्न प्रसिध्येत् ॥ १ अतोऽपि कर्म कर्तव्यम् ॥ २ शरीरयात्राऽपि न सिध्येत् किं पुनः ऐहिकामुष्मिकसुखसाधनसाधनानि ॥ येनकेनापि लौकिकेन कर्मणा शरीरयात्रानिर्वाहः सिध्येदिति चेत् सिध्येदेव ॥ तत्तु शरीरधारणं न प्रशस्तम् ॥ किंतु युद्धादिस्वोचितविहितकर्मकरणात् न्यायार्जितेन द्रव्येण पंचमहायज्ञानिष्ठा तच्छिष्टाशनेन ज्ञानार्थिना शरीरधारणं कार्यं ॥ तदेव तस्य प्रशस्तम् ॥ यज्ञशिष्टाशनेन शरीरधारणस्य प्राशस्त्यं वक्ष्यते ॥ '३ यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः ॥' ४ 'यज्ञशिष्टामृतभुजो यान्ति ब्रह्मसनातनम् ॥' इति ॥ अन्यथा शरीरयात्रानिर्वाहे प्रत्यवायश्च वक्ष्यते ॥ ५ 'भुंजते ते त्वघं पापा ये पचन्त्यात्मकारणात्' ॥ इति ॥ ६ 'नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम' ॥ इति च ॥ मास्तु मे शरीरयात्रेति तु न वक्तुं शक्यम् ॥ ज्ञानार्थिनो ज्ञानयोगशक्तस्य ज्ञानसाधनसाधनाय शरीरधारणस्याऽऽवश्यकत्वात् ॥ शरीरमाद्यं खलु धर्मसाधनमिति हि वदन्ति ॥ ज्ञाननिष्ठेनापि शरीरयात्रानिर्वाहार्थमवश्यमनुष्ठेयत्वात् अन्तर्गताऽऽत्मयाथात्म्यज्ञानकत्वात् पूर्वाभ्यस्तकर्मसजातीयत्वात् सुकरत्वात् अप्रमादत्वाच्च कर्मणः ७ ज्ञानयोगनिष्ठायोग्योऽपि त्वं कर्मैव कुरु ॥ ज्ञानयोगशक्तेनापि कर्मैव कर्तव्यम् । किंपुनः ८ ज्ञानयोगाशक्तेन त्वया इत्युभयथाऽपि तव कर्मणि नियोजनमुचितम् ॥ अतो युद्धाख्यं कर्म कर्तव्यमेव त्वया ॥ मान्यथा मंस्थाः ॥ ८ ॥

द्वै॥ अर्जुनः॥ कर्मणा बध्यते जन्तुरित्यत्र कर्मपदेन कर्मसामान्यग्रहणे कर्मसामान्यस्य त्यक्तुमशक्यत्वमेकं बाधकमुक्तम् ॥ 'न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृ'-

१. अपिशब्दार्थः ॥ २. च शब्दार्थः ॥ ३. ३. १३. ४. ४. ३१. ५. ३. १३. ६. ४. ३१. ७. ८. त्वंशब्दस्य उभयथाऽप्यभिप्रायः ॥

त्यत्र ॥ 'शरीरयात्रानिर्वाहानुपपत्तिरूपमपरं बाधकमुक्तम् ॥ शरीरयात्राऽपि च ते न प्रसिध्येदकर्मणः ॥' इत्यत्र ॥ एवं बाधकद्वयसद्भावेन कर्मसामान्यनिषेधकत्वाभावे का गतिस्तस्य वचनस्य ॥ गतिस्त्वनुपदं वक्ष्यते इत्युक्तम् ॥ तां गतिं वद ॥

कृष्णः ॥ यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ॥
तदर्थं कर्म कौन्तेय मुक्तसङ्गस्समाचर ॥ ९ ॥

यज्ञार्थादिति ॥ हे कौन्तेय पार्थ अयं लोकः जनः यज्ञः भगवान् विष्णुः तदाराधनं वा तस्मै इदं यज्ञार्थं तस्मात् यज्ञः अर्थः प्रयोजनं यस्य तत् यज्ञार्थं तस्मात् इति वा ॥ कर्मणः अन्यत्र अन्यस्मिन् कर्मणि विषये कर्म बन्धनं बन्धकं यस्य सः कर्मबन्धनः ॥ तस्मै इदं तदर्थं सः यज्ञः अर्थः प्रयोजनं यस्य तत् तदर्थं कर्म मुक्तः त्यक्तः संगः फलेच्छादिरूपः येन सः मुक्तसंगः सन् सं सम्यक् आचर कुरु ॥ ९ ॥

न कर्मसामान्यं बन्धकं 'कर्मणा बध्यते जन्तु'रिति सामान्यत उच्यत इति चेत् भगवदुद्देशेन कृतादकाम्यकर्मणोऽन्यस्मिन् कर्मणि विषये अयं कर्मकृत् जनः कर्मणा १ बध्यते ॥ अवैष्णवं काम्यं च कर्म बन्धकम् ॥ यज्ञो नाम भगवान् ॥ २ 'यज्ञो वै विष्णुः' ॥ इति श्रुतिः ॥ हे पार्थ तस्य भगवतः प्रीत्यर्थं फलापेक्षारहितः कर्तव्यं कर्म सम्यगाचर ॥ यः यातः प्राप्तः ज्ञः सर्वज्ञः विष्णुर्येन स उद्देशो यज्ञ तस्मै इदं तदर्थं विष्णूद्देशार्थं तस्मात् अन्यत्र अन्योद्देशार्थे कर्मणि विषये लोकोऽयं कर्मबन्धनः ॥ तदर्थं विष्णूद्देशार्थं कर्म पार्थ सङ्गरहितः सम्यगनुतिष्ठेति वा ॥ एवं अवैष्णवकाम्यकर्मनिषेधकतया वचनस्य चारितार्थ्यात् न कर्मसामान्यनिषेधकं तद्वचनम् ॥ वंशशुद्धया कर्मणा ज्ञानयोगार्होऽसि ॥ अतो निःशङ्कं कर्तव्यं कर्म कुरु ॥ ९ ॥

अ ॥ अर्जुनः ॥ नियतं कर्म कुर्वित्युक्तम् ॥ कर्मणा बध्यते जन्तुः विद्यया च विमुच्यते ॥ तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः ॥ इति कर्मणो बंधकत्वमुक्तमभियुक्तैः ॥ तद्वचनविरुद्धे त्वद्वचने न मम श्रद्धा निष्पाति ॥ अविरोधेन ब्रूहि ॥

कृष्णः ॥ यज्ञशब्दितविष्णुप्रीत्यर्थं क्रियमाणात् यज्ञशब्दितो भगवानेव अर्थः योजनं यस्य तस्मात् भगवदेकप्रयोजनकात् तदन्यप्रयोजनरहितात् इति वा ॥

१. कर्म बन्धनं बन्धकं यस्य सः कर्मबन्धनः ॥ २. तै आ. ३. १. ६.

अन्यकर्मैव बन्धकम् ॥ भगवदन्योद्देश्यकं भगवदुद्देश्यकमपि काम्यं कर्म बन्धकम् ॥ न कर्मसामान्यम् ॥ कर्मणेत्यादिवचनं तु भगवदन्योद्देश्यककाम्यकर्मनिषेधकम् ॥ अतो न विरोधः ॥ अतो यज्ञशब्दितभगवत्प्रीत्यर्थं कर्मफलकामनादिरहितस्सम्यगनुतिष्ठ ॥ ९ ॥

वि ॥ अर्जुनः ॥ न्यायार्जितेन द्रव्येण पञ्चमहायज्ञानिष्ट्वा तच्छिष्टेन शरीरधारणस्य कर्तव्यत्वात् न्यायेन धनार्जनार्थं युद्धादिकं कर्म कुर्वित्युक्तं ॥ द्रव्यार्जनादेः कर्मणः अहंकारममकारगर्भत्वेन बन्धनं खलु कर्मवासनया स्यात् ॥ अतः कथमुच्यते द्रव्यार्जनार्थं युद्धं कुर्विति ॥ वद ॥

कृष्णः ॥ यज्ञतदुपलक्षितशास्त्रीयकर्मशेषभूतात् द्रव्यार्जनादेः कर्मणोऽन्यत्र आत्मीयप्रयोजनशेषभूते द्रव्यार्जनादौ कर्मणि प्रवृत्तोऽयं जनः तेन कर्मणा बध्यते ॥ भगवद्भागवताऽऽराधनाय धनं संपादनीयमिति बुद्ध्या धनार्जनं न बन्धकम् ॥ कलत्रपुत्रमित्रादिभरणाय धनं संपादनीयमिति बुद्ध्या धनार्जनं तु १बन्धकम् ॥ अतः तादृशधनार्जनाय युद्धादिकं कुर्वित्युक्तं युक्तम् ॥ अत हे पार्थ तदर्थं यज्ञादिशास्त्रीयकर्मकरणार्थं धनार्जनादिकं कर्म आत्मात्मीयप्रयोजनशेषताबुद्धिरूपसङ्गात् मुक्तः सन् सम्यक् निःशङ्कमाचर ॥ तस्य अबन्धकत्वात् ॥ द्रव्यार्जनेन यज्ञादिकं तेन च भगवदाराधनं तेन च अनादिकालप्रवृत्तायाः कर्मवासनायाः समूलमुच्छेदः ततो ज्ञानयोगनिष्ठा तया चाऽऽत्मावलोकनं इत्यात्मावलोकननिदानत्वाद्द्रव्यार्जनादेः तत्साधनभूते युद्धाख्ये कर्मणि तव नियोजनमुचितम् ॥ अतस्त्वं तदर्थं युद्धादिकं कर्म कुरु ॥ ९ ॥

अर्जुनः ॥ 'कर्मणा बध्यते जन्तु'रिति बाधकवचनस्य शरीररक्षणाद्यर्थान्यावैष्णवकाम्यकर्मनिषेधपरतया सार्थक्यमुक्त्वा भगवत्प्रीत्यर्थं कर्तव्यं कर्म कुर्विति मामन्वशास्त्वम् ॥ किं तवैव वचनात् कर्तव्यं कर्म उत यस्यकस्यचित् महतः प्रामाणिकस्य वचनादपि ॥ किं कर्मकरणविषयं तादृशं प्रमाणमस्ति ॥ अस्ति चेत् ब्रूहि ॥

धृतराष्ट्रः

किमेवमर्जुनेन पृष्टो भगवानकरोत् ॥ किं सर्वज्ञेन भगवता मया उच्यमानेऽर्थे मूलप्रमाणमपेक्षते अनुचितमेतत् इतिचामंस्त ॥ वद ॥

---

१. कर्म बन्धनं बन्धकं यस्येति वा कर्मणा बन्धनं यस्येति वा कर्मबन्धनः ॥

सञ्जयः

पार्थेनैवमनुयुक्तोऽपि नाकुप्यत् भगवान् ॥ नापगतोऽस्य मोह एतावतोपदेशेन ॥ अत एव १ 'व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे ॥' इत्याह ॥ न मन्यते मामीश्वरम ॥ अस्तु का हानिः ॥ अपगते मोहसन्तमसे स्वयमेव विवेकबुद्धिः प्रकाशिष्यते ॥ किमस्य पुरतो ममेश्वरत्वख्यापनेन ॥ मूलप्रमाणोपन्यासेन विस्रंभमस्योत्पादयामीति मन्वानः प्रकृतकर्मयोगविषये करणाकरणस्तुतिनिन्दागर्भं २ उपाख्यानमाह ॥

कृष्णः ॥ ३सहयज्ञाः प्रजास्सृष्ट्वा पुरोवाच प्रजापतिः ॥
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥ १० ॥

देवान् भावयतानेन ते देवा भावयन्तु वः ॥
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥ ११ ॥

इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः ॥
तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ॥ १२ ॥

यज्ञशिष्टाशिनस्सन्तो मुच्यन्ते सर्वकिल्बिषैः ॥
भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥ १३ ॥

---

१. ३. २. २ अर्थवादः प्राशस्त्यवचनं ॥ स चतुर्विधः ॥ स्तुतिरूपः निन्दारूपः परकृतिरूपः पुराकल्परूपश्चेति ॥ स्तुतिनिन्दे प्रसिद्धे ॥ परकृतिरेककर्तृकोपाख्यानं ॥ यथा 'जनको ह वैदेह आसांचक्रे' इत्यादि ॥ बहुकर्तृकोपाख्यानं पुराकल्पः ॥ यथा 'त्रयो हो ह्रीथे कुशला बभूवुः ॥' इत्यादि ॥ अत्र 'एष वोऽस्त्विष्टकामधुक्' इति 'इष्टान् भोगान् दास्यन्ते' इति 'सर्वकिल्बिषैर्मुच्यन्ते' इति च स्तुतिः ॥ 'स्तेन एव स' इति 'भुंजते ते त्वघं पापाः' इति च निन्दा ॥ 'पुरोवाच प्रजापतिः' इति परकृतिः ॥ 'देवाः भोगान् दास्यन्ते इति यज्ञशिष्टाशिनः सन्तो मुच्यंते' इति च पुराकल्पः ॥ पूर्वैः कृतमिति सामान्योक्तिः पुराकल्पः ॥ अनेनेदं कृतमिति नामनिर्देशपूर्वमुक्तिः परकृतिः ॥ इति केचित् ॥ दृष्टान्ततया परस्य कृतिः परकृतिः ॥ प्रमाणतया पूर्वाचार्याणां कल्पः कल्पना आज्ञा पुराकल्पः ॥ इति वादिराजस्वामिनः ॥ ३. द्वै ॥ अ ॥ 'सहयज्ञा' इति पाठः ॥ प्रजा इत्यस्य विशेषणं ॥ वि ॥ 'सह यज्ञै'रिति पाठः ॥ असंकुचितमुख्यवृत्त्या प्रजापतिरत्र नारायणः ॥

सहेति ॥ प्रजानां पतिः प्रजापतिः ब्रह्मा नारायणो वा पुरा पूर्वं यज्ञैः देवताऽऽराधनभूतैः स्वस्वकर्मभिः सह वर्तन्ते इति सहयज्ञाः प्रजाः सृष्ट्वा उवाच ॥ अनेन प्रसविष्यध्वं उत्पादयध्वं ॥ एषः यज्ञः वः युष्माकं इष्टाश्च ते कामाश्च इष्टकामाः तान् दोग्धीति इष्टकामधुक् अस्तु ॥ अनेन देवान भावयत आराधयत ॥ ते देवाः वः युष्मान् भावयन्तु रक्षन्तु ॥ परस्परं भावयन्तः प्रीणयन्तः सन्तः परं श्रेयः अवाप्स्यथ ॥ यज्ञैः भाविताः आराधिताः यज्ञभाविताः देवाः वः युष्मभ्यं इष्टान् भोगान् दास्यन्ते ॥ तैः दत्तान् एभ्यः देवेभ्यः अप्रदाय अदत्वा यः भुङ्क्ते सः स्तेनः चोर एव ॥ हि प्रसिद्धम् ॥ यज्ञेभ्यः शिष्टं यज्ञशिष्टं यज्ञाशिष्टं अश्नन्तीति यज्ञशिष्टाशिनः सन्तः सर्वाणि च तानि किल्बिषाणि च सर्वकिल्बिषाणि तैः मुच्यन्ते ॥ ये आत्मनः कारणं आत्मकारणं तस्मात् पचन्ति पाकं कुर्वन्ति कारयन्ति च पापं एषां अस्तीति पापाः पापिनः ते अघं पापं तु पापमेव भुञ्जते ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥

पार्थ न केवलं ममैव वचनात्कर्मणः कर्तव्यत्वं किंतु महतः प्रामाणिकस्य वचनादपि ॥ स च महान् न यः कोऽपि ॥ किंतु प्रजापतिशब्दितः वेधाः वासुदेवो वा ॥ सः कदा कं प्रति किमुवाचेति चेत् प्रजापतिः सृष्ट्यादिकाले प्रजाः सृष्ट्वा तत्क्षेमाय तत्तदनुष्ठेयानि विहितकर्माणि च सृष्ट्वा ताश्च रक्ष्यरक्षककक्ष्याभेदेन द्वेधा स्थापयित्वा उवाच ॥ किमुवाचेति चेत् हे रक्ष्याः रक्षकाश्च शृणुतेमां मदीयां वाचं ॥ सृष्टानां युष्माकं क्षेमाय यज्ञशब्दितो विहितो धर्मः प्रकल्प्य दत्तोऽस्ति ॥ अनेन यज्ञेन यूयं प्रसविष्यध्वं इष्टमुत्पादयध्वं ॥ उत्पन्नं च तदभिवर्धयध्वं ॥ प्रसवः उत्पत्तिः अभिवृद्धिश्च ॥ उत्पादने अभिवर्धने च वयं न प्रभवामः इति चेत् वयमनुगृह्णीमः ॥ एषः यज्ञः युष्माकं अभीष्टविषयप्रदो भूयात् ॥ सकामानां स्वर्गपशुपुत्रादिकामितविषयलाभाय निष्कामानां ज्ञानप्रतिबन्धकदुरितक्षयाय च भूयात् ॥ १मोक्षरूपकामस्य तदनुगुणानां

---

१. 'अपि त्रैलोक्यराज्यस्य हेतोः किंनु महीकृते' (१. ३५.) 'अवाप्य भूमावसपत्नमृद्धं राज्यं सुराणामपि चाधिपत्यम् ॥' (२. ८.) इत्यादिना स्वर्गादिकं तृणाय मन्यमानमर्जुनं प्रति स्वर्गादेः फलत्वप्रतिपादनानौचित्यात् परं श्रेय इति विशेष्यविवरणाच्च मोक्ष एव विवक्षितः ॥

च कामानां प्रपूरको भवतु इति वा ॥ यो विहितं कर्मानुतिष्ठति तं तदिष्टकामदोहनेन पुष्णातु इत्यहमनुगृह्णामि ॥ कथमचेतनोऽयं यज्ञः इष्टान् कामान् दुह्यात् ॥ क्षणिकक्रियारूपो यज्ञशब्दित आवश्यको धर्मः कथं कालान्तरभावि फलं साधयेत् ॥ १ 'नान्यः पन्था अयनाय विद्यते' इति ज्ञानेतरस्य मोक्षसाधनत्वनिषेधात् कथं मोक्षप्रदोऽस्तु इत्युच्यते इति चेत् एवं ॥ हे रक्ष्याः प्रजाः यूयं अनेन तत्तद्दैवतोद्देश्यकविहितकर्मरूपेण यज्ञेन तांस्तान् देवान् मच्छरीरभूतान् मत्परिवारभूतान् मदात्मकान् भावयत तर्पयत हविर्दानेन वर्धयत सन्तुष्टान् कुरुत ॥ संतुष्टाश्च ते देवा वः भावयन्तु वृष्ट्याद्युत्पादनेन वर्धयन्तु ॥ विधौ लोट् ॥ एवं यूयं देवाश्च परस्परं भावयन्तः उपकारेण तोषयन्तः परमं श्रेयः प्राप्स्यथ ॥ स्वस्वविहितकर्मकरणसन्तुष्टदेवताप्रसादेन ज्ञानद्वारा मोक्षं रक्ष्याः, भगवदाज्ञया स्वरक्ष्यरक्षणरूपविहितकर्मकरणसन्तुष्टभगवत्प्रसादेन मोक्षं रक्षका देवाश्च प्राप्नुवन्तु इत्याशयेनैव भवन्तो मया सहयज्ञाः सृष्टाः ॥ परं श्रेयः ज्ञानद्वारा मोक्षं २ स्वर्गं वा इति वा ॥ परं उत्कृष्टं श्रेयः अभीष्टं अर्थं इति वा ॥ परं उत्कृष्टं श्रेयः देवा तृप्तिं प्राप्स्यन्ति यूयं च स्वर्गं प्राप्स्यथ इति वा ॥ अचेतनोऽपि क्षणिकक्रियारूपोऽपि ज्ञानान्योऽपि यज्ञः स्वानुष्ठानजनितदेवताप्रसादजन्यभगवत्प्रसादरूपापूर्वद्वारा कालान्तरभाविनो मोक्षरूपेष्टस्य साधको भवितुमर्हति ॥ अत उक्तं 'इष्टकामधुगस्तु' इति ॥ देवताराधनेन भगवानाराधितो मोक्षं ददाति ॥ वक्ष्यते चेदम् ॥ ३ 'यो यो यां यां तनुं भक्तः' इत्यादिना, ४ 'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ॥' इति च वक्ष्यते ॥ अत्र, प्रजापतिरिति यज्ञैः सह सृष्ट्वा अनेन प्रसविष्यध्वं इत्युवाच इति चोक्तया भगवता प्रजानां क्रियमाणः कश्चन परमोपकारः प्रतीयते स क इति चेत् प्रलये पिपीलिकादयः ब्रह्मान्ताः प्राणिनः उपसंहृत्य भगवता स्वोदरे निवेश्यन्ते ॥ ते च आप्रलयावसानं भगवदुदरे सविकासमासते ॥ तदानीं च ते उपसंहृतनामरूपविभागाः अनादिकालप्रवृत्ताचित्संसर्गविवशाः करणकलेबराद्यभावेन पुरुषार्थसाधनानर्हाः अचेतनकल्पाश्च वर्तन्ते ॥ चिराय शेरते न इमे मय्यचेतनकल्पाः पुरुषार्थसाधनानर्हाः करणकलेबरदानेन पुरुषार्थ-

१. तै० आ. ३. १२. २. परस्परमित्यस्य भावयन्त इत्यनेनैवान्वयः ॥ न तु श्रेयः प्राप्स्यथेत्यनेनापि ॥ देवानामुपदेशाविषयत्वात् ॥ इति भावः ॥ ३. ७. २१. ४. ९. २४.

साधनार्हाः कर्तव्या इमे इति दयाख्या मनोवृत्तिः भगवन्तं सृष्टावुन्मुखीकरोति । तदानीं परमया कृपया सृज्यसृष्टावीक्षा भगवतो भवति ॥ ततः स्वाराधनरूपयज्ञ-शब्दितपुरुषार्थसाधनभूतधर्मैः सह प्रजाः यथापुरं सृजति यथायथम् ॥ उपसंहृताः प्रजाः सृजति करुणया इत्युच्यते दयालुश्चेत्किमर्थं प्रजा उपसंहृत्य स्वस्मिन्नशीशयत् ॥ इति चेत् १ विविधविचित्रसांसारिकसुखदुःखसततोपभोगजनितपरिश्रमविश्रमाय अपथानुवर्तनप्रवृत्तिवासनाविच्छेदाय च प्रजा उपसंहृत्य शाययित्वा रक्षति ॥ यथा क्रीडापरिश्रान्तं हठादकर्तव्यकरणे प्रवर्तमानं च बालं वीक्ष्य दयमाना जननी तत्परिश्रमविश्रमाय अपथप्रवृत्तिविच्छेदाय च बलादेनं शाययित्वा डोलायां उपविष्टा च निकटे रक्षति तद्वत् ॥ २ 'य एष सुप्तेषु जागर्ति' इति श्रुतिः ॥ यथा च चिराय शयालुमेनं बालं बलादुत्थाप्य पुनः स्तन्यदानेन प्रतर्प्य दत्वा क्रीडनकानि क्रीडाजनितसुखानुभवे प्रवर्तयति ॥ तद्वत् स्वस्मिन् प्रलीनाः प्रजाः पुनः सृष्ट्वा पुरुषार्थसाधनोन्मुखान् करोतीत्यहो महनीया दया दयालोरीश्वरस्य ॥ एवं पुरा प्रजास्सृष्ट्वा विहितधर्मानुष्ठानेन श्रेयः परमवाप्स्यथेति भगवानुवाच ॥ तदिदमुच्यते मया ॥ किमर्थं यज्ञशब्दितेन विहितकर्मणा देवतानां तृप्तिरुत्पादनीया इति चेत् देवाः रक्ष्याभ्यः प्रजाभ्य वृष्ट्यादिद्वारा अन्नादिकं प्रयच्छन्ति ॥ किमर्थमिति चेत् स्वरक्ष्याणां जीवनाय स्वोपभोगाय रक्ष्यरक्षणजनितमहाश्रेयोलाभाय च, रक्ष्या एतावन्त इमे रक्षकानस्मान् कृतज्ञतया भयेन च अस्मद्दत्तान्नाद्येकदेशदानेनाराधयन्ति ॥ महती किल प्रभुता अस्माकं॥ रक्ष्यान् रक्षामः तैराराध्यामहे च इति मनस्तुष्ट्यनुभवाय च देवाः प्रजाभ्योऽन्नादिकं प्रयच्छन्ति ॥ अनेनाभिप्रायेण देवैर्दत्तान्

१. अत्र रामानुजभाष्यं ॥ स भगवान् अनादिकालप्रवृत्ताचित्संसर्गविवशाः उपसंहृतनामरूपविभागाः स्वस्मिन् प्रलीनाः सकलपुरुषार्थानर्हाः चेतनेतरकल्पाः प्रजाः समीक्ष्य परमकारुणिकः तदुज्जिजीवयिषया स्वाराधनभूतयज्ञनिर्वृत्तये यज्ञैः सह ताः सृष्ट्वा एवमुवाच ॥ तात्पर्यचन्द्रिका ॥ अनवरतसुखदुःखोपभोगायासपरिश्रान्तानां विश्रमार्थं अश्रान्तापथप्रवृत्तिवासनाविच्छेदार्थं चोपसंहारः ॥ अतो न संहारे नैर्घृण्यदोषः ॥ तादृशसुखदुःखोपभोगप्रदाने च परमात्मनित्यसंकल्पसिद्धजीवस्वातंत्र्यनिबन्धनानादिकर्मप्रवाहहेतुकाचित्संसर्ग एव हेतुरिति न तत्र वैषम्यनैर्घृण्ये ॥ अत्र, 'आसृष्टि सन्ततानां अपराधानां निरोधिनीं जगतः ॥ पद्मासहायकरुणे प्रतिसंचरकेलिमाचरसि ॥' 'अचिदविशिष्टान् प्रलये जन्तूनवलोक्य जातनिर्वेदा ॥ करणकलेबरयोगं वितरसि वृषशैलनाथकरुणे त्वं ॥' इति दयाशतकश्लोकौ अनुसन्धेयौ ॥ २. का. ५. ८.

अन्नादीन् एभ्यः देवेभ्यः यथाविहितं भागं भक्तिपूर्वकमदत्वा यः स्वयमेव भुङ्क्ते सः स्तेन एव ॥ धनापहारी चोर इव दण्ड्यो भवति ॥ निरयगामी भवतीति यावत् ॥ दत्तानित्यस्य भुङ्क्ते इत्यनेनैवान्वयः ॥ न तु अप्रदायेत्यत्रापि ॥ दत्तस्य सर्वस्य दानाननुशासनात् ॥ राजानः प्रजाभ्यः स्वीयं क्षेत्रगृहाऽऽरामादिकं ददति॥ क्षेत्रगृहाऽऽरामादिकं सर्वं राजकीयमिति तावदविवादम् ॥ अन्यथा क्षेत्रादिकं स्वीयतया अनुभवन्तो राजभ्यः किमपि न दद्युः ॥ ददति च स्वानुभवाय राजकीयं तैः कल्पितं भागं तेभ्यः॥ यदि राजभ्यो देयं भागं न ददति तर्हि राजानः क्षेत्रादिकमपहरन्ति ॥ राजानः क्षेत्रादिकं दत्वा स्वीयताज्ञापनाय किंचित् किंचिदेव तेभ्यस्तेभ्यो जिघृक्षन्ति॥ पूर्णकामत्वात् ॥ तैस्तैः किंचित्किंचिद्दीयमानं मिलितमपरिमितमपि भवति ॥ विदितमेवेदं लोके ॥ तद्वत् देवैर्दत्तमदत्त्वैव तेभ्यः किमपि ये भुञ्जते ते देवस्वापहर्तारो राजस्वापहर्तार इव चोरा दण्ड्या भवन्ति ॥ अपहरन्ति च तेषां स्वमखिलं देवाः ॥ ये परेषां द्रव्यमपहरन्ति गूढं प्रसह्य वा ते किल चोराः कथमेषां चोरता इति चेत् [१] अन्यदीये तत्प्रयोजनायैव परिक्लृप्ते वस्तुनि स्वकीयताबुद्धिं कृत्वा तेन स्वाऽऽत्मपोषणमिह चौर्यम् ॥ यदि स्वदत्तैः स्वानाराधयद्भ्यो देवा उत्तरोत्तरमधिकं प्रयच्छन्ति तर्हि उत्तरोत्तरमधिकं तेभ्यो दातुं शक्यम् ॥ अन्यथा मित एव तद्दत्ते किञ्चित्तेभ्यः किञ्चित् स्वेषां इति विभजने अपर्याप्तिः खलु स्यात् इति चेत् यदि तद्दत्तेन तानाराधयथ तर्हि युष्मभ्यं युष्माभिः पूर्वपूर्वैर्यज्ञैराराधितास्ते उत्तरोत्तरयज्ञापेक्षितान् कलत्रपुत्रमित्रपश्वन्नादीन् सुखसाधनभूतान् पदार्थान् दास्यन्ते ॥ पूर्वस्मादधिकं दत्वा तेभ्योऽधिकं ग्रहीतुमेव दास्यन्ति ॥ अत एवमुपकारशीलेभ्यो महोदारेभ्यो देवेभ्योऽदत्वा स्वयं भुञ्जानः कृतघ्नो निरयभागेव भवति ॥ अतो देवान् भावयतानेन ॥ देवताप्रसादादिष्टान् कामानेव दोग्धु इत्युवाच॥ किं देवताऽऽराधनं यदा कदा वा कार्यं उत प्रतिदिनं इति चेत् प्रत्यहं कार्यम ॥ ये देवयज्ञपितृयज्ञभूतयज्ञमनुष्ययज्ञब्रह्मयज्ञशब्दितान् पञ्च महायज्ञानिष्ट्वा तैर्देवानाराध्य वैश्वदेवातिथिसन्तर्पणादिरूपयज्ञशिष्टममृताख्यमश्नन्ति ते साधवः सर्वैः पापैर्मुच्यन्ते ॥ यज्ञशिष्टाशित्वेन वर्तमाना इति वा यज्ञशिष्टाशिनो भूत्वा इति वा सन्त इत्यस्यार्थः ॥ कानि तानि किल्बिषाणीति चेत् 'खण्डनी पेषणी चुल्ली उदकुम्भी च मार्जनी ॥ पंच सूना गृहस्थस्य ताभिः स्वर्गं न विन्दति ॥' 'पंचसूना गृहस्थस्य

१. वि,

पंचयज्ञैर्व्यपोहती'त्युक्तपंचहिंसाकृतानि पापानि तैर्मुच्यन्ते ॥ अत एव वैश्वदेवसंकल्पे पंचसूनादोषप्रायश्चित्तार्थं वैश्वदेवाख्यं कर्म करिष्ये इति वदन्ति ॥ न केवलं तैरेव मुच्यन्ते ॥ किन्तु अनेकजन्मोपार्जितैः भगवत्प्राप्त्युपायविरोधिभिः सर्वैः पापैः विरोधित्वेन पापतुल्यैः अल्पफलप्रदैः सांसारिकपुण्यैश्च मुच्यन्ते ॥ विहिताकरणनिमित्तैश्च पापैर्मुच्यन्ते ॥ यद्येवं न कुर्वन्ति तर्हि विहिताकरणेन पापिनः खलु स्युस्ते ॥ अत एव सर्वशब्दो बहुवचनं च ॥ ये एवं न कुर्वन्ति न ते पापैर्मुच्यन्ते ॥ न केवलमेतावदेव ॥ किन्तु ये आत्माऽऽत्मीयभोजनार्थमेव पाकं कुर्वन्ति कारयन्ति च न तु वैश्वदेवाद्यर्थं भुंजते च यज्ञानिष्ठा ॥ ते पापिनः पापैरमुक्ताः अघमेव भुंजते ॥ पापहेतुमेव भुंजते ॥ भुज्यमानं तदन्तर्गत्वा पापमेवोत्पादयति ॥ तद्दृष्ट्याऽन्नमपि देवदृष्ट्या पापमेव तत् ॥ यथा दुष्टदृष्टिदृष्ट्या रजतमपि अन्यदृष्ट्या शुक्तिकाशकलं तद्वत् ॥ पापहेतुकं नरकमेव भुंजते ॥ पापहेतुकं अमेध्यमेव ते भुंजते ॥ तद्भोजनममेध्यभोजनतुल्यं ॥ अयज्ञशिष्टममेध्यतुल्यमिति सूचनायैव हि [1] 'उच्छिष्टमपि चाऽमेध्यं भोजनं तामसप्रिय'मिति वक्ष्यमाणे अमेध्यशब्दप्रयोगः ॥ इति वा ॥ अत एवं प्रत्यहं कार्यम् ॥ श्रुतिरप्येतमर्थमाह ॥ [2] 'मोघमन्नं विन्दते अप्रचेताः ॥ सत्यं ब्रवीमि वध इत् स तस्य ॥ नाऽर्यमणं पुष्यति नो सखायम् ॥ केवलाघो भवति केवलादी ॥' इति ॥ अतः कर्तव्यं कर्म कृत्वा तेन द्रव्यं सञ्चित्य तेन [3] पञ्चमहायज्ञानिष्ठा तैर्देवानाराध्य तदाराधनशिष्टेन शरीरं रक्षन्तः सर्वपापविनिर्मुक्ताः परं श्रेयोऽवाप्स्यथ इति पुरा प्रजापतिः प्रजा उवाच॥ तदेवोच्यते मया॥ 'तदर्थं कर्म कौन्तेय मुक्तसङ्गस्समाचरे'ति ॥ अतो निर्विशङ्कं श्रद्धयाऽनुतिष्ठानुष्ठेयं युद्धादिकम्॥ [4] 'कर्मण्येवाधिकारस्ते मा फलेषु'ित्युपक्रमात् अकाम्यकर्मोपदेशोऽयं ॥ कर्मप्रशंसा चेयं काम्यकर्मप्रशंसारूपा ॥ 'इष्टकामधुक्' इति, 'श्रेयः परमवाप्स्यथ' इति, 'इष्टान् भोगान् दास्यन्ते' इति च काम्यफलश्रवणात् ॥ अतः कथमियं अत्र संगच्छते इति चेत् अकाम्यकर्मोपदेशप्रकरणाऽसङ्गताऽपीयं काम्यकर्मप्रशंसा सामान्यतोऽक-

१. १७. १०. २. तै. ब्रा. २ ८. ८. ३ पंच महायज्ञाः तत्प्रकाराश्च तैत्तिरीयारण्यके 'पंच वा एते महायज्ञाः सतति प्रतायन्ते सतति संतिष्ठन्ते देवयज्ञः पितृयज्ञो भूतयज्ञो मनुष्ययज्ञो ब्रह्मयज्ञ इति यदग्नौ जुहोत्यपि समिधं तद्देवयज्ञः सन्तिष्ठते यत्पितृभ्यः स्वधा करोत्यप्यपस्तात्पितृयज्ञः संतिष्ठते यद्भूतेभ्यो बलिं हरति तद्भूतयज्ञः संतिष्ठते यद्ब्राह्मणेभ्योऽन्नं ददाति तन्मनुष्ययज्ञः संतिष्ठते यत्स्वाध्यायमधीयीतैकामप्यृचं यजुस्साम वा तद्ब्रह्मयज्ञः संतिष्ठते' इत्युक्ताः ज्ञातव्याः ॥ ४. २. ४७.

रणात् करणं श्रेय इत्यर्थे पर्यवस्यतीत्येतावता प्रकृते सङ्गमिता इति वा ॥ अकाम्यकर्मप्रशंसैवेयं तदुपदेशप्रकरणस्थत्वात् ॥ फलोक्तिः कथं सङ्गच्छत इति चेत् वस्तुतोऽकाम्यकर्मणामपि प्रधानफलेतरस्य फलस्य विद्यमानत्वात् ॥ तथा चेदकाम्यकर्मत्वं हीयेतेति चेत् न फलराहित्यमकाम्यकर्मणो विवक्षितम् ॥ किन्तु फलापेक्षाराहित्यमेव ॥ उपपादितमेतदधस्ताद्विस्तरशः ॥ अतो न विरोध इति वा, मोक्षतदनुगुणज्ञानभक्तिवैराग्यादीनामेव फलत्वेनेह विवक्षणात् शङ्काया एव नावकाश इति वाऽवधेयम् ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥

धृतराष्ट्रः ॥

एवं भगवतोक्तं उपाख्यानं श्रुतवानर्जुनः कथममंस्त ॥ किमवादीत् ॥ किं वाऽकार्षीत् ॥ वद मे संजय ॥

संजयः ॥

भगवतोक्तमुपाख्यानमिदं श्रुत्वा, १ 'कथं भीष्ममि'त्याद्युक्तरीत्या युद्धकर्मविमुखोऽहं ॥ उपाख्यानं चेदं, तदेव नियतं कर्म मम गले बध्नाति ॥ किं करणीयं ॥ भवतु एवं ब्रवीमि इत्यालोच्य, २ 'न कांक्षे विजयं कृष्ण' ३ 'अपि त्रैलोक्यराज्यस्य हेतोः' ४ 'अवाप्य भूमावसपत्नमृद्धं राज्यं सुराणामपिचाऽऽधिपत्यं ॥' इत्याद्युक्तरीत्या आब्रह्मलोकाधिपत्यं फलानामुपेक्षणात् अपेक्षितस्य मोक्षस्य ज्ञानेन तस्य च विचारेण लाभसंभवात् न मे देवताप्रसादेन कृत्यं ॥ अतो नानुतिष्ठेयमहमनिष्टं युद्धादिकं कर्म ॥ इति वदति पार्थे नेदानीमनेन कलहायितुं युक्तं किन्तु प्रकारान्तरेण कर्मणि प्रवर्तयितुं प्रयतेय ॥ इत्यालोच्य माऽस्तु उक्तरीत्या देवताप्रसादसंपादनाय कर्मयोगः ॥ किन्तु जगच्चक्रप्रवर्तनाय कर्मयोगः करणीयः इति सचमत्कारमुक्त्वा किंतज्जगच्चक्रमिति तेन पृष्टो भगवान् जगच्चक्रमाह ॥

कृष्णः ॥ अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसंभवः ॥
यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥ १४ ॥

कर्म ब्रह्मोद्भवं विद्धि ब्रह्माऽक्षरसमुद्भवं ॥
तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितं ॥ १५ ॥

१. २. ३. २. १. ३२. ३. १. ३५. ४. २. ८.

अन्नादिति ॥ भूतानि अन्नात् भवन्ति जायन्ते वर्धन्ते च ॥ अन्नस्य संभवः उत्पत्तिः अन्नसंभवः पर्जन्यात् वृष्टेः सकाशात् भवति ॥ पर्जन्यः वृष्टिः यज्ञात् भवति ॥ यज्ञः कर्मभ्यः ऋत्विग्यजमानादीनां व्यापारेभ्यः समुद्भवः उत्पत्तिः यस्य सः कर्मसमुद्भवः ॥ कर्म, ब्रह्म परमात्मा उद्भवत्यस्मादिति उद्भवः कारणं यस्य तत् ब्रह्मोद्भवं विद्धि जानीहि ॥ ब्रह्म परमात्मा अक्षरात् नाशरहितात् वेदात् समुद्भवः अभिव्यक्तिः यस्य तत् अक्षरसमुद्भवं ॥ तस्मात् यज्ञस्य सर्वमूलत्वात् सर्वगतं ब्रह्म सर्वव्यापी परमात्मा नित्यं सदा यज्ञे प्रतिष्ठितं ॥ यज्ञादेव स्थितिं लभते ॥ कर्म ब्रह्मशब्दितवेदसमुद्भवं विद्धि ॥ ब्रह्म वेदः अक्षरशब्दितपरमात्मसमुद्भवं परमात्मनः सकाशादभिव्यक्तं ॥ तस्मात् परब्रह्माभिव्यक्तत्वेन परमप्रमाणत्वात् सर्वगतं ब्रह्म सर्वार्थप्रकाशको वेदः नित्यं यज्ञे प्रतिष्ठितं तात्पर्येणावस्थितं ॥ यज्ञः द्रव्यार्जनादिरूपकर्मसमुद्भवः ॥ द्रव्यार्जनादिरूपं कर्म ब्रह्मशब्दितप्रकृतिपरिणामशरीरोद्भवं जानीहि ॥ ब्रह्मशब्दितं शरीरं अक्षरेण अन्तःस्थितेन प्रत्यगात्मना समुद्भवः कर्मसाधनतारूपेण भवनं यस्य तत् अक्षरसमुद्भवं ॥ तस्मात् यज्ञस्य शरीरं प्रति हेतुत्वात् सर्वगतं सर्वाधिकारिगतं ब्रह्मशब्दितं शरीरं सदा यज्ञे प्रतिष्ठितं यज्ञमूलकं ॥ अतो जगच्चक्रप्रवर्तकं यज्ञशब्दितं विहितं कर्मानुष्ठेयम ॥ १४ ॥ १५ ॥

भूतानि प्राणिनः अन्नात् अद्यमानपदार्थात् रेतोरूपेण परिणतात् भवन्ति जायन्ते॥ जातानि च भूतानि अन्नात् भवन्ति तिष्ठन्ति स्थितिं लभन्ते जीवन्तीति यावत्॥ लब्धस्थितीनि च भूतानि अन्नात् भवन्ति वर्धन्ते उपचितबलानि कार्यक्षमाणि भवन्ति॥ अन्नानां तेषां संभवः उत्पत्तिः पर्जन्यात् वृष्टेः मेघचक्राद्वा मेघचक्राभिमानिनः आदित्याद्वा वृष्टिद्वारा भवति ॥ स च पर्जन्यः यज्ञात् यज्ञतदुपलक्षितविहितकर्मानुष्ठानात् भवति ॥ देवतोद्देशेन हविषस्त्यागो यज्ञः तस्मात् हविर्भागोपभोगहृष्टपुष्टादित्यद्वारा वृष्टिः वार्षिकं मेघचक्रं च भवति ॥ आदित्यस्तु यज्ञात् भवति ॥ हृष्टपुष्टोपचितबलो वृष्ट्यादिहेतुः संपद्यते ॥ स्मरन्ति च ॥ 'अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते ॥ आदित्याज्जायते वृष्टिः वृष्टेरन्नं ततः प्रजाः ॥' इति ॥ स च ज्योतिष्टोमादिः तदुपलक्षितं विहितं कर्म च कर्मसमुद्भवः ऋत्विग्यजमानादीनां मानसि

कवाचिककायिकक्रियाभिर्भवति ॥ तस्मात् यज्ञाङ्गभूतं कर्म ब्रह्मोद्भवं विद्धि ॥ परमात्म-हेतुकं जानीहि ॥ परमात्मा हि सर्वं कर्म कारयति ॥ [१] 'एष ह्येव साधु कर्म कारयती'ति श्रुतिः ॥ स च परमात्मा अक्षरशब्दिताद्वेदादभिव्यज्यते ॥ परमात्मस्वरूपावगतिश्च वेदात्संपद्यते ॥ स चाक्षररूपो वेदः उच्चारयितृणां भूतानां उच्चारणादभिव्यज्यते ॥ तानि चान्नाद्भवन्तीत्यादिरीत्या चक्रमिदम् ॥ तस्मात् यज्ञस्य वृष्ट्यन्नभूतवेदद्वारा परमात्मस्वरूपाभिव्यक्तिहेतुत्वात् सर्वव्यापी परमात्मा नित्यं यज्ञे प्रतिष्ठितः ॥ यज्ञादेव तत्रतत्राभिव्यज्यमानस्वरूपः स्थितिं लभते ॥ सर्वान्तर्यामी सर्वरक्षकः परमात्मा वेदात् स च भूतेभ्यः तानि चान्नात् तच्च वृष्टेः सा च यज्ञात् स च अङ्गभूतकर्मणा कर्म च परमात्मना स च वेदात् स च भूतेभ्यः इत्यादिरीत्या जगच्चक्रम् ॥ कर्मणो वृष्ट्यन्नद्वारा भूतोत्पत्तिस्थितिवृद्धिहेतुत्वेन कर्म जगच्चक्रप्रवृत्तिहेतुभूतं भवति ॥ भूतवेदद्वारा परब्रह्माभिव्यक्तिहेतुत्वेन परब्रह्मस्थितिहेतुभूतमपि भवति ॥ विहितकर्मानुष्ठानस्य जगच्चक्रप्रवर्तनद्वारा भूतस्थितिपरब्रह्मस्थितिहेतुत्वेन तदुभयजनितोभयविधसुकृतहेतुत्वात् कर्तव्यमेव जगत्क्षेमार्थं मत्क्षेमार्थं च कर्म यथावदकामेनापि भवता ॥ १४ ॥ १५ ॥

अ ॥ भूतानि प्राणिनां शरीराणि प्राणिनो वा अन्नात् शुक्रशोणितरूपेण परिणतात् जायन्ते जीवन्ति वर्धन्ते ॥ [२] 'अन्नाद्भूतानि जायन्ते ॥ जातान्यन्नेन वर्धन्ते ॥' इति श्रुतिः ॥ [३] 'अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते ॥ अन्नेन जातानि जीवन्ती'ति च ॥ तस्य चान्नस्य उत्पत्तिः पर्जन्यशब्दितायाः वृष्टेः सकाशाद्भवति ॥ सा च वृष्टिः ज्योतिष्टोमादिविहितकर्मजन्यात् यज्ञशब्दितात् आत्मगतात् धर्मपुण्यापरपर्यायात् अपूर्वात् भवति ॥ स्मरन्ति च ॥ 'अग्नौ प्रास्ताऽऽहुतिः सम्यक् आदित्यमुपतिष्ठते ॥ आदित्याज्जायते वृष्टिः वृष्टेरन्नं ततः प्रजाः ॥' इति ॥ तच्चापूर्वं ज्योतिष्टोमादिविहितकर्मकरणात् भवति ॥ सा च वृष्टिः यज्ञात् कारीर्याख्यपर्जन्येष्टितः ॥ स च यज्ञः ऋत्विग्यजमानव्यापाररूपात् कर्मणः ॥ इति वा ॥ तच्च कर्म ब्रह्मशब्दितात् वेदादवगतं भवति ॥ उद्भवत्यस्मादित्युद्भवः प्रमाणं ॥ वेदप्रमाणकमिति यावत् ॥ स च वेदः अक्षरशब्दितस्य परब्रह्मणः सकाशात् निश्वसितवदभिव्यक्तः ॥ समुद्भवोऽत्राभिव्यक्तिः ॥ न तु बुद्धिपूर्वं कृतः ॥ तस्य नित्यत्वादपौरुषेयत्वाच्च ॥ एवं विद्धि ॥

१. कौ. ३. ८. तै. २. १. २. तै. ३. २.

माऽन्यथा मंस्थाः ॥ १'अस्य महतो भूतस्य निश्वसितमेतत् यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वांगिरसः इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैवैतानि निश्वसितानि ॥' इति श्रुतिः ॥ तस्मात् उक्तरीत्या साक्षात्परब्रह्मसमुद्भवत्वेन परमप्रमाणतया महामाहात्म्यवत्त्वात् २सर्वार्थप्रकाशको ३नित्यो वेदः यज्ञशब्दिते विहिते कर्मणि महातात्पर्यवत्तया तत्रैव प्रतिष्ठितः॥ तस्मात् यज्ञशब्दितस्य विहितकर्मणः उक्तरीत्या जगदुत्पत्तिस्थितिवृद्धिहेतुत्वात् सर्वार्थप्रकाशको वेदः यज्ञे नित्यं प्रतिष्ठितः तात्पर्येण स्थित इति वा ॥ तस्मात् यज्ञस्य स्वनिश्वासितवेदमूलकत्वेन स्वस्य परमाभिप्रेतत्वात् सर्वत्र अन्तर्यामित्वेन वर्तमानं परं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् यज्ञप्राप्यं ॥ 'उद्यमस्था सदा लक्ष्मी'रित्यादाविव तत्प्राप्यत्वमेव तत्र स्थितिः ॥ परब्रह्मणः सकाशादभिव्यक्तेन वेदेनावगमितात्कर्मण यज्ञशब्दितमपूर्वं तस्माद्वृष्टिः वृष्टेरन्नं ततो भूतानि तैस्तत्कर्म कर्मणोऽपूर्वमित्यादिरीत्या जगच्चक्रमिदम् ॥ विहितस्य कर्मणः उक्तरीत्या जगच्चक्रप्रवृत्तिहेतुत्वात परमप्रमाणापौरुषेयवेदप्रमाणकत्वात परमप्राप्यपरब्रह्मप्राप्तिहेतुत्वाच्च युद्धादिकं विहितं कर्म त्वया कर्तव्यमेव ॥ विमृश्य कर्तव्यं कुरु ॥ १४ ॥ १५ ॥

वि ॥ भूतानि शरीराणि जीवाधिष्ठितानि शरीराणि वा अन्नाद्भवन्ति ॥ अन्नस्य उत्पत्तिस्तु पर्जन्यात् वृष्टेः ॥ स च पर्जन्य यज्ञात ॥ 'अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते ॥ आदित्याज्जायते वृष्टिः वृष्टेरन्नं ततः प्रजाः'॥ इति हि स्मरन्ति ॥ स च यज्ञः द्रव्यार्जनादिकर्तृव्यापाररूपकर्मणा भवति ॥ तच्च द्रव्यार्जनादिरूपं कर्म ब्रह्मशब्दितप्रकृतिपरिणामशरीरेण जायते ॥ तच्च ब्रह्मशब्दितं कर्मसाधनं शरीरं अक्षरशब्दितेन प्रत्यगात्मना अन्तःस्थितेन समुद्भवः कर्मसाधनतारूपेण भवनं यस्य तत् अक्षरसमुद्भवम् ॥ अक्षरस्य शरीरमधिष्ठाय कर्तव्ये कर्मणि शरीरस्य प्रवर्तनरूपं शरीराधिष्ठातृत्वं च अन्नपानादिना ॥ अन्नं च पर्जन्यात्॥ इत्यादिरीत्या चक्रमिदम् ॥ भूतशब्दनिर्दिष्टानि सजीवानि शरीराणि अन्नात् ॥ अन्नं च पर्जन्यात् ॥ पर्जन्यश्च यज्ञात् ॥ यज्ञश्च कर्मणा ॥ कर्म च सजीवाच्छरीरात् ॥ तच्च पुनरप्यन्नात् ॥ इत्यादिरीत्या चक्रकमिदम् ॥ तस्मात् यज्ञ-

१. बृ. ४. ४. १०. ॥ २. सर्वस्मिन् देशे काले च वर्तमानः ३. नित्यं सदा इति वा नियमेन इति वा ॥

स्य उक्तरीत्या वृष्ट्यन्नद्वारा शरीरं प्रति हेतुत्वात् सर्वाधिकारिगतं ज्ञानयोगाधिकारिकर्मयोगाधिकारिरूपोभयाधिकारिगतं ब्रह्मशब्दितं शरीरं सदा यज्ञे प्रतिष्ठितं यज्ञमूलकम् ॥ ब्रह्मशब्दितेन शरीरेण कर्म तेन यज्ञः तेन वृष्टिः तयाऽन्नं तेन शरीरमिति शरीरस्य कार्यत्वं कारणत्वं चेत्यात्माश्रयः शरीरेण कर्म कर्मणा च यज्ञवृष्ट्यन्नद्वारा शरीरं इत्यन्योन्याश्रयश्च इति चेत् केवलशरीरत्वरूपेण कार्यत्वं अन्नपानादितृप्ताक्षगणाधिष्ठिततया कर्तव्यकर्मकरणक्षमत्वेन रूपेण कारणत्वम् ॥ अतो नान्योन्याश्रयात्माश्रयौ ॥ एवं जगच्चक्रप्रवृत्तिहेतुत्वात् कर्मणः कर्तव्यमवश्यं विहितं कर्म ॥ सर्वस्य यज्ञमूलकत्वात् तस्य च धनार्जनमूलकत्वात् न्यायेन तदार्जनार्थे 'तदर्थं कर्म कौन्तेय' इत्युक्तरीत्या युद्धादिकं विहितं कर्म कुरु ॥ १४ ॥ १५ ॥

अर्जुनः ॥ जगच्चक्रप्रवर्तनार्थं कर्म कुर्वित्युक्तम् नाहं जगच्चक्रमनुवर्तेय ॥ १ 'न कांक्षे विजयं कृष्ण' इत्याद्युक्तरीत्या आत्मश्रेयोविमुखस्य मम कथं जगच्चक्रप्रवर्तने प्रवृत्तिः स्यात् ॥ अतो जगच्चक्रप्रवर्तनार्थमपि नाहं कर्म कुर्याम् ॥ किं ब्रवीषि ॥

कृष्णः ॥ एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः ॥
अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ॥ १६ ॥

एवमिति ॥ हे पार्थ अर्जुन एवं भगवता प्रवर्तितं चक्रं जगच्चक्रं यः इह लोके नानुवर्तयति नानुवर्तते ॥ अघाय पापाय आयुः यस्य सः अघायुः इन्द्रियैः आरामः आरमणं यस्य सः इन्द्रियारामः सः मोघं व्यर्थं जीवति ॥ १६ ॥

इह लोके इह साधने वर्तमानः इति वा॥ यः कर्मयोगाधिकारी उक्तरीत्या ईश्वरेण तदाज्ञाधारकैः पुरातनैर्ब्रह्मादिभिश्च प्रवर्तितं जगच्चक्रं नानुवर्तयति नानुवर्तते॥ ईश्वराज्ञामनुसृत्य न वर्तयति न प्रवर्तयतीति वा ॥ जगच्चक्रप्रवृत्तिहेतुभूतं कर्मयोगं नानुतिष्ठति सः मोघं जीवति॥ तस्य जीवनं व्यर्थं॥ जीवितान्मरणमेव तस्य वरं ॥ कुत इति चेत् अघायुः अघं पापं तद्धेतुभूतमेव आयुर्भवत्यस्य॥ अघाय आयुर्यस्येति वा ॥ अघं अघपरिणतं आयुः यस्येति वा ॥ पापेन पापाय आयुर्वृद्धिरस्येति यावत् ॥ कुत इति चेत् इन्द्रियारामः इन्द्रियैः विषेषु आरमणं यस्य तादृशः ॥ इन्द्रियैः विषयेषु आरमतीति

१. १. ३२.

वा ॥ इन्द्रियाण्येव आरामा उद्यानानि तद्वत् भोगसाधनानि यस्येति वा ॥ इन्द्रियारामतया पापं वर्धयन्नेव यो जीवति तस्य जीवितान्मरणमेव वरं॥ अपथप्रवृत्तिविच्छेदहेतुत्वात्॥ कथं कर्माकरणमात्रेण जीवनस्य नैष्फल्यं ज्ञानयोगसंपादनेन सार्थक्यसंभवात्॥ इति चेत् अकृत्वा कर्मयोगं ज्ञानयोगादौ प्रवर्तमानोऽपि ज्ञानयोगस्य दुस्संपादनतया विफलप्रयत्नत्वेन मोघमेव जीवति ॥ न केवलं जीवनस्य नैष्फल्यमात्रं किंतु ईश्वराज्ञोल्लंघनेन नरकेऽपि पतनं तस्य भवति ॥ यस्तु स्वक्षेमाय परक्षेमाय च कर्मयोगमनुतिष्ठति तस्यैव जीवनं सार्थकम् ॥ ईश्वराज्ञानुवर्तनेन तत्प्रसादात् स्वर्गं मोक्षं वा स फलमश्नुते ॥ अतः स्वार्थं जगच्चक्रप्रवृत्त्यर्थं च कर्म विहितमुचितं कुरु ॥ अन्यथा जीवनं ते पापहेतुतया व्यर्थं भविष्यति ॥ पतिष्यसि च नरके ॥ अतस्त्वया कर्म कर्तव्यमेव ॥ १६ ॥

अर्जुनः ॥ स्वार्थं जगच्चक्रप्रवर्तनद्वारा परार्थं च कर्म कर्तव्यमिति मां निर्बध्नासि ॥ चिरं तपसि लीनाः पुरातनाः च्यवनविश्वामित्रादयो मुनयः किमन्वतिष्ठन् तत्तत्काले समुत्थाय तानि तानि कर्माणि ॥ कर्म कर्तव्यमेवेति निर्बन्धोऽयं कुतो न तेषां ॥ मां केवलं वशे वर्तमानत्वात् निर्बध्नासीति भाति ॥ ब्रूहि ॥

कृष्णः ॥ यस्त्वात्मरतिरेव स्यात् आत्मतृप्तश्च मानवः ॥
आत्मन्येव च सन्तुष्टः तस्य कार्यं न विद्यते ॥ १७ ॥

नैव तस्य कृतेनाऽर्थो नाऽकृतेनेह कश्चन ॥
न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥ १८ ॥

यस्त्विति ॥ यः मनुते इति मानवः अपरोक्षज्ञानी मुक्तो वा मनुष्यो वा आत्मनि परमात्मन्येव स्थितः सन् सन्तुष्टश्च आत्मनैव निमित्तभूतेन तृप्तः अन्यत्र लब्धालंप्रत्ययः आत्मतृप्तश्च अतः आत्मन्येव रतिः सुखानुभवो यस्य सः आत्मरतिः तादृश एव च स्यात् तस्य कार्यं कर्तव्यं कर्म न विद्यते ॥ तस्य कृतेन साधनेन कृतं करणं तेन वा अर्थः प्रयोजनं नैवास्ति ॥ अकृतेन अकरणेन विरुद्धकर्मणा वा इह लोके कश्चन कोऽपि प्रत्यवायः नास्ति ॥ अस्य सर्वाणि च तानि भूतानि च सर्वभूतानि तेषु गुर्वादिप्राणिषु ब्रह्मादिस्थावरान्तेषु प्राणिषु आकाशादिषु भूतेषु कश्चित् कोऽपि अर्थस्य

प्रयोजनस्य व्यपाश्रय: संबन्ध: येन स: अर्थव्यपाश्रय: प्रत्युत्थानादिव्यापार: अर्थस्य प्रयोजनस्य व्यपाश्रय: संबन्धो वा अर्थेन प्रयोजनत्वेन व्यपाश्रय: आश्रयणं वा नास्ति च ॥ १७ ॥ १८ ॥

अपरोक्षज्ञानिन एव कार्यं विहितं कर्म न विद्यते॥ च्यवनाद्यो मुनयस्तु अपरोक्षज्ञानिन:॥ तेषां कर्म न विद्यते ॥ न ते तन्निदर्शनेन कर्मपरित्यागो युक्त: ॥ तव कर्मयोगाधिकारित्वात्॥ य: परमात्मन्येव सन् तत्र स्थित्या सन्तुष्ट: असंप्रज्ञातसमाधिरूपया भगवति स्थित्या सन्तोषं महासुखं प्राप्त: ॥ अत: आत्मतृप्त: परमात्मना तृप्त: परमात्मनैव निमित्तभूतेन तदन्यत्र अलंबुद्धिं प्राप्त: ॥ अत: आत्मन: आत्मन्येव वा रतिमान् ॥ अपरोक्षज्ञानजन्यसुखवत्त्वेन तदन्यत्र जातालंप्रत्ययत्वात्परमात्मदर्शनजन्यसुखमेवानुभवन् स्यात् ॥ तस्य मानवस्य अपरोक्षज्ञानिन: 'मनु अवबोधने' इति धातु: ॥ एतादृशविशेषवत: कार्यं न विद्यते ॥ तुशब्दो विशेषसूचक: ॥ 'तस्य कार्यं न विद्यत' इति कथमुच्यते ॥ कर्तव्यस्य यागादेरनुष्ठानं श्रेय:प्राप्तिसंभवात् इति चेत् 'नैव तस्य कृतेनार्थ:' तस्यापरोक्षज्ञानिन: समाधेर्व्युत्थितस्य कृतेन यागादिकर्मणा किमपि प्रयोजनं न विद्यते ॥ यागात्पुण्यशब्दितमपूर्वं तेन सुखं इति प्रयोजनसद्भावात् 'नैव तस्य कृतेनार्थ:' इति कथं इति चेत् 'आत्मन्येव च सन्तुष्ट' इत्युक्तभगवदनुभवजन्यमहासुखवत्त्वादस्य ततोऽप्यतिशयितं सुखमेव प्रयोजनं भवितुमर्हति ॥ तस्य चाभावात्प्रयोजनं नास्तीत्युक्तम् ॥ अकाम्यकर्मकरणे तेन जायमाना भगवत्प्रीति: प्रयोजनमिति चेत कर्मकृति यादृशी प्रीति: न तादृशी ज्ञानिनि॥ किंतु ततोऽतिशयिता ॥ अत: साऽपि प्रयोजनं न भवति ॥ 'न तादृशी प्रीतिरीज्यस्य विष्णो: गुणोत्कर्षज्ञातरि यादृशी स्यात्॥' इति श्रुति: ॥ वक्ष्यते च ॥ १ 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रिय: ॥' इति ॥ २ 'ज्ञानी त्वात्मैव मे मतम् ॥' इति च ॥ ज्ञानं प्रयोजनमिति चेत् कर्मजन्यपरोक्षज्ञानहेतुकापरोक्षज्ञानवत्त्वादस्य ज्ञानं प्रयोजनं न भवति ॥ अत: प्रयोजनं नास्तीत्युक्तम् ॥ कृतकृत्यत्वादस्य माऽस्तु करणेऽभ्युच्चयहेतोर्यागादे: कर्मण: करणेन प्रयोजनम्॥ अकरणे प्रत्यवायजनकस्य सन्ध्यावन्दनादे: अकरणेन प्रत्यवाय: परं स्यादेव ॥ अत: तत्कर्म कर्तव्यम् ॥ कथमुच्यते 'कार्यं न

१. ७. १७. २. ७. १८.

विद्यते'॥ इति ॥ इति चेत् 'नाकृतेनेह कश्चन' ॥ अपरोक्षज्ञानिनस्समाधिस्थस्य कृतं करणं तदभावोऽकरणं तेन सन्ध्यावन्दनादिनित्यनैमित्तिककर्माकरणेनेति यावत् ॥ इह लोके कोऽपि दोषो नास्ति ॥ विहितकर्माकरणेन भवन् दोष एव भवतीति दोष इति लभ्यते ॥ सन्ध्यावन्दनादिविहितनित्यकर्माकरणे महतो दोषस्य श्रवणात् कथमुच्यते 'नाकृतेनेह कश्चने'ति ॥ इति चेत् दोषो नाम अनर्थाऽऽपादकः कश्चिद्धर्मविशेषः स च स्वकारणेन विहितस्याकरणेन निषिद्धस्य करणेन च न साक्षात् समुत्पद्यते ॥ किंतु विधिनिषेधविधायकप्रभुप्रकोपजननद्वारा ॥ यदि तदेव स्वकारणं प्रभोः प्रकोपं नोत्पादयति तदा दोषं नाऽऽपादयति ॥ अपरोक्षज्ञानिनो भगवत्प्रियत्वात्तदीयं कर्माकरणं न भगवतः कोपमापादयति ॥ अतो न तेन तस्य दोषः संभवितुमर्हति ॥ अत उक्तं 'नाकृतेनेह कश्चने'ति ॥ समाधिकाले सन्ध्यावन्दनादेरकरणेन प्रत्यवायाभावेऽपि गुर्वादिपूज्यजनपूजनस्याकरणे प्रत्यवायसत्त्वेन उत्थाय करणे अभ्युदयसत्त्वेन च गुर्वादिपूज्यजनसमागमप्रसंगे समाधित उत्थापितेन पूज्यजनपूजनं कर्तव्यमिति तत उत्थापनमावश्यकम् ॥ उत्थितेन पूज्यपूजनं कर्तव्यम् ॥ अन्यथा प्रत्यवेयात् ॥ कथ मुच्यते 'नैव तस्य कृतेनार्थ' इति 'नाकृतेनेह कश्चने'ति च इति चेत् 'न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः' अपरोक्षज्ञानिनः सर्वेषु प्राणिषु विषये अर्थप्रापकः प्रयोजनाऽऽधायकः कश्चिदपि प्रत्युत्थानाभिवादनादिव्यापारः नास्ति च ॥ पूज्यपूजनादिना, समाधिना लब्धात् प्रयोजनादधिकस्य प्रयोजनस्याभावात् 'नैव तस्य कृतेनार्थः' इत्युक्तम ॥ भगवद्विषयकसमाधावेव विद्यमानत्वात् पूज्यपूजनादेरकरणेन प्रत्यवायस्याभावात् 'नाकृतेनेह कश्चने'त्युक्तम् ॥ पूज्यपूजनादेरावश्यकत्वसूचनाय पृथगुक्तिः ॥ भूतपदेन गुर्वादिपूज्यजना विवक्षिताः ॥ सर्वः सर्वशब्दवाच्यो भगवान् तस्य भूतानि प्राणिनः भगवत्संबन्धिनो जनाः गुर्वादयः तेषु इति वा ॥ वक्ष्यते च सर्वत्वं भगवतः॥ १ 'सर्वं समाप्नोषि ततोऽसि सर्वः ॥' इति ॥ राजर्षिरिन्द्रद्युम्नः कथमेवं सति पूज्यस्य भगवतोऽगस्त्यस्यापूजनात्तेन शप्तो गजतामापेति चेत् न स तदानीं समाधाववर्तत ॥ अपि तु हरिमाराधयन् गृहीतमौनव्रतोऽवर्तत ॥ किंच सः स्वधर्मं प्रजापालनं विहाय जटाधारी मौनव्रती च भूत्वा हरिमाराधयितुं प्रावर्तत ॥ स्वधर्मप्रहाणेन परधर्मसेवनेन च तस्य सा गतिरभूत् ॥ परधर्मसेवनं महतोऽनर्थस्याऽऽ-

१. ११. ४०.

पादकम् ॥ वक्ष्यते च ॥ १ 'श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ॥ स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥' इति ॥ २'श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ॥ स्वभावनियतं कर्म कुर्वन्नाऽऽप्नोति किल्बिषं ॥' इति च ॥ अत्रेदमवधेहि ॥ च्यवनविश्वामित्रादयो मुनयः कर्म न कुर्वन्त्येव ॥ तत्तेषां कर्माकरणं न प्रत्यवायमापादयति ॥ कुतः इति चेत् कर्मकरणं प्रभुप्रसादोत्पादनेन सुखावहम् ॥ कर्माकरणं प्रभुप्रकोपोत्पादनेन दुःखावहं दृष्टं लोके ॥ अपरोक्षज्ञानिनः कर्मकरणेन नार्थः कर्मकरणजन्यभगवत्प्रसादादतिशयितस्य भगवत्प्रसादस्य अपरोक्षज्ञानेन लब्धत्वात् विहितकर्माकरणरूपमाज्ञोल्लङ्घनं न भगवतः कोपमापादयति ॥ प्रसादजनकस्य अपरोक्षज्ञानेन भगवत्सामीप्यस्य विद्यमानत्वात् ॥ अस्मिन् काले आस्थानीं प्रति आगन्तव्यमिति सर्वसाधारण्येन विहितस्याऽऽदेशस्यानुवर्तनम् अप्राप्ताधिकप्रसादस्य स्थितस्थापनादिना सुखावहम् ॥ अनन्यसाध्यकार्यनिर्वहणेन प्राप्ताधिकप्रसादस्य तु तदेव सुखावहम् ॥ न साधारणाऽऽज्ञाऽनुवर्तनम् ॥ तथा आज्ञोल्लङ्घनं कर्मकरणकाले अकृत्वा कर्म क्वापि गतस्य अनर्थावहम् ॥ विहितसर्वसाधारणाऽऽज्ञाऽनुवर्तनजन्यप्रसादादतिशयितप्रसादजनककार्यनिर्वहणेन प्राप्ताधिकप्रसादस्य तदानीं तादृशकार्यनिर्वहणाय प्रभोः सकाशे स्थितस्य नानर्थावहम् ॥ उल्लंघितसाधारणादेशः स तमनुवर्तमानानप्यतिशेते ॥ इतीदं दृश्यते स्पष्टं लौकिकाधिकारिसमुदाये ॥ अतोऽपरोक्षज्ञानिनो विलक्षणत्वात्तस्य कार्यं न विद्यते ॥ यः मानवः अवाप्तज्ञानफलभूतमोक्षः मुक्तः आत्मरतिः परमात्मना लब्धस्वरूपानन्दः तस्यैव कार्यं न विद्यते ॥ यावन्मोक्षप्राप्तिः तावद्विहितं कर्मानुष्ठेयम् ॥ इति ३ मुक्तपरं वेदम् ॥ १७ ॥ १८ ॥

अ ॥ यः मानवः आत्मवित् ज्ञाननिष्ठानिष्ठः मापयति सर्वत्र ब्रह्मैव ग्राहयतीति मानं ब्रह्मज्ञानं तत् वाति भजतीतिमानवः इति व्युत्पत्तिः ॥ आत्मन्येव रतिमान् न तु स्रक्चन्दनवनितादिषु ॥ यः मानवः मनुष्यः इदं यः कश्चिदपि मनुष्य एवं भूतश्चेत् सः कृतकृत्यो भवति ॥ तस्य कार्यं न विद्यते ॥ न तु ब्राह्मणत्वादिप्रकर्षापेक्षा ॥ इति सूचयितुमिति वा ॥ आत्मनैव तृप्तश्च न तु अन्नरसादिना ॥ आत्मन्येव

१. ३. ३५. २. १८. ४७. ३. अत्र, 'यस्त्वेवात्मरतो मुक्तः कार्यं तस्यैव नास्ति हि ॥ तस्मात् कुर्वेव कर्माणीत्याह कृष्णोऽर्जुनं स्मयन् ॥' इति स्कान्दवचनमनुसन्धेयं ॥

सन्तोषं प्राप्तश्च न पशुपुत्रादिबाह्यार्थलाभेन ॥ तस्य अपरोक्षज्ञानिनः कर्तव्यं कर्म न विद्यते ॥ तस्य कृतेन कर्मणा अर्थः प्रयोजनं नैव ॥ इह लोके तस्य अकृतेन कर्माकरणेन कोऽपि दोषो नास्ति १ 'एष नित्यो महिमा ब्राह्मणस्य ॥ न कर्मणा वर्धते नो कनीयान्' इति श्रुतिः ॥ कुत इति चेत् अस्य ब्रह्मादिस्थावरान्तेषु सर्वेषु भूतेषु विषये अर्थव्यपाश्रय. प्रयोजनसंबन्धः नास्ति ॥ प्रयोजननिमित्तकं आश्रयणं नास्ति ॥ इति वा ॥ भूतेषु मध्ये अर्थार्थे प्रयोजनार्थं आश्रयणीयः कोऽपि नास्तीति वा ॥ अर्थे मोक्षरूपपुरुषार्थे तन्निमित्तं आश्रयणीयः कोऽपि नास्तीति वा ॥ कश्चित् भूतविशेषमाश्रित्य क्रियासाध्यः कोऽपि प्रयोजनविशेषो नास्ति ॥ कृतकृत्यतया केनापि भूतेन साध्यस्य कस्यापि प्रयोजनस्याभावात् न तदर्थं कर्मकरणमस्य ॥ अवाप्तसकलश्रेयःफलत्वात् न देवताप्रकोपेनास्यार्थहानिः ॥ अत उक्तं 'नैव तस्य कृतेनार्थः नाऽकृतेनेह कश्चने'ति॥ २'तस्य ह न देवाश्च नाभूत्या ईशते आत्मा ह्येषां स भवती'ति श्रुतिः ॥ अकृतेन विरुद्धकर्मणा कोऽपि दोषो नास्ति ॥ आत्मज्ञानिनि उत्तराघस्याश्लेषात् ॥ ३ तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशादिति सूत्रम् ॥ इति च ॥ उक्तलक्षणस्यापरोक्षज्ञानिनः कर्म न विद्यत इति कथमुच्यते ॥ वर्णाश्रमोचितविहितकर्मणां सर्वैरपि कर्तव्यत्वात् ॥ इति चेत् आत्मरतिः आत्मना तृप्तः आत्मन्येव सन्तुष्टः इति विशेषणैः अपरोक्षज्ञानस्य परा काष्ठोच्यते ॥ सा तु सप्तमी भूमिका ॥ काः प्रथमादयः सप्तम्यन्ता भूमिकाः इति चेत् श्रीरामं प्रति भगवता वसिष्ठेनोक्तास्ताः भूमिकाः प्रवक्ष्यामि ॥ शृणु ॥ मोक्षेच्छा प्रथमा भूमिका ॥ श्रवणमननादिरूपो वेदान्तविचारो द्वितीया भूमिका ॥ निदिध्यासनाख्योऽखण्डध्यानरूपो वृत्तिविशेषस्तृतीया भूमिका ॥ तत्परिपाकजन्यं साक्षात्कारशब्दितं अपरोक्षज्ञानं चतुर्थी भूमिका ॥ इमां प्राप्तो ब्रह्मविदित्युच्यते । एतत्परिपाकः पञ्चमीभूमिका ॥ इयं जीवन्मुक्त्यवस्था ॥ इमां प्राप्तो जीवन्मुक्त इत्युच्यते ॥ तत्परिपाकः षष्ठी भूमिका ॥ तत्परिपाकः सप्तमी भूमिका ॥ प्रथमद्वितीयतृतीयभूमिकात्रयं जाग्रदवस्था ॥ तासु जगतो भेदेन भानात् ॥ चतुर्थी भूमिका स्वप्नावस्था ॥ तस्यां सर्वस्यापि जगतो मिथ्यात्वेन स्फुरणात् ॥ पञ्चमी भूमिका सुषुप्तिरित्युच्यते ॥ निर्विकल्पकसमाध्यवस्थायां तस्यां जगतः सुतरामभानात् ॥'

१. तै. का. ३. ९. २. बृ. ३. ४. १०. ३. ४. १. १३.

इमां प्राप्तो ब्रह्मविद्वरः ॥ तत्र स्वयमेवोत्थानं ॥ षष्ठी भूमिका गाढसुषुप्तिः ॥ सुषुप्त्यवस्थायाश्चिरकालावस्थानात् ॥ इमां प्राप्तो ब्रह्मविद्वरीयान् ॥ तत्र परप्रयत्नेनैवोत्थानं ॥ सप्तमी भूमिका तुरीयावस्थेत्युच्यते ॥ इमां प्राप्तो ब्रह्मविद्वरिष्ठ इत्युच्यते ॥ न तत्र स्वयं नापि परप्रयत्नेनोत्थानं ॥ किंतु सर्वदा तन्मयः स्वप्रयत्नमन्तरेणैव अन्यैरेव निर्वाह्यमाणसकलदैहिकव्यापारः परिपूर्णपरमानन्दघन एव [१]सर्वतस्तिष्ठति ॥ 'तद्यथाऽहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदं शरीरं शेते अथायमशरीरोऽमृतः प्राणो ब्रह्मैव तेज एव' इति [२]श्रुतिः ॥ उक्तमिदं सर्वं वसिष्ठेन ॥ 'ज्ञानभूमिः शुभेच्छा स्यात् प्रथमा परिकीर्तिता ॥ विचारणा द्वितीया स्यात् तृतीया तनुमानसा ॥' तनुमानसा मनसः एकाग्रतारूपा ॥ 'सत्वापत्तिश्चतुर्थी स्यात् ॥' सत्वस्य ज्ञानस्य आपत्तिः प्राप्तिः ॥ 'ततोऽसंसक्तिनामिका ॥' संसक्तिः बाह्यप्रपञ्चभानं तदभावोऽसंसक्तिः ॥ निर्विकल्पकसमाधिशब्दितोऽसंप्रज्ञातसमाधिरिति यावत् ॥ 'पदार्थाभावनी षष्ठी ॥' स्वयमनुत्थानात् पदार्थाप्रतिभानस्य चिरकालानुवृत्त्या गाढसुषुप्तितुल्या ॥ 'सप्तमी तुर्यगा स्मृता ॥' तुरीयतामापन्नाऽवस्था ॥ भूमिकात्रितयं त्वेतत् राम जाग्रदिति स्थितं ॥ यथावद्भेदबुद्ध्येदं जगज्जाग्रति दृश्यते ॥ 'अद्वैते स्थैर्यमायाते द्वैते प्रशममागते ॥ पश्यन्ति स्वप्नवल्लोकं चतुर्थीं भूमिकामिताः ॥ पञ्चमीं भूमिकामेत्य सुषुप्तिपदनामिकां ॥ षष्ठीं गाढसुषुप्त्याख्यां क्रमात्पतति भूमिकां ॥ षष्ठ्यां भूम्यामसौ स्थित्वा सप्तमीं भूमिमाप्नुयात् ॥ किंचिदेवैष सम्पन्नस्त्वथ वैष न किंचन ॥' द्वैतादर्शनात् किंचित्प्राप्तः ॥ उपाधिभूतशरीरस्य सत्वात्किंचिदप्राप्तश्च ॥ 'सदेहमुक्तता तूक्ता सप्तमी योगभूमिका ॥ अगम्या वचसां शान्ता सा सीमा योगभूमिषु ॥' इति ॥ अयमत्रसंग्रहः ॥ चतुर्थी भूमिका ज्ञानं तिस्रः स्यु साधनं पुरा ॥ जीवन्मुक्तेरवस्थास्तु परास्तिस्रः प्रकीर्तिताः ॥ सप्तापीमाः भूमिकाः अन्तरेण नामनिर्देशं स्वरूपतो लक्षणतश्च चतुर्दशे 'प्रकाशं च प्रवृत्तिं च' त्यादिके गुणातीतलक्षणगुणा-

१. अत्र देहं च नश्वरमवस्थितमुत्थितं वा सिद्धो न पश्यति यतोऽध्यगमत्स्वरूपं ॥ दैवादुपेतमथ दैववशादपेतं वासो यथा परिकृतं मदिरामदांधः ॥ देहोऽपि दैववशगः खलु कर्म यावत् स्वारंभकं प्रतिसमीक्षत एव सासुः ॥ तं सप्रपंचमधिरूढसमाधियोगः स्वाप्नं पुनर्न भजते प्रतिबुद्धवस्तुः ॥ इति भागवते ३ स्कन्धे २८ अध्याये ३७. ३८ श्लोकावनुसन्धेयौ ॥ २. बृ. ६. ४. ७.

त्ययोपायनिरूपणपरे प्रकरणे वक्ष्यन्ते ॥ अत्र प्रथमभूमिकात्रयमारूढस्यापरोक्षज्ञानरहितस्यापि कार्यं न विद्यते ॥ तस्य समाधियोगेऽनुप्रवेशात् ॥ किंपुनः सविकल्पकसमाधियोगाभ्यासेन निर्विकल्पकसमाध्यवस्थां प्राप्य तेन जीवन्मुक्त्यवस्थाभेदान प्राप्तस्य ॥ अतः 'तस्य कार्यं न विद्यत' इत्युक्तं युक्तम् ॥ संन्यस्य श्रवणं कुर्यादित्याद्यभियुक्तोक्तानुसारेण यः श्रवणमननादिरूपविचारसौकर्याय कर्मसंन्यासं विविदिषासंन्यासशब्दितं [1] अङ्गसंन्यासं करोति तस्य प्रथमभूमिकामारूढस्यापि कार्यं न विद्यते ॥ अज्ञस्य कर्मसंन्यासात् कर्मयोग एव श्रेयान् ॥ अतएव वक्ष्यते ॥ [2] 'संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ॥ तयोस्तु कर्मसंन्यासात् कर्मयोगो विशिष्यते ॥' इति ॥ रीतिमिमामनुसृत्य यः परोक्षज्ञानार्थं कर्म कृत्वा परोक्षज्ञानवान भवति तस्य तृतीयभूमिकामारूढस्यापि कार्यं न विद्यते ॥ किंपुनश्चतुर्थीं ततः परा वा भूमिकाः प्राप्तस्य ॥ अत उक्तं युक्तम ॥ १७ ॥ १८ ॥

वि ॥ स्वार्थं जगच्चक्रप्रवृत्त्यर्थं च कर्म कर्तव्यमित्युक्तम् ॥ तच्च साधनभूतं कर्म कियत्पर्यन्तमनुष्ठेयम ॥ तद्ब्रूहि ॥ मुक्तस्यैव कार्यं न विद्यते ॥ आमुक्ति साधनमनुष्ठेयम् ॥ मुक्तस्य कुतो न कार्यं विद्यते इति चेत् आत्मावलोकनाय आत्मानुभवाय चैव हि साधनानुष्ठानम् ॥ मुक्तो हि स्वत एव सदा आत्मदर्शनवान् आत्मस्वरूपानुभववांश्च ॥ साधनसाध्याऽऽत्मदर्शनादेः प्रयोजनस्य सिद्धत्वात् न साधनानुष्ठानेन तस्य कृत्यमिति मुक्तस्याऽऽत्मदर्शनाद्यर्थं कर्तव्यं न विद्यते ॥ अमुक्तस्य तु आत्मदर्शनाद्यर्थं कर्म कर्तव्यमेव ॥ बद्धस्य आत्माभिमुख्यं कर्मयोगज्ञानयोगरूपसाधनेन न स्वतः ॥ मुक्तस्य तु स्वतः ॥ अत आत्मरतिः स्वत एवात्माभिमुखो मुक्तः ॥ आत्मनैव तृप्तः नान्नपानादिभिः आत्मन्येव परमभोग्ये सन्तुष्टः न स्रक्चन्दनवनितोद्यानवृत्तगीतादौ ॥ यो मनुष्यः एतादृशः स्यात् तस्यैव कार्यं न विद्यते ॥ मुक्तस्यैव एतादृशत्वात् मुक्तस्यैव कार्यं न विद्यत इति फलति ॥ असाधनायत्तस्वतस्सिद्धसदातनाऽऽत्मदर्शनादिमत्त्वात् तस्य मुक्तस्य कृतेन साधनेन अर्थः प्रयोजनं नैवास्ति ॥ परमप्रयोजनस्याऽऽत्मदर्शनादेर्लब्धत्वात् ॥ साधनेन अकृतेन आत्मदर्शनादेरभावरूपोऽनर्थः कश्चिदपि नास्ति ॥ अकृतेन अकरणेन इह आत्मदर्शनरूपप्रयोजने कोऽपि हानिरूपोऽनर्थः नास्ति ॥ तस्य अत्यन्तनिवृत्तत्वात ॥ प्रयोजनस्य लब्धत्वेऽपि प्रति-

१. अंगसंन्यासो द्विविधः परोक्षज्ञानांगभूतः अपरोक्षज्ञानांगभूतश्च ॥ इति बोध्यम् ॥ २. ५. २.

बन्धकनिवृत्त्यर्थं साधनमपेक्ष्येत इति चेत् ॥ अस्य मुक्तस्य आकाशादिषु सकार्येषु भूतेषु १ प्रयोजनत्वेन आश्रयणं किमपि नास्ति ॥ २ आश्रयणीयं प्रयोजनं नास्तीति वा ॥ यदि किमपि प्रयोजनमपेक्ष्येत तर्हि तदपेक्षणरूपप्रतिबन्धकपरिहाराय साधनमनुष्ठेयं स्यात ॥ आत्मव्यतिरिक्तसकलाचिद्वस्तुविमुखत्वात् मुक्तस्य न किमपि प्रतिबन्धकम् ॥ अतो न साधनापेक्षा तस्य ॥ अतो मुक्तस्य न कर्म विद्यते ॥ आमुक्ति कर्म कर्तव्यम् ॥ १७ ॥ १८ ॥

अर्जुनः ॥ अस्त्वेवं च्यवनविश्वामित्रादीनां ॥ मया किं कर्तव्यं ॥ विस्पष्टं ब्रूहि ॥

कृष्णः ॥ तस्मादसक्तः सततं कार्यं कर्म समाचर ॥
असक्तो ह्याचरन कर्म परमाप्नोति पूरुषः ॥ १९ ॥

तस्मादिति ॥ तस्मात् कर्तुं योग्यं कार्यं कर्म सततं सदा न सक्तः असक्तः सन समाचर कुरु ॥ असक्तः सन कर्म आचरन पुरुषः परं परं ब्रह्म ज्ञानाख्यं मोक्षाख्यं परमफलं वा परं उत्कृष्टं आत्मस्वरूपं वा आप्नोति ॥ हि प्रसिद्धमिदं ॥ हि यस्मात् तस्मादिति वा ॥ १९ ॥

असंप्रज्ञातसमाधिमतोऽपरोक्षज्ञानिनोऽन्येन मुक्तादन्येन मुमुक्षुणा च कर्मणः कर्तव्यत्वात् त्वं फलसंगरहितः सन् कर्तव्यं विहितं कर्म सततं ३ यावज्जीवं सम्यगाचर ॥ कुतः कर्म कर्तव्यं मया इति चेत य: कोऽपि मनुष्यः फलसंगरहितः सन् कर्म करोति स तेन कर्मणा ज्ञानद्वारा मोक्षं प्राप्नोति ॥ ज्ञानं प्राप्नोतीति वा ॥ ब्रह्म प्राप्नोतीति वा ॥ प्रकृतेः परं परमभोग्यं स्वात्मस्वरूपं ४ ज्ञानव्यवधानं विनैव प्राप्नोतीति वा ॥ वक्ष्यते चेदं ॥ ५'कृत्वापि न निबध्यते ॥' इति ॥ ६'यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ॥' इति च ॥ जिज्ञासुः कर्मणा ज्ञानं ज्ञानी तु अपरोक्षज्ञानं तद्द्वारा ब्रह्म वा अपरोक्षज्ञानी तु मुक्तावानन्दातिशयं प्राप्नोतीति वा ॥ यः

१. अर्थशब्दो भावप्रधानः ॥ अर्थत्वेन व्यपाश्रयः ॥ २. अर्थ एव व्यपाश्रयः ॥ ३. वि ॥ यावदात्म प्राप्ति ॥ ४. अनेन ज्ञानयोगाधिकारिणोऽपि कर्मैव कर्तव्यमिति सूच्यते ॥ ५. ४. २२. ६. ५. ५.

प्रा॰ ... स एव पुरुषो मनुष्यः अन्यस्तु पशुः ॥ इति वा ॥ अतः सर्वथाऽपि प्रयोजनसद्भावात् तदर्थं कर्म कर्तव्यं कुरु ॥ १९ ॥

अर्जुनः ॥ कार्यं कर्म समाचरेत्युक्तं ॥ किं मज्जातीयैः पूर्वैरनुष्ठितोऽयं कर्मयोगः ॥ अनुष्ठितश्चेत् अनुरुध्य तं शिष्टाचारं मयाऽप्यनुष्ठेयः स्यात् ॥ वद ॥

कृष्णः ॥ कर्मणैव हि संसिद्धिमास्थिता जनकादयः ॥
लोकसंग्रहमेवापि संपश्यन कर्तुमर्हसि ॥ २० ॥

कर्मणेति ॥ जनकः आदिः येषां ते जनकादयः कर्मणैव संसिद्धिं मोक्षं आस्थिताः प्राप्ताः ॥ हि प्रसिद्धमिदम् ॥ लोकानां संग्रहः संग्रहणं लोकसंग्रहः तमेव संपश्यन्नपि कर्तुमर्हसि ॥ २० ॥

जनकप्रियव्रतभगीरथाश्वपतिप्रभृतयो राजर्षयः कर्मणैव करणेन ज्ञानं ज्ञानद्वारा मोक्षं वा प्राप्ताः ॥ ज्ञानार्थं कर्मणः कर्तव्यत्वोक्त्या प्राप्तापरोक्षज्ञानानां न कर्मणा कृत्यमिति भातीति चेत् जनकादयः अपरोक्षज्ञानिनः कर्मणा सहिता एव सन्तः संसिद्धिं संपूर्णमोक्षं मोक्षे आनन्दोद्रेकं इति यावत् ॥ प्राप्ताः ॥ प्रसिद्धमिदम् ॥ अपरोक्षज्ञानस्य निरपेक्षमोक्षसाधनत्वात् कर्मणा सहिता एव संसिद्धिं प्राप्ताः इति कथमुच्यते इति चेत् मोक्षमात्रं प्रति ज्ञानस्य कर्मनिरपेक्षत्वेऽपि तत्र आनन्दोद्रेकार्थं कर्मसाहित्यमावश्यकम् ॥ एतदभिप्रायक एव तत्रतत्र ज्ञानकर्मसमुच्चयवादः ॥ कर्मणैव मोक्षं प्राप्ता इत्युक्त्या कर्मणः साक्षान्मोक्षसाधनत्वं प्रतीयते ॥ तच्च विरुद्धम् ॥ ज्ञानेतरस्य साधनत्वनिषेधात् ॥ १ 'नान्यः पन्था अयनाय विद्यते ॥' इति श्रुतिः ॥ २ 'विद्यैव तु निर्धारणात् ॥' इति सूत्रम् ॥ ३ 'भाक्तंवाऽनात्मवित्वात्तथाहिदर्शयति' इति च सूत्रम् ॥ इति चेत् कर्मणैव मोक्षं प्राप्ताः नान्येन साधनेन इति नार्थः किन्तु कर्म कृत्वैव ज्ञानद्वारा मोक्षं प्राप्ताः ॥ न तु कर्मयोगमन्तरेणेति ॥ कर्मणैवेत्येवकारो नान्ययोगव्यवच्छेदार्थः ॥ किन्तु कर्मायोगव्यवच्छेदार्थः ॥ तथाच 'विद्यैव तु निर्धारणा'दिति सूत्रे कर्मणैवेत्ययोगव्यवच्छेदः ॥ इति भाष्यम् ॥ कर्मणैव ज्ञानं प्राप्ता इत्यर्थे तु कर्मणैव नान्येन इति अन्ययोगव्यवच्छेदः ॥ कर्म कृत्वैव ४ ज्ञानं प्राप्ताः न विना कर्म-

१. तै. आ. ३. १२- २. ३. ३. ४८. ३. ३. १. ७. ४. 'सर्पिरस्ति पयसीक्षुगो रसः तैलमस्ति तिलमध्य एव तत् ॥ लभ्यते मथनयंत्रकर्मणा कर्मणा हृदि गता तथैव चित् ॥' इत्यनुसन्धेयम् ॥

योगं इत्ययोगव्यवच्छेदः ॥ इत्युभयथापि वक्तुं शक्यम् ॥ ततश्च न कोऽपि विरोधः ॥ अतः तद्वत् त्वयाऽपि ज्ञानात्पूर्वं ज्ञानप्राप्तये ज्ञानानन्तरं मोक्ष आनन्दाति[illegible]प्तये च विहितमुचितं कर्म कर्तव्यम ॥ अतः कर्म समाचर ॥ यदि जनकादिवदहं ज्ञानं तद्वारा मोक्षं तत्राऽऽनन्दोत्राहं वा कामयेय तर्हि ताननुवर्तेय ॥ न मे प्रयोजनाकांक्षा अतो न त इव कर्म कुर्यामिति चेत् लोकानां अज्ञजनानां संग्रहं धर्मे प्रवर्तनं तमेव सम्यक् प्रयोजनतया पश्यन् कर्तुमेवार्हसि न त्यक्तुम् ॥ न केवलं शिष्टाचारादेव कर्म कर्तव्यम् ॥ किन्तु लोकसंग्रहार्थमपि ॥ अनेकेषां जनानां कर्मणि प्रवर्तनरूपेण लोकोद्धारेण भगवतः प्रीतिर्जायेत ॥ तदर्थमपि कर्म कुरु ॥ २० ॥

अ ॥ जनकादयः कर्मणैव साधनेन संसिद्धिं ज्ञाननिष्ठां तद्वारा मोक्षं वा आस्थिताः प्राप्ताः ॥ अतो ज्ञानार्थं कार्यं कर्म समाचर ॥ जनकादयः अप्राप्तज्ञानाः अतस्ते कर्मानुष्ठाय तेन सिद्धिं प्राप्ताः ॥ अहं तु अवाप्तज्ञानः कृतकृत्यः न मम कर्मणा कृत्यमिति चेत् लोकानां अज्ञजनानां संग्रहः स्वानुष्ठानमुखेन सन्मार्गे प्रवर्तनं स्वधर्मत्यागरूपादपथान्निवर्तनं च तमेव सम्यक् प्रयोजनतया पश्य ॥ तेन तदर्थं कर्म कुरु ॥ कर्तुमेवार्हसि न तु त्यक्तुम् ॥ विदुषा अधिकारिकेण क्षत्रियेण त्वया आत्मदृष्टान्तेन लोके कर्ममार्गप्रवर्तनाय कर्तव्यमेव कर्म ॥ न कदापि त्यक्तुं युक्तं ॥ आत्मनः प्रयोजनाभावेऽपि लोकसंग्रहार्थमेव के वा कर्म कुर्युः इति चेत् ज्ञानिनो भूत्वाऽपि जनकादयः कर्मणा सहैव मोक्षं लोकसंग्रहार्थमास्थिताः गन्तुं प्रवृत्ताः ॥ न तु संन्यस्य कर्माणि ॥ अतस्तद्वत् लोकसंग्रहमपि प्रयोजनं संपश्यन् ज्ञान्यपि त्वं कर्म कर्तुमेवार्हसि ॥ न तु त्यक्तुम् ॥ अतो लोकसंग्रहार्थं कर्म कुरु ॥ यदि ज्ञानिनाऽपि कर्म कर्तव्यं तर्हि कथमुक्तम् 'तस्य कार्यं न विद्यते ॥' इति ॥ इति चेत् यस्य ज्ञानिनः प्रारब्धकर्मशेषो नास्ति तस्य सर्वथा कार्यं न विद्यते ॥ यस्य तु ज्ञानिनः प्रारब्धकर्मशेषोऽस्ति तस्य लोकसंग्रहार्थं कर्म विद्यते ॥ स्पष्टं चेदं विवरिष्यते ॥ १ 'यस्य सर्वे समारंभा' इत्यादौ ॥ परोक्षज्ञानिन एव लोकसंग्रहार्थं कर्म न त्वपरोक्षज्ञानिनोऽपि ॥ कुत इति चेत् अपरोक्षज्ञानी द्विविधः सिद्धः साधकश्चेति ॥ तत्र सिद्धस्य न लोकसंग्रहार्थं कर्मानुष्ठानम् ॥ तस्य सकलमपि प्रपञ्चं अखण्डैकरसाद्वितीयशुद्धबुद्धमुक्तस्वभावं ब्रह्मैव पश्यतः

१. ४. १९.

संग्रहीतव्यलोकाभावात् ॥ साधकस्यापि न लोकसंग्रहार्थं कर्मानुष्ठानम् ॥ तस्य अपरोक्षज्ञानदार्ढ्यार्थं निदिध्यासनशब्दिताखण्डध्यानैकनिष्ठस्य लोकसंग्रहे प्रवृत्त्यनुदयात् ॥ तस्य ज्ञाननिष्ठैव कर्तव्यत्वेन श्रूयते ॥ उक्तं च मया ॥ १ 'युक्त आसीत मत्परः ॥' इति ॥ वक्ष्यते च ॥ २ 'मनः संयम्य मच्चित्तोयुक्त आसीत मत्परः॥ ' इति ॥ ३ 'ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥' इति ॥ तस्मात्परोक्षज्ञान्येव बाह्यवासनाबद्धो लोकसंग्रहवचनस्य विषयः ॥ अतः परोक्षज्ञान्यपि त्वं लोकसंग्रहार्थं कर्म कुरु ॥ यदि अपरोक्षज्ञानिनः लोकसंग्रहार्थं कर्मानुष्ठानं न विद्यते ॥ तर्हि वसिष्ठादयः किमर्थं अनुतिष्ठन्ति कर्म ॥ न हि वसिष्ठादयः अप्राप्तसम्यक्दर्शना इति वक्तुं युक्तमिति चेत् अपरोक्षज्ञानित्वेऽपि आधिकारिकाणां लोकसंग्रहार्थं कर्मविधिरस्त्येव ॥ मार्गप्रदर्शनेन लोकानुग्रहाय ब्रह्मणा सृष्टाः आधिकारिकाः ॥ अतः अपरोक्षज्ञानिनोऽपि ते वसिष्ठादयो लोकसंग्रहार्थं कर्म कुर्वन्ति ॥ तद्वत् अपरोक्षज्ञान्यपि त्वं लोकसंग्रहार्थं कर्तव्यं कर्म समाचर ॥ जनकादीनां शिष्टानां आचारसत्वात् जातिधर्मोऽपि युद्धाख्यो धर्मः न मयाऽङ्गीकर्तव्यः ॥ मम कुले नास्तीति वक्तुं शक्यत्वात् ॥ प्रदर्शितं मया धर्मस्य जातिधर्मकुलधर्मभेदेन द्वैविध्यं ४ 'उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः ॥' इति वदता॥ इति चेत् आदिशब्देन जनकादीनामिव त्वदग्रजस्य परमधार्मिकस्य साक्षाद्धर्मदेवताऽवतारस्य युधिष्ठिरस्यापि ग्रहणात् कुलधर्मोऽप्यभूदयं विप्रतिपन्नो युद्धाख्यो धर्मः ॥ किं न पश्यति भवान् शंखमाध्माय युद्धाय सन्नद्धमुद्यतकार्मुकं परमधार्मिकं निजाग्रजम् ॥ अतो जातिधर्मत्वात् कुलधर्मत्वाच्च कर्तव्यमेव युद्धाख्यं कर्म॥ आदिपदेन युधिष्ठिरग्रहणे मोक्षं प्राप्ता इत्यर्थस्यानुपपत्तिः ॥ इति चेत् अत एव आस्थिता इत्यस्य गन्तुं प्रवृत्ता इत्यर्थ उक्तः ॥ तस्मान्न कोऽपि विरोधः ॥ अतः कर्तव्यमेव विहितं त्वया कर्म ॥ २० ॥

वि ॥ जनकादयो राजर्षयः परमप्रसिद्धाः कर्मणैव संसिद्धिं आत्मप्राप्तिरूपं फलं प्राप्ताः॥ राजत्वाद्विस्तीर्णागाधमनसः ऋषित्वादतीन्द्रियार्थद्रष्टारः आत्मविदः ज्ञानिनामग्रेसराः॥ ज्ञानिनोऽपि ज्ञानयोगाभ्यासशक्ता अपि कर्मयोगस्य ५ 'कर्म ज्यायो ह्यकर्मणः' इत्यत्रोक्तदिशा अप्रमादत्वसुकरत्वादिना ज्ञानयोगापेक्षया श्रेष्ठत्वात् ज्ञान-

१. २. ६१. २. ६. १४. ३. १८. ५२. ४. १. ४३. ५. ३. ८.

योगाभ्यासमकुर्वाणाः कर्मयोगमेवाभ्यस्यन्तः ज्ञानयोगनिरपेक्षेण तेनैवात्मानं प्राप्ताः॥ अतः ज्ञानयोगयोग्योऽपि ज्ञान्यपि त्वं ज्यायस्त्वात्कर्मयोगस्य कर्तव्यं कर्म समाचर ॥ ज्ञानयोगानर्हः कर्मयोगाधिकारी ज्ञानार्थं कर्म कुर्यादिति १ 'न कर्मणामनारम्भा'दित्यादिनोक्त्वा ज्ञानयोगयोग्योऽपि आत्मावलोकनार्थं कर्मैव कुर्यात् ॥ कर्मणः सुकरत्वादप्रमादत्वाच्च ॥ इति २ 'नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः ॥' इत्यादिना अभिधाय तत्र जनकादीनामनुष्ठानं प्रमाणीकृतम् ॥ कथमिदं घटते ॥ जनकादीनामवाप्तज्ञानानां तेनैव आत्मप्राप्तिसंभवेन तदर्थं कर्मानपेक्षणात् ॥ इति चेत् जनकादयः ज्ञानिनोऽपि, वयं ज्ञानिनः अलमात्मप्राप्तये ज्ञानमेवास्माकं किं कर्मणा इति असंन्यस्य कर्माणि पूर्वसिद्धज्ञानयोगनिरपेक्षकर्ममार्ग एव स्थिताः॥ किमर्थमिति चेत् आधिकारिकत्वाल्लोकसंग्रहार्थं ॥ जनकादयः ३ लोकसंग्रहं प्रति संसिद्धिं कर्मणैव आस्थिताः गन्तुं प्रवृत्ताः॥ तथा त्वं ज्ञान्यपि लोकसंग्रहमेव प्रयोजनं पश्यन्नपि तेनापि हेतुना कर्म कर्तुमर्हसि ॥ ४ कर्मैव कर्तुमर्हसि ॥ इति वा॥ कर्तुमेवार्हसि न तु त्यक्तुमिति वा ॥ त्वं कर्तुमर्हसि इत्यनेन आधिकारिकस्य तव लोकसंग्रहाय कर्मकरणमेव युक्तं न तु कर्मणः परित्याग इति सूच्यते ॥ समित्यनेन सम्यगिदं विमृशेति सूच्यते ॥ २० ॥

अर्जुनः ॥ लोकसंग्रहार्थं कर्म कुर्वित्युक्तम् ॥ कथं मया कृतेन कर्मणा लोकसंग्रहो भविष्यति ॥ ब्रूहि ॥

कृष्णः ॥ यद्यदाचरति श्रेष्ठः तत्तदेवेतरो जनः ॥
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ २१ ॥

यद्यदिति ॥ श्रेष्ठः यत् यत् आचरति करोति ॥ इतरः अन्यः जनः तत्तदेव आचरति ॥ सः श्रेष्ठः यत् प्रमाणं कुरुते लोकः तत् अनुवर्तते अनुसरति ॥ २१ ॥

ज्ञातृतया अनुष्ठातृतया च परमप्रसिद्धत्वेन प्रशस्यतमः ५ यत्कर्माऽऽचरति तदेव कर्म इतरोऽतथाविधो जनः आचरति ॥ स्वयं ज्ञात्वा कर्तुमशक्त-

१. ३. ४. २. ३. ८. ३. अयमर्थो मतत्रयेऽपि योज्यः ॥ लोकसंग्रहमित्यस्याऽऽवृत्तिः ॥ ४. एवेत्यनेन आत्मावलोकने ज्ञानयोगनैरपेक्ष्यं कर्मयोगस्योच्यते ॥ स्पष्टमिदमुपरिष्टात् ॥ 'कृत्वापि न निबध्यते ॥' (४. २२.) 'सांख्ययोगौ पृथग्बालाः' (५. ४.) इत्यादौ ॥

त्वात्, विद्वान् सः इदं एवं करोति मयाऽपि इदं एवमेव कर्तव्यमिति अविद्वानपि करोति ॥ एवं लोकसंग्रहो भवति ॥ विदुषा अनुष्ठितमविदुषाऽनुष्ठेयं इत्युक्ते शिष्टानुष्ठितनिष्ठीवनादेरप्यनुष्ठानाऽऽपत्तिः ॥ इति चेत् सः श्रेष्ठः यत् शास्त्रं प्रमाणं कुरुते मन्यते ॥ प्रमाणमिति व्यवहरति वा ॥ सदेव प्रमाणं प्रमाणतया ज्ञापयतीति वा ॥ अज्ञो जनः तदेव शास्त्रं प्रमाणतया अनुसरति ॥ तदनुसृत्य वर्तते ॥ इति वा ॥ यत्प्रमाणमित्येकं पदम् ॥ यत् प्रमाणं यस्येति व्युत्पत्तिः ॥ शिष्टः यत्प्रमाणानुसारि कर्म करोति ॥ एतदर्थव्यक्त्यर्थमेव कुरुते इत्युक्तिः ॥ इतरः तत् तत्प्रमाणानुसारि कर्म करोति ॥ तदेव प्रमाणमनुसरति वा ॥ इति वा ॥ शिष्टेनानुष्ठितं शास्त्रीयमेव कर्म इतरेणानुष्ठेयं न तु सर्वमपि ॥ अतः न निष्ठीवनादेरशास्त्रीयस्यानुष्ठानाऽऽपत्तिः ॥ श्रेष्ठस्य कृतकृत्यतया कर्मणा प्रयोजनाभावात् अज्ञार्थमेव कर्तव्यत्वाच्च साङ्गोपाङ्गतया करणमनावश्यकमिति चेत् शिष्टः यत्प्रमाणं एकं पदम् ॥ यदङ्गयुक्तं कर्म करोति ॥ अन्यो लोकः तत् तदङ्गयुक्तमेव करोति॥ विद्वानहं ज्ञानेनैव मुक्तो भविष्यामीति कर्मणः परित्यागे वा अन्यथाऽनुष्ठाने वा लोकोपप्लवजनितपापेन ज्ञानयोगादपि प्रच्युत उभयभ्रष्टो भवेत् ॥ अतः प्रदर्शनाय अज्ञेन यथा साङ्गोपांगमनुष्ठेयं तथैव विदुषाऽप्यनुष्ठेयम् ॥ २१ ॥

अर्जुनः ॥ अवराणामुत्तमानुष्ठानानुसारेणानुष्ठातृत्वाल्लोकसंग्रहार्थं कर्म कुर्वित्युक्तम् ॥ को वा कृतकृत्यः परार्थमेव कुर्यात्कर्म ॥ सर्वेऽप्युपदिशेयुः न कोऽपि कुर्यात् ॥ 'परोपदेशसमये सर्व एव हि पण्डिताः ॥ तदनुष्ठानसमये मुनयोऽपि न पण्डिताः ॥' इति हि वदन्ति ॥ ब्रूहि ॥

कृष्णः ॥ न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किंचन ॥
नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥ २२ ॥

नेति ॥ हे पार्थ अर्जुन मे मम त्रिषु लोकेषु किञ्चन किमपि कर्तव्यं नास्ति ॥ न अवाप्तं अनवाप्तं अवाप्तुं योग्यं अवाप्तव्यं च नास्ति ॥ अहं कर्मण्येव वर्ते ॥ कर्मणि वर्त एव ॥ २२ ॥

न केवलमहमुपदिशाम्येव ॥ किंतु लोकसंग्रहार्थमनुतिष्ठामि च ॥ कर्मणि वर्त एव ॥ १ 'प्रसिद्धं तत् ॥ कर्मण्येव वर्ते इति वा ॥ इतरेषामिव तवापि विधिनिय-

१- च शब्दो हि शब्दार्थे ॥

म्यत्वात् त्वं कर्मणि वर्तसे ॥ कथमस्मुपकारः ॥ इति चेत् त्रिषु लोकेषु मम कर्तव्यं कर्म किमपि नास्ति ॥ नाहं विधिनियम्यः ॥ कुत इति चेत् सर्वेश्वरः सर्वज्ञः सर्वशक्तिश्चाहम् ॥ अतो न विधिनियम्यः ॥ अनीश्वरो हि विधेर्विषयः ॥ अत एव नाकरणे प्रत्यवायोऽपि मम ॥ ईश्वरमपि भवन्तं विधिर्नियमयेत् इति चेत् मे त्रिषु लोकेषु अनवाप्तं कर्मणा अवाप्तव्यं किमपि प्रयोजनं नास्ति ॥ स्वतः परिपूर्णकामत्वात् ॥ विधिविहितेन कर्मणा प्राप्यस्य प्रयोजनस्य प्राप्तये हि विधिविहितमनुष्ठेयं ॥ स्वतः परिपूर्णकामस्य मम कर्मणा साध्यस्य प्रयोजनस्याभावात् न मां विधिर्नियन्तुं शक्नुयात् ॥ १ तथाऽप्यहं कर्मानुतिष्ठामि ॥ तस्य तु न प्रयोजनान्तरमस्ति ॥ अतो लोकसंग्रहमेव प्रयोजनं २ संपश्यन् कर्मानुतिष्ठामि ॥ अतो लोकसंग्रहार्थं कर्मकरणे मामेव निदर्शनतया पश्य ॥ ईदृशोऽहमपि लोकसंग्रहार्थं कर्म करोमि ॥ किंपुनरनीश्वरेण विधिनियम्येन कर्मसाध्यज्ञानभक्तिवैराग्यादिसाधनतत्साध्यमोक्षरूपप्रयोजनवता अकरणे प्रत्यवायवता च त्वया कर्तव्यं कर्म कार्यमिति ॥ मम निःस्पृहत्वात् न कर्मणा कृत्यं ॥ उक्तं हि मया ॥ ३ 'न कांक्षे विजयं कृष्णे'त्यादिना ॥ इति चेत् अस्मिन् लोके प्रयोजनाकांक्षाऽभावेऽपि पारलौकिकमोक्षादिप्रयोजनाकांक्षाया विद्यमानत्वात् ॥ अत एव हि ४ 'यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे' इति, ५ 'तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयां॥' इति चाहमभ्यर्थितस्त्वया ॥ श्रेष्ठेन खलु लोकसंग्रहाय कर्म कर्तव्यं ॥ किमहं श्रेष्ठः इति चेत् पृथासुतः किल त्वं ॥ कुन्त्यामिन्द्राज्जातस्त्वं अतिवरिष्ठोऽसि महाक्षत्रियकुलप्रसूतत्वेन शूरापत्यापत्यत्वेन च मत्समोऽप्यसि ॥ अतस्त्वया मयेव लोकसंग्रहार्थं कर्म कर्तव्यं ॥ अत एव कर्तुमर्हसीत्युक्तं मया ॥ अतस्तदर्थं कर्म कुरु ॥ २२ ॥

अर्जुनः ॥ अहमिव त्वमपि लोकसंग्रहार्थं कर्म कुर्वित्युक्तं ॥ मादृशानां पारलौकिकप्रयोजनोत्पादकभगवत्प्रीतिसंपादनाय लोकसंग्रहार्थं कर्मकरणमावश्यकं ॥ अवाप्तसमस्तकामस्य तव न तेनापि कृत्यं ॥ किमर्थं करोषि ॥ अहं करोमीति किमर्थमुपकार आरोप्यते ॥ मा कुरु ॥ मा चैवं वादीः॥ किं ब्रवीषि ॥

१. वि ॥ चशब्दार्थः ॥ २. लोकसंग्रहं संपश्यन् कर्तुमर्हसि ॥ संपश्यन् यद्यदाचरति ॥ संपश्यन् कर्मण्येव वर्ते ॥ इति श्लोकत्रयेऽपि संबध्यते ॥ एवमुत्तरत्रापि ॥ ३. १. ३२. ४. २. ७. ५. ३. २.

कृष्णः ॥ यदि ह्यहं न वर्तेय जातु कर्मण्यतन्द्रितः ॥
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ २३ ॥

यदीति ॥ अहं तन्द्रा आलस्यं सा सञ्जाताऽस्य तन्द्रितः न तन्द्रितः अतन्द्रितः सन् जातु कदाचित् कर्मणि यदि न वर्तेय ॥ न वर्तेयमिति पाठान्तरम् ॥ हे पार्थ सर्वशः सर्वे मनुष्याः मम वर्त्म मार्गं अनुवर्तन्ते अनुवर्तेरन् ॥ २३ ॥

अहं लोकसंग्रहं पश्यन् आलस्यहीनः सन् कदाचित् कर्मणि न वर्तेयं चेत् जातु कदाऽपि न वर्तेयं यदि सर्वदाऽपि न कुर्यां चेदिति यावत् ॥ इति वा ॥ तर्हि सर्वेऽपि मनुष्याः मम तमेव कर्माकरणमार्गमनुवर्तेरन् ॥ मद्दृष्टान्तेन कर्म त्यजेयुः ॥ सर्वैः प्रकारैः मामनुवर्तेरन्निति वा ॥ अहं कर्मणि कदाचित् कदाऽपि वा आलस्यहीनो न वर्तेयं चेत् आलस्यवान् स्यां चेदिति यावत् ॥ इति वा ॥ त्वयि कर्माकुर्वाणे कुतोऽन्ये त्यजेयुरिति चेत् ॥ [1] सर्वेऽपि मनुष्याः शिष्टजनाग्रेसरवसुदेवकुले जातस्य अत एव परमधार्मिकतया गृहीतस्य असाधारणैः कार्यविशेषैः प्रकटितेश्वरभावस्य मम मार्गमेव अनुवर्तन्ते ॥ अतः मय्यकुर्वाणे मद्दृष्टान्तेन सर्वेऽपि त्यजेयुः ॥ पार्थेदं विमृश ॥ स्वतः परिपूर्णकामः कृष्णोऽपि करोति मयाऽपि कर्तव्यमिति विमृश्य त्वं लोकसंग्रहार्थं कर्म कुरु ॥ २३ ॥

अर्जुनः ॥ मम वर्त्मानुवर्तेरन्नित्युक्तम् ॥ अनुवर्तन्तां नाम तव वर्त्म ॥ को दोषः ॥ वद ॥

कृष्णः ॥ उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ॥
सङ्करस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ॥ २४ ॥

उत्सीदेयुरिति ॥ अहं कर्म न कुर्यां चेत् इमे लोकाः जनाः उत्सीदेयुः नश्येयुः ॥ इमाः प्रजाः अहं उपहन्यां नाशितवान् स्याम् ॥ सङ्करस्य कर्ता च स्याम् ॥२४॥

अहं कर्म न कुर्यां चेत् मद्दृष्टान्तेन कर्माकुर्वाणाः सर्वे जनाः कर्तव्यधर्मत्यागेन नरकाद्यनर्थं प्राप्नुयुः ॥ न केवलं तत् ॥ धर्मलोपेन तत्तद्वर्णाश्रमभेदव्यवस्था लुप्येत ॥

---

१. उत्तरार्धस्याऽऽवृत्तिः ॥

ततश्च वर्णानां साङ्कर्यं स्यात् ॥ वर्णसाङ्कर्यं चानर्थावहमिति त्वयैवाभिहितम् ॥ १ 'सङ्करो नरकायैवे'त्यादिना २ 'नरके नियतं वासो भवती'त्यन्तेन ॥ तस्य कर्ता अहमेव स्याम् ॥ तेन सर्वाः प्रजाः वर्णाश्रमव्यवस्थामूलकतत्तद्धर्मात्रिपरिलोपाद- नर्थभागिनीः अकरणेन तत्तत्फलभूतस्वर्गपशुपुत्रादिप्रयोजनहीनाश्च कुर्याम् ॥ न कुर्यां चेत् उत्सीदेयुः स्वस्वकर्माणि त्यजेयुः ॥ स्वकर्मभ्रंश एव नाशः ॥ कर्मभ्रंशे नाश- शब्दप्रयोगो दृश्यते ॥ कर्मभ्रष्टं नष्टोऽयमिति व्यवहरन्ति ॥ ततश्च संकरः स्यात् ॥ तस्य चाहं कर्ता स्यां तेन सर्वाः प्रजाः नरकाद्यनर्थभागिनीः कुर्याम् ॥ इति वा ॥ न कुर्यां कर्म चेदहं तर्हि इमे लोकाः नश्येयुः ॥ ३ 'अन्नाद्भवन्ति भूतानि' इत्युक्तदिशा लोकस्थितिहेतोः कर्मणोऽभावात् लोकानामनुत्पत्तिः उत्पन्नानां नाशश्च स्यात् ॥ वर्णसंकरश्च स्यात् ॥ तस्य च कर्तृभूतोऽहं स्याम् ॥ तेन सर्वाः प्रजाः नाशयेयम् ॥ इति वा ॥ यद्यहं वर्णाश्रमोचितं स्वकुलोचितं च कर्म न कुर्याम् ॥ तर्हि जातिधर्मान् कुलधर्मांश्च अनुतिष्ठासवोऽपि मद्दृष्टान्तेन तांस्त्यजेयुः ॥ ततश्च धर्मसांकर्यं स्यात् ॥ कथमिति चेत् ब्राह्मणधर्मान् युद्धाकरणादीन् क्षत्रियाः कुर्युः ॥ तेन च उत्सीदेयुः ॥ नरकाद्यनर्थं प्राप्नुयुः ॥ वक्ष्यते च मया ॥ परधर्मानुष्ठानस्य नरकाद्यनर्थहेतुत्वं ४'पर- धर्मो भयावहः ॥' इति ॥ एतादृशसङ्करकरणेन सर्वाः प्रजाः उपहन्याम् ॥ स्वधर्मत्याग- परधर्मानुष्ठानाभ्यां भ्रष्टत्वेन पश्चादपि धर्मकरणानर्हाः कुर्यामिति वा ॥ यद्यन्यः सङ्कर- स्यैवं कर्ता स्यात् तर्हि तेन दोषेण तस्यानर्थः स्यात् ॥ न च तथा तव ॥ ईश्वरत्वेन दोषास्पर्शात् ॥ इति चेत् ईश्वरत्वान्नदोषेण लिप्येय ॥ दुष्टनिग्रहशिष्टपरिपालन- धर्मस्थापनार्थमवतीर्णोऽहम् ॥ वक्ष्यते च ॥ ५ 'यदा यदा हि धर्मस्य ग्लानिर्भवति भारते'त्यादि ॥ धर्मसंस्थापनेन प्रजापालनार्थमवतीर्णस्य करुणावरुणालयस्य सर्वे- श्वरस्य ६'सहयज्ञाः प्रजाः सृष्ट्वे'त्युक्तरीत्या जगत्क्षेमार्थं धर्मान् सृष्टवतो मम इदं सुत- रामननुरूपमापद्येत ॥ 'विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतम् ॥' इति हि न्यायः ॥ किं लोकसंग्रहार्थं कर्मकरणोपदेशेन ॥ किमनुष्ठातॄन् शिष्टान् दृष्ट्वा अन्ये अनुतिष्ठन्ति ॥ किन्तु स्वयं परिहसन्ति तान् ॥ अतः कथं लोकसंग्रहो भवेदित्यु- च्यते ॥ इति चेत् अत्र लोकशब्देन ज्ञानार्थं कर्मानुतिष्ठासवः शिष्टा गृह्यन्ते ॥ न तु नास्तिका भ्रष्टाः ॥ अत एव वक्ष्यते ॥ ७ 'न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ॥'

---

१. १. ४२. २. १. ४४. ३. ३. १४. ४. ३. ३५. ५. ४. ७. ६. ३. १०. ७. ३. २६.

इति ॥ पाण्डुपुत्रः कुन्तीतनुभवः युधिष्ठिरानुजः स्वयमर्जुनस्त्वं लोकरक्षार्थं कर्म कर्तुमर्हसि ॥ २४ ॥

यद्यदाचरतीत्यादेरपरा योजना ॥ न केवलं लोकसंग्रहार्थम् ॥ किन्तु शिष्टो यद्यदाचरति तत्तदेवेतरो जन आचरति ॥ अतः शिष्टाचारानुवर्तनार्थं च कर्तुमर्हसि ॥ कोऽसौ शिष्टः कीदृशश्च तस्याचारः इति चेत् अहमेव शिष्टः लोकसंग्रहार्थो मदीयो यथाशास्त्रमनुष्ठीयमान आचारः ॥ इति ॥

अर्जुनः ॥ अविद्वानिव विद्वानपि लोकसंग्रहार्थं कर्म कुर्यात् ॥ अतः त्वमपि तदर्थं कुर्वित्युक्तम् ॥ अविदुषेव विदुषाऽपि विहिते कर्मणि यथावदनुष्ठीयमाने को विदुषोऽविदुषस्सकाशाद्विशेषः ॥ ज्ञानार्थमुचितं विहितं कर्मानुतिष्ठन्तं स्वर्गादिफलोद्देशेन काम्यं कर्मानुतिष्ठन्तं च अज्ञमिवैनं मन्येरन् ॥ ततश्च का प्रतिष्ठा विदुषः ॥ ब्रूहि ॥

कृष्णः ॥ सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ॥
कुर्याद्विद्वांस्तथाऽसक्तश्चिकीर्षुर्लोकसंग्रहम् ॥ २५ ॥

न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ॥
जोषयेत्सर्वकर्माणि विद्वान् युक्तस्समाचरन् ॥ २६ ॥

सक्ता इति ॥ न विद्वांसः अविद्वांसः अज्ञाः कर्मणि सक्ताः सन्तः यथा कुर्वन्ति ॥ हे भारत अर्जुन विद्वान ज्ञानी लोकानां संग्रहः लोकसंग्रहः तं कर्तुमिच्छुः चिकीर्षुः सन् न सक्तः असक्तः सन तथा कुर्यात् ॥ विद्वान् ज्ञानी अज्ञानां सङ्गः एषां अस्तीति सङ्गिनः कर्मणि सङ्गिनः कर्मसङ्गिनः तेषां कर्मसङ्गिनां बुद्धेः भेदः बुद्धिभेदः तं न जनयेत् ॥ किन्तु युक्तः सन समाधानवान् सन् सर्वाणि च तानि कर्माणि च सर्वकर्माणि तानि सम्यक् अज्ञवन् साङ्गोपाङ्गतया आचरन् कुर्वन् समाचरन् सन् तानि जोषयेत् सेवयेत् कारयेत् ॥ २५ ॥ २६ ॥

अविद्वांसः कर्मणि तत्फले ज्ञाने स्वर्गादौ च सक्ताः यथा कर्म कुर्वन्ति ॥ विद्वान् लोकसंग्रहं कर्तुं इच्छुस्सन् तथा अज्ञवदेव कुर्यात् ॥ किन्तु असक्तः सन् कुर्यात् ॥ अ-

यमेव विदुषोऽविदुषः सकाशात् विशेषः॥ असक्तश्चेत्किमर्थं कर्तव्यमिति चेत् लोकसंग्रहार्थम्॥ मन्यन्तां नाम लोकसंग्रहार्थं कर्म कुर्वन्तं विद्वांसमविद्वांसं॥ न तावता तस्य हानिः॥ बाह्यानुष्ठानसाम्येऽपि आन्तरविशेषस्य सत्वात्॥ तं विशेषं को वा ज्ञातुं शक्नोतीति चेत् जानातु वा मा वा तं विशेषमन्यः॥ विद्वांसमविद्वांसं मन्यमानेन विदुषः का हानिः॥ विद्वांसं मन्यमानेन विदुषः को लाभः॥ विशेषानुसारेण फलदाताऽहम्॥ जानामि तमहमान्तरविशेषम्॥ सैव प्रतिष्ठा विदुषः॥ विद्वान् कर्तव्यकर्माकरणेन अज्ञाना कर्मणि १ सङ्गशब्दितप्रीतिमतां श्रद्धापूर्वकं कर्म कुर्वतामिति यावत्॥ कर्मानुष्ठानबुद्धेश्चालनं न कुर्यात्॥ २ सर्वं मिथ्येति तत्वोपदेशेन कर्मानुष्ठानबुद्धेश्चालनं न कुर्यादिति वा॥ किंतु युक्तः मनःसमाधानवान् सन् भगवति मनोयोगं युञ्जन् सन् इति वा॥ कर्माणि यथावदाचरन् सन् स्वदृष्टान्तेन कर्तव्यानि सर्वाणि कर्माणि जोषयेत प्रीत्या सेवयेत् श्रद्धापूर्वकं कारयेत्॥ अज्ञानां संग्रहार्थं अज्ञवदनुतिष्ठेत॥ अज्ञैरज्ञवद्व्यवहरेच्च॥ कर्मतद्देवतातत्फलादेस्सर्वस्य मिथ्यात्वं जानन्नपि अज्ञेषु कर्मसंगिषु तदप्रकाशयन् कर्मादेः प्रशंसां च कुर्वन् तत्र रुचिमुत्पाद्य श्रद्धापुरस्सरं अनुष्ठापयेत॥ मिथ्यात्वोपदेशे मिथ्यात्वज्ञानेन कर्मणां निवृत्त्या ज्ञानयोगाप्राप्त्या च तेषामुभयभ्रष्टता स्यात्॥ ततश्च ते निरयं प्राप्नुयुः॥ मिथ्यात्वमुपदिष्टवान ज्ञान्येव नरके पातितवान् स्यात्॥ मिथ्यात्वज्ञानस्य किं फलमिति चेत्॥ स्वयं मिथ्यात्वेनानुसंधानं मिथ्यात्वं जानता तत्त्वविदा यथावद्व्यवहरणं च फलम्॥ मोक्षसिद्धिश्च महाफलम्॥ वरिष्ठासु परीक्षासु लब्धोत्कर्षा अपि पाठशालाध्यापकाः प्रथमादिकक्ष्यापाठनावसरे न प्रकाशयन्ति स्वपाण्डित्यम्॥ किन्तु तद्बोधनोपयोगिभिरल्पज्ञसुलभैरेव शब्दैर्व्यवहरन्ति॥ स्वतुल्यैः स्वपाण्डित्यानुगुणं व्यवहरन्तीति प्रसिद्धमिदं लोके॥ लोकसंग्रहमित्यत्र लोकशब्देन किं ज्ञानार्थं ये कर्मानुतिष्ठन्ति तेषां ग्रहणं उत स्वर्गाद्यर्थं ये काम्यकर्मानुतिष्ठन्ति तेषां ग्रहणं इति चेत् उभयेषामपि ग्रहणम्॥ कुत इति चेत् त्वमज्ञानी चेत् ज्ञानार्थं

१. देहेन्द्रियादिभिः क्रियमाणेषु कर्मसु अहं कर्ता भोक्ता इत्यादिरूपोऽभिमानः संगः तद्वतां॥

२. अत्र, 'अज्ञस्यार्धप्रबुद्धस्य सर्वं ब्रह्मेति यो वदेत्॥ महानिरयजालेषु स तेन विनिपातितः॥' इति वचनमनुसंधेयं॥ नास्तिकतया कर्मस्वप्रवृत्तो निद्रालुः॥ मुमुक्षया स्वर्गाद्यपेक्षया वा कर्मसु प्रवृत्तोऽर्धप्रबुद्धः॥ कर्मणा ज्ञानं प्राप्तवान् सम्यक् प्रबुद्धः॥ इति विवेकः॥

कुरु ॥ ज्ञानी चेत् लोकसंग्रहार्थं कुरु ॥ इत्युक्तम् ॥ अनुतिष्ठन्तं शिष्टं ज्ञानिनं दृष्ट्वा ज्ञानार्थिना ज्ञानार्थं स्वर्गाद्यर्थिना स्वर्गाद्यर्थं च कर्तव्यम् ॥ अज्ञानां अत एव ज्ञानार्थं कर्मसक्तिनां इति ज्ञानार्थं कर्मानुतिष्ठतां विवक्षा सूच्यते ॥ कर्मणि सक्ता इति फलाभिसंधिकर्तृत्वाभिमानादेरुक्तया अविद्वदनुष्ठानविवरणपरे 'प्रकृतेः क्रियमाणानी'त्यत्र 'अहङ्कारविमूढात्मा कर्ताऽहमिति मन्यते ॥' इति तद्विवरणेन च काम्यकर्मानुतिष्ठतां विवक्षा सूच्यते ॥ ज्ञानार्थं ये अनुतिष्ठन्ति तेषामेव ग्रहणं प्रकरणानुगुण्यात् ॥ तेषां ज्ञानाभावेन तत्कर्मणः फलापेक्षया कर्तृत्वाभिमानादिना चानुष्ठीयमानत्वेन 'सक्ताः कर्मणी'त्यस्य 'कर्ताऽहमिति मन्यत' इत्यस्य चोपपत्तेः ॥ इति चेत् ज्ञानार्थमनुष्ठीयमानेन कर्मणा फलसङ्गादिरहितेन भाव्यमित्यस्यार्थस्य [1] 'कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ॥' इत्यादिनाऽवगमात् अत्र उभयेषां ग्रहणम् ॥ ज्ञानार्थकर्मण एव ग्रहणं वाच्यं ॥ ज्ञानार्थं अज्ञैरनुष्ठीयमाने अकाम्यकर्मणि फलसंगादिराहित्यं स्थूलम् ॥ सूक्ष्मरूपेण फलसंगादेर्विद्यमानत्वात् ॥ सूक्ष्मरूपेण विद्यमानफलसंगादिप्रतिपादनपरं 'सक्ताः कर्मणि' 'कर्ताऽहमिति मन्यते' इति च' ॥ ज्ञानेनानुष्ठीयमाने कर्मणि फलसंगादिराहित्यं सूक्ष्मम् ॥ 'असक्त' इति 'तत्त्ववित्तु' इत्यत्र 'न सज्जत' इति च तत्प्रतिपादनपरम् ॥ अतो न कोऽपि विरोधः ॥ इति वा ॥ त्वं तु भरतवंशोत्पन्नत्वेन विशिष्टाधिकारिकक्षत्रियत्वात् स्वानुष्ठानेन कर्माणि जोषयितुमर्हसि ॥ अतः कर्तव्यमेव त्वया कर्म ॥ २५ ॥ २६ ॥

वि ॥ अर्जुनः ॥ व्यपदेश्यः विशिष्टः शिष्टो ज्ञान्यपि लोकरक्षार्थं कर्म कुर्यादित्युक्त्वा तत्र 'वर्त एव च कर्मणी'त्यात्मानं प्रमाणीकृत्य अतः विशिष्टः शिष्टस्त्वमपि लोकसंग्रहार्थं कर्म कुर्वित्युक्तम् ॥ ज्ञानी लोकसंग्रहार्थं स्वाधिकारतिरस्कारेण अविद्वदधिकारानुरूपमाचरेद्वा ॥ वद ॥

कृष्णः ॥ अविद्वांसः अतएव ज्ञानयोगाभ्यासेनैवात्मानमुपलब्धुमसमर्थाः अतः कर्मणि सक्ताः कर्मयोगाधिकारिणः आत्मावलोकनाय यथा कर्मैव कुर्वन्ति ॥ तथा विद्वान् कर्मण्यसक्तः ज्ञानयोगाभ्यासेनैवात्मानमुपलब्धुं समर्थोऽपि लोकसंग्रहचिकीर्षया आत्मावलोकनाय कर्मैव कुर्यात् ॥ अज्ञानां ज्ञानयोगेऽनधिकारात् कर्मयोगे सक्तानां ज्ञानयोगाधिकारित्वेऽपि, सुकरत्वादप्रमादत्वाच्च कर्मणस्तत्रैव सक्ता-

---

१. २. ५१.

नां कर्मयोगादन्यदात्मावलोकनसाधनमस्तीति स्वीयज्ञानयोगाभ्यासेन मतिमुत्पाद्य कर्मानुष्ठानबुद्धेः भेदनं न कुर्यात् ॥ किंतु स्वयं कर्म सम्यगाचरन् सन् स्वानुष्ठानेन ज्ञानयोगनिरपेक्षं कर्मैव आत्मावलोकनसाधनमिति मतिमुत्पाद्य सर्वकर्माणि कारयेत्॥ यदि, यदि ज्ञानयोगाभ्यासशक्तोऽप्यहं तमकुर्वन् लोकसंग्रहार्थं कर्माणि प्रवर्तेय॥ तर्हि मम ज्ञाननिष्ठामूलकात्मावलोकनसिद्धेर्विलंबः स्यादित्येवं मन्येत ॥ तर्हि न कर्मणि प्रवर्तेतेति चेत् युक्तः योगोऽत्र बुद्धियोगः स च कर्मणि समत्वबुद्धियोग इव ज्ञाननिष्ठानैरपेक्ष्येण कर्मण एवाऽऽत्मावलोकनसाधनत्वबुद्धियोगः तद्युक्तः समाचरन् जोषयेत् ॥ मास्तु मे ज्ञानयोगाभ्यासः लोकसंग्रहार्थं क्रियमाणेनानेन कर्मणैव ज्ञानयोगनिरपेक्षेण आत्मावलोकनं सेत्स्यतीति कृतनिश्चयः सन् स्वयं कृत्वा आत्मदृष्टान्तेन अन्यानपि तत्तत्कर्म कारयेत् ॥ अन्यथाकरणे अकरणे च, स्वं दृष्टान्तीकुर्वतां अज्ञानां कर्मलोपमूलकदुर्गतिप्रापकत्वेन सुमहाननर्थोऽस्य स्यात् ॥ अतः व्यपदेश्यः शिष्टो विशिष्टः स्वाधिकारातिरस्कारेण अविद्वदधिकारानुरूपमेवाऽऽचरेत् ॥ अतस्त्वमपि तथा समाचर ॥ २५ ॥ २६ ॥

अर्जुनः ॥ विद्वदविदुषोः अनुष्ठानसाम्येऽपि आन्तरो विशेषोऽ'सक्तः' 'सक्ता' इत्युक्तः ॥ तत्र प्रथमनिर्दिष्टं 'सक्त' इत्युक्तं अविदुषो विशेषं हेतूक्त्या उपपादय ॥

कृष्णः ॥ प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ॥
अहङ्कारविमूढाऽऽत्मा कर्ताऽहमिति मन्यते ॥ २७ ॥

प्रकृतेरिति ॥ अहङ्कारेण विमूढः अहङ्कारविमूढः आत्मा यस्य सः अहङ्कारविमूढात्मा पुरुषः प्रकृतेः गुणैः क्रियमाणानि सर्वशः सर्वाणि कर्माणि प्रति अहं कर्ता इति मन्यते ॥ २७ ॥

अविद्वान् प्रकृतेः प्रकृष्टकृतिमतः ईश्वरस्य गुणैः इच्छासङ्कल्पादिभिः प्रकृतेः जडापेक्षया प्रकृष्टकृतिमतः जीवस्य गुणैः अदृष्टादिभिः प्रकृतेः जडप्रकृतेः गुणैः सत्त्वरजस्तमोगुणैः प्रकृतेः गुणैः कार्यभूतैः देहेन्द्रियादिभिः क्रियमाणानि सर्वशः १ सर्वाणि कर्माणि प्रति २ कर्मणां वा अहं कर्ता इति मन्यते ॥ कुत

१. सर्वैः प्रकारैः क्रियमाणानि ॥ सर्वैः प्रकारैः अहंकारविमूढात्मा॥ इति वा॥ कर्तेति तृन्नन्तम्॥ तेन न षष्ठी ॥ इति भावः ॥

इति चेत् ॥ अहङ्कारेण विमूढबुद्धिः देहेन्द्रियादावनात्मनि आत्मतादात्म्याध्यासः अहङ्कारः तेन विविधं मूढः मोहं प्राप्तः आत्मा मनो बुद्धिर्वाऽस्य ॥ देहेन्द्रियादावात्माध्यासेन विमूढः मोहं प्रापितः द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता चाहं इति तत्तदुपाधिसंबन्धसंभावितविपरीतवृत्तीनां विषयतां गमितः आत्मा प्रत्यगात्माऽनेन । अहंकारेण विमोहितः अविदितः आत्मा प्रत्यगात्मा अनेन ॥ अहङ्कारेण विमूढः अनात्मधर्मान् आत्मधर्मत्वेन पश्यन् आत्मनश्च असंगानन्दसंविद्रूपतामपश्यन् स चासौ आत्मा च तादृशोऽयम् ॥ अनात्मनि प्रकृतौ अहंप्रत्ययेन विमूढात्मा अज्ञातस्वस्वरूपः ॥ अतोऽहं कर्ता इति मन्यते ॥ अतः कर्तृत्वाभिमानफलापेक्षापूर्वकं कर्म करोति ॥ इदमेवोक्तं 'सक्ताः कर्मण्यविद्वांसः' इति ॥ २७ ॥

अर्जुनः ॥ 'विद्वांस्तथाऽसक्तः' इत्युक्तं विदुषो विशेषं हेतूक्त्या उपपादय ॥

कृष्णः ॥ तत्ववित्तु महाबाहो गुणकर्मविभागयोः ॥
गुणा गुणेषु वर्तन्ते इति मत्वा न सज्जते ॥ २८ ॥

तत्वविदिति ॥ हे महाबाहो अर्जुन गुणाश्च कर्माणि च गुणकर्माणि तेषां विभागौ गुणकर्मविभागौ तयोः गुणकर्मविभागयोः तत्वं वेत्तीति तत्ववित् तु गुणाः गुणेषु वर्तन्ते इति मत्वा न सज्जते ॥ २८ ॥

गुणानां गुणशब्दोक्तानां ईश्वरेच्छादीनां पूर्वोक्तानां विभागे कर्मणां [1] विभागे च तत्वज्ञः ॥ [2] विभागयोस्तत्वं जानन्तः ॥ अत एव विशिष्टः गुणानां सत्वादीनां भागः गुणविभागः कर्मणां तैः क्रियमाणानां कर्मणां भागः कर्मविभागः तयोर्विषये तत्वज्ञः ॥ गुणानां चक्षुरादीनां इन्द्रियाणां अहङ्कारास्पदानां विभागः गुणविभाग. कर्मणां दर्शनादीनां ममकारास्पदानां विभागः कर्मविभागः तयोः तत्वज्ञः ॥ नाहं गुणात्मकः इति गुणेभ्य आत्मनो विभागः गुणविभागः न मे कर्माणीति कर्मभ्य आत्मनो विभागः कर्मविभागः तयोः तत्वज्ञः ॥ विभज्यते पृथक् भवतीति विभागः गुणकर्मादिभ्यो भिन्न आत्मा गुणाश्च कर्माणि च एषां समाहारः गुणकर्म गुणकर्म च विभागश्च गुणकर्मविभागौ तयोः गुणानां कर्मणां आत्मनश्च तत्वज्ञः विद्वांस्तु गुणाः ईश्वरे-

---

१. सप्तमीति भावः । २. षष्ठीति भावः ॥

च्छादयः गुणेषु जीवादृष्टादिषु हेतुतया वर्तन्ते ॥ ते च सत्वादिगुणेषु ते च देहेन्द्रियादिषु ते च स्वकार्येषु दर्शनादिषु तैश्च इन्द्रियाणि विषयेषु प्रवर्तते ॥ ईश्वर एव स्वतंत्रो जीवादृष्टाद्यनुसारेण स्वाधीनायाः प्रकृतेः कार्यभूतैः देहेन्द्रियादिभिः तत्तत्कार्यं करोति ॥ अतो मम न क्वापि स्वातंत्र्यमिति मत्वा न सज्जते ॥ अहं ममेत्यभिमानं न करोति ॥ सत्वादिगुणाः स्वकार्येषु वर्तन्ते इति मत्वा न कर्तृत्वाभिमानं करोतीति वा ॥ करणात्मकाः गुणाश्चक्षुरादयः विषयेषु प्रवर्तन्ते नासंग आत्मा इति मत्वा न सज्जते ॥ इति वा ॥ तत्ववित् गुणा गुणेषु वर्तन्ते इति मत्वा गुणकर्मविभागयोः न सज्जते ॥ इति वा ॥ अयमेव विशेषः विद्वांस्तथाऽसक्त इत्युक्तः ॥ महाबाहुत्वात्स्वधर्मं युद्धरूपं कर्तुं समर्थोऽसि ॥ अतः स्वधर्ममनुष्ठापयितुं लोकसंग्रहार्थं वा कर्म कुरु इति त्वं निर्बध्यसे ॥ २८ ॥

अर्जुनः ॥ अस्त्वेवं विद्वदविदुषोरांतरो विशेषः ॥ विदुषा किं कर्तव्यम् ॥ विस्पष्टं ब्रूहि ॥ किं विदुषा अविदुषां तत्वोपदेशः कार्यः ॥

कृष्णः ॥ प्रकृतेर्गुणसंमूढाः सज्जंते गुणकर्मसु ॥
तानकृत्स्नविदो मंदान् कृत्स्नविन्न विचालयेत् ॥ २९ ॥

प्रकृतेरिति ॥ प्रकृतेः गुणैः गुणेषु वा सं नितरां मूढाः गुणसंमूढाः पुरुषाः गुणानां कर्माणि गुणकर्माणि गुणाश्च कर्माणि च गुणकर्माणि इति वा तेषु सज्जन्ते ॥ कृत्स्नं विदन्तीति कृत्स्नविदः न कृत्स्नविदः अकृत्स्नविदः तान मन्दान् कृत्स्नं वेत्तीति कृत्स्नवित् न विचालयेत ॥ २९ ॥

प्रकृतेः ईश्वरस्य गुणैः इच्छादिभिः प्रकृतेः जडप्रकृतेः गुणैः सत्वादिभिः तस्याः गुणेषु नितरां मोहं प्राप्ताः स्वातन्त्र्याभिमानिनः गुणकर्मसु गुणेषु शब्दादिषु कर्मसु स्वेन क्रियमाणेषु कर्मसु च सज्जन्ते सक्ता भवन्ति ॥ गुणेषु सक्तिः स्नेहातिशयः । कर्मसु सक्तिः स्वातन्त्र्याभिमानः तद्वन्तो भवन्ति ॥ गुणकर्मविभागे किञ्चिदपि अजानतः मन्दान् अयोग्यजनान् कृत्स्नवित् ज्ञानी उपदेशेन न चालयेत् ॥ कुत इति चेत् ते अयोग्याः उपदेशमादरान्न शृणुयुः ॥ योग्यस्योपदेशः कार्यः ॥

अयोग्यस्य तु वादरूपेण अर्थः प्रकाशनीयः ॥ स्वानुष्ठानमुखेन कर्माणि जोषयेत्॥ अतः त्वमेवं कुरु ॥ २९ ॥

अ ॥ प्रकृतेः गुणैः देहेन्द्रियादिभिः संमूढाः देहेन्द्रियादीनेव आत्मानं मन्यमानाः सन्तः गुणकर्मसु गुणानां देहेन्द्रियादीनां कर्मसु सज्जन्ते ॥ अहंममेत्यभिमानवन्तो भवन्ति ॥ प्रकृतेः गुणैः सत्वादिभिः । गुणेषु इन्द्रियेषु तत्कर्मसु विषयेषु च सज्जन्ते ॥ गुणैः अहंकारादिभिः । प्रकृतेः गुणेषु देहादिषु तत्कर्मसु च सज्जन्ते ॥ तान् अकृत्स्नविदः अनात्मविदः मूढान् कृत्स्नवित् आत्मवित् कृत्स्नशब्दः सर्वात्मको य आत्मा तत्परः ॥ न विचालयेत् अकरणेन सर्वं मिथ्येत्युपदेशेन च कर्मानुष्ठानाच्चालनं न कुर्यात् ॥ अल्पज्ञान् सर्वज्ञो न विचालयेदिति वा ॥ अतो लोकसंग्रहाय विदुषाऽपि त्वया कर्तव्यं कर्म ॥ २९ ॥

वि ॥ प्रकृतेः गुणैः सत्वादिभिः आत्मनि विषये संमूढाः सत्वादिगुणनिमित्तकर्मस्वेव सज्जन्ते ॥ आत्मविषये अकृत्स्नवित्तया आत्मावलोकनाय ज्ञानयोगाभ्यासमेव कर्तुमसमर्थाः आत्मावलोकनाय कर्मस्वेव प्रवर्तन्ते ॥ इदमेवोक्तं 'अज्ञानां कर्मसङ्गिना'मिति ॥ 'अविद्वांसः' 'कर्मणि सक्ताः' इति च ॥ तान् अकृत्स्नविदः मन्दान् आत्मनि कृत्स्नवित् अतएव आत्मावलोकनाय ज्ञानयोगाभ्यासशक्तोऽपि न विचालयेत् स्वीयेन ज्ञानयोगाभ्यासेन आत्मावलोकनाय कर्मयोगादन्यदस्तीति मतिमुत्पाद्य कर्मानुष्ठानात् न चालयेत् ॥ किंतु स्वयं कुर्वन् तैः कारयेत् ॥ कथं विदुषा कर्तव्यमिति चेत् आत्मनि कर्तृत्वानुसन्धानमकुर्वन् कुर्यात् ॥ तर्हि कर्तृत्वानुसन्धानं कुत्र कार्यमिति चेत् प्रकृतेः गुणेषु कर्तृत्वानुसन्धानं कार्यम् ॥ गुणेषु कर्तृत्वानुसन्धानं नाम आत्मनो न स्वरूपप्रयुक्तमिदं कर्तृत्वं किन्तु गुणसंपर्ककृतमित्यनुसन्धानम् ॥ इदमेवोक्तं 'गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते ॥' इति ॥ २९ ॥

अर्जुनः ॥ विद्वदविदुषोर्बाह्यानुष्ठानसाम्येऽपि आन्तरविशेषसत्वात् विदुषा लोकसंग्रहार्थं कर्म कर्तव्यमित्युक्तम् ॥ अस्त्वेवमेतत् मया किं कर्तव्यं ॥ कर्म कर्तव्यमिति चेत् किं तत्कर्म मया कर्तव्यम् ॥ कथं कर्तव्यं ॥ विस्पष्टं ब्रूहि ॥

कृष्णः ॥ मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा ॥
निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥ ३० ॥

**मयीति** ॥ आत्मानं अधिकृत्य प्रवृत्तं अध्यात्मं अध्यात्मं च तत् चेतश्च अध्यात्मचेतः तेन अध्यात्मचेतसा सर्वाणि कर्माणि मयि संन्यस्य समर्प्य निर्गतः आशिषः इच्छातः निराशीः निर्गतं मम ममकारः यस्मात् सः निर्ममः भूत्वा विगतः ज्वरः मनःपीडा यस्मात् सः विगतज्वरः सन् युध्यस्व युद्धं कुरु ॥ ३० ॥

**विदुषा लोकसंग्रहार्थं कर्म कर्तव्यम् ॥ त्वं तु विद्वान् अतस्त्वं लोकसंग्रहाय युद्धाख्यं कर्म कुरु ॥ विदुषाऽप्येवं कर्म कर्तव्यं किमुत अविदुषा ॥ त्वं तु अविद्वान् अतस्त्वं कर्म कुरु ॥ अविद्वत्त्वान्मया कर्तव्यमित्युक्ते किमविदुषा अमुमुक्षुणेव स्वर्गपशुपुत्रादिफलकामनया कर्तव्यमिति चेत् विद्वदविदुषोर्यथा आन्तरो विशेषोऽस्ति तथा अविदुषोरपि अविद्वत्त्वसाम्येऽपि मुमुक्षुत्वामुमुक्षुत्वविशेषानुसारी आन्तरो विशेषोऽस्ति ॥ त्वमविद्वत्त्वेऽपि मुमुक्षुरसि ॥ अतः मुमुक्षुणा यथाऽनुष्ठेयं तथा कुरु ॥ मया येन प्रकारेण कर्तव्यं कर्म तं प्रकारं ब्रूहीति चेत् त्वं अनात्मज्ञश्चेत् तदा आत्मज्ञानरूपस्वप्रयोजनार्थमेव परोक्षज्ञानी चेत् लोकसंग्रहेण परप्रयोजनार्थं चित्तपरिपाकादपरोक्षज्ञानरूपस्वप्रयोजनार्थं चेत्युभयार्थं अपरोक्षज्ञानी आधिकारिकश्चेत् लोकसंग्रहेण परप्रयोजनार्थमेव कर्म कुरु ॥ अध्यात्मचेतसा आत्मानं परमात्मानं जीवात्मानं चाधिकृत्य वर्तमानं चेतः मनः तेन ॥ अधि अधिकः आत्मा परमात्मा तस्मिन् चेतः तेन वा। आत्मानं प्रत्यगात्मानं अधिकृत्य वर्तमानं चेतः तेन अन्तर्याम्यधीनोऽहं राज्ञा नियुक्तो भृत्यो राज्ञे इव ईश्वरनियुक्तोऽहं ईश्वराय कर्म करोमि इति बुध्या, आत्मानं अधिकृत्य प्रवृत्तं शास्त्रं अध्यात्मं वेदान्तशास्त्रं तत्र चेतः तेन वा, आत्मानं जीवात्मानं अधिकृत्य जातं अध्यात्मं आत्मविषयकं चेतः श्रुतिशतसिद्धं ज्ञानं तेन वा, सर्वाणि कर्माणि मयि [1] ईश्वरे समर्प्य ईश्वर एव मयि स्थित्वा सर्वं कर्म करोति तच्च तस्य भगवतः पूजारूपमित्यनुसन्धाय मच्छरीरतया मत्प्रवर्त्यात्मस्वरूपानुसन्धानेन, स्वकीयेनात्मना स्वशेषभूतेन प्रयोज्यकर्त्रा स्वकीयैश्चोपकरणैः स्वाराधनैकप्रयोजनाय परमपुरुषः सर्वेश्वरः र.शेषी स्वयमेव स्वकर्माणि कारयतीति ईश्वरे [2] कर्तृत्वमनुसन्धाय भृत्यो राज्ञीव कर्माणि**

---

१. अत्र गीतायां भगवन्तं भक्तिजननार्थं परोक्षतया निर्दिश्य स्वस्मिन् भक्तिजननार्थं अपरोक्षतया निर्दिशति भगवान् ॥ २. गुणेषु कर्तृत्वानुसन्धान पूर्वमुक्तं ॥ अत्र तु ईश्वरे कर्तृत्वानुसन्धानमुच्यते ॥

मयि समर्प्य फलापेक्षारहितः अहं करोमि स्मेदं कर्म महत्फलमनेन मम भविष्यति इति अहङ्कारममकाररहितश्च भूत्वा ऐहिकामुष्मिकदुर्यशोनरकपातादिसंभावनासंभूतमनःपीडारहितः सन् १प्राचीनेन अनादिकालप्रवृत्तानन्तपापसंचयेन कथमहंभविष्यामीत्येवंभूतान्तर्ज्वरविनिर्मुक्तः सन् युद्धाख्यं कर्म कुरु ॥ ईश्वर एव कर्मभिराराधितो बन्धान्मोचयिष्यतीति सुखेन कर्मयोगं कुरुष्व ॥ विवेकदृष्ट्या पर्यालोचने क्रियमाणे २'निहत्य धार्तराष्ट्रान्नः का प्रीतिःस्याज्जनार्दन॥' ३'स्वजनं हि कथं हत्वा सुखिनः स्याम माधव ॥' ४'नरके नियतं वासो भवतीत्यनुशुश्रुम॥' ५'अहो बत महत्पापं कर्तुं व्यवसिता वयम्॥' ६'कथं भीष्ममहं संख्ये द्रोणञ्च मधुसूदन ॥' ७'श्रेयो भोक्तुं भैक्षमपीह लोके ॥' ८'यानेव हत्वा न जिजीविषामः' इत्यादि त्वदुक्तं शोकमोहमूलकप्रलपितमिति तवैव भायात् ॥ अतो विवेकबुद्ध्या पर्यालोच्य फलसङ्गादिकं त्यक्त्वा विगतशोकस्स्वधर्ममनुतिष्ठ ॥ ३० ॥

अर्जुनः ॥ जनकादिभिः शिष्टैरनुष्ठितमिति त्वमप्यनुतिष्ठेत्युक्तम् ॥ किं जनकादयः स्ववचनानुसरणेन स्वानुष्ठितानुष्ठानेन च तुष्टाः मोक्षं दातुमीशाते ॥ अतो न तदनुरोधेन कर्म कुर्याम् ॥ किंब्रूषे ॥

कृष्णः ॥ ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ॥
श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ॥ ३१ ॥

य इति ॥ ये मानवाः श्रद्धा एषां अस्तीति श्रद्धावन्तः न असूयन्तः अनसूयन्तः च सन्तः मे मम मतं इष्टं इदं उक्तरूपं कर्म अनुतिष्ठन्ति ॥ तेऽपि कर्मभिः हेतुभिः मुच्यन्ते मोक्षं प्राप्नुवन्ति ॥ प्रतिबन्धकेभ्यः कर्मभ्यो मुच्यन्ते इति वा ॥ ३१ ॥

न केवलं जनकादिभिरनुष्ठितत्वादनुष्ठेयः कर्मयोगः ॥ किन्तु मया तत्रतत्रोक्तत्वात् इदानीमुच्यमानत्वात् अनुष्ठितत्वात् अनुष्ठीयमानत्वाच्च सर्वथा मद्वशवर्त्तिभिर्मानवैः मम संमतोऽयं कर्मयोग इत्यनुष्ठेयः ॥ अतएव ह्युक्तं मया ९'वर्त एव

१. वि ॥ २. १. ३६. ३. १. ३७. ४. १. ४४. ५. १. ४५. ६. २, ४. ७. २. ५. ८. २. ६ ९. ३. २२.

च कर्मणो 'ति ॥ ये मानवाः इदं कर्मयोगानुष्ठानरूपं वर्त्म मे नियन्तुरीश्वरस्य सर्वज्ञस्य सर्वशक्तेर्मोक्षदातुः अनुल्लङ्घनीयस्वाज्ञारूपश्रुतिस्मृतिरूपस्ववचनस्य मम मतं संमतं इष्टमिति मत्वा नित्यं सर्वदा अनुतिष्ठन्ति ॥ नित्यं नित्यवेदबोधितमिति वा ॥ नित्यमोक्षफलकमिति वा ॥ कथमनुष्ठेयमिति चेत् श्रद्धावन्तोऽनसूयन्तोऽनुतिष्ठन्ति ॥ अस्ति कृष्णेनोच्यमानं परलोकादिकं तत्साधनं धर्मज्ञानादिकं चेत्यास्तिक्यबुद्धिः श्रद्धा तद्वन्तः कष्टे कर्मणि कृष्णः प्रेरयतीति दोषाविष्करणं असूया तां अकुर्वन्तः सामान्यतः श्रद्धया अनसूयया च युक्ता इति वा ॥ अनुतिष्ठन्ति ॥ तेऽपि कर्मभिः मुच्यन्ते अनुष्ठितैः कर्मभिः हेतुभूतैः ज्ञानद्वारा मोक्षं प्राप्नुवन्ति ॥ १ किमुत ज्ञानिनः॥ मानवा इत्युक्त्या सर्वैर्मनुष्यैः स्वस्वकर्मानुष्ठेयमित्युक्तं भवति ॥ अत एव वक्ष्यते ॥ २ 'स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः' ॥ इति ॥ मोक्षप्रतिबन्धकैः पुण्यपापाख्यैः कर्मभिः मुक्ता भवन्ति ॥ इति वा ॥ कर्मभ्यो मुक्तिरूपायाः अस्याः मुक्तेः अमुख्यत्वमपिशब्देन द्योत्यते ॥ अपिशब्दात् जन्मादिभिश्च मुच्यन्ते इति ज्ञेयम् ॥ इति वा ॥ अतः मत्प्रसादात् मोक्षरूपस्य महतः फलस्य विद्यमानत्वात् त्वं कर्मयोगमातिष्ठ ॥ ३१ ॥

वि ॥ मे मतं इदं ये मानवाः नित्यं अनुतिष्ठन्ति ॥ ते प्रतिबन्धकैः बन्धहेतुभिः अनादिकालारब्धैः सर्वैः कर्मभिः मुच्यन्ते ॥ अननुतिष्ठन्तोऽपि ये अस्मिन् गीताशास्त्रे श्रद्दधाना भवन्ति अश्रद्दधाना अपि ये महाफले अस्मिन् शास्त्रार्थे दोषारोपरूपामसूयां न कुर्वन्ति तेऽपि मुच्यन्ते ॥ अपिशब्दादयं त्रेधा विभागः ॥ इदानीं अनसूयामात्रेण क्षीणपापाः श्रद्धावन्तो भवन्ति ॥ श्रद्धाऽनसूयाभ्यां क्षीणपापाः अनुतिष्ठन्ति ॥ श्रद्धाऽनसूयासहितकर्मणा क्षीणपापा मुच्यन्ते ॥ कर्मानुष्ठातारः साक्षान्मुच्यन्ते ॥ श्रद्धावन्तः अनसूयन्तश्च परम्परया मुच्यन्ते ॥ ये तु असूयया अश्रद्धया च नानुतिष्ठन्ति ॥ तेषां गतिस्त्वनुपदमेव वक्ष्यते ॥ ३१ ॥

अर्जुनः ॥ मत्प्रसादद्वारा मोक्षसाधनत्वात् कर्मयोगस्य तमनुतिष्ठेत्युक्तम् ॥

१. कैमुत्यसूचकोऽपिशब्दः ॥ न समुच्चयार्थः ॥ ज्ञानस्येव कर्मणो मोक्षसाधनत्वाभावात् । अपरोक्षज्ञानस्य मोक्षसाधने कर्मानपेक्षणाच्च ॥ ज्ञानकर्मसमुच्चयस्तु न मोक्षसाधने ॥ किंतु मुक्तौ आनन्दातिशयसाधने ॥ इत्युक्तं 'कर्मणैव हि संसिद्धिमास्थिता' इत्यत्र ॥ २. १८ ४५.

**अस्तु मोक्षः कर्मानुतिष्ठतां ॥ अननुतिष्ठतां किं स्यात् ॥ वद ॥**

**कृष्णः ॥ ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ॥**

**सर्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतसः ॥ ३२ ॥**

**य इति॥** ये तु अभ्यसूयन्तः असूयां कुर्वन्तः सन्तः मे मतं एतत् कर्म नानुतिष्ठन्ति ॥ तान् न विद्यते चेतः विवेकः ज्ञानं वा येषां ते अचेतसः तान् ज्ञायन्त इति ज्ञानानि सर्वाणि च तानि ज्ञानानि च सर्वज्ञानानि विशेषेण मूढाः विमूढाः सर्वज्ञानेषु विमूढाः सर्वज्ञानविमूढाः तान् नष्टान् नरकाद्यनर्थभागिनः पुरुषार्थायोग्यतारूपनाशवतो वा विद्धि जानीहि ॥ ३२ ॥

**ये पूर्वोक्ताधिकारिविपरीता श्रद्धारहिताः असूयां कुर्वन्तश्च मानवाः मे मतमिदं अश्रद्धया असूयया च नानुतिष्ठन्ति ते सर्वेषु ज्ञातव्येषु कर्मसगुणनिर्गुणविषयेषु ज्ञानेषु वा सर्वेषु कर्मसगुणनिर्गुणरूपेषु विषयेषु विषये यज्ज्ञानं तत्र वा विषये विशेषेण मूढा विपरीतज्ञानिनः सर्वशब्दवाच्यं सर्वात्मकं ब्रह्म ॥ १ 'सर्वं समाप्नोषि ततोऽसि सर्वः' ॥ इति वक्ष्यते ॥ तस्य ज्ञानं तद्विषये ब्रह्मज्ञानविषये विमूढाः ॥ इति वा ॥ कुतः अचेतस विवेकशून्याः दुष्टचित्ता वा ॥ अतः नरकाद्यनर्थभागिनो भवन्ति ॥ अननुष्ठातॄनेतादृशान् विद्धि ॥ इदं तु सम्यगवधेयम् ॥ ये नानुतिष्ठन्ति ये च न श्रद्दधते ये चाभ्यसूयन्ति तांस्त्रिविधानपि अचेतसः चेतः कार्यवस्तुयाथात्म्यनिश्चयरूपज्ञानरहितान् सर्वेषु ज्ञानेषु विशेषेण मूढान् अहंममेत्यादिज्ञानेषु यथावस्थितस्वरूपप्रकारानभिज्ञान् नष्टान् पुरुषार्थायोग्यान् जानीहि ॥ अननुष्ठातॄणां नरकादेर्महतोऽनर्थस्य विद्यमानत्वात् त्वं अनसूयया श्रद्धया च ममेष्टमिदमनुतिष्ठ ॥ ३२ ॥**

**अर्जुनः ॥ करणे महानर्थः अकरणे महाननर्थः इत्युक्तं ॥ यद्येवं करणाकरणयोरर्थानर्थौ स्यातां तर्हि सर्वेऽपि कुतस्तवेष्टं कर्मयोगं नानुतिष्ठन्ति ॥ वद ॥**

**कृष्णः ॥ सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ॥**

**प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥ ३३ ॥**

---

१. ११. ४०.

**सदृशमिति** ॥ ज्ञानं अस्यास्तीति ज्ञानवान् अपि स्वस्याः स्वकीयायाः प्रकृते सदृशं अनुगुणं यथातथा चेष्टते कर्म करोति ॥ भूतानि प्राणिनः प्रकृतिं यान्ति अनुसरन्ति ॥ निग्रह निर्बन्धः किं करिष्यति ॥ ३३ ॥

**कर्मतत्फलतत्कर्तृतद्भोक्त्रात्मस्वरूपज्ञानवानपि स्वकीयायाः प्रकृतेः अनुगुणमेव कर्म करोति ॥ प्रकृतिकार्यरागद्वेषयोः पूर्वजन्मपुण्यपापज्ञानेच्छादिसंस्कारस्य वा तदधीनस्वभावस्य वा सदृशमेव प्रवर्तते ज्ञानवानपि॥ किंपुनरज्ञस्तथा प्रवर्तत इति ॥ अतः स्वधर्मे न प्रवर्तते ॥ प्रवर्तते च परधर्मे ॥ कुत इति चेत् सर्वे प्राणिनः स्वभावं पूर्वजन्मसंस्कारं वा अनुसरन्ति ॥ एवं कुरु एवं मा कुरु इति शास्त्रनिग्रहः मम राज्ञो वा निग्रहः स्वस्य यदकर्तव्यं तत्र प्रवर्तमानस्य मनसः तस्मान्निवर्तनरूपो निरोधो वा इन्द्रियनिग्रहो वा किं करिष्यति ॥ सर्वोऽपि देही १ 'न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्' इत्युक्तरीत्या किमप्यकुर्वन् तूष्णीं स्थातुं न शक्नोति ॥ किंतु किमपि कुर्वन्नेव वर्तते ॥ कुर्वंश्च कर्म २ 'कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः'॥ इत्युक्तरीत्या बलिष्ठया प्रकृत्या प्रवर्त्यमानत्वात्तदनुगुणमेव कर्म करोति ॥ न तु शास्त्रानुगुणं स्वस्वकर्तव्यकर्मण्येव प्रवर्तते ॥ अतः वर्णाश्रमोचितमुचितं विहितं कर्मैव सर्वैः कर्तव्यमिति मयोच्यमाने कर्मयोगे यथावन्न प्रवर्तते ॥ मया किं कर्तव्यम् ॥ ३३ ॥**

**अर्जुनः॥ सर्वेऽपि स्वस्वप्रकृत्यनुगुणं चेष्टते मया वा शास्त्रेण वा किं कर्तुं शक्यं इत्युक्तम् ॥ तर्हि शास्त्रेण तदुपदेष्टा च प्रयोजनाभावादनर्थकं शास्त्राचार्योपदेशादिकमित्यापद्यते ॥ ब्रूहि ॥**

**कृष्णः ॥ इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ॥**
**तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ ॥ ३४ ॥**

**इन्द्रियस्येति** ॥ इन्द्रियस्य इन्द्रियाणां इन्द्रियस्य अर्थे विषये शब्दादौ रागश्च

१. ३. ५. २. ३. ५.

द्वेषश्च रागद्वेषौ व्यवस्थितौ नियमेन स्थितौ ॥ हि यस्मात् तौ रागद्वेषौ अस्य प्राणिनः परिपन्थिनौ शत्रू ॥ तस्मात् तयोः रागद्वेषयोः वशं वशतां नागच्छेत् न प्राप्नुयात् ॥ ३४ ॥

१ इन्द्रियस्य इन्द्रियस्यार्थे इन्द्रियगोचरेषु रूपादिषु विषयेषु इन्द्रियस्य इन्द्रियस्य सर्वेन्द्रियाणां अर्थे स्वविषयेषु इन्द्रियस्य इन्द्रियेषु मुख्यस्य मनसः इन्द्रियस्यार्थे विषयेषु रागः द्वेषश्चेत्येतौ व्यवस्थितौ नियमेन स्थितौ तत्तत्संस्कारानुरोधादवश्यंभाविनौ ॥ इन्द्रियस्य श्रोत्रादेः अर्थे शब्दादौ इन्द्रियस्य वागादेः अर्थे वचनादौ पुरुषस्य रागद्वेषौ व्यवस्थितौ इति वा ॥ उपलक्षणया लोभमोहमदमात्सर्याणामपि ग्रहणम् ॥ प्राधान्यात् कामक्रोधशब्दितयोरनयोरुक्तिः ॥ तयोः रागद्वेषयोः वशं वशतां नाऽऽगच्छेत् ॥ तौ रागद्वेषौ अस्य परिपन्थिनौ ॥ पथिकस्य चोराविव विघ्नकर्तारौ अनर्थकारिणौ च शत्रू ॥ अतः तयोर्वशे न भवितव्यम् ॥ शास्त्रानर्थक्यमापद्यत इत्यस्य कथमनेनोत्तरं आगतमिति चेत् एवं, यथा न शकट एव स्वमधिरूढं नयति पातयति चाधः किन्तु चक्राभ्यामेव तथा न प्रकृतिरेवैनं साक्षादकर्तव्ये प्रवर्तयति निवर्तयति च कर्तव्यात् ॥ किन्तु अकर्तव्ये रागं कर्तव्ये द्वेषं चोत्पाद्य ॥ रागो नाम अनिष्टसाधने अनिष्टसाधनताज्ञानाभावेन आभासमानगुणदर्शनेन च स्वभावानुसारिणी प्रीतिः ॥ द्वेषो नाम इष्टसाधने इष्टसाधनताज्ञानाभावेन आभासमानदोषदर्शनेन च स्वभावानुसारिणी अप्रीतिः ॥ तयोः रागद्वेषयोः नाशने प्रकृतिः निर्वीर्या नैनं बाधितुमीष्टे ॥ नष्टचक्रनिर्वीर्यशकटवत् ॥ रागद्वेषयोर्नाशनं च रागविषये वस्तुनि विद्यमानस्य दोषस्य द्वेषविषये वस्तुनि विद्यमानस्य गुणस्य च सम्यगवगमेन भवति ॥ गुणदोषावगमश्च शास्त्राचार्योपदेशाभ्यामेव ॥ शास्त्रादाचार्योपदेशाच्च दोषं गुणं च जानन् स्वभावानुसारिणं रागं द्वेषं च दूरीकृत्य २ शास्त्रादिवश्यो भूत्वा इष्टसाधन एव प्रवर्तते ॥ निवर्तते चानिष्टसाधनात् ॥ विषसंसृष्टशर्करान्नभोजने विषसंसर्गाज्ञानेन स्वभावतः प्रवृत्तोऽपि तदात्वोपागतेन परमाप्तेन विषसंसृष्टमिदं मा भुंक्ष्वेत्यभिहिते विषसंसर्गरूपदोषज्ञानेन मरणसाधनमिदमिति निश्चित्य लोलुपोऽपि शर्करान्ने तद्भोजनान्नि-

---

१. आर्त्येकवचनम् ॥ २. म ॥ एतच्च योग्यजनविषयम् ॥ अतएव अयोग्येभ्यस्तत्वोपदेशो न कार्य इत्युक्तं ' तानकृत्स्नविदो मन्दान् कृत्स्नविन्न विचालयेत्' ॥ इति ॥ (३. २९ )

वर्तते ॥ अस्वादुभेषजसेवने रोगहरणशक्तिरूपगुणाज्ञानेन स्वभावतस्तस्मान्निवृत्तोऽपि तदात्वोपागतेन परमाप्तेन भेषजमिदं वीर्यवत्तरं नियतं तव रोगं हरेत् भुंक्ष्वेदं इत्यभिहिते रोगहरणशक्तिरूपगुणज्ञानेन आरोग्यसाधनमिदमिति निश्चित्य जुगुप्समानोऽप्यस्वादुभेषजाय तत्सेवने प्रवर्तते ॥ प्रसिद्धं हीदं लोके ॥ अतः गुणदोषावगमद्वारा इष्टानिष्टप्राप्तिपरिहाररूपप्रयोजनस्य विद्यमानत्वान्न शास्त्राचार्योपदेशादेरानर्थक्यं ॥ प्रकृतिः अकार्ये प्रवर्तयति शास्त्रं तस्मान्निवर्तयति प्रवर्तते च प्रकृत्या निवर्तते च दोषदर्शनेन इति प्रकृतेः शास्त्रस्य कर्तुरात्मनश्च स्वातन्त्र्यमुच्यते ॥ कथमिदं ॥ ईश्वरो हि स्वतन्त्रः प्रवर्तयति निवर्तयति च ॥ इति चेत् पूर्वपूर्वसंस्कारानुगुणं रागद्वेषावुत्पाद्य पुरुषमकार्ये प्रवर्त्य क्लेशयितुमुद्यतोऽपि भगवानीश्वरः विधिप्रतिषेधशास्त्रश्रवणादिसमुपजातविवेकेन तेन भक्त्यादिभिरावर्जितः तदीयौ रागद्वेषौ स्वयं व्युदस्य प्रकृतिवशं तं शास्त्रवशमारचय्य कर्तव्ये प्रवर्तयति निवर्तयति चाकार्यात् ॥ ह्यस्तनेन आज्ञोल्लंघनरूपापराधेन कुपितो राजादिरपराधिनं निगडबन्धेन क्लेशयितुमुद्यतोऽपि अद्यतनेन दानमानादिना आवर्जितः तमेवापराधिनं तत्तत्कर्मानुगुणं रागद्वेषादिवत् उपद्रवं कुर्वतां भटानामाधिपत्ये नियुंक्ते ॥ इति प्रसिद्धं हि लोके ॥ रागद्वेषयोर्निरसनाय ईश्वरमावर्जयितुं शास्त्राचार्योपदेशादेरावश्यकत्वान्नानर्थक्यम् ॥ ३४ ॥

वि ॥ अर्जुनः ॥ करणाकरणयोरर्थानर्थावुक्तौ ॥ किमर्थमुक्तौ ॥ करणे रुच्युत्पादनार्थं अकरणे भयोत्पादनार्थं चेति चेत् तत्किमर्थम् ॥ स्वेस्वे कर्मणि प्रवर्तनार्थमिति चेत् तत्किमर्थम् ॥ आत्मावलोकनसिद्ध्यर्थं इति चेत् ज्ञानयोगेनैवात्मावलोकनं सेत्स्यति किं कर्मकरणनिर्बन्धेन ॥

कृष्णः ॥ ज्ञानयोगाशक्तेन कर्मयोगयोग्येन ज्ञानार्थं कर्म कर्तव्यमित्युक्त्वा ततो ज्ञानयोगयोग्येनापि कर्मयोगस्य ज्यायस्त्वात् कर्मैव कर्तव्यमित्युक्त्वा तत्र शिष्टानामनुष्ठानं प्रमाणीकृत्य ततो व्यपदेश्येन शिष्टेन ज्ञानिनाऽपि लोकसंग्रहार्थं कर्मैव कर्तव्यमित्युक्त्वा करणाकरणयोरर्थानर्थावुक्तौ ॥ इदानीं अकृत्वा कर्मयोगं यो ज्ञानयोग एवात्मावलोकनार्थं प्रवर्तते सः ज्ञानवानपि [१]'कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणै'रित्युक्तरीत्या प्राचीनकर्मवासनानुगुणं प्राकृतेषु शब्दादिविषये-

१. ३. ५.

ष्वेव प्रवर्तते ॥ किंपुनः ज्ञानयोगयोग्यः तदयोग्यः कर्मयोगयोग्यश्चाज्ञानी प्रकृतेः सदृशं चेष्टत इति ॥ सर्वाण्यपि भूतानि पूर्ववासनामेवानुसरन्ति ॥ शास्त्र-निग्रहः किङ्करिष्यति ॥ बलवती प्रकृतिवासना विद्वांसमपि स्वानुगुणमकर्तव्येषु प्रवर्तयति ॥ न पुनर्ज्ञानयोगाभ्यासायोपकरोति ॥ अतः अकृत्वा कर्मयोगं ज्ञानयोगाभ्यासो नारम्भणीयः ॥ किन्तु कर्मैव कर्तव्यम् ॥ ३३ ॥

अर्जुनः ॥ वासना स्वानुगुणं अकर्तव्ये प्रवर्तयतीत्युक्तम् ॥ कथं प्रवर्तयति तं प्रकारं ब्रूहि ॥

कृष्णः ॥ इन्द्रियस्य श्रोत्रादेः अर्थे शब्दादौ इन्द्रियस्य वागादेः अर्थे वचनादौ रागद्वेषौ पुरुषस्य नियमेन भवतः ॥ प्रकृतिवासना रागद्वेषावुत्पाद्य प्रवर्तयति ॥ का हानिरिति चेत् तौ रागद्वेषौ, अकृत्वा कर्मयोगं ज्ञानयोगाभ्यासे प्रवृत्तस्य परिपन्थिनौ शत्रुवत् प्रकृतकार्यविघ्नकर्तारौ ज्ञानयोगाभ्यासं प्रतिबध्नीतः ॥ अतः तयोः वशतां न प्राप्नुयात् ॥ दुःशको ज्ञानयोगः सुशकं च कर्म अतः कर्मणैव आत्मावलोकने प्रयतितव्यम् ॥ विहितकर्मानुष्ठानेन सवासनायाः प्रकृतेः विनाश्य वीर्यं तया अप्रतिबद्धः तेनैव कर्मणा ज्ञानयोगनिरपेक्षेण आत्मावलोकन सिद्धिं लभते ॥ अतः कर्मैव कर्तव्यम् ॥ ३४ ॥

अर्जुनः ॥ कर्मकरणाकरणयोरर्थानर्थावुक्तौ त्वया ॥ यद्येवं तर्हि सर्वेऽपि कुतः तवेष्टं कर्मयोगं नानुतिष्ठन्तीति पृष्टं मया ॥ सर्वोपि प्रकृतेः सदृशं चेष्टते ॥ किं मया अन्येन वा शास्त्रेण वा कर्तुं शक्यमित्यभिहितं त्वया ॥ यद्येवं तर्हि शास्त्राचार्योपदेशादेर्वैयर्थ्यमापद्यत इत्यनुयुक्तं मया ॥ गुणदोषप्रख्यापनेन रागद्वेषयोरपाकरणं शास्त्राचार्योपदेशादेः प्रयोजनमित्युक्तं भवता ॥ तथाच शास्त्राचार्योपदेशादिना गुणदोषौ ज्ञात्वा रागद्वेषौ निरस्य प्रकृतिं निर्वीर्यामारचय्य शास्त्राचार्योपदेशवशो भूत्वा शास्त्रीयं वर्णाश्रमोचितं विहितमुचितं उक्तरीत्या करणाकरणयोरर्थानर्थावहं कर्म कुर्यादित्युक्तं भवति ॥ शास्त्रवश्योऽहमास्तिकः तथैव कर्म कुर्याम् ॥ युद्धं परं न कुर्याम् ॥ अत एव हि पृष्टं मया ॥ १ 'तत्किं कर्मणि घोरे मां नियोजयसि केशवे'ति ॥ युद्धादन्यत् सर्वं कर्म कुर्याम् ॥ तथा कर्तुमनुजानीहि ॥

१. ३. १.

**कृष्णः ॥ श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् ॥**
**स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥ ३५ ॥**

**श्रेयानिति** ॥ सु सम्यक् अनुष्ठितः स्वनुष्ठितः तस्मात् स्वनुष्ठितात् परस्य धर्मः परधर्मः तस्मात् परधमात् स्वस्य धर्मः स्वधर्मः विगतः गुणः अङ्गं यस्मात् सः विगुणः अङ्गहीनोऽपि श्रेयान् श्रेष्ठः ॥ स्वधर्मे निधनं मरणं श्रेयः श्रेष्ठं ॥ परस्य धर्मः परधर्मः भयं आवहति जनयतीति भयावहः ॥ ३५ ॥

**सम्यगनुष्ठितात् स्वस्य अविहितात् परस्य विहिताच्च धर्मात् स्वस्य विहितः धर्मः विगुणोऽपि गुणरहितोऽपि दोषवानपि अङ्गहीनोऽपि श्रेष्ठः ॥ अतः स्वधर्मं युद्धमेवानुतिष्ठ ॥ युद्धं न कुर्यां युद्धादन्यत्कर्म कुर्यामित्युक्तं मया ॥ न तु स्वधर्मं युद्धं विहाय परधर्ममनुतिष्ठेयमित्युक्तम् ॥ एवंसति त्वया युद्धाकरणाद्युद्धकरणस्य श्रेयस्त्वं युद्धान्यक्षत्रियधर्माद्युद्धरूपक्षत्रियधर्मस्य श्रेयस्त्वं वा वाच्यम् ॥ न तु अन्यस्य विहितात् धर्मात् स्वस्य विहितो यो धर्मः तस्य श्रेयस्त्वं वक्तुं युक्तम् ॥ इति चेत् आस्तिकस्त्वं युद्धं विहाय किमपि कर्माकुर्वन्न तूष्णीं वर्तेथाः ॥ किंतु विहितं किमपि कर्म कुर्या एव ॥ कुर्वंश्च कर्म साधारणं कर्म न कुर्याः ॥ किंतु परमप्रशस्ततममेव कर्म कुर्याः ॥ उक्तं हि त्वया ॥ १ 'निश्चित्य येन श्रेयोऽहमाप्नुया'मिति ॥ युद्धादन्यत् क्षत्रियस्य विहितं कर्म न तादृशम् ॥ किंतु युद्धादवरम् ॥ उक्तं हि मया ॥ २ 'धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते'॥ इति ॥ तच्च तवानिष्टम् ॥ अतः परिशेषात् शमदमाद्युपेतो ब्राह्मणधर्मो वा हिंसादिदोषरहितो भैक्षाशनरूपः परिव्राड्धर्मो वा कर्तव्यत्वेन तवाभिमतो वाच्यः ॥ स च तवाविहिततया परधर्मः ॥ तस्मात् स्वधर्मः श्रेयान् ॥ मास्तु परधर्मः स्वधर्ममेव युद्धादन्यमनुतिष्ठेयमिति चेत् युद्धान्यक्षात्रियधर्मस्य युद्धादवरत्वेन युद्धरूपस्वधर्म एव श्रेयस्त्वेन ग्राह्यः ॥ परधर्मो निषिद्धः स्वधर्मः प्रशस्यः ॥ स्वधर्मेषु यः उत्तमः सः प्रशस्यतरः स एव सगुणश्चेत् प्रशस्यतमः ॥ अतस्त्वया युद्धमेव कर्तव्यम् ॥ अतः उक्तं युक्तम् ॥ न केवलमेषा रीतिस्तवैव किन्तु सर्वैः परधर्मं विहाय स्वधर्मेषु यः**

१ ३. २. २. २. ३१

श्रेयान् स एव कर्तव्यः ॥ स्वधर्मः स्वपरहिंसावहत्वेन मरणादिप्रसक्तिमान् परधर्मस्तु न तथा तथा चेत् किं करणीयमिति चेत् स्वधर्मे एव वर्तमानस्य मरणमपि श्रेयः ॥ परधर्मे वर्तमानस्य जीवितादपि ॥ परधर्मः इह अकीर्त्यावहत्वेन परत्र नरकाद्यनर्थावहत्वेन भयावहः ॥ स्वधर्मस्तु इह कीर्तिजनकत्वेन परत्र स्वर्गमोक्षमहाफलावहत्वेन परमसुखावहः ॥ अतः स्वधर्म एवानुष्ठेयः ॥ स्वधर्मे वर्तमानस्य मरणं परधर्मे वर्तमानस्य मरणादपि श्रेयः ॥ स्वधर्मे वर्तमानस्य मरणे भगवत्स्मृतिर्जायते ॥ तेन भगवदनुभवयोग्ये महति कुले जन्म भवति ॥ परधर्मे वर्तमानस्य मरणे विषयस्मरणं भवति ॥ तेन तदनुभवयोग्ये कुले जनिर्भवति ॥ ततश्च भगवति विमुखोऽभिमुखश्च विषयेषु विनश्यति ॥ अतः स्वधर्म एवानुष्ठेयः ॥ स्वस्य अज्ञस्य विहितः धर्मः अकाम्यकर्मरूपः अङ्गहीनोऽपि सम्यगनुष्ठितात् परस्य बहुजन्मानुष्ठितपुण्यपुञ्जपरिपक्वान्तःकरणस्य सर्वतो विरक्तस्य ज्ञानिनः धर्मः कर्मसंन्यासरूपः तस्मात् श्रेयान् ॥ अज्ञस्य कर्मसंन्यासात् कर्मैव श्रेयः ॥ कर्मणः स्वधर्मत्वात् कर्मसंन्यासस्य परधर्मत्वात् ॥ अतः अज्ञेन कर्मैवानुष्ठेयम् ॥ स्वधर्मे निधनं दोषाङ्गवैकल्यादिरूपन्यूनताऽपि श्रेयसी ॥ परधर्मस्तु भयावहः ॥ अतः स्वधर्म एवानुष्ठेयः ॥ दृश्यते च स्वधर्मे न्यूनताया अपि श्रेयस्त्वं परधर्मस्य सम्यगनुष्ठितस्यापि अनर्थावहत्वं लोके ॥ कस्यांचिदास्थान्यां कर्तव्यकार्यशेषनिर्वहणाय विंशतिं अधिकृतान् नियुंक्ते मूर्धन्यः ॥ त्वया एतावत् एतावति काले कार्यं त्वया एतावत् एतावति काले कार्यमिति ॥ सर्वेऽपि ते भिया जागरूकाः स्वस्य स्वस्य विहितं कर्मानुतिष्ठन्ति ॥ कश्चित्तु असाधारणबुद्धिकौशलयुक्तो मुहूर्तमात्रनिर्वर्त्येऽस्मिन् कार्ये किमर्थमद्यप्रभृति प्रवर्तितव्यं अन्तिमदिने मुहूर्तमात्रे करवाणि इति अप्रविष्ट एव तस्मिन् कार्ये स्वनिकटस्थेन आदिष्टकार्यनिर्वहणाशक्तेन वृत्तिच्युतिसंभावनासमुपजातसाध्वसेन सादरमभ्यर्थितः तेन कर्तव्यं कार्यं कुर्वन् वर्तते ॥ तच्च कार्यं निरवशेषं निर्व्यूढम् ॥ सति चैवं कार्यविमर्शनाय मूर्धन्य आगच्छति ॥ विमृशति च प्रथमादीनां कार्यम् ॥ एकैकस्यापि कार्यं सशेषं विगुणं च वर्तते ॥ दृष्ट्वा च मदाज्ञामनुवर्तमानो यथाशक्तिकरोति ॥ भवतु नाम न्यूनता ॥ नैतावताऽस्य हिंसा कार्या ॥ आज्ञानुवर्तनेन संतोष्टव्यमिति मत्वा एवं कर्तव्यं एवं कर्तव्यं इत्युपदिश्य नातिचिरेण समापयेत्यादिश्य गच्छति ॥ कुशलस्य निकटे तिष्ठन्तं कुशलेन कारितस्वकार्यं अकुशलं दृष्ट्वा किमा-

सीत् इति पृच्छति ॥ निरवशेषं निर्व्यूढमिति तेनोक्ते त्वमकुशलः कथमिदमिति स्मयमानः पृच्छति ॥ वृत्तिच्युतिभीरुः कुटुंबी चाहं पार्श्ववर्तिनोऽस्य कुशलस्य सादरमभ्यर्थितस्य दयया कृतकार्योऽभूवं ॥ इति तेनोक्ते दृष्ट्वा स्वयमकुशलैरेवमेव कार्यं अतीव परितोषो मे इत्युक्त्वा गच्छति ॥ कुशलं दृष्ट्वा किमासीदिति पृच्छति ॥ न मयाऽस्मिन् कार्ये प्रविष्टं श्वः समापयिष्यामि इति तेनोक्ते किंकृतमेतावत्पर्यन्तं त्वया इति पृच्छति ॥ निकटस्थस्यास्य कार्यं निरवशेषं तदर्थनया परिसमाप्य तस्मिन्नदां इत्युक्ते तेन तदीयं कार्यं सम्यगेव निर्व्यूढमस्ति कुशलः किलासि त्वं तस्य विहितं तेन कर्तव्यं कार्यं त्वया कस्यादेशमनुसृत्य कृतं ॥ अविहितपरकीयकार्ये विना मूर्धन्यस्यादेशं स्वेच्छया प्रवृत्तत्वात् त्वं दंडनार्होऽसि ॥ गच्छ बहिरित्येनमधिकारात्प्रच्याव्य बहिर्निष्कासयति ॥ प्रसिद्धं हीदं लोके ॥ अतः स्वधर्मएवानुष्ठेयः ॥ स च फलसंगादिरहित एवानुष्ठेयः ॥ कुत इति चेत् स्वः आत्मा तस्य धर्मः तस्य सुखप्रापको धर्मः ज्ञानतत्साधनाकाम्यकर्मरूपः श्रेयान् ॥ कस्मादिति चेत् परेषां इन्द्रियादीनां सुखप्रदात् काम्यनिषिद्धकर्मरूपात् धर्मात् ॥ कुत इति चेत् स्वधर्मः विगुणः गुणमयप्रकृतिबन्धान्मोचकः ॥ अतः स्वधर्मे निधनं श्रेयः ॥ परधर्मस्तु बन्धकत्वेन भयावहः ॥ उक्तं हि मया ॥ १ 'कृपणाः फलहेतवः' ॥ इति ॥ अतस्त्वं स्वधर्मं युद्धं फलसङ्गादिरहितस्सन्ननुतिष्ठ ॥ ३५ ॥

वि ॥ ज्ञानयोगस्य दुश्शकत्वात्सप्रमादत्वाच्च सुकरः प्रमादादिरहितः कर्मयोग एव कर्तव्य इत्युक्तम् ॥ २ ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दने 'त्युक्तरीत्या ज्ञानयोगस्य वस्तुतो ज्यायस्त्वात् स एव हि महता प्रयत्नेन साध्यः ॥ कुतः कर्मैव करणीयमिति निर्बध्यते ॥ वद ॥

कृष्णः ॥ ज्ञानयोगाशक्तस्य तच्छक्तस्य वा अज्ञस्य स्वस्य कर्तुं शक्यः कर्मयोगरूपो धर्म एव अङ्गविकलोऽपि प्रशस्यतरः ॥ कस्मादिति चेत् सम्यक् साङ्गोपाङ्गमनुष्ठितात् परस्य कर्तुं शक्यात् ज्ञानयोगरूपधर्मात् ॥ कुत इति चेत् दुःशकतया महता प्रयत्नेन साङ्गोपाङ्गमनुष्ठितोपि ज्ञानयोगो मध्ये विच्छिद्येत ॥ न हि सगुणोऽपि विच्छिन्नः फलाधायको भवति ॥ कर्मयोगस्तु विगुणोऽपि सुशकतया

१. २. ४९. २. ३. १.

विघ्नैरप्रतिहत आमरणमनुवर्तते ॥ विगुणस्यापि चिरानुवृत्तस्य क्रमेण सगुणारंभद्वारा फलाधायकत्वं प्रसिद्धम् ॥ किंपुनः सगुणः कर्मयोगः फलाधायक इति ॥ *विघ्नैरप्रतिघातेऽपि मरणेन स्वधर्मो विच्छिद्येतेति चेत् स्वस्य शक्ये कर्मयोगे वर्तमानस्य संभवत् मरणं श्रेयः* १ '*नेहाभिक्रमनाशोस्ती*'*त्युक्तरीत्या अनन्तरभा*विनि ततः परस्मिन्वा जन्मनि पूर्वाभ्यासवशेन सगुणकर्मारंभकं सत् महते फलाय भवति ॥ वक्ष्यते चेदं २ 'पार्थ नैवे हे 'त्यादिना ३ 'ह्रियते ह्यवशोऽपि स ' इत्यन्तेन॥ परधर्मः सगुणोऽपि मध्ये विच्छेदेन जन्मान्तरेपि फलाधायकत्वासंभवात् भयावहः ॥ अतः ज्ञानयोगशक्तेन तदशक्तेन च कर्मैव कर्तव्यम् ॥ ३५ ॥

सञ्जयः ॥

'तौ ह्यस्य परिपन्थिना 'विति कामक्रोधादीनां षण्णां भगवतोक्तं श्रेयोविघातकत्वं श्रुतवानर्जुनः किमिमे षट् वैरिणः पृथक् परिहर्तव्याः उत बलिष्ठस्य मूलभूतस्य कस्यचित् परिहारे सर्वेऽपि परिहृता भवेयुः ॥ आद्ये अशक्यमिदं महायाससाध्यत्वात् ॥ द्वितीये मूलभूतो बलीयान् शत्रुः कः ॥ तं मे ब्रूहि ॥ इति भगवन्तं पृच्छति ॥

अर्जुन उवाच ॥

अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः ॥
अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः ॥ ३६ ॥

**अथेति** ॥ वृष्णेः यादवस्य गोत्रापत्यं वार्ष्णेयः हे वार्ष्णेय कृष्ण अथ अयं पूरुषः न इच्छन्नु अनिच्छन्नपि बलात् नियोजितः प्रेरितः भृत्य इव केन प्रयुक्तः प्रेरितः सन् पापं चरति करोति ॥ ३६ ॥

स्वकीयकर्मकर्तव्यतारूपप्रकृतप्रमेयादन्यदेव किमपि पृच्छामि॥तर्हि पूर्वासङ्गतोऽयं प्रश्न इति चेत् ' तयोर्न वशमागच्छे 'दित्युक्त्या सञ्जातमूलत्वात् प्रासङ्गिकोऽयं प्रश्नःपूर्वप्रकरणसंगत एव ॥ अयं पुरुषः कामादिषु केन प्रयुक्तः पापं चरति ॥ यस्य

---

१. २. ४०. २. ६. ४०. ३. ६. ४४.

जयेन सर्वेऽपि वैरिणो जिता भवन्ति ॥ इच्छया हि कर्म करोति विवेकादनिच्छन् न करोतु पापं कर्मेति [illegible] अनिच्छन्नपि करोति ॥ अनिच्छन् कुर्याद्वा इति चेत् राज्ञा नखंपचे महत्यातपे गच्छेति बलान्नियोजितो भृत्यः स्वयमनिच्छन्नपि यथा अनुल्लङ्घनीयराजप्रेरणया गत्वा तत्कार्यं कृत्वा आगच्छति तथा अनिच्छन्नपि अनुल्लंघनीयया कस्यचित्प्रेरणया पापं कर्म करोति स कः ॥ १अयमेकः प्रश्नः ॥ अथेति प्रकरणान्तरारंभसूचकः ॥ स्वकीयं कर्म फलसंगादिराहित्येन कर्तव्यमिति महता प्रबन्धेन समर्थितम् ॥ १ 'निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥' इत्युपसंहृतं च ॥ कथं तथा कर्मकरणं शक्यं रागद्वेषादीनां बलवतां प्रतिबन्धकानां विद्यमानत्वात् ॥ शास्त्राचार्योपदेशबलेन रागादयः परिहर्तव्या इति 'तयोर्न वशमागच्छे'दित्यनेनोक्तं हि मया॥ इति चेत् तेषां सर्वेषां पृथक् परिहारप्रयत्ने महानायासः स्यात् ॥ यो बलवान् मूलभूतः तस्य नाशने केवलं प्रयत्यतां मूलोच्छेदादन्येपि विनष्टा भवेयुः इति चेत् स कः इत्यपरः २प्रश्नः॥ अथेति प्रश्नसूचकः॥ केनेति किंशब्देन प्रश्नः सूच्यते इति चेत् प्रश्नस्यास्य आवश्यकतासूचकोऽथशब्दः॥ पृष्ट्वा ज्ञात एव प्रतिबन्धके तद्वीर्ये च तदुच्छेदेन विहिते अकाम्ये कर्मणि स्वारसिकी प्रवृत्तिर्जायते ॥ सर्वोऽपि पुरुषः सर्वमपि पापं इति कार्त्स्न्यार्थको वा अथशब्दः ॥ रागद्वेषादीन् विनाश्य विहितमकाम्यं कर्म कर्तव्यमित्युक्तम् ॥ विवेकेन रागादीनां नाशनेऽपि अकार्ये प्रवृत्तिर्लोके दृश्यते ॥ अनिच्छन्नपि भृत्यो राजनिर्बन्धात्करोति कर्म ॥ अतो रागादिभ्योऽन्यः कश्चित्प्रेरकोऽस्तीति भाति स कः ॥ अय ३ मपरः प्रश्नः ॥ अथेतिशब्द आनन्तर्यार्थकः ॥ अथ रागद्वेषादेर्नाशनानन्तरं अनिच्छन्नपि पापं कर्म करोति केन प्रयुक्तः करोतीति ॥ ईश्वरः देवाः कामादयश्च प्रेरकाः इति २ 'प्रकृतेः क्रियमाणानी'त्यादिना ३ 'तौ ह्यस्य परिपन्थिना' वित्यन्तेन ग्रन्थेन ज्ञायते ॥ तेषु अथ ईश्वरात् देवेभ्यश्चानन्तरं केन प्रयुक्तोऽयं पापं चरति तं ब्रूहि ॥ तं जेतुं यतिष्ये ॥ अय ४ मन्यः प्रश्नः ॥ आनन्तर्ये अथशब्दः ॥ ४ 'सदृशं चेष्टते स्वस्याः प्रकृते'रि[illegible]ते प्रकृति वासनायाः प्रवर्तकत्वमुक्तम् ॥ वासना च इच्छाद्वारैव प्रवर्तयतीति तावदनुभवसिद्धम् ॥ अकृत्वा कर्मयोगं ज्ञानयोगमारभमाणो न तद्विरोधिनं विषयानुभवमिच्छति इच्छति च ज्ञानयोगम् ॥ सतिचैवं विषयानुभवेच्छाया अभावात् किं

---

१ ३. ३०. २. ३. २७. ३. ३ ३४. ४. ३. ३३.

द्वारीकृत्य वासना विषयेषु प्रवर्तयति ॥ द्वारभूतं किमपि वाच्यम् ॥ इच्छैवेति चेत् सा तु नास्ति ॥ अन्यदेव किमपीति चेत् तत्कि ब्रूहि ॥ इत्यपरः ५ प्रश्नः ॥ अथेति प्रश्ने कार्त्स्न्ये वा ॥ त्वं वृष्णिशब्दितयादवकुलोत्पन्नोऽसि ॥ अहं तु वार्ष्णेय्याः पृथायाः सुत अतो नाहमुपेक्षणीयः ॥ परमानन्दं वर्षतीति वृष्णिः सम्यक्बोधः तद्विषयत्वाद्वार्ष्णेयः परमात्मा त्वं परमात्माऽसि ॥ अतः पापाचरणहेतुमुक्त्वा तज्जयोपायमप्युपदिश्य तज्जयं कारयित्वा अनुग्रहीतुमर्हसि ॥ ३६ ॥

सञ्जयः ॥ एवमर्जुनेन पृष्टो भगवान् अनिच्छतोऽप्यकार्यप्रवृत्तिहेतुं बलिष्ठं शत्रुमाह ।

श्रीभगवानुवाच ॥

काम एष क्रोध एष रजोगुणसमुद्भवः ।

महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥ ३७ ॥

काम इति॥ एषः कामः एषः क्रोधः एषः रजोरूपश्चासौ गुणश्च रजोगुणः समुद्भवत्यस्मादिति समुद्भवः कारणं रजोगुणः समुद्भवो यस्य सः रजोगुणसमुद्भवः एषः महत् अशनं यस्य सः महाशनः महान् पाप्मा पापं येन सः महापाप्मा एनं कामं इह वैरिणं शत्रुं विद्धि जानीहि ॥ ३७ ॥

एषः 'केन प्रयुक्त' इति त्वया पृष्टः बलीयान् काम अनिच्छतोऽप्यकार्यप्रवृत्तिहेतुः॥ कामो नाम बलवती इच्छा ॥ अनिच्छतः प्रवर्तकप्रश्ने इच्छा प्रवर्तिका इति कथं युज्यते ॥ तस्येच्छाया अभावात् ॥ अनिच्छन् हि सः ॥ कामादिषु केन बलीयसा प्रेरितः करोतीति प्रश्ने एष काम इत्युत्तरं युज्येत इति चेत् कामादिषु बलीयान् क इति प्रश्नस्यापि १ इदमुत्तरम् ॥ कामादिषु बलीयान् काम एवेति ॥ अस्त्वेतत् अनिच्छतः प्रवर्तकः क इति प्रश्नस्य कथमिदमुत्तरमिति चेत् एषः रजोगुणसमुद्भवः रजोगुणादुद्भवति ॥ समुद्भवत्यस्मादिति समुद्भवः रजोरूपः गुणः रञ्जनात्मिका सामान्येच्छा वा समुद्भवो यस्येति वा रजोगुणात्समुद्भवतीति वा

१. प्रथम द्वितीय तुरीय प्रश्नानां ॥

व्युत्पत्तिः ॥ सत्त्वं रजः तमः इति त्रयः प्रकृतेर्गुणाः ते न युगपत् स्वस्वकार्यमारभन्ते ॥ विरोधात् ॥ किंतु तेष्वेक एव द्वावन्यावभिभूय स्वकार्यमारभते ॥ वक्ष्यते चेदम् ॥ १' रजस्तमश्चाभिभूय सत्त्वं भवति भारत ॥ रजः सत्त्वं तमश्चैव तमस्सत्त्वं रजस्तथा ॥' इति ॥ रजस्तमःप्रचुरस्य कारणविशेषैः कदाचिदुद्भूतेन अल्पेन सत्त्वेन आत्मस्वरूपसुखावाप्तिसाधनज्ञानादिसाधनेच्छा जायेत । तदानीं प्रचितप्राचीनकर्मोद्भावितनिरन्तरानुवृत्तरजोमूला विषयानुभवाद्यकार्येच्छा निवर्तते ॥ तदानीमयमनिच्छन् भवति ॥ तथाविधस्यास्य तदल्पं सत्त्वं वासनामूलो बलीयान् रजोगुणोऽभिभूय स्वीयां विषयानुभवेच्छामुत्पादयति ॥ तया सात्त्विकी पूर्वोक्ता इच्छा निवर्तते ॥ करोति च राजस्या कामशब्दितया तया इच्छया पापमयं पुरुषः ॥ अतः अनिच्छतः प्रवर्तकः क इति प्रश्नस्य २इदमुत्तरं युज्यते ॥ सत्त्वोन्मेषादनिच्छन्नपि सत्त्वमभिभूय स्वयमुद्भूतस्य रजस औत्कट्यादुद्भूतया अकार्येच्छया करोत्येवाकार्यं पुरुष इति ॥ अयमेकः प्रकारः ॥ कामो नाम इदं मे भूयादिदं मे भूयादिति शब्दादिविषयविषयकतीव्रेच्छानिमित्तभूतो मनसोऽनवस्थितत्वापादकश्चेतसो वृत्तिविशेषः ॥ विवेकादिच्छाया निवर्तनेऽपि मूलभूतस्य कामस्य सत्त्वात् पुनरिच्छा उदेति ॥ तया चायं पुरुषः पापं चरति ॥ अतः अनिच्छतः प्रवर्तकः क इति प्रश्नस्य ३इदमुत्तरं युज्यते ॥ अयमपरः प्रकारः ॥ क्रोधस्यापि अकार्यप्रवर्तकत्वं दृश्यते ॥ कथं कामस्यैकस्यैव प्रवर्तकत्वमुच्यते इति चेत् क्रोधः एष एव एतन्मूलक एव प्रतिहतगतिः काम एव क्रोधात्मना परिणमति नान्यः ॥ अतस्तत्रापि कामस्यैव प्रवर्तकत्वात् काम एव प्रवर्तक उक्तः ॥ कामः क्रोधश्च प्रवर्तकावुच्येते इत्येवं कुतो न वाच्यं इति चेत् एषः कामः क्रोधश्च इत्येव पूर्तौ एष इत्यस्य द्विःप्रयोगोऽनर्थकः स्यात् ॥ विद्ध्येनाविह वैरिणौ इति वक्तव्यं स्यात् ॥ केन प्रयुक्त इत्येकस्य प्रबलस्य प्रश्ने द्वयोरुक्तिरसंगता च स्यात् ॥ अत एव तेन एतेन अस्य एनं कामरूपं शत्रुं इत्युत्तरत्र कामस्यैकस्यैवोक्तिः संगच्छते ॥ एनं रजोगुणसमुद्भवं क्रोधजनकं कामं इह ऐहिकामुष्मिकपुरुषार्थविषये संसारे मोक्षमार्गे ज्ञानयोगे वैरिणं विद्धि ॥ कुतोऽयं वैरीति चेत् शत्रुर्नाशयति अयमपि अकार्ये प्रवर्त्य नाशयति ॥ अनेन प्रेरितो हि पापं चरति ॥ अयं कथं पापे प्रवर्तयतीति चेत् रजोगुणसमुद्भवः रजोरूपगुणस्य रजसो गुणः कार्यं तस्य प्रवृत्त्यादेः समुद्भवःकारणभूतः रजसो गुणौ कार्यभूतौ

---

१. १४. १०. २ पञ्चमप्रश्नस्य ॥ ३. तृतीयप्रश्नस्य ॥

तृष्णासंगौ तयोरुत्पादकः कार्यजननेन रजोगुणाभिवृद्धिहेतुत्वात् पापे प्रवर्त्य नाशको भवति ॥ अतोऽयं वैरी ॥ न केवलं काम एव रजोगुणसमुद्भवः किंतु क्रोधोऽपि- विषयार्पणेन समाधीयतामिति चेत् १ महाशनः ॥ सामभेदाभ्यां समाधीयतामिति चेत् महापाप्मा अत्युग्रः अतः परिशेषाद्दण्ड्य एव ॥ विषयार्पणेनासमाधेयोपि यावदपेक्षं विषयार्पणेन समाधीयतामिति चेत् महापाप्मा महतः पापस्यो २त्पादको भवेत् ॥ अत्युत्कटेन कामेन स्वसारमप्यारोढुमिच्छति ॥ चण्डालादप्यर्थं गृह्णाति ॥ कामप्रतिहत्या क्रुद्धो ३गुरुमपि जिघांसति ॥ कामो महाशनः क्रोधो महापाप्मा कामस्य महाशनत्वात् तज्जन्यक्रोधस्य महापाप्मत्वात् कामो वैरीति वा ॥ अतो यथावत्कर्मयोगाद्यनुष्ठानद्वारेण श्रेयः प्राप्तुं कामरूपशत्रुजये प्रयतितव्यमिति विद्धि ॥ ३७ ॥

अर्जुनः ॥ कामस्य वैरित्वं सम्यक् दृष्टान्तैरुपपादय ॥ सम्यक्ज्ञाते हि वैरित्वे तज्जये प्रयत्नः क्रियेत ॥

कृष्णः ॥ धूमेनाव्रियते वह्निर्यथाऽऽदर्शो मलेन च ॥
यथोल्बेनाऽऽवृतो गर्भस्तथा तेनेदमावृतम् ॥ ३८ ॥

धूमेनेति ॥ यथा वह्निः अग्निः धूमेन आव्रियते यथा आदर्शः दर्पणः मलेन धूल्यादिना आव्रियते यथा गर्भः उल्बेन गर्भावरणचर्मपेश्या आवृतः तथा तेन कामेन इदं आवृतम् ॥ ३८ ॥

'पापं चरति पूरुषः' इति बाध्यमानजीवस्योक्त्या इदमिति बाध्यमानजीवपरामर्शः ॥ जीवस्तु त्रिविधः ॥ उत्तमाधममध्यमभेदात् ॥ तत्र उत्तमजीवः धूमेन वह्निर्यथा किञ्चित् अच्छाद्यते तथा कामेन किञ्चित् अच्छाद्यते ॥ मध्यमजीवः दर्पणः

---

१. महत् दातुमशक्यं अशनं भोग्यं यस्य सः ॥ 'न जातु कामः कामानामुपभोगेन शाम्यति ॥ हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते'॥ भाग. ९. १९. ॥ २. महान् पाप्मा पापं येन सः ॥ 'ईहन्ते कामभोगार्थं अन्यायेनार्थसंचयान् ॥ इति (१६. १२.) वक्ष्यते ॥ उक्तं च मया ॥ 'ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते' (२. ६२.) इति ॥ ३. क्रुद्धः पापं न कुर्यात् कः क्रुद्धो हन्याद्गुरूनपि ॥ इति हि वचनं श्रूयते ॥

यथा मलेन अधिकमाच्छाद्यते तथा कामेन अधिकमाच्छाद्यते॥ अधमजीवस्तु जरायुशब्दितेन गर्भवेष्टनचर्मणा यथा अत्यन्तमावृतः तथा कामेन अत्यन्तमावृतः॥ एवं जीवजातं तेन कामेन तत्तद्योग्यताभेदादावृतम्॥ बाधप्रकारं ब्रूहीति चेत् धूमेन वह्निरिव ईश्वरः जीवगतकामेन आवृतः॥ वह्निः स्वयंप्रकाशरूपो धूमावरणादन्यैर्न ज्ञायते॥ तथा प्रकाशरूपोपीश्वरः कामावरणादन्यैर्न ज्ञायते॥ मलेन दर्पण इव जीवान्तःकरणं कामेनाऽऽवृतम्॥ दर्पणो मलेनाऽऽवृतो मुखादिकं न प्रकाशयति॥ तथा कामेनाऽऽवृतं अन्तःकरणं जीवपरमात्मादितत्वानि न प्रकाशयति॥ गर्भो यथा उल्बेनाऽऽवृतः स्वैरं चेष्टितुं न क्षमते॥ तथा जीवः कामेनाऽऽवृतः स्वैरं चेष्टितुं न क्षमते॥ किंतु परतन्त्रः क्लिश्यति॥ एवं इदं ईश्वरः अन्तःकरणं जीवश्चेति त्रयं कामेनाऽऽवृतम्॥ आवरणक्रमानुरोधेन आव्रियमाणवस्तुभेदानुरोधेन च दृष्टान्तत्रयोपादानम्॥ ज्ञानसाधनमन्तःकरणं ज्ञानं वा उपमृद्य पुरुषं पापे प्रवर्तयति कामः॥ तस्य च तिस्रोऽवस्थाः सूक्ष्मत्वस्थूलत्वस्थूलतरत्वरूपाः॥ तत्र प्रथमावस्थायां धूमेनाऽऽवृतो वह्निरिव कामेनाऽऽवृतं ज्ञानं स्वकार्यं करोति॥ स्वरूपत उपलभ्यते च॥ किंतु धूमाऽऽवृतवह्निवदकार्यप्रवर्तनेन बाधकत्वाद्दुष्टम्॥ द्वितीयावस्थायां मलेनाऽऽवृतो दर्पण इव स्वकार्यं न करोति॥ स्वरूपतः परमुपलभ्यते॥ तृतीयावस्थायां उल्बेनाऽऽवृतो गर्भ इव स्वकार्यं न करोति॥ स्वरूपतश्च नोपलभ्यते॥ एवमवस्थात्रयप्रदर्शनाय दृष्टान्तत्रयोपादानम्॥ वह्निवत् प्रकाशस्वरूपं दर्पणवत् बिंबप्रकाशनेनाऽऽह्लादकरम्॥ आभासव्याप्त्या चेतनतुल्यं च ज्ञानं धूमवदप्रकाशस्वरूपेण मलवल्लेपनस्वरूपेण उल्बवदचेतनेन च कामेनाऽऽवृतम्॥ अवस्थाभेदादावरणप्रकारभेदप्रदर्शनार्थं दृष्टान्तत्रयोपादानम्॥ इदं जन्तुजातं धूमेन वह्निरिव मलेन आदर्श इव उल्बेन गर्भ इव आवृतम्॥ कामस्य धूमवत् सहजत्वं मलवन्निवर्तितस्यापि पुनरुपागमं उल्बवत् स्वतोनिवर्तयितुमशक्यत्वं च दर्शयितुं दृष्टान्तत्रयोपादानम्॥ एवं बाधकत्वेन वैरित्वात् कामोऽवश्यं जेतव्यः॥ ३८॥

अर्जुनः॥ अज्ञस्य उक्तरीत्या कामो बाधकः स्यात्॥ ज्ञानिनस्तु कथं बाधकः स्यात्॥ ज्ञानेन कामस्य निवर्तयितुं शक्यत्वात्॥ सातिचैवं [1] 'सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपी' ति कथम्॥ ज्ञानमावृत्य ज्ञानिनं बाधते इति चेत्॥ ज्ञानस्य रागादिनिवर्तकत्वात् कथमिदम्॥ ब्रूहि॥

---

१. ३. ३३.

**कृष्णः ॥ आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ॥**
**कामरूपेण कौन्तेय दुष्पूरेणानलेन च ॥ ३९ ॥**

**आवृतमिति**॥ हे कौन्तेय अर्जुन ज्ञानं अस्यास्तीति ज्ञानी तस्य ज्ञानिनः ज्ञानं कामः रूपं स्वरूपं यस्य सः कामरूपः काम : इति रूपं आख्या यस्य स : कामरूप : इति वा॥ तेन कामरूपेण पूरयितुं अशक्य : दुष्पूर : तेन दुष्पूरेण न विद्यते अलं पर्याप्तिः यस्य सः अनल : तेन अनलेन अतः अनलेन अग्निसदृशेन एतेन नित्यं वैरी शत्रु : नित्यवैरी तेन नित्यवैरिणा आवृतं आच्छादितम् ॥ ३९ ॥

**ज्ञानिनः ज्ञानं एतेन कामाख्येन अनर्थप्रापकत्वान्नियमेन वैरिणा नित्यस्य मोक्षस्य तत्साधनापरोक्षज्ञानस्य वा वैरिणा प्रतिबन्धकेन आवृतं प्रतिबद्धं ॥ ज्ञानं हि ज्ञानिन एव स्यात् ॥ अतः ज्ञानमित्येवालं ज्ञानिनो ज्ञानमिति किमर्थमिति चेत् ज्ञानिनः १अधिकज्ञानवतः ज्ञानमपि एतेन आवृतं ॥ किमुताल्पज्ञानवतः ॥ सर्वेषां ज्ञानं कामरूपेण इच्छास्वरूपेण एतेन कामेन कामो विषयः तमेव रूपयति गोचरयति नाऽऽत्मतत्वमिति वा कामरूपः तेन आवृतं ॥ कामः कीदृश इति चेत् ॥ ज्ञानिनो नित्यवैरी ॥ अज्ञो विषयभोगकाले कामं मित्रमिवपश्यन् तेन दुःखे प्राप्ते कामेनाहमिदं दुःखं प्रापितः इति तं वैरिणं मन्यते॥ अत: कामोऽज्ञस्य अनित्यवैरी ॥ ज्ञानी बलवता कामेनाकार्ये प्रवेशितो भोगकालेऽपि कामेनाहमनर्थे प्रवेशितः किं कुर्यामिति दुःख्यति ॥ किंपुनस्तेन दुःखे प्राप्ते ॥ अतः कामो ज्ञानिनो नित्यवैरी इति वा ॥ ज्ञानिन: ज्ञानस्वभावस्य अनिष्पन्नज्ञानस्य ज्ञानं कामाकारेण एतेन नित्यवैरिणा अनादित्वात्पूर्वावधिशून्येन आत्मसाक्षात्कारोत्तरावधिना वैरिणा आवृतं प्रतिबद्धं सत् नोत्पद्यते ॥ इति वा ॥ विषयार्पणेन समाधीयतामिति चेत् 'महाशन' इत्युक्तरीत्या पूरयितुमशक्येन पुरुषं दुःखेन पूरयता वा ॥ कुत इति चेत् अनलेन न विद्यते अलं पर्याप्तिः तृप्तिः यस्य तादृशेन अत एव अनलशब्दिताग्निसदृशेन अग्नि हविषापूरयितुमशक्यः कामस्तु विषयभोगेन पूरयितुमशक्यः ॥**

---

१. आधिक्ये इनि प्रत्ययः ॥ 'भूमनिन्दा प्रशंसासु नित्ययोगेऽतिशायने ॥ संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः'॥ इत्यनुशासनात् ॥

कामितविषयाप्राप्तौ अग्निवत्तापकेन यथेच्छं विषयभोगाय महत्यकार्ये प्रवर्तकत्वेन महापाप्मेत्युक्तरीत्या महापापजनकत्वादग्निवन्नाशकेन वक्ष्यते च कामस्य नाशकत्वं १'त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ॥ कामः क्रोधस्तथा लोभस्तस्मादेतत् त्रयं त्यजे'दिति ॥ उक्तं च मया ॥ २'ध्यायतो विषया'नित्यादिना ३'बुद्धिनाशात्प्रणश्यती'त्यन्तेन ॥ पर्याप्तिः परिमितिः तद्रहिततया अपरिमितत्वादनलशब्दितसमुद्रतुल्येन ॥ ४'नेव हि कामस्यान्तोस्ति ॥ न समुद्रस्य ॥' इति श्रुतिः ॥ न विद्यते अलं अधिकं मास्तु इति निवारणक्रिया यस्य तादृशेन अत एव तादृशसमुद्रतुल्येन समुद्रः स्वयं पूर्णोऽपि आगच्छन्ति नद्यादिजलानि न निवारयति स्वीकरोति च ॥ तथा कामोविषयार्पणेन पूर्यमाणोऽपि न विषयविमुखो भवति ॥ किंतु स्वीकरोत्येव विषयान् ॥ तादृशेन कामेन ज्ञानमावृतं भवति ॥ अज्ञानां ज्ञानं प्रतिबद्धं सत् नोत्पद्यत एव ॥ ज्ञानिनामुत्पन्नमपि ज्ञानं प्रतिहतवीर्यं सत् नापरोक्षज्ञानजननसमर्थं भवति ॥ अतः कामो वैरी सर्वेषां ॥ अतस्तन्नाशने प्रयतितव्यं ॥ वार्ष्णेयेति संबोधयता त्वया त्वयाऽहं नोपेक्षणीय इति सूचितं ॥ वार्ष्णेय्याः कुंत्याः पितृष्वसुः पुत्रत्वादेव तवायमुपदेशः क्रियते ॥ ३९ ॥

अर्जुनः ॥ महता प्रयत्नेन अवश्यं जेतव्यो बलवान् शत्रुर्निरूपितः ॥ तस्यसामर्थ्यं शत्रुत्वप्रकारश्च इत्येतदपि सम्यगभिहितं ॥ उत्तिष्ठमानः शत्रुः नोपेक्ष्यः ॥ अतस्तज्जये प्रयतितव्यं ॥ ज्ञाते हि तदधिष्ठाने समूलमुन्मूलयितुं शक्येत ॥ अतस्तस्य कामाख्यशत्रोरधिष्ठानं ब्रूहि ॥

**कृष्णः ॥ इन्द्रियाणि मनोबुद्धिरस्याधिष्ठानमुच्यते ॥**
**एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ॥ ४० ॥**

**इन्द्रियाणीति** ॥ इन्द्रियाणि मन . बुद्धिः अस्य कामस्य अधिष्ठानं करणं आश्रयो वा उच्यते ॥ एषः कामः एतैः इन्द्रियादिभिः ज्ञानं आवृत्य आच्छाद्य देहः अस्यास्तीति देही तं देहिनं आत्मानं विमोहयति विविधं मोहं प्रापयति ॥ ४० ॥

अस्य कामरूपशत्रोः इन्द्रियाणि श्रोत्रादीनि वागादीनि च मनः बुद्धिः मनोबुद्ध्योरिन्द्रियत्वेऽपि प्राधान्यात्पृथगुक्तिः ॥ अधिष्ठानमित्युच्यते ॥ अधितिष्ठत्येन-

१. १६. २१. २. २. ६२. ३. २. ६३. ४. तै. आ. २. १. ५.

मिति व्युत्पत्त्या अधिष्ठानमाश्रयः ॥ दर्शनश्रवणादिभिः ज्ञानेन्द्रियव्यापारैः वचनस्पर्शनादिभिः कर्मेन्द्रियव्यापारैः संकल्पेन मनोव्यापारेण अध्यवसायेन बुद्धिव्यापारेण च अस्य कामस्य प्रादुर्भावात् ॥ इन्द्रियाणि मनो बुद्धिश्च अस्याऽऽश्रयः ॥ अस्याऽऽश्रयभूतै एतैः स्वस्वव्यापारद्वारा हेतुभूतैः एषः कामः अन्तः प्रविश्य विवेकविज्ञानमावृत्य ज्ञानमनुत्पाद्य उत्पन्नमपि ज्ञानं कार्याक्षमं कृत्वा देहाभिमानिनं जीवं विविधं [1] 'विशेषेण मोहयति आक्रामति विपरीतज्ञानमुत्पाद्य नाशयति ॥ अधितिष्ठत्येभिः काम आत्मानं इति हेतोः इंन्द्रियाणि मनो बुद्धिश्च अधिष्ठानं उपकरणं अन्तःप्रवेशमार्गः इत्युच्यते ॥ एतैः उपकरणैः सहायभूतैः अन्तः प्रविश्य ज्ञानमावृत्य जीवं विमोहयति॥ इति वा ॥ यथा चोरः अनिरुद्धैः अंतःप्रवेशमार्गैः अन्तः प्रविश्य स्वव्यापारविरोधिनं प्रकाशमानं दीपं निर्वाप्य सर्वस्वापहारेण गृहाभिमानिनमाक्रामति ॥ तद्वत् ॥ इंन्द्रियमनोबुद्धिव्यापारैः समुदितैरेव कामस्याऽऽविर्भाव इति सूचनाय अधिष्ठानमित्येकवचनं ॥ वेदाः प्रमाणमितिवत् ॥ ४० ॥

अर्जुनः ॥ अतः कामजये प्रयतितव्यमित्युक्तं ॥ प्रयत्नेन कामजयप्रकारं ब्रूहि॥

कृष्णः ॥ तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ ॥
पाप्मानं प्रजहिह्येनं ज्ञानविज्ञाननाशनम् ॥ ४१ ॥

तस्मादिति ॥ भरतानां भरतेषु वा ऋषभः श्रेष्ठः भरतर्षभः हेभरतर्षभ अर्जुन त्वं तस्मात् कामस्य शत्रुत्वात् आदौ विमोहनात्पूर्वमेव इन्द्रियाणि नियम्य वशीकृत्य ज्ञानं च विज्ञानं च ज्ञानविज्ञाने नाशयतीति नाशनं ज्ञानविज्ञानयोः नाशनं ज्ञानविज्ञाननाशनं पाप्मानं पापरूपं पापहेतुं वा एनं कामं प्रजहिहि परित्यज ॥ हि स्फुटं प्रजहि नाशय इति वा ॥ ४१ ॥

हि यस्मात् कामरूपः शत्रुः ज्ञानमावृत्य मोहयति तस्मात् महाकुलप्रसूतत्वात्तज्जयसमर्थः त्वं आदौ आक्रमणात्पूर्वमेव इन्द्रियाणि नियम्य विषयासंस्पृष्टान् विषयसंस्पर्शेपि क्षोभरहितांश्च कृत्वा उपलक्षणया मनोबुद्धी अपि नियम्य तयोरधिष्ठानत्वोक्त्या तज्जयस्याप्यवश्यं वाच्यत्वात् ॥ सत्यामन्तर्विषयचिन्तायां इंन्द्रिय-

---

१. 'अनात्मन्यात्मबुद्धिर्या अस्वे स्वमिति या मतिः ॥ अविद्यातरुसंभूतिबीजमेतत् द्विधास्थितम् ॥ इति विष्णुपुराणे ॥ ७ अंशे ११ अध्याये ॥

जयस्य विफलत्वात् ॥ उक्तं हि मया॰। १ 'मिथ्याऽऽचारः स उच्यते ।।' इति ॥ इन्द्रियत्वेन मनोबुद्ध्योरपि इंद्रियपदेनैव ग्रहणं वा ॥ इन्द्रियाणि आदौ नियम्येत्युक्त्या अनन्तरं मनोबुद्धी नियम्येति लभ्यते ॥ इति वा ॥ इन्द्रियाणां नियमने बहिर्निर्गमनमार्गनिरोधात् मनोबुद्ध्योर्निरोधः स्वत एव भवति इति तन्नियमनस्यानुक्तिरिति वा ॥ आदौ मोक्षोपायानुष्ठानारंभसमय एव इंद्रियाणि नियम्य इन्द्रियव्यापारात्मके कर्मयोग एव नियम्य इति वा ॥ पापहेतुं ज्ञानस्य सामान्यज्ञानस्य शास्त्राचार्योपदेशजन्यपरोक्षज्ञानस्य वा विज्ञानस्य विशेषज्ञानस्य अपरोक्षज्ञानस्य वा तयोर्नाशकरं ज्ञानस्य आत्मस्वरूपज्ञानस्य विज्ञानस्य आत्मगतविशेषविषयज्ञानस्य च नाशकरमिति वा ॥ ज्ञानस्य सामान्यतः आत्मज्ञानस्य विज्ञानस्य तत्त्वरूपविशेषप्रतिपादकशास्त्रजन्यज्ञानस्य च नाशकरमिति वा ॥ ज्ञानं शास्त्रादिजन्यं विज्ञानं निदिध्यासनजन्यं तयोर्नाशकरमिति वा ॥ एनं कामरूपं शत्रुं प्र निरवशेषं जहि नाशय ॥ 'हन हिंसाया'मिति धातुः ॥ २ प्रजहिहि इत्येकं पदं ॥ त्यज ॥ 'हाक् त्याग' इति धातुः ॥ हि शब्दः, यथा चोराणां अन्तः प्रवेशात्पूर्वमेव अन्तःप्रवेशमार्गं निरुध्य तदीयमुपद्रवं परिहरन्ति तद्वत् इति प्रसिद्धिद्योतको वा ॥ अयं कामजयोपायः अनेनोपायेन कामो जेतव्यः ॥ अतस्त्वमेवमेनं जहि ॥ ४१ ॥

अर्जुनः ॥ इन्द्रियाणि मनोबुद्धी च नियम्य कामं निश्शेषं जहीत्युक्तं । इन्द्रियादिजयमात्रेण न कामो निर्मूलमुन्मूलयितुं शक्यः ॥ अधिष्ठाननिरोधेन कामस्य स्थूलरूपेण नाशनेऽपि सूक्ष्मरूपेणानुवृत्तेः ॥ अत सूक्ष्मरूपेणापि तस्य नाशने उपायं ब्रूहि ॥

कृष्णः ॥ इन्द्रियाणि पराण्याहुः इन्द्रियेभ्यः परं मनः ॥
मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः ॥ ४२ ॥

एवं बुद्धेः परं बुध्वा संस्तभ्याऽऽत्मानमात्मना ॥
जहि शत्रुं महाबाहो कामरूपं दुरासदम् ॥ ४३ ॥

---

१. ३. ६. २. 'जहिहि जहीहि जहाहि राममार्याम् ॥' इति भट्टिः ॥

**इन्द्रियाणीति॥** हे महाबाहो अर्जुन इन्द्रियाणि पराणि प्रबलानि आहुः वदन्ति॥ इन्द्रियेभ्यः मनः परं आहुः ॥ बुद्धिस्तु मनसः परा प्रबला॥ बुद्धेः परतः यः सतु सः॥ परमात्मा ॥ एवं बुद्धेः परं परमात्मानं बुध्वा ज्ञात्वा आत्मना बुध्या आत्मानं मनः संस्तभ्य समाधाय स्थिरीकृत्य दुरासदं दुर्जयं कामरूपं शत्रुं जहि नाशय ॥ बुद्धेः परतः यः सतु सः कामः ॥ एवं कामं बुद्धेः परं बुध्वा॥ इति वा ॥४२॥४३॥

**अधिष्ठाननिरोधेन स्थूलरूपेण जित्वा जडादारभ्य परमात्मपर्यन्तं उत्तरोत्तरं परत्वं ज्ञात्वा सर्वतः परत्वेन भगवन्तं ज्ञात्वा तेन तारतम्यज्ञानेन ततोऽधिकं जित्वा सर्वतः परस्य भगवतः साक्षात्कारेण कामं निर्मूलमुन्मूलय ॥ तारतम्यप्रकारः क इति चेत् देहात् जडात् जडेभ्यो विषयेभ्यश्च इन्द्रियाणि पराणि उत्कृष्टानि ॥ ग्राह्याणां तेषां ग्राहकत्वेन ज्ञानजननशक्तिमत्वात् ॥ वचनाशनगमनादिशक्तिमत्वाच्च ॥ इन्द्रियेभ्यः मनः परं ॥ इन्द्रियैर्ग्राहितस्य विषयस्य ग्रहणपूर्वकं तत्र सङ्कल्पविकल्पयोर्जननात् ॥ मनसः बुद्धिः परैव । अध्यवसायशब्दितनिश्चयजनकत्वात् ॥ तस्याः बुद्धेः परतः अगोचरे यो वर्तते स तु स एव ॥ १ 'प्रकृतेः क्रियमाणानी' त्यत्र प्रकृतिपदेन २ 'तेनेदमावृत 'मित्यत्र इदंशब्देन च प्रकृतः ३ 'रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥' इत्युक्तः परमात्मैव ॥ एवं बुद्धेरगोचरं भगवन्तं ज्ञात्वा, तथा इन्द्रियाभिमानिनः तदवरेभ्यो देवमनुष्यादिभ्य उत्तमाः ॥ इन्द्रियमनसोर्मध्ये अर्था इत्यध्याहृत्य इन्द्रियाभिमानिभ्यो देवेभ्यः विषयाभिमानिनः उत्तमाः तेभ्यः मनोभिमानिनो गरुडशेषरुद्राः उत्तमाः तेभ्यो बुद्ध्यभिमानिनी सरस्वती उत्तमा ॥ तस्याः महान् आत्मा महत्तत्वाभिमानी ब्रह्मा उत्तमः तस्मात् अव्यक्तशब्दिता लक्ष्मीरुत्तमा ॥ तस्याः परतस्तु स एव ॥ सर्वमिदं अध्याहारलभ्यं ॥ ४ 'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः॥ मनसस्तु परा बुद्धिः बुद्धेरात्मा महान् परः ॥ महतः परमव्यक्तं अव्यक्तात् पुरुषः परः ॥ पुरुषान्नपरं किञ्चित् सा काष्ठा सा परा गतिः'॥ इति श्रुतिः ॥ गीतायामप्यभिमानिविवक्षायां अर्थाभिमानिभ्य इन्द्रियाभिमानिनां उत्तमत्वं प्रतीयते ॥ तत्कथमिति चेत् अवरेभ्यः अर्थाभिमानिभ्यः इन्द्रियाभिमानिनामुत्तमत्वं ज्ञातव्यम् ॥ एवं बुद्धेः महतः अव्यक्ताच्च परं भगवन्तं तारतम्यावधि-**

---

१. ३. २७. २. ३. ३८. ३. २. ५९. ४. का. ३. १. ११.

भूतं ज्ञात्वा तं ज्ञात्वा साक्षात्कृत्य आत्मना बुद्ध्या आत्मानं मनः संस्तभ्य कामाद्यभिभवराहित्येन निर्विकारं कृत्वा दुःखेनापि जेतुमशक्यं कामरूपं शत्रुं नाशय ॥ महाबाहुत्वात् त्वं तं जेतुं शक्तोऽसि ॥ महाबाहुत्वेन बाह्यसर्वशत्रुपक्षशिक्षणविचक्षणस्य तवाप्यजय्योऽयं काम इत्यहो कामस्य शक्तिरन्यादृशी ॥ यथावत्कर्मयोगकरणाय अधिष्ठाननिरोधेन विवेकविज्ञानेन च स्थूलरूपेण कामं जित्वा यथावत्कर्मयोगमनुष्ठाय तेन परोक्षमपरोक्षं च ज्ञानं लब्ध्वा तेन निर्मूलमुन्मूलितकामादिदोषः सन् निर्निरोधमेव मुक्तो भविष्यसि ॥ अतस्त्वमिदानीं स्थूलरूपेण कामादीन् जित्वा अकाम्यं कर्मानुतिष्ठ ॥ स्यादनेन ते मङ्गलम् ॥ ४२ ॥ ४३ ॥

अ ॥ स्थूलात् बाह्यात् शरीरात् इन्द्रियाणि सूक्ष्माणि आन्तराणि उत्कृष्टानि॥ इन्द्रियेभ्यः प्रवर्त्येभ्यः प्रवर्तकं मनः उत्तमम् ॥ मनसः सङ्कल्पविकल्पात्मकात् अध्यवसायात्मिका बुद्धिः उत्तमा ॥ तस्याः बुद्धेरपि योऽगोचरे वर्तते सः स तु स एव ॥ रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥' इति कामादेः समूलोच्छेदनसाधनसाक्षात्कारविषयत्वेनोक्तः 'ज्ञानमावृत्य देहिन'मिति प्रकृतप्रत्यगात्माभिन्नः परमात्मैव॥ एवं बुद्धेः परं तं परमात्मानं बुध्वा साक्षात्कृत्य आत्मना बुध्या शास्त्राचार्योपदेशसंस्कारसंस्कृतेन मनसा वा आत्मानं मनः संस्तभ्य स्थिरीकृत्य आत्मानं अन्तःकरणं आत्मना अखंडाद्वितीयानंदैकरसेन परब्रह्मणा सह संस्तभ्य आरोपितनामरूपग्रहणमकृत्वा तदधिष्ठानभूतब्रह्मदर्शन एव नियोज्य आत्मानं परमात्मानं आत्मना स्वात्मना संस्तभ्य अहमेवाहमस्मीति ऐक्येनानुसंधाय कामरूपं दुरासदं दुर्जयं दुःखेन आसदः आसादनं प्राप्तिर्यस्य तादृशं दुष्पापं प्राप्तिरत्र ज्ञानं ॥ गत्यर्थानां ज्ञानार्थत्वात् ॥ दुर्विज्ञेयानेकविशेषं शत्रुं जहि नाशय ॥ महाबाहुस्त्वं तं जेतुं समर्थोऽसि ॥ अतः स्थूलरूपेण कामादीन् जित्वा यथावदकाम्यं कर्म कृत्वा तेन ज्ञानवान् भूत्वा ततो ब्रह्मैवाहमिति साक्षात्कृत्य निश्शेषनिरस्तकामादिव[illegible]नः सन् विदेहमुक्तिं प्राप्स्यसि ॥ अतो मोक्षसाधनीभूतापरोक्षज्ञानलाभाय यथावदकाम्यं कर्म कर्तव्यं त्वया ॥ स्यात्तेन ते परमं श्रेयः ॥ ४२ ॥ ४३ ॥

वि ॥ अर्जुनः ॥ इंद्रियाणि नियम्य कामं जहीत्युक्तं ॥ न हि इन्द्रियमात्रनियमने कामजयः शक्यते कर्तुं ॥ न हि प्राकारत्रयावृतं दुर्गमाश्रितः शत्रुः बाह्यस्यैकस्य

प्राकारस्य स्वायत्तीकरणमात्रेण जेतुं शक्यो भवति ॥ अतः कामो दुर्जयः ॥ किं कर्तव्यं ॥ ब्रूहि ॥

कृष्णः ॥ ज्ञानविरोधित्वे इन्द्रियाणि देशकालादिसामान्यविरोध्यपेक्षया शरीरापेक्षया च प्रधानानि आहुर्मन्वादयः ॥ इन्द्रियेषु विषयव्यापृतेषु आत्मज्ञानानुदयात् ॥ इन्द्रियेभ्यः मनः प्रधानं ॥ इन्द्रियेषु विषयव्यावृत्तेष्वपि मनसि विषयप्रवणे आत्मज्ञानानुदयात् ॥ मनसस्तु बुद्धिः परा ॥ मनसि विषयविमुखेऽपि विपरीताध्यवसायप्रवृत्तौ आत्मज्ञानानुदयात् ॥ बुद्धेः परतः परः यः सः स तु स एव॥ एषः तेन एतेन एषः एनं इति प्रकृतः काम एव॥ सर्वेषु शत्रुषु ज्ञानविरोधिषु स्थूलनिग्रहादुपरतेष्वपि कामरूपः शत्रुः सूक्ष्मरूपेण वर्तते चेत् सः प्रचितप्रारब्धकर्मोद्भावितेन निरन्तरानुवृत्तेन रजसा उद्भूतः सन् इन्द्रियादीनि स्ववशे प्रवर्त्य आत्मज्ञानं निरुन्ध्यात् ॥ अतः सर्वेभ्यो ज्ञानविरोधिभ्यः काम एव प्रधानविरोधी ॥ एवं तं कामं बुद्धेरपि प्रधानं शत्रुं ज्ञात्वा आत्मना बुद्ध्या आत्मानं मनः संस्तभ्य ज्ञानयोगमनारभमाणस्सन् कर्मयोग एव प्रवर्त्य तेन कर्मणा दुरासदं अननुष्ठितकर्मयोगैः अनिरस्तप्राचीनपापैः अगृहीतसुदृढसत्वकवचैः दोषदर्शनेऽप्यपाकर्तुमशक्यं कामरूपं शत्रुं नाशय ॥ ज्ञानयोगं दुश्शकं मत्वा कर्मयोगे कृते तेन प्राचीनपापक्षयः ॥ तेन रजस्तमसोरुपमर्दनसत्वस्योन्मेषः ॥ तेन ज्ञानद्वारा साक्षाद्वा आत्मावलोकनसिद्धिः ॥ अतस्त्वं ' विहितं युद्धाख्यं कर्मैव कुरु ॥ स्यात्तेन ते मंगळं ॥ ४३ ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
कृष्णार्जुनसंवादे कर्मयोगो नाम तृतीयोऽध्यायः ॥ ३ ॥

इतीत्यादि पूर्ववत् ॥ कर्मयोगविषयकानेकाक्षेपसमाधानद्वारा कर्मयोगव्यवस्थापकत्वात् कर्मयोग इति प्रसिद्धः तृतीयोऽध्यायः इति संपूर्णः ॥

इति श्रीमद्भगवद्गीतोपन्यासदर्पणे लक्ष्मणाचार्य विरचिते कर्मयोगाध्यायार्थप्रदर्शकः ततीयः प्रतिबिंबः ॥ ३ ॥

---

श्रीगुरुभ्यो नमः ॥

# चतुर्थोऽध्यायः ॥

सञ्जयः ॥

विस्तरेणोक्तं कर्मयोगं श्रुतवताऽर्जुनेन 'तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुया'मिति मया प्रार्थितेन भवता ज्ञानयोगमनुक्त्वा कर्मयोग एवाभिहितः ॥ किमहो व्यामिश्रेण वाक्येन भूयोऽपि मां मोहयसि ॥ यथावद्वचने व्यामिश्रेण वाक्येन मोहजनने च द्वौ हेतू ॥ एको विषयस्य नूतनता ॥ अपरो विषयस्य अनादितः सिद्धत्वेपि उपदेशस्य नूतनता ॥ तत्राद्यः, आदिसृष्टौ सह कर्मयोगेन प्रजाः सृष्ट्वा श्रेयोऽर्थमिमं कर्मयोगमनुतिष्ठतेति प्रजापतिरादिदेशेति कथां कथयता भवता परिहृतः " द्वितीयेन हेतुना व्यामिश्रतेति भाति " इत्यभिहितो भगवान् विषय इव उपदेशोऽपि पुरातनः ॥ नेदानीमेवायं योगस्तुभ्यमुपदिश्यते॥ किंतु १ 'सूर्य आत्मा जगतस्तस्थुषश्चे'त्यादिश्रुतिप्रतिपादितमहावैभवाय महानुभावाय श्रीरामेण २ 'नानृग्वेदविनीतस्ये'त्यादिना अतिमात्रसंश्लाघितसकलकलावैशारद्यस्य निरवद्यस्य परममहितमहिमवतो हनूमतो विद्योपदेशाचार्याय सूर्याय पुरा उपदिष्टोऽयं योगः ॥ अतः त्वं मयि मैवं शङ्किष्ठाः इत्याह ॥

॥ श्रीभगवानुवाच ॥

इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ॥
विवस्वान्मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥ १ ॥

एवं परंपराप्राप्तं इमं राजर्षयो विदुः ॥
स कालेनेह महता योगो नष्टः परन्तप ॥ २ ॥

स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः ॥
भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ॥ ३ ॥

---

१. तै. सं २. ४. १४. २. रा. कि. ३.

**इममिति** ॥ अहं न विद्यते व्ययः नाशः यस्य सः अव्ययः तं इमं योगं विवस्वते सूर्याय प्रोक्तवान् ॥ विवस्वान् मनवे प्राह ॥ मनुः इक्ष्वाकवे अब्रवीत् ॥ १ ॥

**एवमिति** ॥ एवं परंपरया प्राप्तं परंपराप्राप्तं इमं योगं राजानः ऋषय इव राजर्षयः राजानश्च ऋषयश्च इति वा विदुः जानन्ति अजानन्वा ॥ हे परन्तप अर्जुन सः योगः महता कालेन इह काले नष्टः ॥ २ ॥

**स एवेति** ॥ त्वं मे भक्तोऽसि सखा च असि इति हेतोः पुरातनः स एव अयं योगः अद्य इदानीं मया ते तुभ्यं प्रोक्तः सम्यगुक्तः ॥ एतत् उत्तमं रहस्यं हि प्रसिद्धम् ॥ हि यस्मात् तस्मात् ते प्रोक्तः इति वा ॥ ३ ॥

**सूर्याया[१] यं योगः पुरा मया सम्यगुपदिष्टः ॥ न केवलं सूर्यायोपदिष्टत्वमात्रेण ग्राह्योऽयं योगः ॥ किंतु अव्ययश्च ॥ अव्ययवेदप्रमाणप्रमितः ॥ अव्ययमोक्षफलकश्च ॥ अतोऽपि ग्राह्यः ॥ पुरा त्वया अयं योगः सूर्याय किलोपदिष्टः विदित्वेमं योगं जनकादयः कथमन्वतिष्ठन् इति चेत् स सूर्यः स्वसुताय वैवस्वतमनवे प्राह ॥ स मनुः स्वसुताय इक्ष्वाकवे अब्रवीत् ॥ एवं गुरुपरम्परया प्राप्तं इमं कर्मयोगं ज्ञानयोगं वा राजर्षयः ऋषितुल्याः राजानः राजानश्च ऋषयश्च वा[२] विदुः विदन्ति ॥ एवमेव विदुरिति वा ॥ विदुः लट् ॥ अविदुः अजानन् इति वा ॥ लङो झेर्जुस् ॥ यद्येवं गुरुपरंपराप्राप्तः पूर्वैर्विदितश्चायं योगः तर्हि किमर्थं नूतनमिव मह्य मिममुपदिशसि ॥ इदानीन्तनानां ज्ञापनायेति चेत् पूर्वे राजर्षय इव इदानीन्तना अपि तयैवोपदेश परंपरया कुतो नजानीयुः अतस्त्वया मह्यं क्रियमाण उपदेशोऽनावश्यकः इति चेत् स च सूर्यायोपदिष्टो योगः महता कालेन युक्तः बहोः काला त्पूर्वं उपदिष्टत्वेन इह[३] लोके नष्टप्रायः संवृत्तः ॥ यथावत्संप्रदायप्रवर्तकाभावात् संप्रदायविच्छेदेन विनष्टप्रायोऽभूत् ॥ लोके प्रवर्तयितुं मया सूर्यायोपदिष्टः ततस्तदादि-**

१. द्वै ॥ वि ॥ इमं योगं कर्मयोगं ॥ अ ॥ कर्मयोगप्राप्यं ज्ञानयोगम् ॥ इमं योगं अध्यायद्वयोक्तं कर्मयोगं ज्ञानयोगं चेत्युभयम् ॥ द्वयोर्योगयोरुक्तत्वेपिफलैक्यादेकवचनम् ॥ २. वेदनमनुष्ठानस्याप्युपलक्षणम् ॥ ३. द्वै ॥ अ ॥ अस्मिन् काले ॥ वि ॥ विचित्राधिकारिपूर्णे जगति ॥

गुरुपरंपराप्राप्तश्च योगः कालक्रमात्संप्रदायशैथिल्येन जीर्णोऽभूत् ॥ अतो जीर्णस्य तस्योद्धाराय मया तुभ्यमुपदिश्यते ॥ जीर्णोद्धारस्त्वया कुतः कार्य इति चेत् जीर्णस्य देवालयादेरुद्धाराय तत्कर्ता तत्संबन्धी वा हि लोके प्रवर्तते ॥ अतो जीर्णोद्धारो मयैव कर्तव्य इति मयोपदिश्यते ॥ क्रियतां नाम जीर्णोद्धारायोपदेशः ॥ स च अन्यस्मै यस्मै कस्मैचन क्रियताम् इति चेत् इन्द्रावतारत्वेन नरांशत्वेन परमप्रियभगिनीपतित्वेन पितृष्वसुः पुत्रत्वेन सवयस्त्वेन आबाल्यात् स्निग्धत्वेन चत्वमेव साक्षात् मत्त उपदेशग्रहणार्होऽसि ॥ नान्य एतादृश उपलभ्येत ॥ अतस्तुभ्यमुपदिश्यते ॥ सूर्यादिभ्यो महद्भ्य उपदिष्टो योगो महीयान् स्यात् इति चेत् मया तुभ्यमिदानीं प्रोक्तः उच्यमानः वर्तमाने क्तः ॥ वक्तुमुपक्रान्तो वा ॥ आदिकर्मणि क्तः ॥ अयं योगः स एव ॥ जीर्णश्चेत् भवतु कुतो महता तात्पर्येण जीर्णोद्धारायोपदिश्यत इति चेत् पुरातनः पुरातनवेदमूलकः पुरातनमहानुभावसूर्यादिगुरुपरंपराप्राप्तः प्रवाहतोऽनादिपरंपरानुगतः अतः तात्पर्येण स एवोपदिश्यते ॥ किमहमेतादृशस्य महतो योगस्य साक्षात् त्वत्त उपदेशं ग्रहीतुमर्हे इति चेत् यदि भक्तो न स्यात् तर्हि नाऽऽदरेण शृणुयात् यदि सखा न स्यात् तर्हि भियानाऽऽक्षिपेत् ॥ न च पृच्छेत् ॥ इति हेतोः ते मया उपदेशः क्रियते ॥ त्वं तु मे भक्तोऽसि सखा चासि ॥ किं च त्वं परन्तपोऽसि ॥ स्वर्गलोके स्वयमेवाऽऽगत्य प्रार्थयमानाया ऊर्वश्याः प्रत्यादेशेन त्वं जितेन्द्रियोऽसि ॥ कथेयं सूचिता मया १ 'क्लैब्यं मा स्म गम' इत्यत्र ॥ अतस्तवात्रास्त्यधिकारः ॥ अतः तुभ्यमेवोपादिश्यते ॥ नान्यस्मै उपदिश्येत ॥ कुत इति चेत् एतत् उत्तमं अतो रहस्यम् ॥ रहस्यं अत उत्तमम् ॥ इति वा ॥ उत्तमं रहस्यमिति वा ॥ अतः नान्यस्मै उपदिश्येत॥ तुभ्यमेवोपदिश्यते ॥ विषय इव उपदेशोऽपि पुरातनः ॥ अतो न मदुपदेशे व्यामिश्रता शङ्कनीया ॥ अतः श्रद्धत्स्वेमं मदुपदेशम् ॥ १ ॥ २ ॥ ३ ॥

सञ्जयः ॥ सृष्ट्यादौ जातः पुरातनो देवताकोटिप्रविष्टः सूर्यः ॥ कृष्णस्त्विदानीन्तनो मनुष्यः ॥ सति चैवं कृष्णः सूर्यायोपदिष्टवानिमं योगमित्येतत् कथं श्रद्धेयं स्यात् ॥ न हि कोऽपि केनापि बालेन मत्पितामहाय सर्वज्ञाय मया तत्वमुपदिष्टमित्युक्ते श्रुत्वा स्यादेवमिति श्रद्दध्यात् ॥ अतः परिहसनीयमिदमश्रद्धेयं

१. २. ३.

चेति बालिशा मन्येरन् ॥ इति मत्वा तत्परिहाराय, कृष्णः कश्चिदन्यमनुजनिर्वि-शेषो मनुष्यः सति चैवं कथं तदुक्तमिदं तारकं सर्वशास्त्राण्यतिशयानं शास्त्रं स्यात् ॥ इति तेन कृष्णेन गीतायामस्यां गीतायां अविदितभगवदवतारतत्वानां अविश्वा-सादनादरः संपद्येत ॥ न शृणुयुश्च श्रद्धाभक्तिभ्याम् ॥ अतो गीतोपदेष्टुः कृष्णस्य ईश्वरत्वादिमहामहिमख्यापनाय च परिहारं भगवन्महिमानं च स्वयमजानान इव भगवन्तं पृच्छति पार्थः ॥

अर्जुन उवाच ॥

अपरं भवतो जन्म परं जन्म विवस्वतः ॥
कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति ॥ ४ ॥

अपरमिति ॥ भवत॰ तव जन्म अपरं अल्पकालीनं विवस्वत: सूर्यस्य जन्म परं बहुकालीनम् ॥ अत : त्वं आदौ सूर्याय प्रोक्तवान् इत्येतत् कथं विजानीय यथार्थं जानीयाम् ॥ ४ ॥

भवतः जन्म वसुदेवगृहे १ अर्वाक्तनम् ॥ सूर्यस्य जन्म २ प्राक्तनम् ॥ सूर्यः सृष्ट्यादौ जातः ॥ १ 'चक्षोः सूर्यो अजायते 'ति श्रुतिः ॥ अतः पुरातनः देवश्च सूर्यः ॥ त्वं तु इदानीं वसुदेवगृहे जातः ॥ अतः अर्वाक्तनः मनुष्यश्च ॥ सतिचैवं त्वं आदौ सूर्याय इमं योगं प्रोक्तवान् इत्येतत्कथं वि यथार्थं जानीयाम् ॥ नेदं मम यथार्थं भाति ॥ अपितु प्रतारकं भाति ॥ सूर्यायोपदेशः एतद्देहेन वा देहान्तरेण वा॥ आद्ये एतद्देहस्य तदानीमभावादनुपपत्तिः ॥ द्वितीये देहान्तरेऽनुभूतस्य देहान्तरे स्मरणासंभवादनुपपत्तिः ॥ अतः कथमिदम् ॥ अत्र तत्वं वद ॥ जन्मेति द्विः प्रयो-गेण युवयोर्जन्मनोर्बहुकालव्यवधानसत्वात्कथमिदं इत्यसंभावनां द्रढयता अत्यन्ता-संभावितमेतदिति सूच्यते ॥ ४ ॥

सञ्जयः ॥ पार्थेनैवं पृष्टो भगवान् मूर्खशङ्कापरिहाराय मन्महिमख्यापनाय च जानन्नप्यर्जुनोऽजानान इव मां पृच्छति ॥ किं च जानात्येवायमर्जुनो मां भगवन्तं वासुदेवम् ॥ अतएव वक्ष्यति ॥ ३ 'पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ॥ आहु-

१. अपकृष्टम् ॥ २. उत्कृष्टम् ॥ ३. १०. ११. १२.

स्त्वामृषयस्सर्वे देवर्षिर्नारदस्तथा ॥ असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे '॥ इति ॥ सूर्यादपि पुरातनेन रूपान्तरेण सूर्यायोपदेशः सङ्गच्छते ॥ बहुकाल-विप्रकृष्टस्य स्मृतिर्महतामपि युज्यते ॥ किम्वीश्वरस्य ॥ इति परिहारं च जानाति ॥ अथापि सर्वेश्वरस्य जन्म किमिन्द्रजालादिवन्मिथ्या उत सत्यम् ॥ सत्यत्वे च कथं जन्मप्रकारः किमात्मकोयं देहः कश्च जन्महेतुः कदाच जन्म किमर्थश्च जन्म ॥ इति षट् प्रश्नान् मनासि निधाय तेषामुत्तरं मन्मुखादुत्थापयितुं जानन्नप्यजानान इव पृच्छति ॥ इति विदितपार्थाभिप्राय. पार्थमाह ॥

श्रीभगवानुवाच ॥

बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ॥
तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप ॥ ५ ॥

बहूनीति ॥ हे अर्जुन मे मम बहूनि जन्मानि व्यतीतानि ॥ तव च बहूनि जन्मानि व्यतीतानि गतानि ॥ हे परन्तप अर्जुन तानि जन्मानि अहं वेद जानामि ॥ त्वं न वेत्थ जानासि ॥ ५ ॥

हे पार्थ, बालेन त्वया वृद्धाय सूर्यायोपदेशः कृत इति कथमहं श्रद्दध्यां वद मे तत्वमिति किमेवं पृच्छसि ॥ जन्मान्तरे मया सूर्यायोपदेशः कृत इति जानीहि ॥ जन्मांतरे मया सूर्यायोपदेशः कृत इति जानीहि जन्मान्तरे मया सूर्यायोपदेशः कृत इति चेत् तदन्यज्जन्म इदमन्यज्जन्मेत्युक्तं भवति ॥ सतिचैवं त्वमनेकजन्ममरणावानित्यापद्यते ॥ मरणमन्तरा अन्यजन्मग्रहणानुपपत्तेः ॥ इति चेत् सत्यम् ॥ मम बहूनि जन्मानि व्यतीतानि ॥ न केवलं मम ॥ तव च बहूनि जन्मानि व्यतीतानि अतिक्रान्तानि यद्येवं ममेव तवाप्यनेकानि जन्मानि व्यतीतानि स्युः ॥ तर्हि मत्तः कस्ते विशेषः ॥ यदि निर्विशेषः स्याः तर्हि कुतस्तव मम च गुरुशिष्यभावः इति चेत् तानि मदीयानि त्वदीयानि अन्यदीयानि च सर्वाणि जन्मानि अहं सर्वज्ञः ईश्वरो वेद्मि ॥ अल्पज्ञो जीवस्त्वं तानि न वेत्सि ॥ त्वदीयान्यपि न वेत्सि किमुत मदीयानि अन्यदीयानि च ॥ तव मम च अतीतानेकजन्मवत्वे तुल्येऽपि ज्ञानवैषम्येण भवानज्ञो जीवः ॥ अहं सर्वज्ञ ईश्वरः ॥ अतोऽहं गुरुः त्वं शिष्यः इत्युपपद्यते ॥ वेत्थ वेद इति मध्यम-

पुरुषोत्तमपुरुषप्रयोगभेदेनैव त्वमहमित्यनयोर्लाभेऽपि सर्वज्ञत्वादिगुणानां अज्ञत्वादिदोषाणां च सूचनाय अहं त्वमित्यनयोः प्रयोगः ॥ जन्मान्तरेणोपदेश इति स्पष्टं परिहारमजानतस्तव अर्जुनशब्दसूचितं सौन्दर्यं परन्तपशब्दसूचितं शौर्यं च मुधेति संबोधनद्वयाभिप्रायः॥ 'अर्जुने'त्यनेन श्लेषेण अर्जुनवृक्षसमानेति सूच्यते॥ तेन अज्ञानसंबन्धिनी आवरणशक्तिः सूच्यते ॥ 'परन्तप 'इत्यनेन अविद्यमानानपि परान् भ्रान्त्या कल्पयित्वा तांश्च शत्रून् कल्पयित्वा तान् तापयितुं प्रवृत्तोऽसि ॥ अहो भ्रान्तिरिति सूच्यते ॥ तेन अज्ञानसंबंधिनी विक्षेपशक्तिः सूच्यते ॥ संबोधनद्वयेन आवरणविक्षेपावज्ञानधर्मौ सूचिताविति वा ॥ नेश्वरस्य मम जन्मानि इन्द्रजालवन्मिथ्या । किंतु सत्यानि ॥ सत्यत्वसूचनार्थमेव 'तवचे'ति दृष्टान्ततया उपात्तम्॥ अन्यथा जन्मान्तरे मयोपदिष्टमिति परिहारकथनाय मे जन्मानि व्यतीतानि इत्येतावदेवोक्तं स्यात्॥ सत्यत्वे हि बहुत्वजन्मत्वातीतत्वादयः स्वरसतः संगच्छेरन्॥ ईश्वरत्वात् मम जन्मनः अवतार इति मृतेरंतर्धानमिति च व्यवहारः॥ त्वदादीनां जीवानां जन्मनः जन्मेति मृतेर्मरणमिति च व्यवहारः॥ सम्यगवधेहीममावयोर्महान्तं विशेषम्॥ नान्यथा मंस्थाः॥ ५॥

अर्जुनः ॥ अनेकजन्मवत्वमंगीकृत्य ज्ञानवैषम्यादीश्वरोऽहमित्युक्तम् ॥ अकर्मवश्यः ईश्वरस्त्वं कर्मवश्यो जीव इव कुतो जन्मानुभवासि ॥ दुःखहेतुर्हि जन्मानुभवः॥ ब्रूहि ॥

कृष्णः ॥ अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ॥
प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया ॥ ६ ॥

अजोऽपीति॥ अहं न जायत इत्यजः जन्मरहितः सन्नपि न विद्यते व्ययः नाशः विकारो वा यस्य सः अव्ययः अव्ययः आत्मा स्वरूपं देहो वा यस्य सः अव्ययात्मा सन्नपि भूतानां प्राणिनां ईश्वरः सन्नपि स्वां स्वाधीनां प्रकृतिं अधिष्ठाय आश्रित्य आत्मनः मायया प्रकृत्या इच्छया संकल्पेन संभवामि॥ ६ ॥

जन्मसंबन्धान्न मम ईश्वरत्वहानिः दुःखसंबन्धो वा॥ अतो जन्मानुभवामि ।।

कुत एवं इति चेत् यदि त्वदादिजीवा इव शरीरसंयोगवियोगरूपजन्ममरणवान् स्यां तर्हि पूर्वजन्मपरित्यागे मरणदुःखं उत्तरजन्मस्वीकारे जन्मदुःखं च मे स्यात् ॥ नाहं तथा ॥ किंतु अजः स्वरूपतः शरीरतश्च जन्मरहितः ॥ अव्ययात्मा स्वरूपतः शरीरतश्च नाशरहितः ॥ अव्ययः आत्मा स्वरूपं शरीरं च यस्येति विग्रहः ॥ अतो न मे जन्मना दुःखानुभवः ईश्वरत्वहानिर्वा ॥ अजत्वादव्ययत्वाच्च न मे जन्ममरणे स्त इति वचनं युक्तं ॥ जन्मरहितस्य जन्मना न दुःखानुभव इति तु वचनमयुक्तं ॥ व्याहतं हि तत् ॥ अतः कथमिदमिति चेत् १ अजत्वं बहुजन्मवत्वं च मे श्रुतिर्वक्ति ॥ 'अजायमानो बहुधा विजायते' ॥ इति ॥ कर्मवश्यजीवजन्मसदृशजन्मरहितः जीवजन्मविलक्षणानेकजन्मवांश्चाहं ॥ अतो मदुक्तं युक्तं ॥ तव जीवस्येव जन्ममरणे कुतो न स्त इति चेत् । अहं भूतानां ब्रह्मादिस्थावरान्तानां ईश्वरः ॥ ब्रह्मादीनामहमिव यदि ममान्य ईश्वरः स्यात् तर्हि ब्रह्मादीनहमिव मामन्यः कर्मानुगुणं सृजेत् संहरेच्च ॥ नास्ति २ ममेश्वरोन्यः ॥ अहमेव सर्वेषामीश्वरः॥ अतो न मम स्रष्टा संहर्ता वा ॥ अतो न मम जीवानामिव जन्ममरणे ॥ यदि ईदृशस्त्वं ईदृशस्य तव यद्यन्यः स्रष्टा संहर्ता च न स्यात् तर्हि तव लोकविलक्षणं जन्म वा कुत इति चेत् अहमेव ईदृशोऽपि सन् मदिच्छया जन्म स्वीकरोमि ॥ जन्मस्वीकारेण तव प्रयोजनमस्ति न वा ॥ आद्ये ततः पूर्वं तदभावादपूर्णत्वं स्यात् ॥ द्वितीये निरर्थककर्मकारित्वादुन्मत्ततापसंगः ॥ अतः कुतोऽयं जन्मस्वीकारः इति चेत् ॥ अयं मम स्वभावः स्वां प्रकृतिं स्वकीयं स्वभावं अनुसृत्य संभवामि ॥ ३ 'देवस्यैष स्वभावोऽयं आप्तकामस्य का स्पृहा' ॥ इति श्रुतिः ॥ जन्मना न मे प्रयोजनं तथाऽपि कृपारसातिशयेन परप्रयोजनमपि स्वप्रयोजनं मन्यमानः संभवामि ॥ अतः अपूर्णतायाः उन्मत्ततायाश्च न प्रसक्तिः ॥ परप्रयोजनं च वक्ष्यते ॥ ४ 'परित्राणाय साधूना'मिति ॥ लोकविलक्षणजन्मांगीकाराय समुचितस्थलोपलब्धिः कथमिति चेत् स्वां प्रकृतिमधिष्ठाय रजो-

१. तै. आ. ३. १३. २. अत्र, आत्मेश्वरोऽसि न परोऽस्ति तवेश्वरोऽन्यो विश्वस्य चासि पतिरस्य परायणं च ॥ नारायणाच्युत परस्त्वमिहैक एव ब्रह्मादयोऽपि भवदीक्षणलब्धसत्ताः'॥इति श्लोकोऽनुसन्धेयः ॥ ३. मां. २. ९. ४. ४. ८.

गुणात्मिकया प्रकृत्या अवतारसमुचितान् वसुदेवादिदेहान् सृष्ट्वा तत्र संभवामि ॥ कुतो जीवजन्मसदृशजन्मवत्तया प्रतीयसे ॥ जातोऽस्ति वर्तते इति हि लोकरीत्या त्वां व्यवहरन्ति लोके ॥ इति चेत् स्वां प्रकृतिं तमोगुणात्मिकां प्रकृतिं कारणीकृत्य संभवामीव ॥ लोकरीत्या जात इव व्यवहारविषयतां प्राप्नोमि ॥ यदि जन्म स्वीकुरुषे तर्हि अवतारे ज्ञानसंकोचः स्यात् इति चेत् आत्मनः मायया ज्ञानेन शक्त्या च युक्त एव संभवामि ॥ १ 'पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ॥ पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥ इति श्रुतिः ॥ अपि सन् इत्यस्य द्विः प्रयोगः अजत्वेऽपि भूतेश्वरत्वेऽपि स्वेच्छयैव लोकोपकाराय लीलया मानुषादिदेहं स्वीकरोमीत्युक्तार्थे तात्पर्यद्योतनाय ॥ एवं मज्जन्मनो लोकविलक्षणत्वात् स्वेच्छागृहीतत्वात् ज्ञानशक्त्याद्यसंकोचेनैव गृहीतत्वाच्च न तेन ममेश्वरत्वहानिः दुःखसंबन्धो वा ॥ अतो जन्मांगीकारेपि न काऽपि मम क्षतिः ॥ ६ ॥

अ ॥ वस्तुतो न जीवानामिव मम अपूर्वदेहेन्द्रियादिग्रहणरूपं जन्म अपूर्वगृहीतदेहेंद्रियादिवियोगरूपो नाशो वा ॥ कारणाभावात् ॥ किंतु मायामयं नित्यसिद्धं शरीरमेकमेव मम ॥ कदाचित्कार्यार्थं दृग्गोचरत्वेन त दाविर्भावयामि ॥ तदेव मम जन्म ॥ कार्यानन्तरं तत्तिरोभावयामि ॥ तदेव मे मरणं ॥ आविर्भावमुत्पत्तिं मन्यन्ते ॥ तिरोभावं मरणं मन्यन्ते मायामोहिताः ॥ २ 'देवानां कार्यसिद्ध्यर्थं आविर्भवति सा यदा ॥ उत्पन्नेति तदा लोके सा नित्याऽप्यभिधीयते ॥' इति स्मरन्ति ॥ सा ईश्वरस्य मूर्त्तिः ॥ येन देहेन सूर्यायोपदिष्टवानहं तेनैव देहेन तुभ्यं उपदिशामि ॥ अजः स्वरूपतः शरीरतोऽपि जन्मरहित ३ अव्ययात्मा शरीरतः स्वरूपतश्च नाशरहितश्च ईदृशस्सन्नपि भूतानां कर्मवश्यानां ब्रह्मादिस्थावरांतानां ईश्वरस्सन्नपि स्वां मदधीनां ४ प्रकृतिं मायां अधिष्ठाय चिदाभासेन वशीकृत्य मदुपाधिभूतां यावत्कालस्थायित्वेन नित्यां जगत्कारणत्वसंपादिकां मदिच्छयैव प्रवर्तमानां विशुद्धसत्वमयीं अनादिमायां देहत्वेन स्वीकृत्य तदाविर्भावकाले मम ५ मायया संभवामि संभवामीव जन्मवानिव भवामि ॥ मायया मम

१. बृ. ७. १. १. २. वायु. ३४. वरा. १४. ३. अव्ययात्मा अक्षीणज्ञानशक्तिस्वभावः ॥ ४. प्रत्यगभिन्नं चैतन्यं ॥ स्वभावं सच्चिदानन्दैकरसम् ॥ ५. मायया मायामयदेहेन संभवामि मदधीनया शक्तित्वेन मदभिन्नया वा मायया ॥

मनुष्यादित्वप्रतीतिः ॥ न वस्तुगत्या ॥ अतो न मम जन्मना दुःखानुभवः ईश्वरत्वहानिर्वा ॥ नापि असर्वज्ञत्वानित्यत्वाभ्यां उद्भावितायाः सूर्यायोपदेश एत-द्देहेन वा देहान्तरेण वेत्यादिशंकाया अवकाशः ॥ यथा कश्चिन्मायावी स्वयं स्वस्थानादप्रच्युत एवादृश्यो भूत्वा स्थूलसूक्ष्मभूतान्यनुपादायैव केवलया मायया द्वितीयं मायाविनं स्वसदृशमेव सूत्रमार्गेण गगनमारोहन्तं सृजति ॥ एवमहं कूट-स्थचिन्मात्रोऽग्राह्यः स्वमायया चिन्मयमात्मनः शरीरं सृजामि ॥ तस्य बाल्या-द्यवस्थाश्च सूत्रारोहणवद्दर्शयामि ॥ लौकिको मायावी मायामुपसंहरन् द्वितीयं मायाविनमप्युपसंहरति ॥ अहंतु तामनुपसंहरन् स्वशरीरमपि नोपसंहरामि ॥ तस्मात्सिद्धं परमेश्वरस्य मम मायामयं १ शरीरं नित्यमेकमेवेति ॥ तेनैकेनैव शरीरेण सूर्यादिभ्यस्तुभ्यंचोपदेश इति न काप्यनुपपत्तिः ॥ ६ ॥

वि ॥ अजः जन्मरहितः स्वरूपतो विकाररहितः अव्ययात्मा आत्मा स्वभावः धर्मतो विकाररहितः ॥ स्वरूपतो देहतश्च जननमरणरहितो वा ॥ आत्माऽत्र देहः ॥ सर्वेषां भूतानामीश्वरश्च ॥ ईदृशः खल्वहं नित्यविभूतौ ॥ सोऽहं अजः अव्ययात्माऽपि सन् भूतानामीश्वरोऽपि सन् ॥ अजत्वाव्ययात्मत्वसर्वेश्वर-त्वादिस्वभाववानेव मदीयं सर्वमैश्वरं स्वभावं अत्यजन्नेवेति यावत् ॥ स्वां स्वकीयां प्रकृतिं अप्राकृतदिव्यमंगलविग्रहं आश्रित्य २ स्वमेव दिव्यं रूपं देवमनुष्यादिसजा-तीयसंस्थानं कुर्वन् आत्मनः संकल्पेन संभवामि ॥ देवमनुष्यादिरूपोऽवतरामि ॥ अवतारविग्रहस्यापि अप्राकृतपरमपदनिलयदिव्यविग्रहांशविशेषत्वात् न जन्म-संबन्धेन मम दुःखसंबन्धः ईश्वरत्वहानिर्वा ॥ 'अजायमानो बहुधा विजायते ॥'

१. इदं परमेश्वरे देहदेहिभावं मन्यमानानां भाष्यकारादीनां मतं ॥ 'नित्योयः कारणोपाधिः मायाख्योऽनेकशक्तिमान् ॥ स एव भगवद्देह इति भाष्यकृतां मतं ॥' अन्येतु देहदेहिभावं नांगी कुर्वन्ति ॥ स्वरूपमेव शरीरम् ॥ मायया तु लोकवत् देहदेहिभावप्रतीतिः ॥ इत्याहुः ॥ २. अत्र, स्वमेवरूपं तत्तत्सजातीयसंस्थानं स्वस्वभावमजहदेव कुर्वन् तेषुतेषु लोकेष्ववतीर्यावतीर्येति अवतरणि-काभाष्यस्थवाक्यं, 'समस्तशक्तिरूपाणि तत्करोति जनेश्वर ॥ देवतिर्यङ्मनुष्याख्याचेष्टावन्ति स्वली-लया ॥' इति श्रीविष्णुपुराण (६ ७. ७१.) वचनं चानुसन्धेयम् ॥

इति श्रुतिः ॥ इतरपुरुषसाधारणं जन्माकुर्वन् देवादिरूपेण स्वसंकल्पेन उक्तप्रक्रियया जायत इत्यर्थः ॥ अतो देवकार्यार्थं तत्रतत्र तदातदा अवतारकरणेऽपि न मम काऽपि क्षतिः ॥ अत्र पूर्वार्धेन जन्मप्रकारउक्तः ॥ तृतीयपादेन देहयाथात्म्यमुक्तं ॥ चतुर्थपादेन जन्महेतुरुक्तः ॥ इति बोध्यं ॥ ६ ॥

अर्जुनः ॥ ईदृशं विलक्षणं जन्म कदाकदा ॥ ब्रूहि ॥

कृष्णः ॥ यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ॥
अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहम् ॥ ७ ॥

यदेति ॥ हे भारत अर्जुन यदायदा धर्मस्य ग्लानिः ह्रासः भवति अधर्मस्य अभ्युत्थानं वृध्दिः भवति तदा अहं आत्मानं सृजामि ॥ ७ ॥

यस्मिन् यस्मिन् काले धर्मस्य ग्लानिर्भवति ॥ तथा अधर्मस्य अभितः उत्थानं च भवति ॥ तस्मिन् तस्मिन् काले अहमात्मानं सृजामि ॥ स्वेच्छया अवतरामि ॥ उक्तरूपावतारविग्रहविशिष्टं करोमि ॥ धर्माधर्मग्लानिवृद्धिकाले पूर्वोक्तरीत्या मायामयं शरीरं नित्यसिद्धमेव दृग्गोचरत्वेनाऽऽविर्भावयामि ॥ प्रसिद्धं चेदं पुराणादिषु ॥ ग्लानिशब्देन ग्लानिमपि न सहे ॥ किंपुनर्विच्छेदं इति, अभ्युत्थानशब्देन उद्गममात्रमपि न सहे ॥ किमुत शाखानुशाखतामिति च सूच्यते ॥ भरतवंशोद्भवत्वेन भाशब्दितज्ञानरतत्वेन च तवापि धर्मग्लानिरधर्मवृद्धिश्चासह्या ॥ किमुत धर्मस्थापनेन जगद्रक्षणशीलस्य मम ॥ न जीवानामिव मज्जन्मनः कालनियम ॥ किंतु उक्तहेतुर्यस्मिन् काले संभवति स एव मज्जन्मनः कालः ॥ ७ ॥

अर्जुनः ॥ 'तदाऽऽत्मानं सृजाम्यहं ॥' इत्युक्तं ॥ किमर्थं तदातदा आत्मानं सृजसि ॥ ब्रूहि ॥

कृष्णः ॥ परित्राणाय साधूनां विनाशाय च दुष्कृताम् ॥
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥ ८ ॥

**परित्राणायेति** ॥ साधूनां परित्राणाय रक्षणाय दुः दुष्टं कार्यं कुर्वन्तीति दुष्कृतः असाधवः तेषां दुष्कृतां विनाशाय च धर्मस्य सं सम्यक् स्थापनं धर्मसंस्थापनं तदेव अर्थः प्रयोजनं तस्मै धर्मसंस्थापनार्थाय युगेयुगे संभवामि ॥ ८ ॥

**१ साधूनां अनुष्टानेन धर्मवृद्धिहेतूनां परितः रक्षणाय पापकर्म कुर्वतां धर्मविरोधिनां समूलनाशाय च दुष्टनिग्रहशिष्टपरिपालनाभ्यां धर्मस्य सम्यक् स्थापनं यत् तद्रूपप्रयोजनाय च २ युगेयुगे संभवामि॥ यदायदाहीति युगमध्ये अवान्तरकालेक्तिपरं ॥ मज्जन्मना यत्परेषां उक्तरूपप्रयोजनं तदेव अवाप्तसमस्तकामस्यापि मम प्रयोजनं ॥ प्रतियुगं धर्माधर्मह्रासवृद्धिकाले अहं युगानुगुणं कार्यानुगुणं चावतारशब्दितं जन्म स्वीकृत्य दुष्टनिग्रहशिष्टपरिपालनाभ्यां धर्मसंस्थापनं कुर्वन् लोकान् परिपालयामीत्यहो मम परोपकारनिरतता ॥ एवमनेकावतारकर्तृत्वात् एकस्मिन्नवतारे मया सूर्यायोपदेशः कृतः स्यादिति परिहारमवधेहि ॥ ८ ॥**

**सञ्जयः ॥ एवं भगवतोक्तं भगवज्जन्मनः भगवत्कर्मणश्च याथात्म्यं श्रुतवता पार्थेन, किमनेनाप्रकृतेन प्रसक्तानुप्रसक्त्या प्रवृत्तेन विचारेण उपदेष्टुमुपक्रांतं कर्मयोगं ज्ञानयोगं वा भूयः कथयेत्यभिहितो भगवान्, कर्मध्यानज्ञानभक्तियोगाः मत्प्राप्तिरुपायाः मां प्रेप्सुभिरवश्यं यत्नतः संपाद्याः ॥ उक्तं मज्जन्मकर्मरहस्यंतु मदीयं याथात्म्यं ॥ अत एतत्प्रकरणं गीतायामतिशयितं मान्यथामंस्थाः॥ उक्तरूपमज्जन्मकर्मरहस्यज्ञानी मुक्तिं प्राप्नोतीत्याह ॥**

**कृष्णः ॥ जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्वतः ॥**
**त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥ ९ ॥**

१. वि ॥ वैष्णवाग्रेसरणां मत्स्वरूपचेष्टितावलोकनाऽऽलापादिदानेन रक्षणाय ॥ २ कलियुगे अवतारोनास्ति ॥ अत एव भगवतः त्रियुग इति नाम ॥ उक्तं च प्रह्लादेन ॥ 'धर्मं महापुरुषपासि युगानुवृत्तं छन्नः कलौ यदभवः त्रियुगोऽस्यथत्वं'॥ इति ॥ भाग ७ स्कंधे अध्या ९॥ सतिचैवं युगेयुगे इति कथमिति चेत् ॥ वृत्तवर्तमानावतारविवक्षया इदं ॥ कल्क्यवतारस्य कलिकृतयुगसन्धिगतत्वेन कलियुगगतत्वाभिप्रायाद्वा ॥

जन्मेति ॥ हे अर्जुन यः मे दिव्यं जन्म कर्म च एवं तत्वतः वेत्ति स देहं त्यक्त्वा पुनः जन्म नैति न प्राप्नोति ॥ मां एति ॥ ९ ॥

मम दिव्यं अलौकिकं विलक्षणं जन्म कर्म च उक्तरीत्या तत्वतो यो जानाति सः वर्तमानं देहं त्यक्त्वा एतज्जन्मानंतरं पुनः जन्मशब्दितं देहसंयोगं न प्राप्नोति॥ तर्हि तस्य किं भवतीति चेत् मां प्राप्नोति हे पार्थ सम्यगवधेहीदं तत्वं ॥ ९ ॥

अर्जुनः ॥ जन्म कर्म च यो वेत्ति स मामेतीत्युक्तं ॥ तत्कथं ॥ न जन्मकर्मरहस्यज्ञानमात्रेण मुक्तिः स्यात् ॥ किंतु यथावद्ब्रह्मस्वरूपज्ञानान्मोक्षः ॥ अन्यथा ज्ञानभक्तिवैराग्यादिसाधनोपदेशपरशास्त्राणां वैयर्थ्यं हि स्यात् ॥. अत्र तत्वं ब्रूहि ॥

कृष्णः ॥ वीतरागभयक्रोधा मन्मया मामुपाश्रिताः ॥
बहवो ज्ञानतपसा पूता मद्भावमागताः ॥ १० ॥

वीतेति ॥ ज्ञानरूपं च तत् तपश्च ज्ञानतपः तेन ज्ञानतपसा पूताः शुद्धाः बहवः मां उपाश्रिताः सन्तः मन्मयाः मत्प्रधानाः मदेकशरणाः सन्तः रागश्च भयं च क्रोधश्च रागभयक्रोधाः वीताः गताः रागभयक्रोधाः येषां ते वीतरागभयक्रोधाः सन्तः मद्भावं मयि भावः स्थितिः मम भावः स्वभावः मम भावः तादात्म्यं वा मद्भावः मुक्तिः तं आगताः प्राप्ताः ॥ १० ॥

न केवलं मज्जन्मकर्मरहस्यज्ञानमात्रेण मुक्तिः ॥ किंतु यथावत् ब्रह्मस्वरूपज्ञानेनैव ॥ जन्मकर्मरहस्यज्ञानं तु भक्तिज्ञानादिसाधनसामग्रीद्वारा परंपरया मोक्षसाधनं ॥ यो वेत्ति स मामेतीति साक्षान्मोक्षसाधनत्वोक्तिस्तु १'अपाम सोमममृता अभूमे'त्यादिवत् स्तुत्यर्थो ॥ मदीयं जन्मकर्मरहस्यं जानंतः वैराग्यभक्तिज्ञानसामग्रीद्वारा मुच्यन्ते ॥ किमेवं केऽपि मुक्तिं गता वर्तंते इति चेत् नैके किंतु बहवः ॥ इमे जन्मकर्मरहस्यज्ञानेन कीदृशा भूत्वा मुक्तिं गता इति चेत्

१. तै. सं. ३. २. ५.

जन्मकर्मरहस्यज्ञानेन जातया अंतःकरणशुद्ध्या रागभयक्रोधादिमानसदोषरहिता-स्संतः ॥ रागभयक्रोधाः १ वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यत " ॥ इत्यत्र व्या-ख्याताः ॥ मन्मयाः मत्प्रधानाः अहमेव प्रधान इति ज्ञातवंतः मत्प्रचुराः अहमेव सर्वेषु वस्तुषु सत्ताप्रवृत्तिप्रतीत्यादिप्रदत्वेन वर्ते इति मदीयां व्याप्तिं जानंतः इति वा ॥ मां उपाश्रिताः ज्ञानरूपेण तपसा शुद्धाः दग्धाशेषकल्मषाश्च संतः मद्भावं मयि भावं सायुज्यं मे भाव इव भावः सारूप्यं तं मया सह भावः स्थितिः सामीप्यं तं मयि मदीये लोके भावः सालोक्यं च यथायोग्यं प्राप्ताः ॥

अ ॥ मन्मयाः मत्स्वरूपाः मदभिन्नाः ब्रह्मैवाहमिति स्वस्य मदभेददर्शिनः मदेकचित्ता वा मदेकप्रधाना वा ॥ मां उपाश्रिताः ॥ एकांतभक्त्यां मामेव शरणं गताः ॥ केवलज्ञानमात्रनिष्ठा वा ॥ ज्ञानाख्यतपसा ज्ञानं च तपश्च ताभ्यां वा ॥ ज्ञानरूपं तपः आलोचनं मम जन्मकर्मणोः स्वरूपस्य च निरंतरचिंतनं तेन वा ॥ शुद्धाश्च संतः मद्भावं ब्रह्मत्वं प्राप्ताः ॥ ज्ञानाख्यतपसा पूताः मामुपाश्रिताः सर्वं ब्रह्मेति सर्वत्र मदेकत्वदर्शनं कुर्वंतः मन्मयाः जीवन्मुक्तौ ब्रह्मैवाहमिति मदात्मना स्थिताश्च संतः देहपातानंतरं ब्रह्मत्वं प्राप्ता इति वा ॥ जीवन्मुक्तौ मयि भावं रत्याख्यं प्रेमातिशयं प्राप्ताः ॥ २ 'तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ॥' इति वक्ष्यते ॥ इति वा ॥

वि ॥ उक्तरूपजन्मकर्मरहस्यज्ञानरूपतपसा पूताः मदीयदिव्यजन्मचेष्टितया-थात्म्यविज्ञानेन विध्वस्तसमस्तमत्समाश्रयणविरोधिपापाः अतः तस्मिन्नेव जन्मनि मामुपाश्रिताः मन्मयाः मया ज्ञानविषयीभूतेन मयाः प्रचुराः मदेकचित्ताः मम भावं स्वभावं परमं साम्यं ३ प्राप्ताः ॥ १० ॥

संजयः ॥ समाप्तमिदं प्रासंगिकं ॥ कथयामि ते उपदेष्टुं उपक्रान्ते कर्मयोगे

१. २. ५६. २ ७. १७. ३. द्वै ॥ आगताः सम्यक् प्राप्ताः ॥ अ ॥ वि ॥ प्राप्ताः गत इति वक्तव्ये आगता इत्युक्तिः एषामिदं स्वकीयमिति सूचनाय ॥ एवमेव वक्ष्यति ॥ 'मम साधर्म्यमागता' (१४. २.) इति ॥ अत एव वाल्मीकिः, 'आजगाम मुहूर्तेन यत्र रामः सलक्ष्मणः ॥ (रा. यु. १७.) इत्यत्र जगामेति वक्तव्ये आजगामेत्याह ॥

वक्तव्यशेषं ॥ सादरमवधानेन शृणु ॥ इत्यभिहिते, पार्थेन अवहितोऽस्मि भूयः कथय ॥ १ 'बुद्ध्या युक्तो यया पार्थ कर्मबंधं प्रहास्यसि ॥' २ 'जन्मबंधविनिर्मुक्ताः पदं गच्छंत्यनामयं ॥' ३ 'श्रद्धावंतोऽनसूयंतो मुच्यंते तेऽपि कर्मभिः ॥' इति अकाम्यकर्मकरणान्मोक्षं, ४ 'यामिमां पुष्पितां वाचं प्रवदंत्यविपश्चितः ॥' ५ 'भोगैश्वर्यप्रसक्तानां तयाऽपहृतचेतसां ॥' इति काम्यकर्मकरणात्स्वर्गादिकं च प्राप्यमभ्यधाः ॥ उभयविधं कर्म कुर्वद्भ्य उभयेभ्यस्तेभ्य उभयविधं फलं भवानेव हि ददाति॥ स्वाधीने फलदाने कुतो वैषम्यं ॥ केभ्यश्चिन्मोक्षः केभ्यश्चित्स्वर्गादिकमिति ॥ कुतो नाविशेषेण फलं दीयते ॥ अतो विषमो भवान्॥ ब्रूहीत्यभिहितो भगवान् आत्मनो वैषम्यं परिहरन् उभयविधं कर्म कुर्वतां फलभेदे कारणमाह ॥

कृष्णः ॥ ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहं ॥
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ ११ ॥

य इति ॥ हे पार्थ ये मां यथा प्रपद्यन्ते तान् तथैव अहं भजामिं आश्रयामि ॥ सर्वशः सर्वे मनुष्याः सर्वैः प्रकारैर्वा मम वर्त्म मार्गं अनुवर्तन्ते अनुसरन्ति ॥ ११ ॥

ये यथा येन प्रकारेण अकामनया ज्ञानद्वारा मोक्षप्रापकमत्प्रसादैककामनया वा स्वर्गपशुपुत्रादिरूपफलकामनया वा साक्षात् इंद्रादिरूपेण वा मामाश्रयंते ॥ अकाम्येन काम्येन वा कर्मणा आराधयन्ति ॥ तान् उभयानपि तथैव तत्तत्कामानुसारेणैवाहमाश्रयामि ॥ मोक्षस्वर्गादिरूपफलदानेन संतोषयामि ॥ यदि केभ्यश्चित् फलं न दद्यां तर्ह्यहं विषमः स्यां न तथा किंतु तान् उभयान् फलदानेन भजाम्येव ॥ अतो न मे वैषम्यं ॥ तत्तत्कामानुसारेण फलदानं हि दातॄणां निसर्गः॥ एवमेव हि ददति ६ कल्पद्रुमादयोऽपि॥ कुतोऽल्पस्वर्गादिफलकामनया इंद्रादिद्वारा भवन्तमाराधयद्भ्यः इन्द्रादीनाराधयद्भ्यश्चाल्पं फलं ददासि ॥ दत्वा वैषम्यपरिहारायैवं श्राम्यसि ॥ अकामनया भवंतमाराधयद्भ्य एव फलं दीयतां ॥ नान्येभ्य इति चेत् हे पार्थ काम्यं कर्म कुर्वतः सर्वे मनुष्याः मदीयं किल मार्गमनुसरन्ति ॥

१. २. ३९. २. २. ५१. ३. ३. ३१. ४. २. ४२. ५. २. ४४. ६. भाग. १०. ३८.

तैराश्रितः प्रवृत्तिकर्ममार्गोऽपि मया हि प्रवर्तितः ॥ उक्तं हि मया ॥ १'देवान् भावयतानेने'त्यादि ॥ वक्ष्यते च ॥ २'यो यो यां यां तनुं भक्त' इत्यादि ॥ मया प्रवर्तितं मार्गमनुसरद्भ्यो देयमेव हि फलं मया ॥ अतो दीयते ॥ परंतु कर्मानुगुणं अल्पं स्वर्गादिकं दीयते ॥ उभयविधं कर्म कुर्वन्तः उभयेऽपि मनुष्याः मम वर्त्मानुवर्तन्ते ॥ प्रवृत्तिमार्गो निवृत्तिमार्गश्च मयैव हि प्रवर्तितः अत उभयेभ्योऽपि फलं देयमेवेति दीयते ॥ परंतु तत्तत्कर्मानुगुणं दीयते ॥ अतो न वैषम्यमिति वा ॥ फलकामनाया अल्पफलप्राप्तिहेतुत्वेन त्वं अकामनयैव कर्तव्यं कर्मानुतिष्ठ ॥ ११ ॥

द्वै ॥ अर्जुनः ॥ ३मामुपाश्रिताः मद्भावमागता इत्युक्त्या त्वदाश्रयणं मोक्षहेतुरिति प्रतीयते ॥ यद्येवं तर्हि साक्षात् त्वामाश्रितानां ज्ञानिनामिव इन्द्रादिरूपेण-त्वामाश्रितानां काम्यकर्मिणामपि मोक्षः फलं स्यात् ॥ अस्तु इति चेत् ज्ञानिनां त्रैविद्यानामपि फले साम्यादविशेषः स्यात् ॥ तच्चायुक्तं ॥ न फलसाम्यं किंतु ज्ञानिभ्यो मोक्षं काम्यकर्मिभ्यः त्रैविद्येभ्यः स्वर्गादिक ददामीति चेत् विषमं फलं ददत् त्वं विषमः स्याः । किं ब्रवीषि ॥ वद ॥

कृष्णः ॥ नोभयेभ्यः एकं फलं ददामि ॥ किंतु ज्ञानिभ्यो मुक्तिं अन्येभ्योऽन्यत् फलं ददामि ॥ हन्त तर्हि वैषम्यं स्यादिति चेत् ये मां यथा प्रपद्यन्ते तान् अहं तथैव भजामि ॥ कर्मानुगुणफलदानमेव हि साम्यं ॥ अतो न मम वैषम्यप्रसक्तिः ॥ कुत उभयेभ्योऽपि फलं दीयत इति चेत् उभयेऽपि मम हि मार्गं श्रुतिस्मृतिचोदितं अनुसरन्ति ॥ अत उभयेभ्योऽपि दीयते ॥ परंतु कर्मानुगुणं दयिते ॥ अतो न वैषम्यं मम ॥ ११ ॥

अर्जुनः ॥ 'परित्राणाय साधूनां विनाशाय च दुष्कृतां ॥ संभवामि' इत्युक्तं ॥ यद्येवं तर्हि त्वं साधुषु रागी असाधुषु द्वेषी च भवेथाः ॥ रागद्वेषवांश्च भवान् वयमिव विषमः स्यात् ॥ वद ॥

१. ३. ११. २. ७. २१. ३. द्वै ॥ अ ॥ प्रासंगिकवचनोपरि शङ्कातत्समाधानपरतया प्रवृत्तोऽयं ग्रन्थः 'कर्मभिर्न स बध्यते' इत्यन्तः ॥ कर्मोपदेशारम्भस्तु 'एवं ज्ञात्वे'त्यत्र ॥

कृष्णः ॥ साधवः परेषु प्रीतिं कुर्वन्ति ॥ असाधवस्तु परेषु द्वेषं ॥ अहं तु सर्वत्र वर्ते ॥ प्रीतिविषयेषु वर्तमानोऽहं प्रीतिं कुर्वत्सु प्रीतिं करोमि ॥ द्वेषविषयेषु वर्तमानोऽहं द्वेषं कुर्वत्सु द्वेषं करोमि ॥ बिंबपूजापरिभवौ हि प्रतिबिंबे संक्रामतः ॥ नातो वैषम्यं मम ॥ ये तु मनुष्या मम भक्तिध्यानादिमार्गमनुवर्तन्ते तानहं सर्वशः सर्वैः प्रकारैः भजामि ॥ अतः श्रेयोऽर्थिभिः परेषां हिताचरणायैव प्रयतितव्यं ॥ हे पार्थ त्वं सर्वथा सर्वेषां हितमेवाऽऽचर ॥ न कस्यापि मनागप्यहितम् ॥

अ ॥ अर्जुनः ॥ 'मामुपाश्रिता' इति विशेषणेन ज्ञानतपसा पूताः इति विशेषणेन वा निष्कामा एव मुक्ति प्राप्नुवन्ति ॥ नान्ये सकामाः ॥ इति प्रतीयते ॥ यद्येवं तर्हि केभ्यश्चित् मोक्षं केभ्याश्चित् अन्यत्फलं ददत् भवान् विषमः स्याः ॥ वद ॥

कृष्णः ॥ १ 'यो यो यां यां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति ॥ तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहं ॥ स तया श्रद्धया युक्तः तस्याराधनमीहते॥ लभते च ततः कामान् मयैव विहितान् हि तान् ॥' इति वक्ष्यते ॥ स्वर्गपशुपुत्रादिफलापेक्षया इन्द्रादीनाराधयन्तोपि मामेवाराधयन्ति ॥ २ 'येऽप्यन्यदेवताभक्ताः यजन्ते श्रद्धयाऽन्विताः ॥ तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकं ॥' इति वक्ष्यते ॥ चतुर्विधाः सुकृतिनः मां भजन्ते ॥ आर्तः जिज्ञासुः अर्थार्थी ज्ञानी चेति ॥ ३ 'चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन '॥ इति वक्ष्यते ॥ मां भजमानाः द्विविधाः सकामाः निष्कामाश्च ॥ तत्र निष्कामेभ्यो मुक्ति सकामेभ्य. तैस्तैः कामितं स्वर्गादिकं आर्तिनिवृत्त्यादिकं च ददामि ॥ यदि भजमानेभ्यो नैकरूपं फलं दीयते ॥ अपि तु भिन्नभिन्नरूपं ॥ तर्हि भवान् विषमः स्याः इति चेत् ये यथा येन प्रकारेण मां प्रपद्यन्ते तान् तथा तेन प्रकारेणैव भजामि ॥ स्वर्गादिकामनया सेवमानान् स्वर्गादिदानेन आर्त्तिनिवृत्तिकामनया सेवमानान् आर्त्तिहरणेन ज्ञानकामनया सेवमानान् ज्ञानादानेन मोक्षैककामनया सेवमानान् अकामान्,

१. ७. २१. २२. २. ९. २३. ३. ७. १६.

मेवेत्यनेन भजामि ॥ कामनानुगुणं फलदानमेव हि साम्यं ॥ कल्पितं हि फलं दीयमानं तोषाय कल्पेत ॥ नहि तंडुलादिकमर्थयमानाय महार्घ-वस्त्राभरणादि दीयमानं तस्य तोषाय कल्पते ॥ सर्वशः सर्वैः प्रकारैः आराधयंतोऽपि ममैव वर्त्मशब्दितमार्गमनुसरन्ति ॥ सर्वेषामप्युपासना-मार्गाणां मयैव विहितत्वात् ॥ मदीयं मार्गमनुवर्तमानाः सर्वेऽपि मदीया एव खलु ॥ तेभ्यः सर्वेभ्योऽपि फलं देयमेव हि मया ॥ अतो मया सर्वेभ्यः सेवकेभ्यः तत्तत्सेवानुगुणं फलं दीयते ॥ न्याय्यमेव हीदं ॥ नहि सुरद्रुमादयः स्वाश्रितेभ्यः सर्वेभ्योऽप्येकरूपं फलं ददाति ॥ अपितु तत्तत्कामानानुगुणमेव ॥ अतो नाहं विषमः ॥ मैवं पुनर्मंस्थाः ॥ कुतः सर्वेऽप्येकेनैव प्रकारेण त्वां न भजन्ते इति चेत् सर्वेऽपि मनुष्याः मम मार्गं अनुसृत्य प्रवर्तन्ते ॥ यस्मिन् यस्मिन् मार्गे मया प्रेर्यन्ते तस्मिन् तस्मिन् मार्गे प्रवर्तन्ते ॥ सर्वप्रेरकः खल्वहं ॥ अहंतु तत्तत्पूर्वकर्मानुगुणं प्रेरयामि ॥ ११ ॥

वि ॥ [1]सङ्गयः ॥ [2] 'यदा यदा हि धर्मस्य' 'परित्राणाय साधूनां' इति स्वस्य सौलभ्यसौशील्यवात्सल्यादिकल्याणगुणपूगं सूचयन् स्वस्य परोपकार-शीलतामभिधाय, हे पार्थ परमो हि खलूपकारो मया क्रियमाणः स. ॥ ततोऽ-प्यतिशयितं मामाराधयतां परमसौकर्यापादकमेक मयाक्रियमाणमुपकारं मयोच्य-मानं शृणु इति स्वकीयां परोपकारपरमकाष्ठा माहभगवान् ॥

१. प्रासंगिकप्रकरणसंगतोऽयं श्लोकः कर्मयोगारंभस्तूत्तरश्लोके ॥ २. अत्र प्रवृत्तिनिवृत्तिकर्मपरतया व्याख्याने सुगमे कुत एवं व्याख्यातं भाष्ये इति चेत् 'तमरुहंद देव्वुरुव अव्वुरुव तान् तमरुहंददेप्पेर् मटूप्पेर् तमरुहंद देव्वण्णं चिंदित्तिमैयादिरुप्परे अव्वण्णमाषियानाम्' इति परमप्रमाणतमकासारयोगि-गाथानुसारेणैवं व्याख्यातं ॥ तैर्वा कुतस्तथोक्तमिति चेत् 'त्वद्भावयोगपरिभावितहृत्सरोजाः ये सच्छ्रुते-क्षितपथा ननु नाथ पुंसां ॥ यद्यद्धिया त उरुगाय विभावयन्ति तत्तद्वपुः प्रणयसे तदनुग्रहाय' इति श्रीभागवततृतीयस्कंधगतब्रह्मवचनानुसारेण तथोक्तं तैः ॥

कृष्णः ॥ यदि मदाराधने अयमवतारः इदं रूपं इदं नाम इयमवस्था अयं देशः अयं कालः इति मया नियमः कृतः स्यात् तर्हि केषांचिदसौकर्यं स्यात् ॥ ततश्च शते नवतिराराधकाः अनवाप्तप्रयोजनाः स्युः ॥ करुणावरुणालयः परमोदारस्वभाववानहं सर्वैरप्यवाप्तप्रयोजनैर्भवितव्यं नैकेनापि अनवाप्तप्रयोजनेन भाव्यमिति मत्वा तैस्तैः स्वस्वेच्छासौकर्याद्यनुसारेण स्वाभिलषितनामरूपादिभिरुपासने क्रियमाणे तस्मिन् देशे तस्मिंश्च काले तेन नाम्ना तेन रूपेण सएवाहमित्याविर्भूय स्वीयं रूपं प्रदर्श्य समनुगृह्णामि ॥ ये यथा येन प्रकारेण १ नामरूपादिना मां आराधयन्ति अहं तान् तथैव तेन नामरूपादिना अनुगृह्णामि ॥ अतएव सर्वे मनुष्याः आराधकाः मम वर्त्म मार्गं स्वभावं ॥ मार्गशब्दः २ स्वभावेपि प्रयुज्यते ॥ स्वासाधारणविग्रहचेष्टासौशील्यादिस्वभावं सर्वैः प्रकारैरनुभवन्ति ॥ मदीयं विग्रहादिकं चक्षुरादिभिरनुभवन्तः तेन च नितरां तुष्यन्तो वर्तन्ते ॥ अन्यथा न सर्वेऽपि लभेरन्निदं प्रयोजनं ॥ इयं परोपकारकाष्ठा मदीया ॥ परिरक्षणमेव नोपकारः ॥ किंतु ३ तत्तदिच्छासौकर्यानुसारेण परिरक्षणमेवोपकारः ॥

१. राम कृष्णाद्यवतारा इव अर्चावतारा अपि ग्राह्याः ॥ २. अत्र, 'कोऽयं पन्था यदसि विमुखो मंदभाग्ये मयीत्थं' ॥ इत्यादिप्रयोगाः ऊह्याः ॥ ३. यथा किल, परमोदाराः आस्माकीनाः सार्वभौमाः स्वकीयामाज्ञां शिरसि धृत्वा विहितं कर्मयोगं कृत्स्नमनेहसं यथावदनुष्ठितवद्भ्यः चरमे वयसि सदन एव यथासुखमवस्थाप्य नास्मदीयैरेभिः कुटुंबभरणाय शोचितव्यमिति परमया कृपया जीवनसौकर्याय भृतेरर्धमामरणं प्रतिमासं ददति ॥ सुमहान्किलायमुपकारः ॥ यदीमे भृतावर्धं गृह्णन्तः प्रतिमासं पंचमदिनादर्वाक् प्रधानराजधानीमेत्य तत्र प्रधानास्थान्यां गृह्णंतु स्वस्वं वेतनार्धमिति निर्बंधः क्रियेत तर्हि गमनागमनसौकर्याद्यभावेन शते नवतिर्मास्त्विदमिति परित्यज्य तदिच्छां नष्टप्रयोजना भवेयुः ॥ माभूवंस्तथ लभंतामिदं प्रयोजनं सर्वेपि तदर्हाः इति तत्तदिच्छासौकर्याद्यनुसारेण तत्तदभिलषितदेशस्थस्वीयकोशागारे ददति तेभ्यस्तेभ्यो देयं ॥ ततोऽप्यतिशयितः कस्त्वयमुपकारः ॥

१ हनूमतो भक्तस्य युगपदग्निप्रवेशावसरे कृष्णेति त्वया रामेति हनूमता चानुध्यात स्तथैव कृष्णो रामश्च सन् प्रादुर्भूय त्वां तं च तस्मात्संकटादुद्दीधरं किल ॥ किं तत्त्वं व्यस्मार्षीः ॥ तत्तदिच्छासौकर्याद्यनुसारेण तत्रतत्राविर्भूय रक्षणशीलोऽयं महोपकारीति मां सततमनुसंधेहि ॥ ११ ॥

अर्जुनः ॥ एवं काम्याकाम्यकर्मणोः महति फलभेदे सति कुतोऽल्पफलके इंद्राद्याराधनरूपे काम्ये कर्मणि प्रवर्तन्ते लोकाः ॥ ब्रूहि ॥

कृष्णः ॥ कांक्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः ॥
क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥ १२ ॥

कांक्षन्त इति ॥ हि यस्मात् कर्मणा जायत इति कर्मजा सिद्धिः फलं मानुषे लोके क्षिप्रं शीघ्रं भवति तस्मात् इह लोके कर्मणां सिद्धिं फलं कांक्षन्तः अपेक्षमाणाः सन्तः देवताः यजन्ते आराधयन्ति ॥ यजन्तः सन्तः मम वर्त्म अनुवर्तन्ते इति वा ॥ १२ ॥

कर्मणां फलं स्वर्गादिकं कांक्षमाणाः नतु ज्ञानफलं मोक्षं इह लोके इन्द्रादिदेवताः यजन्ते नतु मां ॥ क्रियमाणानां कर्मणां फलं इह लोके कांक्षंत इति वा ॥

१. अत्र अर्जुनतीर्थयात्रायां रामेश्वरं गत्वा सेतुसविधमाप्य तत्र श्रीरामाज्ञया सेतुं परिरक्षंतं हनूमन्तमभिवीक्ष्य कस्त्वं किमीयः कितवात्र इति पृष्ट्वा कथितस्वीयसकलोदन्तेन तेन कस्त्वमिति पृष्टः पार्थः स्वं स्वमाहिमानं चाभिधाय रुष्टेन तेन प्रदर्शितं श्रीरामसेतुं दृष्ट्वा यदि रामः पराक्रमी तर्हि तेन शरैर्बद्धेन भवितव्यं अनेन सेतुना ॥ बध्नीयामहं तथा इत्युक्त्वा मदीयो बाणसेतुर्यदि त्वया भज्येत तर्हि ज्वलनं प्रज्वाल्य प्रविशामीति प्रतिज्ञाय स्वेन रचिते शरसेतौ हनूमता भग्ने ज्वलनं प्रवेष्टुमुद्यतो यदुनाथं प्रार्थयामास ॥ स च वृद्धब्राह्मणरूपेण तत्रागत्य साक्षिहीनमसत्यमेतत् पुनश्च क्रियतामित्याह ॥ क्रियतां यदि न भज्येत तर्ह्यहमपि ज्वलनं प्रविशामीति प्रतिज्ञाय, पार्थेन कृते शरसेतौ महताऽपि प्रयत्नेनाभग्ने ज्वलनं प्रज्वाल्य प्रवेष्टुमुद्यतो मारुतिः रघुनाथं प्रार्थयामास ॥ तदा वृद्धब्राह्मणरूपेण मध्ये तिष्ठन् वासुदेवः स्वं कृष्णं पार्थाय स्वं रामं हनुमते प्रदर्श्य ताभ्यामभिष्टुतः श्रीरामः कृष्णश्च एकमेव तत्वमिति तत्वमुपदिश्य असंकुचमनध्वजदंडनिवासाभ्युपगमेन निस्तीर्णज्वलनप्रवेशप्रतिज्ञौ तौ विधाय ररक्षेति कथकसमयप्रथिता पौराणिकी कथाऽनुसंधेया ॥

कुतः कर्मफलं कांक्षंते इति चेत् कर्मफलं मनुष्यलोके तत्सदृशे स्वर्गलोके च १ शीघ्रं भवति ॥ ज्ञानफलं तु न क्षिप्रं भवति॥ २'बहूनां जन्मनामन्ते' इति वक्ष्यते॥ नापि मनुष्यलोके ॥ अतो न ज्ञानफलमपेक्षन्ते ॥ प्रवृत्तिकर्मफलस्य शीघ्र लाभात् १ मनुष्यलोक एव लाभाच्च क्षुद्रेऽपि तस्मिन् फले कांक्षा समुदेति ॥ कालविलंब-साध्यं देशांतरे लभ्यं महदपि फलमुपेक्षमाणाः क्षिप्रलभ्यं स्वावासदेशलभ्यं च क्षुद्रमपि फलमपेक्षन्ते हि लोके॥ कुत एवमिति चेत् बुद्धिस्तेषां पूर्वकर्मानुसारिणी कालविलंवं न सहते ॥ महाफलानुभवौपयिकादृष्टहीनास्ते पापिनः ॥ प्राक्तनपाप-कर्मानुसारिणी बुद्धिः तान् क्षुद्रे फले कांक्षामुत्पाद्य तत्साधने कर्मणि प्रवर्तयति ॥ कालविलंबमसहमानाः किल याचका परमक्षुद्रं अणकादिकं लभमानाः तेनैव कृतार्थंमन्यमानाः पर्यटंति ॥ विलंबं सहमानास्तु शतं सहस्रं वा लभंते ॥ शता-धिकभृतिलाभौपयिकपरीक्षासु कालविलंबासहनादप्रयतमानाः केचिद्दशावरभृति-लाभौपयिकाल्पपरीक्षयैव कृतार्थंमन्यमानाः दशावरभृतिमति कार्ये संगताः आ-मरणं वृद्धिमलभमानाः तावतीमेव भृतिं गृह्णन्तोऽनुभूयन्ते ॥ अतो निवृत्तिकर्म-करणप्रवृत्तिप्रतिबन्धकपापवन्तः तत्र प्रवृत्तिमलभमानाः काम्येन कर्मणा इन्द्रादी-नाराधयंति ॥ प्राक्तनपुण्यकर्मवन्तस्तु मामेवाराध्य महते फलाय कल्पंते ॥ अत-स्त्वमकाम्यं कर्म कुरु ॥ १२ ॥

२ **अर्जुनः** ॥ 'मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः' ॥ इत्युक्तं ॥ अका-मनया त्वामाराधयन्तः तव वर्त्म अनुवर्तमाना भवेयुः ॥ फलकामनया इन्द्रादी-नाराधयन्तः कथं त्वन्मार्गानुवर्तिनो भवेयुः ॥ अतः कथमिदं ब्रूहि ॥

**कृष्णः** ॥ उभयेऽपि ममैव वर्त्म अनुवर्तन्ते ॥ परंतु एतावान् विशेषः ॥ यतः कर्मजा सिद्धिः शीघ्रं मनुष्यलोक एव भवति ॥ तस्मात् इह कर्मणां फलं

अ ॥ १. मानुषे लोके शीघ्रं भवतीत्युक्त्या लोकान्तरे विलंबेन कर्मफलसिद्धिरस्तीति सूच्यते॥ कुतस्तत्र विलंबेनेति चेत् वर्णाश्रमादिविभागः तत्तत्कर्मविभागश्च मनुष्य लोक एव नान्यत्र ॥ मानुषे लोके कर्मजेत्यनेनेदंसूच्यते ॥ वर्णाश्रमधर्मरूपकर्मफलं अत्र क्षिप्रं भवति ॥ वर्णाश्रमधर्मेतरकर्मफलं अन्यत्र विलंबेन भवतीति सिद्धं ॥ २. द्वै ॥ योजनान्तरं ॥ यजन्तः इह इति छेदः ॥

कांक्षमाणाः तदर्थं इंद्रादिदेवताः इह यजंतः संतः मम वर्त्म अनुवर्तन्ते ॥ फलकामनारहितास्तु कर्मफलमकांक्षमाणाः इन्द्रादिदेवताः अयजन्तः सन्तः मामाराधयन्तो मम वर्त्मानुवर्तन्ते ॥ देवता यजन्तः तन्मार्गानुयायिनः स्युः ममवर्त्मानुवर्तन्ते इति कथमविशेषेणोच्यते इति चेत् देवताः यजन्तोऽपि मम वर्त्मैवानुवर्तन्ते ॥ देवताराधनस्य अन्ते मयिसमर्पणाद्वा देवतानां मच्छरीरत्वेन मत्परिवारत्वेन मत्सेवकत्वेन च तदाराधनस्य मदाराधने पर्यवसानाद्वा ॥ किमुत मामेव यजन्तः॥ उत्तमाः निष्कामाः मामेवाराधयन्ति ॥ मध्यमाः सकामाः ' फलकामनया मामेव वा 'आराधयन्ति ॥ देवताः आराध्य अन्ते मयि समर्पणं वा कुर्वन्ति ॥ अधमाः सकामाः इन्द्रादीनिवाऽऽराधयन्ति ॥ सर्वेऽपि ममैव वर्त्मानुवर्तन्ते ॥ सर्वेषामुपासनामार्गाणां मयैव कृतत्वात् ॥ अतः सर्वेऽपि मम वर्त्मानुवर्तन्ते इति, तेन 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहं ॥' इति च युक्तमुक्तं ॥ १२ ॥

१ अर्जुनः ॥ 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यह'मित्युक्तं ॥ एवं ज्ञानकर्मयोगफलप्रदाने समभावेन स्थिते, त्वयि वैषम्यनैर्घृण्याद्यारोपणमयुक्तं ॥ अस्तु नाम तत् ॥ किमिति महाफलं ज्ञानयोगं विहाय तत्साधनभूतमवरं निवृत्तिकर्ममार्गमनुतिष्ठंति मुमुक्षवः ॥ वद ॥

**कृष्णः** ॥ इह अस्मिन् लोके कर्मणां सिद्धिं चित्तशुद्धिरूपां कांक्षमाणाः तदर्थं कर्मभिः इंद्रादिदेवान् यजन्तः सन्तस्सर्वे मुमुक्षवो मनुष्याः मम वर्त्म ममाभिमतं मया प्रवर्तितं च निवृत्तिकर्ममार्गमेवानुवर्तन्ते ॥ न प्रथमत एव ज्ञानयोगं ॥ विना कर्मयोगं ज्ञानयोगे प्रवृत्तस्य ज्ञानयोगासंभवात् ॥ उक्तं हि मया ॥ २ 'न कर्मणामनारंभान्नैष्कर्म्यं पुरुषोऽश्नुते ' ॥ इति ॥ यजन्तोपि ममैव वर्त्मानुवर्तन्ते इति च हठयोगादिभिरपि चित्तशुद्धेः संपादयितुं शक्यत्वादनावश्यकं निवृत्तिकर्मयोगाश्रयणमिति चेत् मानुषे लोके निवृत्तिकर्मजा चित्तशुद्धिरूपा सिद्धिः क्षिप्रं भवति ॥ कर्मभिराराधितानां मनोबुद्धीन्द्रियाद्यभिमानिनां देवानां प्रसादात् शीघ्रमेव मनःप्रसादो भवति ॥ हठयोगादिभिर्जायमाना चित्तशुद्धिर्विलंबेन

१. अ. शंक ॥ २. ३. ४.

महता शरीरायासेन च भवति ॥ अतः अविलंबेन चित्तशुद्धिं कांक्षमाणा निवृत्तिकर्ममार्गमाश्रयन्ते ॥ ते च कर्मभिः शुद्धान्तःकरणाः ज्ञानाद्वारा मोक्षमाप्नुवन्ति ॥ अतो युक्तं मुमुक्षूणां ज्ञानयोगानधिकारिणां निवृत्तिकर्ममार्गानुसरणं ॥ १२ ॥

अर्जुनः ॥ ये प्रपद्यन्ते तान् भजामीति. सर्वशो मनुष्या इति च सामान्यत उक्त्या सर्ववर्णसर्वाश्रमस्थैस्त्वमाराध्यसे इति प्रतीयते ॥ कुतः सर्वेऽपि त्वामाराधयन्ति ॥ किं सर्वैस्त्वमेवाऽऽराधनीयः उतवर्णाश्रमभेदादन्येऽपि यदि सर्वैरहमेवाऽऽराधनीयः अतएव मामाराधयन्तीत्युच्यते तर्हि सर्वेषां त्वदाराधकानां फलमेकरूपं हि भाव्यं कुतः फलभेदः ॥ वद ॥

चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ॥ १३॥ ॥

चातुर्वर्ण्यमिति ॥ मया गुणाश्च कर्माणि च गुणकर्माणि गुणकर्मणां विभागः गुणकर्मविभागः तेन गुणकर्मविभागशः चत्वारो वर्णाः ब्राह्मणादिजातयः चातुर्वर्ण्यं सृष्टम् ॥ १३॥ ॥

सत्वादिगुणोपचयापचयभेदात् ब्राह्मणक्षत्रियवैश्यशूद्राश्चत्वारो वर्णा मया [१]सृष्टाः ॥ [२]'ब्राह्मणोऽस्य मुखमासीत् बाहू राजन्यः कृतः ॥ ऊरू तदस्य यद्वैश्यः ॥ पद्भ्यां शूद्रो अजायत' इति श्रुतिः ॥ तत्र सात्विकाः ब्राह्मणाः ॥ सत्वोपसर्जनरजःप्रधानाः क्षत्रियाः ॥ तमोगुणोपसर्जनरजःप्रधानाः वैश्याः ॥ तामसाः शूद्राः ॥ इति विवेकः ॥ तेषां कर्मभेदोऽपि मया सृष्टः ॥ उक्तं हि मया ॥ [३]'सहयज्ञाः प्रजाः सृष्ट्वा' इत्यादि ॥ कर्मभेदश्च [४]'शमो दमश्च' इत्यादिनाऽष्टादशे वक्ष्यते ॥ गुणभेदेन ब्राह्मणादिवर्णान् सृष्ट्वा तेषां कर्मभेदोऽपि मया विहितः ॥ तत्तत्कर्मानुसारेण तांस्तान् तत्तद्वर्णेषूत्पाद्य तानि तानि कर्माणि कारयामि ॥ इदमुपलक्षणं आश्रमाणामपि ॥ तत्तद्गुणकर्मभेदानुसारेण तांस्तान् तेषुतेष्वाश्रमेषु योजयामि ॥ अतस्सर्वेषां पिताऽहं ॥ अतः सर्ववर्णसर्वाश्रमस्थैरहमेवाऽऽराधनीयः॥

१. अ ॥ मनुष्यलोके एव वर्णाश्रमाणां मया कल्पितत्वात् तत्रैव वर्णाश्रमादिकर्माणि नान्यत्र इति अनेनोच्यते ॥ इति च ॥

अतएव सर्वेऽपि मामाराधयन्ति ॥ फलभेदः कुत इति चेत् ये पितरं मां साक्षादाराधयन्ति ॥ तेषामुत्तमं फलं ॥ ये पितरं मां विहाय अल्पफलदातॄन् अन्यानाराधयन्ति तेषां न तादृशं फलं ॥ किंतु तत्तद्योग्यतानुगुणं अल्पं फलं ॥ कुतस्तेभ्यस्त्वामनाराधयद्भ्यः अल्पं वा फलं दातव्यमिति चेत् आराध्यमानानां अन्येषां देवानामपि मदीयत्वात् तदाराधकेभ्योऽल्पं फलं दीयते ॥ तदाराधनमार्गस्यापि मदीयत्वात् तेऽपि मम वर्त्म ह्यनुवर्तन्ते ॥ चतुर्णां वर्णानां हितं चातुर्वर्ण्यं गुणकर्म गुणाश्च कर्माणि च एषां समाहारो गुणकर्म विभागेन मया सृष्टं ॥ कर्माणि अग्निहोत्रादीनि गुणाः द्रव्यदेवतारूपाः ॥ पुत्रप्रीत्या पितुरिव देवताप्रीत्या मम तृप्तिर्भवति ॥ अतः तदाराधकेभ्योऽपि फलं दीयते ॥ ये मां मदीयांश्च नाऽऽराधयन्ति ॥ प्रत्युत विरुद्धं चेष्टन्ते ॥ तानधः पातयामि ॥ लोके हि पितरः स्वाराधकेभ्यः पुत्रेभ्योऽधिकं स्वमनादृत्य स्वीयानाराधयद्भ्योऽल्पं ददतः ये स्वं स्वीयांश्चानादृत्य विरुद्धं चेष्टन्ते तेभ्यः पुत्रेभ्यः किमप्यददतः प्रत्युत क्लेशयन्तश्च दृश्यन्ते॥ स्पष्टीक्रियते चेदं १ 'कामैस्तैस्तै'रित्यादिना सप्तमे ॥ २ 'येऽप्यन्यदेवताभक्ता' इत्यादिना नवमे ॥ ३ 'तानहं द्विषतः क्रूरान्' इत्यादिना षोडशे ॥ कुतः केचित् सकामाः केचिन्निष्कामाः कोऽत्र हेतुः इति चेत् इदमेवोत्तरं ॥ चत्वारो वर्णाः गुणकर्मभेदवंतः गुणकर्मवैषम्यात् सकामा निष्कामाश्च भवंति ॥ १२ ॥

अर्जुनः ॥ यद्येवं सर्वेषां त्वं कर्ताऽसि तर्हि तव विषमसृष्ट्यादिकर्तृत्वेन वैषम्यं नैर्घृण्यं च स्यात्॥ श्रमचिंतादिभिर्दोषवांश्च स्याः॥ कार्यस्य सकर्तृकत्वनियमेन त्वदन्यस्य त्वत्कर्तृकत्ववत् तव त्वदन्यकर्तृकत्वं स्यात्॥ततश्च अन्येभ्यस्तत्कर्तुस्तव यथोत्तमत्वं तथा त्वत्कर्तुस्त्वत्तोऽप्युत्तमत्वं स्यात् ॥ ततश्च 'भूतानामीश्वरोऽपि सन्' इत्याद्युक्तमयुक्तं स्यात् ॥ ब्रूहि ॥

कृष्णः ॥ तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययं ॥ १३ ॥

न मां कर्माणि लिंपन्ति न मे कर्मफले स्पृहा ॥
इति मां योऽभिजानाति कर्मभिर्न स बध्यते ॥ १४ ॥

---

१. ७. २०. २. ९. २३. ३. १६. १९.

तस्येति ॥ मां तस्य कर्तारमपि न कर्ता अकर्ता तं न विद्यते कर्ता यस्य सः अकर्ता तं अकर्तारं न विद्यते व्ययः विकारः नाशश्च यस्य सः अव्ययः तं विद्धि जानीहि ॥ मां कर्माणि न लिंपन्ति ॥ मे कर्मणः फलं कर्मफलं तस्मिन् कर्मफले स्पृहा इच्छा नास्ति ॥ इति मां यः अभि सम्यक् जानाति सः कर्मभिः न बध्यते ॥ १३ १४ ॥

तस्य चातुर्वर्ण्यस्य चातुराश्रम्यस्य च कर्ताऽहं तथाऽपि न मम वैषम्यादिकं लोकविलक्षणकर्तृत्वाद् [१] कर्ताऽहं ॥ लौकिककर्तुर्हि वैषम्यादिकं ॥ सर्वस्यापि कर्ताऽहं ॥ न मेऽन्यः [२] कर्ता ॥ मम अनादिनित्यत्वात् स्वतंत्रत्वात् ईश्वरत्वाच्च ॥ अतस्तादृशस्य मम कर्तृत्वेन न श्रमचिन्तादयो दोषाः ॥ मां तस्य कर्तारमपि विलक्षणकर्तृत्वादकर्तारं विद्धि ॥ तस्य कर्तारं मां कर्त्रन्तररहितत्वादकर्तारमपि विद्धि ॥ अतएव मां तस्य कर्तारमपि निर्विकारत्वात् अव्ययं विद्धि ॥ अकर्तृत्वात्तव जन्माभावेपि मृतिः स्यात् ॥ असति त्वयि जगत उत्पत्त्यादिकं कथं लेत्स्यति ॥ इति चेत् अहमव्ययः स्वभावतो निमित्ततश्च स्वरूपतः शरीरतश्च नाशरहितः अतः शाश्वतत्वान्मम न काऽप्यनुपपत्तिः ॥ त्वमेवं मां विद्धि ॥ लोकविलक्षणकर्तृत्वेन श्रमचिन्तादिकं मास्तु ॥ वैषम्यादिकं तु स्यादेव ॥ विषमव्यापारान् कुर्वन्तो विषमा हि व्यवह्रियन्ते ॥ अतः कथमिदमिति चेत् यतः मम लौकिककर्तुरिव अहंकर्तेत्यादिरूपो दुरभिनिवेशो नास्ति ॥ यतश्च मम कर्मणः फले स्पृहा नास्ति ॥ अतः विषमसृष्ट्यादिकर्माणि कर्तारं मां न लिंपन्ति ॥ न निबध्नन्ति ॥ वैषम्यनैर्घृण्यादिदोषवन्तं न कुर्वन्ति ॥ कर्मफलाऽऽसक्तिः तत्र दुराग्रहरूपोऽभिनिवेशः तन्मूलभूतौ रागद्वेषौ इत्यादयो दोषाः येषां कर्तॄणां स्युः तान् हि तत्कर्माणि लिंपेयुः ॥ नैकोऽप्यस्ति मम दोषः ॥ दोषगंधविधुरत्वान्मम ॥ अतस्तानि कर्माणि मां न लिंपन्ति ॥ लौकिका अपि कर्तारः फलाऽऽसक्तिदुरभिनिवेशरागद्वेषादिदोषराहित्येन तत्तदनुगुणं कर्म विषममपि कुर्वन्तो न विषमा निर्घृणाश्च भवन्ति ॥ विचार्य कांश्चिन्मुंचन् कांश्चिद्दण्डयन्नपि प्राड्विवाको न विषमो निर्घृणश्चोच्यते ॥ स्तूयते च सर्वत्र समोऽयमिति ॥ फलाऽऽसक्त्यादिभिस्तथा कुर्वंस्तु विषमो निर्घृणश्चो-

१. न कर्ता अकर्ता ॥ २. न विद्यते कर्ता यस्यासौ अकर्ता ॥

क्यते ॥ निंद्यते च विषमोऽयं निर्घृण इति ॥ लौकिकोऽपि कर्ता फलासक्त्यादिदोषराहित्येन कुर्वन् तैः कर्मभिर्न लिप्यते ॥ किमुत लोकविलक्षणकर्ताऽहं ॥ अतः लोकविलक्षणकर्तृत्वान्न मम वैषम्यादिकमिति युक्तमुक्तं ॥ किंबहुना मे कर्मफले स्पृहा नास्ति अतो न मां कर्माणि लिंपन्तीति मां भगवन्तं यः सम्यक् जानाति सः कर्मभिर्न बध्यते ॥ मे कर्मफले स्पृहा नेति मां कर्माणि न लिंपंतीति च यो जानातीत्युक्तौ स्वस्य ईश्वराभेदाभिप्रायेणकर्मलेपाभावादिकं यो जानाति इति जीवेश्वराभेदज्ञानाऽऽवश्यकतायां पर्यवस्येत् तन्माभूदिति पुनर्मामित्युक्तं ॥ मे स्पृहा नास्ति मां न लिंपन्तीति मां यो जानाति नतु स्वात्मानं सः न बध्यते ॥ यस्य कर्मलेपाद्यभावं जानन्तमन्यमपि कर्माणि न लिंपन्ति ॥ किमुवाच्यं तं कर्माणि न लिंपन्तीति ॥ इति विमर्शनीयं ॥ सर्वपितृत्वान्मम सर्वैरप्यहमेवाऽऽराधनीयः ॥ फलंतु तत्तदुपासनानुसारि यथायोग्यं भवति ॥ अतो यथोपासितोऽहं महाफलं दद्यां तथा कर्मणा मामुपास्व ॥ १३ ॥ १४ ॥

अ ॥ अर्जुनः ॥ गुणकर्मविभागशः चातुर्वर्ण्यं मया सृष्टं ॥ अतएव सर्वपितृत्वात् सर्वैरप्यहमेवाऽऽराधनीयः ॥ इत्युक्तं ॥ यदि कर्ता स्याः तर्हि त्वमीश्वरो न स्याः ॥ ईश्वरस्य कर्तृत्वभोक्तृत्वादिसर्वधर्मविधुरत्वात् ॥ ब्रूहि

कृष्णः ॥ तस्य चातुर्वर्ण्यस्य अज्ञदृष्ट्या कर्तृत्वेन प्रतीयमानमपि मां विद्वद्दृष्ट्या अकर्तारं विद्धि ॥ मायया कर्तारमपि परमार्थतोऽकर्तारं विद्धि ॥ सगुणरूपेण कर्तारमपि निर्गुणरूपेणाकर्तारं विद्धि ॥ विद्वद्दृष्ट्या परमार्थतः निर्गुणरूपेण च कर्तृत्वादिशून्यत्वात् निर्विकारं च मां विद्धि ॥ अतः कर्तृत्वाभिमानाभावान्न मां कर्माणि लिंपन्ति ॥ आप्तकामस्य मे कर्मफले स्पृहा नास्ति ॥ [१] 'आप्तकामस्य का स्पृहा ॥' इति श्रुतिः ॥ अतः भोक्तृत्वाभिमानाभावाच्च न मां कर्माणि लिंपन्ति इतिमां एवंप्रकारं मां कर्तृत्वभोक्तृत्वादिसर्वधर्मविधुरं ईश्वरं मां यः अभि सम्यक् तत्वतः ब्रह्मैवाहमित्यभेदेन जानाति सः ज्ञानी कर्मभिर्न बध्यते ॥ क्रियमाणैः कर्मभिः हेतुभिः ज्ञानद्वारा मुच्यते ॥ प्रतिबंधकैः पुण्यपापात्मकैः कर्मभिः

१. मां. २. ७.

न बाध्यते इति वा ॥ अहंकाराभावात् कर्मफलस्पृहाभावाच्च मां कर्माणि न लिंपन्तीति मां योऽभिजानाति मः कर्मभिर्न बध्यते ॥ तेन क्रियमाणानि कर्माणि तं न लिंपन्ति कर्मिणं न कुर्वन्ति । मामेवं जानत एव कर्मलेपो नास्ति ॥ किंवाच्यं मम नास्तीति ॥ कर्तृत्वादेः मायिकत्वात् न मम श्रमचिन्तादिकं वैषम्यनैर्घृण्यादिकं वा ॥ एवं मां जानतः उक्तरूपफलसद्भावात् त्वमप्येवं मां विद्धि ॥ १३ ॥ १४ ॥

वि ॥ अर्जुनः ॥ कुतः क्षुद्रफले काम्ये कर्मणि प्रवर्तते इति पृष्टेन भवता प्राक्तनपापकर्मानुसारिणी बुद्धिः तान् क्षुद्रफले कांक्षामुत्पाद्य तत्साधने काम्ये कर्मणि प्रवर्तयतीत्युक्तं ॥ यद्येवं तर्हि निवृत्तिकर्मयोगारंभविरोधिपापनिवृत्त्युपायं ब्रूहि

कृष्णः ॥ गुणकर्मविभागशः चातुर्वर्ण्यं तदुपलक्षितं सर्वं जगत् मया सृष्टं ॥ यद्येवं सर्वस्य जगतः त्वं कर्ता स्याः तर्हि विषमसृष्ट्यादिभिः विषमो निर्घृणश्च स्याः इति चेत् तस्य कर्तारमपि मां अकर्तारं विद्धि ॥ अकर्तृत्वान्न मम वैषम्यादिकम् ॥ मया सृष्टमिति कर्तृत्वमुक्त्वा कथमकर्तृत्वान्न मम वैषम्यादिकमित्युच्यते ॥ विरुद्धं हि कर्तृत्वमकर्तृत्वं चेत्युभयमेकत्र इति चेत् अकर्तृत्वं न कर्तृत्वाभावरूपं ॥ अतो न विरोधः ॥ तर्हि किंरूपं तदिति चेत् देवमनुष्यादिवैचित्र्यरूपविशेषप्रयोजकत्वाभावरूपं ॥ सृजाम्येवाहं ॥ अतः कर्ताऽहं ॥ परंतु देवमनुष्यादिवैचित्र्यं न करोम्यहं ॥ अतोऽकर्ताऽहं ॥ अतः देवमनुष्यादिवैचित्र्यकर्तृत्वाभावान्न मम वैषम्यादिकं ॥ तर्हि तानि किंनिमित्तानीति चेत् पुण्यपापरूपकर्मविशेषप्रयुक्तानि ॥ एवमकर्तृत्वात् विषमसृष्ट्यादीनि कर्माणि मदीयान्यपि मां न संबध्नन्ति ॥ कर्तारः कर्मफले सस्पृहा भवन्ति ॥ मम तु विषमकर्मणः सृष्ट्यादेः फले स्पृहा नास्ति ॥ अतोऽप्यकर्ताऽहं ॥ अकर्तृत्वान्न मां कर्माणि लिंपन्ति ॥ प्रवाहानादिवासनामूलतत्तदिच्छानुरूपं प्रवर्तयन् तत्तदिच्छाहेतुकतत्तत्पुण्यपापानुगुणं फलं प्रयच्छामि ॥ नतु स्वेच्छानुरूपं प्रयच्छामि ॥ नापि स्वातंत्र्यमात्रेण विषमं फलं ददामि ॥ नच स्वप्रयोजनार्थं परान् पीडयामि ॥ अतो न मम वैषम्यादिकं ॥ १' न कर्माविभागादिति चेन्नानादित्वात् ' इति सूत्रं ॥ इत्येव महं ज्ञातव्यः ॥ मां एवं चातुर्वर्ण्यमित्यादिसार्धश्लो-

१. २. १. ३६.

कोक्तसर्वजगत्कर्तृत्वादिमहामहिमवन्तं यस्सम्यक् जानाति सः उक्तमन्माहात्म्यज्ञानी निवृत्तिकर्मयोगारंभविरोधिभिः प्राचीनपापकर्मभिः न संबध्यते ॥ तस्य उक्तज्ञानेन निवृत्तिकर्मयोगारंभविरोधिपापानि नश्यन्ति ॥ नष्टे प्रतिबन्धके स्वयमेवाकाम्ये कर्मणि प्रवर्तन्ते ॥ त्वमप्येवं मां विद्धि ॥ तेन ते विरोधिपापक्षयः स्यात् ॥ ततश्च अकाम्ये युद्धाख्ये मदभिमते कर्मणि प्रवर्तेथाः ॥ तेन च ज्ञानद्वारा मोक्ष्यसे ॥ १३ १४ ॥

द्वै ॥ अर्जुनः ॥ योऽभिजानाति कर्मभिर्न स बध्यते इति ज्ञानान्मोक्ष उक्तः॥ यद्येवं तर्हि ममापि ज्ञानित्वेन ज्ञानान्मोक्षः सिद्धः ॥ अतः न ज्ञानद्वारा मोक्षार्थं कर्मकरणमावश्यकं ॥ अतो नाहं कर्म कुर्यां ॥ किं ब्रवीषि ॥

कृष्णः ॥ एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः ॥
कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतं ॥ १५ ॥

एवमिति ॥ एवं ज्ञात्वा पूर्वैः मोक्तुमिच्छव मुमुक्षवः तैरपि कर्म कृत॥ तस्मात् त्वं ततोऽपि पूर्वैः कृतं अतिशयेन पूर्वं पूर्वतरं कर्मैव कुरु १५ ॥

एवं ज्ञात्वाऽपि पूर्वैः मुमुक्षुभिः कर्म कृतं ॥ ज्ञानिनामपि अधिकानन्दसिद्धये कर्माचरणदर्शनात् तै कृतं ॥ तेभ्यः पूर्वैरपि कृतं ॥ अनादिवेदविहितत्वेन ततोऽपि पूर्वभावि कर्मैव ज्ञान्यपि त्वं कुरु ॥ १५ ॥

अ ॥ अर्जुनः ॥ मम मां जानतश्च कर्मलेपो नास्तीत्युक्तं ॥ किं तेन प्रकृते ॥ प्रकृतेन कर्मयोगेन संगमय ॥

कृष्णः ॥ एवं ज्ञात्वा अहंकाराभावात् कर्मफलस्पृहाभावाद् नेश्वरस्य कर्मलेपः ॥ यद्येवमहमपि अहंकारादिकं फलापेक्षां च परित्यज्य कर्मकुर्यां ॥ तर्हि विषमेणापि कर्मणा नाहं लिप्येय ॥ किमुत विहितेन कर्मणा इति ज्ञात्वा ईदृशानुसंधानपूर्वकं त्वया कर्म कर्तव्यं ॥ किमेवं ज्ञात्वा कैश्चित्कृतमस्तीति चेत् एवं ज्ञात्वा अस्मिन् युगे पूर्वैः मुमुक्षुभिः स्वयं मोक्षेच्छावद्भिः लोकसंग्रहार्थं कृत्वा प्रदर्श्य

अनुष्ठाप्य १ मोचयितुं इच्छुभिश्च ययातियदुप्रभृतिभिरपि कृतं ॥ युगान्तरे जनकादिभिरपि कृतं ॥ २ ततोऽपि पूर्वभावि पूर्वपूर्वपूर्वानुष्ठानादत्यन्तं पूर्वं ॥ तस्मात् कर्मैव त्वमेवं ज्ञात्वा कुरु ॥ यदि त्वमज्ञः तर्हि ज्ञानाय यदि त्वं ज्ञानी तर्हि लोकसंग्रहाय कर्म कुरु ॥ 'कर्मणैवे'त्यस्यायं प्रपंचः ॥ १५ ॥

वि॥ अर्जुनः ॥ सार्धश्लोकोक्तभगवद्याथात्म्यज्ञानवान् निवृत्तिकर्मयोगारंभविरोधिपापक्षयादकाम्ये कर्माणि प्रवर्तते ॥ इत्युक्तं ॥ किं पूर्वं सर्वेऽपि एवं ज्ञात्वा तेन प्रक्षीणपापाः कर्माकुर्वन् ॥ वद ॥

कृष्णः ॥ पूर्वैः मुमुक्षुभिरपि उक्तरीत्या मद्याथात्म्यं ज्ञात्वा तेनक्षीणप्रतिबंधकपापैः कर्म कृतं ॥ तस्मात् त्वमपि एवं ज्ञात्वा तेन प्रक्षीणप्रतिबंधकपापः पूर्वैः विवस्वन्मन्वादिभिः कृतं ॥ ततोऽपि प्राक् मयोपदिष्टं कर्मैव त्वं कुरु ॥ १५ ॥

अर्जुनः ॥ ३ 'कर्मण्येवाधिकारस्ते' इत्युक्त्वा ४ 'योगस्थः कुरु कर्माणी'त्युक्तं ॥ ५ 'तत्किं कर्मणि घोरेमां नियोजयसि केशव' ॥ इत्याक्षेपस्य ६ 'ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिना'मिति समाधानमुक्त्वा ७ 'नियतं कुरु कर्म त्व'मित्युक्तं ॥ पुनरनेकाऽऽक्षेपसमाधानपूर्वकं ८ 'तदर्थं कर्म कौन्तेय मुक्तसंगः समाचर' ॥ ९ 'तस्मादसक्तः सततं कार्यं कर्म समाचर' ॥ इत्युक्तं ॥ पुनरिदानीमुक्तं 'कुरुकर्मैव तस्मात्त्व'मिति ॥ महता तात्पर्येण नियोज्ये ॥ अतः करिष्यामि कर्मयोगं ॥ परंतु तस्य स्वरूपं न जाने ॥ तस्य स्वरूपं अज्ञात्वा कथं तत्कर्तुं शक्यं ॥ अनभ्युपगमेनैव परिजिहीर्षुः कर्मयोगं तस्य स्वरूपं कीदृशमिति नैतावदहमप्राक्षं ॥ द्वितीयादिषु श्रुतकर्मयोगवैभवः परिजिहीर्षामनुचितां मत्वा यथावदनुतिष्ठासुः स्वरूपं तस्य जिज्ञासे ॥ कर्म चलनात्मकं कर्माभावोऽकर्म लोकविरुद्धं कर्म विकर्म इति लौकिकी प्रसिद्धिः ॥ किं तान्येव वा तानि उत विजातीयानि ॥ वद ॥

१. अन्तर्णीताणिजन्तम् ॥ २. पूर्वैः पूर्वतरं प्रथमतरं कृतम् ॥ अनुष्ठानेन वचनेन च अत्यावश्यकतया स्थापितम ॥ ३. २. ४७ ४. २. ४८. ५. ३. १. ६. ३. ३. ७. ३. ८. ८. ३. ९. ९. ३. १९.

**कृष्णः ॥ किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः ॥**
**तत्ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १६ ॥**

**किमिति** ॥ कर्म किं न कर्म अकर्म किं न विरुद्धं कर्म अकर्म विकर्म किं इत्यस्मिन् विषये कवयोऽपि ज्ञानिनोऽपि मोहिताः मोहवन्तः यथार्थज्ञानरहिताः ॥ यत् ज्ञात्वा न शुभं अशुभं तस्मात् अशुभात् मोक्ष्यसे तत् कर्म अकर्मेति च च्छेदः ॥ अकर्म विकर्म च ते तुभ्यं प्र सम्यक् वक्ष्यामि ॥ १६ ॥

**कर्मादिस्वरूपं नाहमज्ञो जानामीति माव्यथिष्ठाः ॥ कर्म किं अकर्म किं कर्माभावः कः विकर्म किं इत्यत्र विद्वांसोऽपि मोहिताः सम्यक् न जानन्ति ॥ तस्मात्त्वं मा व्यथिष्ठाः ॥ यद्येवं को मे कर्मादिकं यथावदुपदेक्ष्यतीति चेत् तस्मात् कर्मादेर्दुर्विज्ञेयत्वात् तुभ्यं तत्कर्म अकर्मेति छेदः ॥ नञोऽभावो विरोधश्चार्थः ॥ अकर्म विकर्म च इत्येतत्त्रयं सर्वज्ञोऽहं सम्यक् वक्ष्यामि ॥ प्रवचनायासेन त्वां क्लेशयित्वा उपदेशग्रहणायासेनाऽऽत्मानं क्लेशयित्वा किं ज्ञातव्यमेव वा कर्मादिकमिति चेत् कर्मादित्रयज्ञानात् मोक्षप्रतिबन्धकशुभाशुभोभयनिवृत्तिर्भवति ॥ यस्मात् यत् कर्मादित्रयं ज्ञात्वा अशुभात् शुभाच्च मोक्ष्यसे ॥ अशुभात् संसारबंधात् मोक्ष्यसे इति वा ॥ तस्मात् तत्कर्मादिकं तुभ्यमहं प्रवक्ष्ये अवहितः शृणु ॥ १६ ॥**

**अर्जुनः ॥ कवयोऽप्यत्र मोहिताः अहं ते तद्वक्ष्यामीत्युक्तं ॥ किं कर्मादिषु तथा बोद्धव्योंशो वर्तते ॥ वद ॥**

**कृष्णः ॥ कर्मणोह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः ॥**
**अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः ॥ १७ ॥**

**कर्मण इति** ॥ कर्मणः विषये बोद्धुं योग्यं बोद्धव्यं अस्ति ॥ विकर्मणः विषये च बोद्धव्यं अस्ति ॥ अकर्मणः विषये च बोद्धव्यं अस्ति ॥ अतः कर्मणः अकर्मणः इति च च्छेदः ॥ अकर्मणः विकर्मणश्च गतिः ज्ञानं गहना दुःसंपादा ॥ हि प्रसिद्धं ॥ हि यस्मात् तस्मात् ते प्रवक्ष्यामीति वा ॥ १७ ॥

कर्मणः विषयेऽपि बोद्धव्यमस्ति ॥ विकर्मणश्च विषये बोद्धव्यमस्ति ॥ अकर्मणश्च विषये बोद्धव्यमस्ति ॥ अतः १कर्माकर्मविकर्मणां मार्गः दुर्विज्ञेयः ॥ ज्ञानं दुःसंपादमिति वा ॥ अतोऽहं ते प्रवक्ष्यामि ॥ २ कर्म कर्तव्यं विहितं कर्म ॥ अकर्म तत्त्यागः॥ विकर्म निषिद्धं कर्म॥ एतेषां त्रयाणां विषये बोद्धव्योंशोऽस्ति॥ तद्बोधश्च गहनः ॥ अतोऽहं वक्ष्यामि ॥ देशकालयुगाधिकारिवर्णाश्रमवयोऽवस्थादिभेदेन संकोचव्याकोचाभ्यां कर्मविधेरनेकरूपत्वात् कर्तव्यस्य कर्मणस्तत्वं सम्यक् बोद्धव्यं॥ निषिद्धस्यापि देशकालादिभेदेन बहुविधत्वात् तस्य तत्त्वमपि सम्यक् बोद्धव्यं ॥ अकर्मशब्दितस्य कर्मत्यागस्यापि काम्यकर्मत्यागः निषिद्धकर्मत्यागः सर्वकर्मत्यागः कर्ममात्रत्यागः फलमात्रत्यागः इति बहुविधत्वात् तस्यापि तत्वं सम्यक् बोद्धव्यं ॥ अतोऽहं ते वक्ष्यामि ॥

है ॥ किंच ३ कर्मणः सकाशात् अकर्म विकर्म च विविच्य बोद्धव्यं ॥ विकर्मणः सकाशात् ४ कर्म अकर्म च विविच्य बोद्धव्यं ॥ अकर्मणः सकाशात् ५ कर्म विकर्म च विविच्य बोद्धव्यं ॥ अतोऽहं वक्ष्यामि॥ इति च॥ किंच कर्मण इत्यादौ कर्म नः इत्यादिरीत्या छेदः छांदसं णत्वं ॥ कर्म नः अस्माकं सकाशाद्भवति ॥ एवं अकर्म विकर्म च अस्मत्त एव भवतीति बोद्धव्यं ॥ इति च ॥ यतः कर्मादीनां गतिर्गहना ॥ यतश्च कवयोऽपि मुह्यन्ति ॥ अतः कर्म अकर्म विकर्म च नः सका-

१. 'गहना कर्मण' इत्यत्र गहना अकर्मण इति च छेदः अत उक्तार्थलाभः ॥ २. प ॥ कर्मप्रवृत्तिनिवृत्त्युभयसाधारणं विहितमनुष्ठेयं कर्म ॥ तद्द्विविधं ॥ काम्यमकाम्यं चेति॥ तत्र काम्यं कर्म विकर्म ॥ नश्वरफलकत्वात् ॥ अकाम्यं ज्ञानकोटावनुप्रविष्टं कर्म अकर्म ॥ उक्तं चैतदभियुक्तैः ॥ 'कर्माकर्मविकर्ममर्म सुधिया बोद्धव्यमेवाऽऽदितः कर्म स्याद्विधिपूर्वकं तु मनसा सर्वेन्द्रियव्यापृति ॥ तद्द्वेधा सफलं फलेन रहितं त्वाद्यं विकर्म स्मृतं बन्धादन्यदकर्म शुद्धिकरणान्नैष्कर्म्यतामागतम्' ॥ इति ॥ सफलं काम्यं बन्धाद्धेतोः विकर्म स्मृतम् ॥ अन्यत् अकाम्यं शुद्धिकरणाद्धेतोः ज्ञानपदत्वं प्राप्तं अकर्म ॥ इति ज्ञातव्यमित्यर्थः ॥ ३. पूर्वस्मादकर्मेत्यनुवर्त्य उभयथा व्याख्येयं ॥ ४. कर्माकर्मपदे अनुवर्तनीये ॥ ५. कर्माकर्मपदे अनुवर्त्य अकर्म विकर्म इति व्याख्येयम् ॥

शादेव बोद्धव्यं ॥ नान्य एतस्य यथावद्वक्ताऽस्ति ॥ इति च ॥ बोद्धव्यपदावृत्त्या बोधस्य आवश्यकता सूच्यते ॥ १७ ॥

वि ॥ अर्जुनः ॥ ज्ञात्वा कर्म कुर्वित्युक्तं ॥ ज्ञानमिदं कर्मेदं इत्येव मया न ज्ञायते ॥ किं कार्यं अतो व्यथते मे मनः ॥ ब्रूहि त्वं ॥

कृष्णः ॥ किं कर्म ॥ किं तदंतर्गतं अकर्मशब्दितं ज्ञानमित्यत्र कवयोऽपि मोहिताः ॥ तस्मात् ते तत्कर्म १ अकारप्रश्लेषेण अकर्म च प्रवक्ष्यामि ॥ ज्ञात्वेदं द्वयं कृतकरणीयः वेदितवेदनीयश्च भूत्वा अशुभात् संसारबन्धात् मोक्ष्यसे ॥ कर्मणोऽनुष्ठेयस्य विषये बोद्धव्यमस्ति ॥ विविधं कर्म विकर्म ॥ नित्यनैमित्तिककाम्यभेदेन नानाविधे कर्मण्यपि बोद्धव्यमस्ति॥ अकर्मशब्दिते ज्ञानेऽपि बोद्धव्यमस्ति॥ विकर्मणि बोद्धव्यं च फलभेदेन कृतं वैविध्यं परित्यज्य मोक्षैकफलतया एकशास्त्रार्थताऽनुसन्धानं ॥ उक्तं हीदं मया ॥ २व्यवसायाऽऽत्मिकाबुद्धिरेकेत्यत्र ॥ अतो गतिः कर्मणो गहना ॥ अतः कर्म तत्ते प्रवक्ष्यामि ॥ मा व्यथिष्ठाः ॥ १६ ॥ १७ ॥

अर्जुनः ॥ कर्माकर्मविकर्मस्वरूपबोधनपूर्वकं कर्तव्यकर्मकरणप्रकारमुपदिश॥ अवहितोऽस्मि ॥

कृष्णः ॥ कर्मण्यकर्म यः पश्येदकर्माणि च कर्म य. ॥
स बुद्धिमान् मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ॥ १८ ॥

**कर्मणीति** ॥ यः कर्मणि न कर्म अकर्म कर्मणोऽभावः अकर्म पश्येत् जानीयात् ॥ यः अकर्मणि कर्म च पश्येत् ॥ सः मनुष्येषु बुद्धिः अस्यास्तीति बुद्धिमान् युक्तः योगवान् कृत्स्नानि च तानि च कर्माणि च कृत्स्नकर्माणि कृत्स्नकर्माणि करोतीति कृत्स्नकर्मकृत् ॥ १८ ॥

१. कुरु कर्मैव गहना कर्मण इति पूर्वोत्तरावमर्शात् कर्मणः प्राधान्यं अकर्मणस्तद्विशेषणत्वमिति सूचनात् कर्माकर्मणोरुभयोः प्रकृतत्वेऽपि कर्म प्रवक्ष्यामीत्युक्तमिति वा ॥ २. २. ४१.

कर्माणि सति कर्माभावं कर्माभावे सति कर्म च यः जानीयात् सः बुद्धिमान् ॥ एवं यः पश्येत् सः भ्रान्तः खलु स्यात् कथमुच्यते बुद्धिमानिति ॥ इति चेत् एवं, कर्मणि क्रियमाणे स्वस्य अस्वातंत्र्यात् कर्माभावं यः पश्येत् ॥ वक्ष्यते च'॥ १ 'नैव किंचित्करोमीति युक्तो मन्येत तत्ववि'दिति ॥ अस्य अशब्दवाच्यस्य विष्णोः कर्म अकर्म निष्पद्यमानं कर्म स्वस्य स्वातंत्र्याभावेन भगवत एव कर्म तेनैव क्रियमाणं कर्म इति यः पश्येत् इति वा ॥ उक्तं चैतन्मया ॥ २ 'प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ॥ अहंकारविमूढाऽऽत्मा कर्ताहमिति मन्यते' ॥ ३ 'तत्ववित्तु महाबाहो गुणकर्मविभागयोः ॥ गुणा गुणेषु वर्तन्ते इति मत्वा न सज्जते ॥' इति ॥ जीवस्यास्वातन्त्र्यात् कर्माभावे कथं कर्मनिष्पत्तिरिति चेत् भगवतेत्युक्तं भवति ॥ जीवस्य कर्माभावेऽपि ईश्वरः कर्म कुर्वन्नास्ते इति कुतोऽवसीयते इति चेत् अकर्मणि जीवकर्तृककर्मणः सर्वथाऽभावे सुषुप्तौ मूर्च्छादौ च देहेन्द्रियादिमनोबुद्धिरक्षणादिकं स्वप्ने स्वाप्नरथगजतुरगादिविविधविचित्रवस्तुरचनरूपं कर्म भगवान् करोति ॥ ४ 'संध्ये सृष्टिराह ही'ति सूत्रं ॥ ५ 'य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्ममाणः ॥' इति श्रुतिः ॥ ६ न तत्र रथा न रथयोगा न पन्थानो भवन्ति अथ रथान् रथयोगान् पथः सृजते' ॥ इति च ॥ तद्दृष्टान्तेन जाग्रदवस्थायामपि तदीयमेव कर्मेति निश्चेतव्यं ॥ इति यः पश्येत् सः मनुष्येषु मध्ये बुद्धिमान् सः मनुष्येषु युक्तः कर्मयोगवान् ॥ ईदृशानुसंधानपूर्वकमनुष्ठितमेव हि कर्म कर्मयोगः ॥ सः मनुष्येषु कर्तव्यसकलकर्मकृत् ॥ ईदृशानुसन्धानपूर्वकं किमपि कर्तव्यं कर्म कुर्वतः कथं सर्वकर्मकर्तृत्वं इति चेत् सर्वकर्मणां यत्फलं ज्ञानं मोक्षश्च तस्य फलस्य नियमेन प्रापणात् सर्वकर्मकर्तृत्वं ॥ एकस्यापि कर्मणः यथावदनुष्ठानं कृत्स्नकर्मानुष्ठानतुल्यमिति स्तुतिर्वा ॥ अतएव कर्म जीवः करस् इति सांतशब्दवाच्यकर्मविधिना मीयते विषयीक्रियते इति व्युत्पत्तिः ॥ कर्मविध्युद्देश्यत्वेन कर्म शब्दिते जीवे कर्माभावं कर्मविध्यविषयत्वेन जीवभिन्नत्वेन च अकर्मशब्दिते परमा-

१. ५. ८. २. ३. २७. ३. ३. २८. ४. ३. २. १. ५. का. ५. ८. ६. बृह. ६. ३. १.

त्मनि कर्म च यः पश्येत् स बुद्धिमान् युक्तः कृत्स्नकर्मकृत् ॥ अत एवं क्रियमाणं कर्म कर्म ॥ कर्माकरणमकर्म ॥ अनेवं क्रियमाणं काम्यं निषिद्धं च कर्म विकर्म ॥ इत्येतत्सर्वं ज्ञात्वा कर्तव्यं कर्म १ यथावत्कुरु ॥ १८ ॥

कर्मणि कृते अकर्म प्राचीनकुकर्मनाशं यः पश्येत् ॥ अकर्मणि विहितकर्माकरणे कर्म प्राचीनकुकर्मसद्भावं च यः पश्येत् स बुद्धिमानित्यादि ॥

कर्मणि क्रियमाणे तेन अकर्म ज्ञानं जायते इति यः पश्येत् अकर्मणि ज्ञाने जातेपि कर्म कर्तव्यं यः पश्येत् स बुत्धिमानित्यादि ॥ कर्मणि कर्मयोगे अकर्म न विद्यते कर्म कृतिः यस्य तदकर्म अपौरुषेयो नित्यो वेदः तत् यः पश्येत् ॥ वेदः कर्मणि प्रमाणमिति यः पश्येत् ॥ अकर्मणि वेदे च कर्मैव तात्पर्यतः प्रतिपाद्यं यः पश्येत् स बुत्धिमानित्यादि ॥ कर्मणि कर्मसु अकर्म अस्य 'अ इति ब्रह्मे'ति श्रुत्या अशब्दवाच्यस्य ब्रह्मणः कर्म ब्रह्मप्रापकं ब्रह्मोद्देश्यकं च निवृत्तिकर्म श्रेष्ठं यः पश्येत् ॥ अकर्मणि च निवृत्तिकर्मण्येव कर्म कर्मत्वं यः पश्येत् ॥ उक्तं हि मया ॥ २'योगः कर्मसु कौशल'मिति ॥ स बुद्धिमानित्यादि ॥

अ ॥ ३कर्मणि अकर्म यः पश्येत् अकर्मणि च कर्म यः पश्येत् स बुत्धिमान् ॥ कर्मण्यकर्मदर्शनं अकर्मणि कर्मदर्शनं च विपरीतदर्शनं तद्वान् भ्रान्तः खलु स्यात् ॥ तथाहि ॥ कर्मणि सति कर्माभावदर्शनं कर्माभावे सति कर्मदर्शनं च विरुद्धं ॥ भावाभावयोर्विरोधात् ॥ तथा कर्मण्यधिकरणे अकर्मदर्शनं अकर्मण्यधिकरणे कर्मदर्शनं च विरुद्धं ॥ कर्माकर्मणोरधिकरणयोः अकर्मकर्मणोरभावात् ॥ अत एवं दर्शनं भ्रान्तिः ॥ ४नावि गच्छन्त्यां तत्स्थः पुरुषः तीरस्थेषु दूरस्थेषु गमनक्रियावत्सु पुरुषेषु अगमनं पश्यति ॥ तथा तीरस्थेषु

१. द्व ॥ वि ॥ 'कर्मण्यकर्मे'त्यादिका सप्तश्लोकीयं आरुरुक्षुकर्मयोगिपरा ॥ २. २. ५०. ३. सैषा सप्तश्लोकी आरूढपरा ॥ उभयपरेतिकेचित् ॥ ४. स्वाधिष्ठिते गमनाभाववति धूमशकटे गमनं पार्श्वस्थे गमनवति शकटे गमनाभावं च पश्यन् पुरुषोऽप्यत्रदृष्टान्तः ॥

वृक्षेषु गमनक्रियाऽभाववत्सु गमनं पश्यति ॥ एवं पश्यन् भ्रान्तः किलोच्यते ॥ एवं सति 'स बुद्धिमा'नित्यादि कथमिति चेत् एवं, कर्तृत्वादिधर्मरहिते अकर्मणि निष्क्रिये आत्मनि देहादिकमध्यस्य तत्क्रियामात्मन्यारोप्य आत्मानं सक्रियं मन्यते ॥ अकर्त्रात्मविज्ञानाभावात् ॥ देहेंद्रियमनोबुद्ध्यादिगतं कर्म आत्मन्यारोप्य अहं करोमि अहं पश्यामि अहं ध्यायामि अहं निश्चिनोमीत्यादिरीत्या आत्मानं कर्मवन्तं मन्यते आत्मस्वरूपयाथात्म्यज्ञानरहितः पुरुषः ॥ इदं विपरीतदर्शनं ॥ वस्तुत आत्मनि कर्मणोऽभावात् ॥ एतदपनोदनायोच्यते 'कर्मण्यकर्म यः पश्येत् स बुद्धिमा'निति॥ यथा यदिदं रजतमिति प्रतिपन्नं तदिदानीं शुक्तिशकलं पश्य इति भ्रमसिद्धरजतरूपविषयानुवादेन तदधिष्ठानं शुक्तिमात्रमुपदिश्यते ॥ तथा भ्रमसिद्धकर्माद्यात्मकविषयानुवादेन तदधिष्ठानं कर्मादिरहितं कूटस्थं ब्रह्म मयोपदिश्यते ॥ अहंकरोमीत्यादिविधया यदात्मस्वरूपं कर्मवत्तया प्रतीयते तत् कर्मादिरहितं ब्रह्म पश्येदिति ॥ शुक्तिरजतवत् आरोपितभ्रांतिसिद्धे विहिते प्रतिषिद्धे वा कर्मणि विषये अकर्त्रात्मस्वरूपपर्यालोचनेन कर्माभावं गमनवत्तया प्रतीतेषु वृक्षेषु गमनाभावमिव यः पश्येत् सः मनुष्येषु बुद्धिमान् ॥ तथा आत्मनि देहादिकमध्यस्य तस्मिन् निर्व्यापारे सति तदीयव्यापारोपरमं आत्मन्यारोप्य किमप्यकुर्वन् निर्व्यापारस्तूष्णीं सुखमासे इत्यादिविधया आत्मानं कर्मरहितं मन्यते सदासव्यापारदेहेन्द्रियादिस्वरूपविज्ञानरहितः पुरुषः ॥ इदं विपरीतदर्शनं ॥ वस्तुतो देहेन्द्रियादिषु निर्व्यापारताया अभावात् ॥ एतदपनोदनायोच्यते ॥ 'अकर्मणि च कर्म यः पश्येत् स बुद्धिमा'निति ॥ भ्रमसिद्धकर्माभावानुवादेन कर्म, गमनाभाववत्तया प्रतीतेषु पुरुषेषु गमनमिव मयोपदिश्यते ॥ निर्व्यापारस्तूष्णीमासे इति कर्माभाववत्तया प्रतीतौ सदासव्यापारदेहेन्द्रियादिस्वरूपपर्यालोचनेन कर्मवत्तां यः पश्येत् स बुद्धिमान् ॥ तत्तदेहादिषु चलनादिक्रियाभावेऽपि अंतः कर्मनिवर्तनप्रयत्नरूपक्रियायाः तूष्णीमासे इति मानसाभिमानरूपक्रियायाश्च सत्वात् ॥ ननु कर्मवत्तया प्रतीयमानमात्मानं तद्याथात्म्यपर्यालोचनेन कर्मरहितं पश्यन् बुद्धिमानिति युक्तं ॥ अकर्मवत्तया दर्शनस्य सम्यग्ज्ञानत्वात् ॥ कर्माभाववत्तया प्रतीयमानमात्मानं कर्मवत्तया पश्यन् कथं बुद्धिमान् स्यात् ॥ कर्मवत्तया दर्शनस्य विपरीतज्ञानत्वात् ॥ इति चेत् यथा

आत्मनि भ्रमसिद्धकर्मानुवादेन कर्माभाव उपदिश्यते न तथा आत्मनि भ्रमसिद्ध-कर्माभावानुवादेन कर्मोपदिश्यते ॥ कर्मवत्तादर्शनस्य भ्रमरूपत्वात् ॥ न हि भ्रमापनोदाय भ्रमसिद्धमेकमनूद्य भ्रमसिद्धस्यान्यस्योपदेशो युक्तः ॥ किंतु देहादिषु भ्रमसिद्धाकर्मानुवादेन तेष्वेव कर्मोपदिश्यते ॥ अतः 'अकर्मणि कर्म पश्यन् बुद्धिमा'निति युक्तं ॥ अतएव कर्मेन्द्रियमात्रनियमनेन बहिः कर्मसंन्यासमभिनयन् अन्तर्मानसाग्रहादिक्रियावान् मिथ्याचार उभयभ्रष्ट उक्तो मया ॥ १'नचसंन्यसनादेव' इत्यादिना २'मिथ्याचारः स उच्यते ॥' इत्यन्तेन ॥ ननु कर्मणि अकर्मदर्शनस्य जन्मादिबन्धनिवर्तकत्वात् तत्कर्तव्यं ॥ अतः तदुपदेशो युक्तः ॥ अकर्मणि कर्मदर्शनस्य प्रयोजनाभावादकर्तव्यं तत् ॥ अतस्तदुपदेशो व्यर्थ इति चेत् यथा शुक्तौ रजतं मिथ्या ॥ मिथ्याभूतरजतापवादेन शुक्तिज्ञानमावश्यकं भ्रममूलकसुखदुःखहर्षशोकचिन्ताक्लेशादिपरिहाराय ॥ तथा अकर्मणि कर्म मिथ्या ॥ कर्मणि अकर्म मिथ्या ॥ मिथ्याभूतकर्मानुवादेन अकर्मात्मविज्ञानं मिथ्याभूताकर्मानुवादेन कर्मज्ञानं च भ्रममूलकसुखदुःखादिपरिहारायावश्यकं ॥ अत उभयोरुपदेशः ॥ कर्मण्यकर्मदर्शनस्य अकर्मणि कर्मदर्शनस्य च बन्धनिवृत्तिहेतुत्वात् ॥

किंच देहादौ निष्क्रियत्वे आरोपिते तस्य 'निष्क्रियं शांत' मिति ब्रह्मलक्षणत्वात् देहादौ परब्रह्माभिन्नात्मत्वज्ञानं स्यात् ॥ अनात्मनि देहादौ आत्मत्वज्ञानं तु बंधहेतुरिति तावदविवादम् ॥ अतः अकर्मणि कर्मदर्शनोपदेशः ॥ यद्यकर्मणि कर्मद्रष्टा स्यात् ज्ञानी तर्हि अकर्माऽप्यहं कर्मवानेव भवामि ॥ अतः अकर्मणः कर्मैव वरमिति लोकसंग्रहाय कर्मण्येव प्रवर्तेत ॥ अतः अकर्मणि कर्मदर्शनोपदेशः ॥ ननु अकर्मदर्शनं कर्मदर्शनं च नैककर्तृकं अकर्मदर्शनस्य मिथ्यात्वज्ञाननिबन्धनत्वात् ॥ कर्मदर्शनस्य सत्यत्वज्ञाननिन्धनत्वात् ॥ 'यः पश्येत्' 'यः पश्ये'दितियच्छब्दद्वयप्रयोगाच्च ॥ सति चैवं कर्मेकेन स इति तच्छब्देन परामर्श इति चेत् कर्माकर्मणोरुभयोरपि मिथ्यात्वज्ञाने तात्पर्यात् एकस्यैव विदुष उभयं संभवति ॥ यच्छब्दद्वयप्रयोगस्तु ३'यतो वा इमानि भूतानि जायन्ते ॥ येन जातानि जीवन्ति' ॥ इत्यादाविव उक्तार्थे

१. ३. ४. २. ३. ६. ३. तै. ३. १.

महातात्पर्यबोधनाय ॥ कर्मणि अकर्मदर्शी अकर्मणि च कर्मदर्शी य: स मनुष्येषु मध्ये बुद्धिमान् सः मनुष्येषु मध्ये युक्तः ज्ञानयोगी सः कृत्स्नकर्मकृत् सर्वकर्मफलानां ज्ञानफलेऽन्तर्भावात् ॥ उक्तं हि मया ॥ १'यावानर्थ उदपाने सर्वतः संप्लुतोदके ॥ तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः'॥ इति ॥ स बुद्धिमान् कुत इति चेत् भोजनादीनि सर्वाणि कर्माणि कुर्वन्नपि युक्तः समाधिस्थ एव ॥ अतः पंडित इति वा ॥ ईदृशोऽयमिति तस्येयं स्तुतिः ॥ सर्वेषां प्राणिनां यानि कर्माणि तानि सर्वाण्यनेन कृतानि भवन्ति इति वा ॥ 'यथा कृताय विजितायाधरेयाः संयंत्येवमेनं सर्वं तदभिसमेति ॥ यत्किंच प्रजाः साधु कुर्वन्ति यस्तद्वेद यत्स वेदे'ति श्रुतेः ॥ विहितं देहेन्द्रियादिगतं आत्मन्यारोप्यमाणं कर्म कर्म ॥ तदेव प्रतिषिद्धं विकर्म ॥ तूष्णीमासनमकर्म ॥ इति कर्माकर्मविकर्मणां स्वरूपं ज्ञात्वा विकर्माकर्मणी परित्यज्य कर्तृत्वाभिमानफलाभिसन्धिहानेन विहितं कर्मैव कर्तव्यमिति परमाऽऽशयः ॥

कर्मणि ज्ञानकर्मणि दृश्ये जडे जगति अकर्म ज्ञानाकर्म अवेद्यं परं ब्रह्म अनुस्यूतं यः पश्येत् तथा अकर्मणि ब्रह्मणि कर्म दृश्यं जगत् अध्यस्तं यः पश्येत् स बुद्धिमानित्यादि ॥

कर्मणि विहिते अकाम्ये कर्मणि विषये अकर्म यः पश्येत् ज्ञानहेतुत्वेनबन्धकत्वाभावादकर्मेदं इति यः पश्येत् तथा अकर्माणि दुःखबुध्या विहितकर्माकरणे विषये प्रत्यवायापादकत्वेन बन्धहेतुत्वादिदं कर्म इति यः पश्येत् स बुद्धिमान् इत्यादि ॥

कर्मणि सति अकर्म नैष्कर्म्यशब्दितं ज्ञानं यः पश्येत् तथा अकर्मणि तस्मिन् हेतुभूतं कर्म इति यः पश्येत् सः ज्ञानकर्मणोः कार्यकारणभावं पश्यन् पुरुषः बुद्धिमानित्यादि ॥

---

१. २. ४६.

कर्मणि कर्माकर्मविकर्मरूपे अकर्म तद्वैपरीत्यं यः पश्येत् कर्म तद्विपरीतं अकर्म विकर्म च भवति ॥ तथा अकर्म तद्विपरीतं कर्म विकर्म च भवति ॥ तथा विकर्म तद्विपरीतं कर्म अकर्म च भवति ॥ यथा यज्ञादिकं कर्म अश्रद्धया कृतं अकर्म भवति ॥ 'अन्यथा कृतमकृत'मिति न्यायात् ॥ वक्ष्यते च ॥ १ 'अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ॥ असदित्युच्यते पार्थ न च तत्प्रेत्य नो इहे'ति ॥ तदेव दंभेन मानेन च कृतं चेत् विकर्म च भवति ॥ 'चत्वारि कर्माण्यभयंकराणि भयं प्रयच्छंत्ययथाकृतानि ॥ मानाग्निहोत्रमुत मानमौनं मानेनाधीतमुतमानयज्ञः' ॥ इत्यभियुक्तोक्तेः ॥ तथा औदासीन्यरूपं तूष्णीमासनं अकर्मापि शक्तस्याऽऽर्तपरित्राणाभावात् विकर्म ॥ दीक्षितस्य भगवद्ध्यानाऽऽसक्तस्य च स्वकाले पंचमहायज्ञाद्यकरणं अकर्मापि कर्म ॥ 'दीक्षितो न ददाती'त्यादिवचनात् दीक्षितस्य, २ 'तस्य कार्यं न विद्यते' इति वचनात् भगवन्तं ध्यायतः ज्ञानयोगिनश्च महायज्ञाद्यकरणाभ्यनुज्ञानात् ॥ वक्ष्यते च ॥ ३ 'सर्वधर्मान् परित्यज्य मामेकं शरणं व्रजे'ति ॥ कर्मकाले प्रत्यवायहेतोरन्यस्याऽविहितस्याकरणात् ॥ प्रत्युत कर्माकरणस्य यागे योगे चोपयोगात् ॥ तथा यागीयहिंसा विकर्मापि कर्म ॥ 'अग्नीषोमीयंपशुमालभेते'ति विहितत्वात् ॥ सैव पशौ नष्टे न कर्म ॥ विध्यर्थानिष्पत्तेः ॥ नापि विकर्म ॥ कामकारेणाकृतत्वात् ॥ किंतु कृताऽप्यकृतैवेत्यकर्म ॥ एवं कर्माकर्मविकर्मसु तद्वैपरीत्यं उक्तरीत्या यः पश्येत् ॥ तथा अकर्मणि क्रियारहिते आत्मनि कर्म वियदादिप्रपंचं च आधाराधेयभावेन अधिष्ठानाध्यस्तभावेन वा यः पश्येत् ॥ सः एवं पश्यन् पुरुषः बुद्धिमानित्यादि ॥

कर्माकर्मविकर्मसु तद्वैपरीत्यदर्शी बुद्धिमान् ॥ अकर्मशब्दिते ब्रह्मणि जगतः अध्यासदर्शी युक्तः परोक्षज्ञानवान् ॥ यो बुद्धिमान् युक्तश्च सः कृत्स्नकर्मकृत् ॥ नत्वेकैकः ॥ यो बुद्धिमानप्ययुक्तः कर्म करोति सः न कृत्स्नकर्मकृत् ॥ असदेव हि तस्य सर्वं भवति ॥ ४'यो वा एतदक्षरं गार्ग्यविदित्वाऽस्मिन् लोके यजते

---

१. १७. २८. २. ३. १७. ३. १८. ६६. ४. बृह. ५. ८. १०.

ददाति तपस्तप्यतेऽपि बहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भवती'ति श्रुतिः ॥ यस्तु युक्तोऽपि अबुद्धिमान् पापं कर्म करोति स प्रत्यवायी भवति ॥ पापाश्लेषनिमित्तस्यापरोक्षज्ञानस्याभावात् ॥ आत्मानात्मस्वरूपज्ञानपुरःसरं कर्मादिस्वरूपं जानन् कर्मकुर्यात् ॥ एवंसति ज्ञानकर्मणोः समुच्चयः आपद्यत इति चेत् ॥ परोक्षज्ञानकर्मणोः समुच्चय इष्ट एव ॥ असमुच्चयवादस्तु अपरोक्षज्ञानविषयः ॥ इति वा ॥

कर्म ससाधनं यज्ञादिकं तस्मिन् अकर्म ब्रह्म पश्येत् कर्मतदंगेषु ब्रह्मदृष्टिं कुर्यात् ॥ वक्ष्यते चानुपदं ॥ १'ब्रह्मार्पणं ब्रह्म हविः ब्रह्माग्नौ ब्रह्मणा हुतं ॥ ब्रह्मैव तेन गन्तव्यं ब्रह्म कर्म समाधिना' इति ॥ उपरिष्टाच्च ॥ २'अहं क्रतुरहं यज्ञः स्वधाऽहमहमौषधं ॥ मंत्रोऽहमहमेवाऽऽज्यमहमग्निरहं हुतं' ॥ इति ॥ तथा अकर्मणि प्रत्यक्चेतने कर्म अध्यस्तं यः पश्येत् स बुद्धिमानित्यादि ॥

कर्मणि अकर्म ब्रह्म यः पश्येत् ब्रह्मदृष्ट्या कर्म कुर्यात् ॥ तथा अकर्मणि कर्माभावे कर्म यः पश्येत् न त्वकर्म ॥ यथा ब्रह्मदृष्ट्या कर्म करोति न तथा ब्रह्मदृष्ट्या अकर्म कुर्यात् ॥ सः एवं पश्यन् बुद्धिमानित्यादि ॥

कर्मणि क्रियते इति कर्म जगत् तस्मिन् अकर्म निष्क्रियं ब्रह्म यः पश्येत् ॥ प्रतीतं सर्वं प्रपंचं ब्रह्मैव यः पश्येत् ॥ यथा प्रतीतं रजतं शुक्तिमेव पश्यति तद्वत् ॥ तथा अकर्मणि ब्रह्मणि कर्म जगच्च अध्यस्तं यः पश्येत् ॥ ब्रह्मैव भ्रान्त्या द्रव्यगुणकर्मादिभेदभिन्नजगदात्मना भातं न वस्तुतो जगदस्ति ॥ यथा मरुरेव जलवत्तरंगफेनादिरूपेण भाति न वस्तुतो जलादिकमस्ति तद्वत् ॥ स बुद्धिमान् ब्रह्मज्ञानी सः युक्तः ब्रह्मनिष्ठः सः कृत्स्नानि अनेककल्पाऽऽर्जितानि अनेकजन्मार्जितानि संचितानि आगामीनि अनारब्धफलानि नानायोनिप्रापकाणि स्वयाथात्म्यविज्ञानखड्गेन कृन्तति छिनत्तीति कृत्स्नकर्मकृत् ॥ कृती छेदने इति धातुः ॥ ३'सर्वं पाप्मानं तरती'ति श्रुतिः ॥ एवं द्रष्टा मुक्तो भवति ॥ अत एवंदर्शनसिद्ध्ये कर्म यथावत्कर्तव्यमित्यलं ॥ १८ ॥

---

१. ४. २४. २. ९. १६. ३. बृह. ६. ४. २३.

वि ॥ कर्माणि अकर्मशब्दितं ज्ञानं यः पश्येत् क्रियमाणे कर्माणि आत्मयाथात्म्यज्ञानस्य विद्यमानत्वात्कर्म ज्ञानाकारं यः पश्येत् ॥ तथा अकर्माणि ज्ञाने वर्तमान एव कर्म यः पश्येत् ॥ न हि आत्मयाथात्म्यज्ञानाभावे अकाम्ये कर्मणि प्रवर्तते ॥ अतो ज्ञानं कर्मयोगान्तर्गततया कर्मकारं यः पश्येत् ॥ स एवं ज्ञानकर्मणोः अन्योन्याकारतां पश्यन् पुरुषः मनुष्येषु बुद्धिमान् कृत्स्नशास्त्रार्थवित् ॥ स युक्तः मोक्षायार्हः ॥ सः कृत्स्नकर्मकृत् ॥ कृत्स्नशास्त्रार्थानुष्ठाता ॥ इति स्तुतिः ॥ विहिते अनुष्ठेये कर्मणि बोद्धव्यं, आत्मस्वरूपयाथात्म्यानुसन्धानगर्भमिदमित्येतत् ॥ अकर्मशब्दिते ज्ञानयोगे बोद्धव्यं तु, अकाम्यकर्मयोगान्तर्गतमिदमित्येतत् ॥ एवं आत्मस्वरूपयाथात्म्यानुसन्धानगर्भं अकाम्यं कर्म ज्ञात्वा यथावत्तदनुष्ठेयं ॥ १८ ॥

द्वै ॥ अस्वातंत्र्यात् स्वस्य कर्माभावं ज्ञात्वा हरेरेवेदं कर्मेति बुद्ध्या विहितं कर्म कुर्वन् बुद्धिमानिति स्तुत्या स्वस्य अकर्तृत्वानुसंधानेन कर्म कर्तव्यमित्युक्तं भवति ॥ किमकर्तृत्वानुसन्धानमात्रेण कर्म कर्मतामश्नुते उत अन्यदप्यपेक्षते ॥ वद ॥

कृष्णः ॥ यस्य सर्वे समारंभाः कामसंकल्पवर्जिताः ॥
ज्ञानाग्निदग्धकर्माणं तमाहुः पंडितं बुधाः ॥ १९ ॥

यस्येति ॥ यस्य सर्वे सम्यक् आरभ्यन्त इत्यारंभाः कर्माणि कामश्च संकल्पश्च कामसंकल्पौ ताभ्यां वर्जिताः रहिताः कामसंकल्पवर्जिताः तं ज्ञानमेवाग्निः ज्ञानाग्निः ज्ञानाग्निना दग्धं कर्म यस्य सः ज्ञानाग्निदग्धकर्मा तं ज्ञानाग्निदग्धकर्माणं पण्डा विलक्षणा बुद्धिः अस्य संजाता पण्डितः तं बुधाः विद्वांसः आहुः वदन्ति॥१९॥

न केवलं कर्तृत्वानुसन्धानत्यागमात्रेणालं किंतु कर्मणि कामसंकल्पत्यागोऽप्यावश्यकः ॥ तथाकृतमेव कर्म कर्म ॥ अन्यदकर्म ॥ यः कर्तृत्वानुसन्धान-

फलेच्छासंकल्पादिकं परित्यज्य कर्म करोति स पंडितः ॥ यस्य सर्वाणि सम्यगारभ्यमाणत्वेन समारंभशब्दितानि विहितकर्माणि कामशब्दितफलेच्छया अनेनेदं साधयिष्यामि अनुभविष्यामि चैवमिदं मोदयिष्यामि चाऽऽत्मानमनेनेति चिन्तनरूपेण संकल्पेन च वर्जितानि ॥ तं पंडाशब्दितविलक्षणबुद्धिमन्तं विद्वांसः प्राहुः ॥ स्वस्य अस्वातंत्र्यज्ञानेन आत्मनः कर्माभावज्ञानवान् हि सः ॥ कर्मकर्तुः कर्माभाववत्वं कथमिति चेत् भगवानेव स्वतंत्रः ॥ अतस्तस्यैवेदं कर्म ॥ अहंतु सर्वथाऽस्वतंत्रः ॥ अतो न ममेदं कर्म ॥ इति यत् ज्ञानं तेन अस्य कर्माणि न सन्तीत्यभावबुद्धिविषयीकृतत्वेन दग्धप्रायाणि ॥ अतोऽयं ज्ञानाग्निदग्धकर्मा ॥ तादृशं तं बुधा वदन्ति ॥ कर्मणि क्रियमाणे यत् अस्वातंत्र्यान्न ममेदं कर्म भगवतः स्वातंत्र्यात् भगवत एवेदं कर्म इति ज्ञानं तेन दग्धं कर्म भावप्रधाननिर्देशेन कर्मत्वं यस्य विषये सः ज्ञानाग्निदग्धकर्मा तं पंडितं बुधा वदन्ति ॥ कर्तृत्वानुसन्धानफलेच्छासंकल्पत्यागपूर्वकमनुष्ठितं कर्म, न कर्म ॥ किंतु ज्ञानहेतुत्वेन ज्ञानकोटावनुप्रविष्टं ॥ उक्तरूपज्ञानेन दग्धप्राचीनपापकर्माणं तं पंडितं बुधा वदन्ति ॥ अतः कर्तृत्वाभिमानफलेच्छासंकल्पत्यागपुरःसरं कर्म कर्तव्यं ॥ उपक्रमवाचकसमारंभपदप्रयोगेण उपक्रम एव कामसंकल्पादिवर्जनमावश्यकमिति सूच्यते ॥ १९ ॥

अ ॥ कर्मणि अकर्मदर्शी अकर्माणि कर्मदर्शी च यः परमार्थदर्शी आरूढः सः कर्मणां मिथ्यात्वदर्शनात्कर्मसंन्यासी सः 'सबुद्धिमा'नित्यादिना स्तूयते ॥ किंतादृशो महिमा तस्य ॥ ब्रूहि ॥

कृष्णः ॥ परमार्थदर्शी आरूढो द्विविधः ॥ प्रारब्धकर्मशेषवान् प्रारब्धकर्मशेषरहितश्चेति ॥ तत्र प्रारब्धकर्मशेषवान् वैदिकानि कर्माणि लोकसंग्रहार्थं कुर्यात् ॥ अन्यस्तु लौकिकानि शरीरयात्रामात्रनिर्वाहकाणि प्राणत्राणमात्रोपयोगीनि चेष्टारूपाणि कर्माणि कुर्यात् ॥ उभयविधोऽपि सः तानि कर्माणि कामसंकल्परहितानि कुर्यात् ॥ स च कर्माकर्मणोरकर्मकर्मदर्शनरूपज्ञानाग्निना शुद्धबुद्धनित्यनिरपायसच्चिदानन्दाखंडैकरसाद्वितीयपरब्रह्मयाथात्म्यज्ञानाग्निना वा दग्धपूर्वोत्तरविचित्रविविधशुभाशुभकर्मा ॥ १ 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ-

१. सू. ४. १. १३.

तद्व्यपदेशा'दितिसूत्रं ॥ १'तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेत एवं हैवास्य सर्वे पाप्मानः प्रदूयन्ते ॥ इति श्रुतिः' ॥ अतएव पंडितः ॥ तं न केवलमहं पंडितं ब्रवीमि ॥ किंतु बुधा अपि तं पंडितं २प्राहुः ॥ यस्य लौकिकानि वैदिकानि वा सर्वाणि कर्माणि कामसंकल्पवर्जितानि ॥ कामाः अनेनेदं मे भूयात् इदं मे भूयात् इतीच्छाविशेषाः तैः, तद्धेतुभूताः संकल्पाः सं इति कल्पाः सम्यक्त्वबुद्धयः ॥ सम्यक्त्वबुद्ध्याखलुकामाः संपद्यन्ते ॥ वक्ष्यते च ॥ ३'संकल्पप्रभवान् कामा'निति ॥ तैश्च वर्जितानि ॥ कामः फलतृष्णा संकल्पः अहंकरोमीति कर्तृत्वाभिमानः ताभ्यां वर्जितानीति वा ॥ कामः फलं काम्यत इति काम इति व्युत्पत्तिः ॥ तद्विषयकः संकल्प तेन वर्जितानीति वा ॥ तं ज्ञानाग्निदग्धकर्माणं पंडितं बुधाः प्राहुः ॥ अतस्त्वमीदृशो भव ॥ १९. ॥

वि ॥ अर्जुन ॥ यथावदनुष्ठीयमानं कर्म ज्ञानाकारं भवतीत्युक्तं ॥ कर्मणः कर्माकारता युक्ता ॥ ज्ञानाकारता कथं युज्यते ॥ वद ॥

कृष्णः ॥ यस्य सर्वे कर्मोपक्रमाः द्रव्यार्जनादिलौकिककर्मपूर्वकनित्यनैमित्तिककाम्यरूपसर्वकर्मारंभाः कामः फलसंगः संकल्पः सं एकीभावेन कल्पः कल्पना ज्ञानं ऐक्यज्ञानं तद्वर्जनस्य आवश्यकतोक्त्या तस्य भ्रमत्वं विवक्षितमिति ज्ञायते ॥ अनात्मनि देहादौ आत्मत्वाभिमानरूपः देहात्मैक्यभ्रमः ॥ ४'व्यवसायाऽऽत्मिकाबुद्धिरेके'त्यत्रोक्तदिशा प्रकृतिवियुक्तात्मस्वरूपानुसन्धानयुक्ततया ताभ्यां रहिताः ॥ एवं कर्म कुर्वाणः सः अन्तर्गतज्ञानककर्मयोगवत्वात्पंडितः ॥ तं एवं कर्म कुर्वाणं पडितं कर्मान्तर्गताऽऽत्मयाथात्म्यज्ञानरूपाग्निना दग्धप्राचीनकर्माणं बुधाः प्रवदन्ति ॥ एवं कर्म कुर्वतः कर्मान्तर्गतज्ञानाग्निना प्राचीनानि पापकर्माणि नश्यन्ति ॥ अत उक्तरूपं कर्म ज्ञानाकारं ॥ अत उक्तं युक्तं ॥ १९. ॥

अर्जुनः ॥ कर्तृत्वानुसन्धानफलेच्छासंकल्पत्यागमात्रेण कर्म कर्मनामश्नुते उत अन्यदप्यपेक्षते ॥ ब्रूहि ॥

१. छा. ५. २४. ३. २. कर्मजन्यज्ञानरूपाग्निदग्धकर्माणं ॥ पूर्वार्धे आरुरुक्षुः॥ उत्तरार्धे आरूढः ॥ इति केचित् ॥ ३. ६. २४. ४. २. ४१.

**त्यक्त्वा कर्मफलाऽऽसंगं नित्यतृप्तो निराश्रयः ॥**
**कर्मण्यभिप्रवृत्तोऽपि नैव किंचित् करोति सः ॥ २० ॥**

**त्यक्त्वेति** ॥ नित्यं तृप्तः नित्यतृप्तः आश्रयात् निर्गतः निराश्रयः पुमान् कर्मणः फलं कर्मफलं तस्मिन् आसंगः कर्मफलासंगः तं त्यक्त्वा कर्मणि अभि सम्यक् प्रवृत्तोऽपि सः किंचिदपि नैव करोति ॥ २० ॥

**कर्तृत्वाभिमानफलेच्छासंकल्पानां त्यागेऽपि कर्मणि फले च इदं सुखसाधनमिति स्नेहः स्यात् । सोऽपित्याज्यः ॥ कर्मणि फले च आसंगशब्दितं स्नेहं त्यक्त्वा कर्म कर्तव्यं ॥ यः नित्यतृप्तः निराश्रयः तादृशभगवत्सरूपः ॥ 'अतस्मिन्प्रयुज्यमानस्तच्छब्दो विनाऽपि वतिं वत्यर्थं लभते' ॥ 'अतद्भावे सामानाधिकरण्यं सारूप्यं गमयति' ॥ इति न्यायः ॥ लक्षणया तादृशभगवत्सरूपोऽहमस्मि इति ज्ञानवान् सन् ॥ नित्ये ब्रह्मणि तृप्तः ॥ अनिराश्रयः इति छेदः ॥ निराश्रयः आश्रयहीनः स न भवतीत्यनिराश्रयः ॥ भगवदाश्रितत्वात् ॥ अः अशब्दवाच्यो भगवान् नितरां आश्रयो यस्य सः अनिराश्रयः तादृशश्च सन् ॥ कर्मफलाऽऽसंगं त्यक्त्वा कर्म करोति सः कर्मणि सम्यक् प्रवृत्तोऽपि किंचिदपि कर्म नैव करोति ॥ 'कर्मण्यकर्म यः पश्येदि'त्युक्तरीत्या अस्वातंत्र्येण कर्माभावात् ॥ 'ज्ञानाग्निदग्धकर्माण'मित्युक्तरीत्या तदीयकर्मणो ज्ञानकोटिप्रविष्टत्वाद्बन्धकत्वेन कर्मत्वाभावाच्च॥ कर्तृत्वानुसंधानफलेच्छासंकल्पकर्मफलाऽऽसंगत्यागपूर्वकं कर्म कुर्यात् ॥ २० ॥**

**अ ॥ अर्जुनः ॥ प्रारब्धकर्मशेषरहितः परमार्थदर्शी शरीरयात्रामात्रनिर्वाहाय चेष्टारूपाणि कर्माणि करोति ॥ तस्य ज्ञानाग्निदग्धकर्मता युक्ता ॥ 'पंडित' इति स्तुतिश्च युक्ता ॥ यस्तु प्रारब्धकर्मशेषवान् लोकसंग्रहाय वैदिकान्येव कर्माणि ज्ञानोदयात्प्रागिव कुर्यात् कथं तस्य तदुभयं घटते ॥ किंच उदाहृतसूत्रानुरोधेन पूर्वोत्तरकर्मसंबन्धराहित्येऽपि शरीरयात्रार्थं क्रियमाणानि लोकसंग्रहार्थं क्रियमाणानि वा कर्माणि क्व गच्छेयुः ॥ अतः कथं स उभयविधोऽपि कर्मसंन्यासी स्यात् ॥ कथं वा तस्याऽस्तु सा स्तुतिः ॥ वद ॥**

कृष्णः ॥ नित्यतृप्तः नित्येन स्वरूपानन्देन तृप्तः अतएव विषयेषु निस्पृहः निराश्रयः आश्रयत्यनेन कर्मेत्याश्रयः फलसाधनं तद्रहितः ॥ दृष्टादृष्टेष्टफलसाधनाश्रयरहितः ॥ निराश्रयः आश्रयो देहेन्द्रियादिः तद्रहितः ॥ देहेंद्रियाद्यभिमानशून्यः ॥ आश्रयत्यनेन कर्मेत्याश्रयः अहंकारः १ तद्रहितः ॥ अतः कर्मफलाऽऽसंगं त्यक्त्वा नित्यतृप्तत्वात् फलापेक्षां त्यक्त्वा निराश्रयत्वात् कर्मण्यहंकरोमीत्यभिमानं त्यक्त्वा लोकसंग्रहार्थे वैदिके कर्मणि वैदिके लौकिके वा कर्मणि सम्यक सांगोपांगं सर्वेषु कर्मसु प्रवृत्तोऽपि सः किंचिदपि नैव करोति ॥ निष्क्रियाऽऽत्मस्वरूपयाथात्म्यदर्शनवत्वात् ॥ तस्य कर्म न कर्म ॥ किंतु अकर्मतामश्नुते ॥ अत उभयोर्यदुक्तं तद्युक्तं ॥

नित्येन आनन्दैकरसेन स्वाऽऽत्मना साक्षात्कृतेन ब्रह्मणैव तृप्तः स्वरूपसुखसंपन्न अतः निराश्रय निरहंकार कर्मफलासंगं त्यक्त्वा कर्माणि फलन्ति अत्रेति वा कर्माणि फलतीति वा स्वयं कर्मणां फलत्वाद्वा कर्मफलो देहः तत्र कर्ता भोक्ता वक्ता श्रोता द्रष्टाऽहमिति तादात्म्यं त्यक्त्वा आहारादौ शरीरयात्रानिर्वाहाय प्रवृत्तोऽपि नैव किंचित्करोति सः ॥ कर्मण्यकर्मदर्शनेन उपाधिना कृतैः कर्मभिः न बध्यते ॥ अतोऽकर्मैव स भवतीति युक्तमुक्तं ॥ २० ॥

वि ॥ अर्जुनः ॥ एवं कर्म कुर्वन् पंडित इत्युक्तम् ॥ तत्कथम् ॥ कर्म कुर्वन् कर्मी स्यात् न ज्ञानी स्यात् ॥ भवतिचैवं कर्म कुर्वतः पण्डितशब्दितज्ञानित्वं कर्मणो ज्ञानत्वं च कथं युज्येत ॥ वद ॥

कृष्णः ॥ कर्मफले आसंगशब्दितामिच्छां त्यक्त्वा नित्ये स्वाऽऽत्मन्येव तृप्तः ॥ अनित्यदेहविविक्तनित्याऽऽत्मलाभसमुपजनितममन्दमानन्दमाशंसमानः आत्मविषये कांक्षावत्वेन अन्यत्र अलंबुद्धिमान् ॥ अतएव निराश्रयः आत्मव्यतिरिक्तास्थिरप्रकृतिविकारेषु दारापत्यादिषु च आश्रयणीयत्वबुद्धिरहितः एतादृशः सन् यः कर्म करोति सः कर्मणि सम्यक तदेकपरतया प्रवृत्तोऽपि नैव किंचित्कर्म करोति ॥ कर्मकरणापदेशेन पुनःपुनः तदन्तर्गतज्ञानयोगमेवाऽभ्यस्यति ॥ अतो

१. आश्रयणीयरहितः ॥ इति केचित् ॥

ज्ञान्येव सः ॥ तदीयं कर्म च ज्ञानाकारं ॥ पुनःपुनरभ्यासेन दृढीकृतज्ञानयोगगर्भत्वात् ॥ अतो यदुक्तं तद्युक्तम् ॥ २० ॥

**अर्जुनः** ॥ 'कामसंकल्पवर्जिताः' 'त्यक्त्वाकर्मफलाऽऽसंगं' इत्युक्तः कामादित्यागो दुःशकः ॥ केनोपायेन सः सुशकः स्यात् ॥ ब्रूहि तमुपायं ॥

कृष्णः ॥ **निराशीर्यतचित्ताऽऽत्मा त्यक्तसर्वपरिग्रहः ॥**
**शारीरं केवलं कर्म कुर्वन्नाऽऽप्नोति किल्बिषं ॥ २१ ॥**

**निराशीरिति** ॥ आशिषः इच्छातः निर्गतः निराशीः चित्तं च आत्मा च चित्तात्मानौ यतौ वशीकृतौ चित्तात्मानौ येन सः यतचित्तात्मा सर्वे च ते परिग्रहाश्च सर्वपरिग्रहाः त्यक्ताः सर्वपरिग्रहाः येन सः त्यक्तसर्वपरिग्रहः तादृशः सन् केवलं कामसंकल्पादिरहितं शरीरस्य इदं शारीर कर्म कुर्वन्नपि किल्बिषं पाप नाऽऽप्नोति ॥ २१ ॥

मनोबुद्धीन्द्रियाणां निग्रहेण कामसंकल्पादित्यागो भवति ॥ चित्तं बुद्धिः आत्मा मनः उपलक्षणया अन्येषामिन्द्रियाणां ग्रहणं ॥ निगृहीतमनोबुद्धीन्द्रियः त्यक्तसर्वपरिग्रहो भवति ॥ स्वकर्मफलानुभवाय परिगृह्यमाणत्वेन परिग्रहशब्दितमित्रापत्यकलत्रदेहगेहादिषु अहंममेत्यभिमानरहितो भवति ॥ तेन निराशीर्भवति ॥ आशीः कामः कामतदुपलक्षितसंकल्पादित्यागवान् भवति ॥ अनेनोपायेन कामादित्यागः सुशकः ॥ उक्तं हि मया ॥ १'इन्द्रियाणि मनो बुद्धिः अस्याधिष्ठानमुच्यते ॥ एतैर्विमोहयत्येषः ज्ञानमावृत्य देहिनं ॥ तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ ॥ पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनं' ॥ इति ॥ वक्ष्यते च ॥ २'यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः ॥ विगतेच्छाभयक्रोधः यः सदा मुक्त एव सः' ॥ इति ॥ अनेनोपायेन महता प्रयत्नेन बुद्ध्यादीनि निगृह्य कामसंकल्पादित्यागपूर्वकं कर्माणि कृतेऽपि तस्य कर्मत्वात्तेन बध्यतैवेति चेत् ॥ केवलं कामसंकल्पादि-

१. ३. ४०. ४१. २. ५. २८.

रहितं शारीरं शरीरेण क्रियमाणं विहितं कर्म कुर्वन् अपि अनिष्टत्वेन पापतुल्यत्वात् पापवाचककिल्बिषशब्दितं बंधं नाऽऽप्नोति ॥ कामादित्यागात् अभिमानत्यागाच्च ज्ञानकोटावनुप्रविष्टस्य निवृत्तिकर्मणो बन्धकत्वाभावात् ॥ अतएव कुर्वन्नपि नैव करोतीत्युक्तं ॥ उक्तं चेदं मया ॥ १'कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ॥ इन्द्रियार्थान् विमूढाऽऽत्मा मिथ्याऽऽचारः स उच्यते ॥ यस्त्विन्द्रियाणि मनसा नियम्याऽऽरभतेऽर्जुन ॥ कर्मेन्द्रियैः कर्मयोगं असक्तः स विशिष्यते' ॥ इति॥ २१ ॥

अर्जुनः ॥ यतचित्तात्मत्वमुपाय इत्युक्तं ॥ यतचित्तात्मनो लक्षणं किं ॥ तदुच्यतां तत्संपादनाय ॥

**यदृच्छालाभसंतुष्टो द्वंद्वातीतो विमत्सरः ॥**
**समस्सिद्धावसिद्धौ च कृत्वाऽपि न निबध्यते ॥ २२ ॥**

**यदृच्छेति** ॥ यदृच्छा अप्रयत्नः भगवदिच्छा वा तया लाभः यदृच्छालाभः तेन सम्यक् तुष्टः यदृच्छालाभसंतुष्टः द्वंद्वानि अतीतः द्वंद्वातीतः विगतः मत्सरः मात्सर्यं यस्मात् विमत्सरः सिद्धौ असिद्धौ च समः तादृशः यः सः कृत्वाऽपि न निबध्यते ॥ २२ ॥

यदृच्छा अप्रयत्नः भगवदिच्छा वा तया लाभः तेनैव नितरां तुष्टः अलं इति बुद्धिमान् ॥ शीतोष्णसुखदुःखलाभालाभजयापजयादिद्वंद्वैरभिभवे कथं यदृच्छालाभमात्रेण संतुष्टः स्यात् इति चेत् द्वंद्वातीतः द्वंद्वचिन्तारहितः ॥ प्रयत्नाकरणे कदाचित् किमपि नोपलभ्येत ॥ तदा मनःखेदः स्यात् ॥ येन यतचित्तात्मता हीयेत ॥ तेन कामादिभिरभिभवः स्यात् ॥ तेन च कामादिसाहित्येन कर्म बंधकमेव स्यात् ॥ इति चेत् प्राप्तौ अप्राप्तौ च समः हर्षविषादरहितः ॥ यत्नवैफल्येन नेदं मम वशे किंकरणीयं इति मनःखेदसंभवे कथं समस्स्यात् इति चेत् विमत्सरः स्वानधीनत्वप्रयुक्तमनःखेदरहितः ॥ असोढ्वा परोत्कर्षं तद्वत्

१. ३. ६. ७.

तदुपरि च मया भवितव्यमिति यदि प्रयतेत तर्हि सर्वमिदं विहन्येत इति चेत् विमत्सरः परोत्कर्षासहनरहितः ॥ एतानि यतचित्तात्मनो लक्षणानि ॥ एवंयुक्तः यः कर्म करोति स कर्म कृत्वाऽपि तेन न निबध्यते ॥ पूर्वोक्तरीत्या तस्य ज्ञान-कोटावनुप्रवेशात् ॥ दार्ढ्यार्थं 'नाऽऽप्नोतिकिल्बिषमित्युक्तस्य पुनरत्र प्रपंचनं ॥ एवमेवंभूतेन कर्म कर्तव्यं ॥ २२ ॥

अ ॥ अर्जुनः ॥ प्रारब्धकर्मशेषवान् लोकसंग्रहार्थं 'कर्मण्यभिप्रवृत्तोऽपि नैव किंचित्करोती' त्युक्तम् ॥ अस्तुनाम तस्य तत्तथा ॥ लोकसंग्रहार्थं प्रवृत्त्या परोपकारकारित्वात् ॥ यस्तु प्रारब्धकर्मशेषरहितः शरीरयात्रानिर्वाहमात्रार्थानि-चेष्टारूपाणि भिक्षाटनादीनि वा कर्माणि करोति ॥ स तैः कर्मभिः किल्बिषं प्राप्नुयादेव ॥ लोकसंग्रहादेः प्रयोजनस्याभावात् ॥ केवलं स्वार्थत्वाच्च ॥ अत-स्तस्य 'यस्य सर्वे समारंभा' इत्युक्ता स्तुतिः कथं युज्येत ॥ ब्रूहि ॥

कृष्णः ॥ निष्कामः चित्तं मनः आत्मा देहः वशीकृतमनाः वशीकृत-देहश्च यतं स्थापितं चित्तं आत्मन्येव यस्य तादृश इति वा ॥ त्यक्तसर्वभो-गोपकरणः सन् यः शरीरयात्रानिर्वाहाय चेष्टारूपाणि भिक्षाटनादीनि वा कर्माणि करोति कर्तृत्वाभिमानरहितः ॥ सः तेन केवलेन अहंकरोमीतिकर्तृत्वाभिमान-रहितेन शरीरयात्रानिर्वाहमात्रार्थेन कर्मणा किल्बिषं पापं अनिष्टत्वेन पापतुल्यं पुण्यं च तदुभयमूलकं संसारबन्धं च न प्राप्नोति ॥ अभिमानादिराहित्येन तस्य कर्मणः कर्मत्वेऽप्यकर्मत्वात् ॥ वक्ष्यते च ॥ १'नैव किंचित्करोमीति युक्तो मन्येत तत्ववित्' ॥ इति ॥ २'कुर्वन्नपि न लिप्यते' ॥ इति ॥ अत्यंत-विक्षेपहेतोरपि लोकसंग्रहार्थस्य वैदिकस्य कर्मणः सम्यग्दर्शनवशात् अभिमान-राहित्याच्च यदा न बंधकत्वं तदा शरीरयात्रामात्रार्थस्य अविक्षेपकस्य चेष्टादेः भिक्षाटनादेर्वा कर्मणः उक्तहेतोः बंधकत्वं सुतरां नास्ति ॥ ३'एतं वै तमात्मानं विदित्वा ब्राह्मणा व्युत्थायाथ भिक्षाचर्यं चरन्तीति विहितत्वाच्च ॥ एतादृशस्य

१. ५. ८. २. ५. ७. ३. बृह. ५. ५. १.

कर्मणः किल्बिषाऽऽपादकत्वाप्रसक्तेः किल्बिषं नाऽऽप्नोति इत्यप्रसक्तप्रतिषेधः ॥ इति चेत् अज्ञानेन कृतायाः निषिद्धचेष्टायाः अयोग्येभ्यो भिक्षाग्रहणादेर्वा किल्बिषाऽऽपादकत्वप्रसक्त्या उक्तहेतोः किल्बिषं नाऽऽप्नोतीति निषेधोऽयं ॥ ३ उक्तविशेषणविशिष्टो यतिः शारीरो जीवः तत्स्वरूपप्रापकं श्रवणादि कर्म शारीरं तत्केवलं तदेव कुर्वन् किल्बिषं न प्राप्नोति ॥ श्रवणादिकं विहाय अन्यत् स्तोत्रमंत्रजपादिकं कुर्वन् किल्बिषं प्राप्नोति ॥ स्मरंति हि ॥ 'यमानभीक्ष्णं सेवेत नियमान्मत्परस्त्यजेत् ॥ जिज्ञासायां संप्रवृत्तो नाऽऽद्रियेत्कर्मचोदनां ॥ संन्यस्य श्रवणं कुर्यात् नान्यत्कुर्याद्यतिः क्वचि'दिति ॥ एतत्सूचनाय 'शारीरं केवलं १ कर्म कुर्वन्नाऽऽप्नोति किल्बिष'मित्युक्तं ॥ २१ ॥

अर्जुनः ॥ शरीरयात्रामात्रार्थस्य कर्मणोऽभ्यनुज्ञानेन याचनादिना धनं संपाद्य अधिकाऽऽहारादिसेवनेऽपि प्रवर्तेरन् ॥ तथाऽपि प्रवर्तनमुचितं वा ॥ वद ॥

कृष्णः ॥ अप्रयत्नेन यो लाभः तेन अन्यत्रालंबुद्धिमान् प्रयत्नाकरणे अधिकलाभाभावेन शीतोष्णादिद्वंद्वैः पीडितः स्यात् इति चेत् द्वंद्वातीतः द्वंद्वान्यतीतः तैरपीडितः ॥ समाधिकाले तेषां स्फुरणमेव न ॥ व्युत्थानकाले स्फुरणेऽपि परमानन्दाद्वितीयाकर्त्रभोक्रात्मस्वरूपज्ञानेन बाधात् तैरुपहन्यमानस्यापि क्षोभो न ॥ परोत्कर्षासहने यदृच्छालाभसंतुष्टः द्वंद्वातीतश्च न स्यात् इति चेत् विमत्सरः परोत्कर्षासहनपूर्विका स्वोत्कर्षवांछा मत्सरः तद्रहितः ॥ अद्वितीयाऽऽत्मदर्शनेन स्वपरभेदबुद्धेर्बाधात् ॥ अप्रयत्नादप्राप्तौ मनःखेदवान् स्यात् इति चेत् समः सिद्धौ असिद्धौ च यदृच्छालाभस्य अधिकस्य वा प्राप्तौ न हृष्टः अप्राप्तौ न विषण्णः अद्वितीयब्रह्मात्मैक्यानुभवानन्देन तृप्तत्वात् ॥ एतादृशः सन यः शरीरयात्रामात्रार्थानि २कर्माणि करोति सः कृत्वाऽपि न निबध्यते न बंधं प्राप्नोति ॥ पतितेऽस्मिन् देहे विदेहमुक्तिं प्राप्नोत्येव ॥ 'नाऽऽप्नोति किल्बिष'मित्यस्यैवानुवादोऽयम् ॥ २२ ॥

१. आरुरुक्षुपक्षे द्वैतिव्याख्यानवत् ॥ २. आरुरुक्षुपक्षे विहितं कर्म आरूढपक्षे शरीरयात्रानिर्वाहार्थं कर्म ॥

इत्यत्रोक्तरीत्या शीतोष्णमृदुपरुषस्पर्शादिसहनशीलः प्रवृत्तिविघातेऽपि अनिष्टोपनिपातहेतुना मदीयेन कर्मणा एवमभूदिति निरूपणेन प्रवृत्तिविघातिष्वपि परेषु मत्सररहितः ॥ न हि आतपेन स्वप्रवृत्तिविघातके रवौ क्रोध उत्पद्यते ॥ किंतु छत्रादिभिरातपनिवारणमात्रं क्रियते ॥ तथा परेषु मात्सर्यमुत्सृज्य स्वकार्यमात्रसाधनपर ॥ १'सुखदुःखे समे कृत्वा' २'सिद्ध्यसिद्ध्योस्समो भूत्वा' इत्याद्युक्तरीत्या युद्धादिकर्मसु सुखलाभजयादिप्राप्तावप्राप्तौ च हर्षशोकराहित्येन समः एतादृशस्सन् यः कर्म करोति सः कृत्वाऽपि न निबध्यते॥ कर्मणाऽपि मुच्यते॥ अपिशब्दात् कर्मयोगानुष्ठानपूर्वकस्वतंत्रज्ञानयोगेनापि मुच्यते॥ ज्ञाननिष्ठाफलस्य आत्मावलोकनस्य ज्ञानयोगनिष्ठाव्यवधानमन्तरेण आत्मयाथात्म्यज्ञानगर्भेण यथावदनुष्ठितेन निवृत्तिकर्मणैव सिद्धिसंभवात् ज्ञानयोगाधिकारिणोऽपि ज्ञानयोगात्कर्मयोगो वरं ॥ उक्तं हि मया'॥ ३'कर्म ज्यायो ह्यकर्मणः॥' इति॥ ४'श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्' ॥ इति च ॥ अतो यथावदनुष्ठितं कर्म ज्ञानसाध्यफलसाधकत्वात् ज्ञानाकारमेव ॥ इति पूर्वोक्तायाः कर्मणो ज्ञानाकारतायाः प्रपंचनमिह कृतं वेदितव्यम् ॥ २२ ॥

द्वैं ॥ अ ॥ वि ॥ अर्जुनः ॥ मुमुक्षुभिः अकाम्यमेव कर्म कार्यं ॥ काम्यं कर्म तु सर्वथा त्याज्यं ॥ इति ५'कर्मण्येवाधिकारस्ते' इत्यादिभिरसकृदुक्तं ॥ काम्यकर्मणां सर्वथा वर्जने शरीरयात्रानिर्वाहो न स्यात् ॥ शरीररक्षणरूपफलकामनया क्रियमाणत्वेन काम्यरूपैः कर्मभिरेव शरीररक्षणस्य करणीयत्वात् ॥ काम्यकर्मभिः शरीररक्षणाकरणे कथं निवृत्तिकर्मकरणं ॥ अतः कथमिदं ॥ वद॥

कृष्णः ॥ शरीरयात्रानिर्वाहमात्राय काम्यान्यपि कर्माणि कुर्यात् ॥ निवृत्तिकर्मद्वारा ज्ञानसंपादनाय शरीररक्षणस्याऽऽवश्यकत्वात् ॥ ६'कृपणाः फलहेतवः' ॥ इत्यादौ निषिद्धस्य काम्यकर्मणः करणे तज्जन्यं पापं स्यादिति चेत निराशीः यतचित्ताऽऽत्मा त्यक्तसर्वपरिग्रहः शरीरयात्रानिर्वाहमात्रफलकं कामसंकल्पादिरहितं काम्यं कर्म कुर्वन्नपि किल्बिषं नाऽऽप्नोति ॥ २१ ॥

१. २. ३८. २. २. ४८. ३. ३. ८. ४. ३. ३५. ५. २. ४७. ६. २. ४९.

अर्जुनः ॥ शरीररक्षणार्थं काम्यकर्मकरणाभ्यनुज्ञाने यथेच्छमशनवसनादिसंपादने प्रवर्तेत ॥ तथापि प्रवर्तनमभ्यनुज्ञायते वा ॥ वद ॥

कृष्णः ॥ अप्रयत्नोपनतलाभमात्रेण संतुष्टः यथेच्छमप्रवर्तमानः द्वंद्वातीतः विमत्सरः यदृच्छालाभस्य प्राप्तावप्राप्तौ च समः सन् यः शरीररक्षणार्थं काम्यं कर्म करोति सः तत् कृत्वाऽपि तेन न निबध्यते ॥ अतः शरीररक्षणार्थं काम्यं कर्म कुर्वन् शरीरनिर्वर्त्यं केवलं अकाम्यं कर्म कुर्वन् ज्ञानद्वारा मुच्यते ॥ अतस्तादृशं कर्म कर्तव्यं ॥ २२ ॥

अर्जुनः ॥ 'कर्मण्यकर्मे'त्यादिनोक्तं पिंडीकृत्य ब्रूहि ॥

कृष्ण ॥ गतसंगस्य मुक्तस्य ज्ञानावस्थितचेतसः ॥
यज्ञायाऽऽचरतः कर्म समग्रं प्रविलीयते ॥ २३ ॥

गतेति ॥ गतः संगः यस्मात् सः गतसंगः तस्य गतसंगस्य मुक्तस्य मुक्ताभिमानस्य ज्ञाने अवस्थितं चेतः मनः यस्य सः ज्ञानावस्थितचेताः तस्य ज्ञानावस्थितचेतसः यज्ञः विष्णुः तदाराधन वा तस्मै आचरतः कर्म कुर्वतः पुंसः कर्म समग्र यथातथा प्रविलीयते नश्यति ॥ २३ ॥

संगशब्दितफलाऽऽसक्तिरहितः देहादावहंममेत्यभिमानान्मुक्तः महताऽपि प्रयत्नेन ज्ञानं संपादनीयमिति ब्रह्मज्ञान एव अभिनिविष्टचित्तः भगवत्स्वातंत्र्यादि ज्ञानविषये अचंचलचित्त इति वा सन् यः यज्ञशब्दितभगवत्प्रीत्यर्थमेव कर्म करोति तस्य सकलं तत्कर्म प्रविलीयते अविद्यमानवद्भवति ॥ बन्धकं न भवतीति यावत् ॥ एवं कर्म कुर्वाणस्य ज्ञानप्रतिबन्धकं प्राचीनं पापकर्म निश्शेषं नश्यतीति वा ॥ 'गतसंगस्ये'त्यनेन 'कामसंकल्पवर्जिताः' 'त्यक्त्वा कर्मफलाऽऽसंगं' इत्यादिनोक्तं, 'मुक्तस्ये'त्यनेन 'त्यक्तसर्वपरिग्रह' इत्येतत्, 'ज्ञानावस्थितचेतस' इत्यनेन 'कर्मण्यकर्म यः पश्येत्' 'नित्यतृप्तः' इत्यादिनोक्तं, 'समग्रं प्रविलीयते' इत्यनेन 'नैव किंचित्करोति सः' ॥ 'कुर्वन्नाऽऽप्नोतिकिल्बिषं' ॥

१ कर्मानुष्टानकाले कर्मांगानां अंगिनः कर्मणश्च कर्मकर्तुश्च ब्रह्मत्वानुसंधाने विगुणमपि कर्म सगुणं भवति ॥ ततश्च तेन कर्मणा ब्रह्मप्राप्तिरूपमोक्षो भवेदेव ॥ अतः सर्वस्य ब्रह्मत्वानुसंधानेन, क्रियमाणस्य कर्मणो विशोधनं कार्यं साद्गुण्याय ॥ कथं ब्रह्मत्वानुसंधानमिति चेत् ॥ ब्रह्मार्पणमित्यादि समस्तं व्यस्तं वा ॥ अर्प्यते अनेनेत्यर्पणं स्रुकस्रुवादिकं दर्वीपिठरादिकं वा ॥ भगवति क्रियमाणं समर्पणं वा ॥ ब्रह्म च तत् अर्पणं च ब्रह्मार्पणमिति वा अर्पणं ब्रह्म इति वा ब्रह्मत्वानुसंधानं ॥ तथा ब्रह्म च तत् हविश्च इति वा हविः ब्रह्म इति वा ॥ ब्रह्म चासौ अग्निश्च ब्रह्माग्निः तस्मिन् हुतं होमः स च ब्रह्मणा ब्रह्म ॥ विभक्तिव्यत्ययः ॥ अभेदप्रायपाठात् ॥ ब्रह्मणा ब्रह्माभिन्नेन यजमानेन हुतं होमः क्रियते इति वा ॥ तथा समाधिशब्दितध्यानयोगेन सह २ ब्रह्म च तत् कर्म च इति वा ३ कर्म ब्रह्म इति वा ॥ एवं योऽभिजानाति तेन कर्मकर्त्रा ब्रह्म गंतव्यमेव ॥ ब्रह्मैव गंतव्यं नान्यत् ॥ तेनैव ब्रह्म गंतव्यं ॥ विगुणमपि कर्म उक्तरूपब्रह्मत्वानुसंधानौषधेन विशोधितं सांगं सगुणं ४ समग्रं सत् ज्ञानद्वारा मोक्षं प्रापयेदेव ॥ अतो मा भैषीः ॥ वर्तते चायमुपायः सुकरः ॥ अतस्त्वमेवं ब्रह्मत्वमनुसंदधान कर्म कुरु ॥ चेतनाचेतनात्मकस्य सर्वस्य वस्तुनः भगवतो भिन्नत्वात् कथं सर्वस्य ब्रह्मत्वानुसंधानं युज्यत इति चेत् 'यदधीना यस्य सत्ता तत्तदित्येव भण्यते' ॥ इति, 'त्वदधीनं यतः सर्वं अतः सर्वो मतो भवान्' ॥ इति, 'त्वदधीनं यतः सर्वं अतः सर्वं भवानिति ॥ वदंति मुनयस्सर्वे न तु सर्वस्वरूपतः' ॥ इति चोक्तरीत्या सर्वस्य ब्रह्माधीनत्वानुसंधानमेव ब्रह्मत्वानुसंधानं ॥ अतो युज्यते ॥ वक्ष्यते च ॥ सर्वस्य ब्रह्मत्वं ॥ ५ 'अहं क्रतुरहं यज्ञः स्वधाऽहमहमौषधं ॥ मन्त्रोऽहमहमेवाज्यं अहमग्निरहं हुत'मिति ॥ ब्रह्मणा हुतमिति भेदनिर्देशसाहचर्यात् ब्रह्मार्पणमित्यादावपि भेद एव विवक्षितः ॥ ब्रह्मणः अर्पणं ब्रह्मणि वा अर्पणं ब्रह्मणो हविः ब्रह्मणोऽग्नौ ब्रह्माधीनेन यजमानेन कर्त्रा हुतं होमः क्रियते समाधिना

१. ब्रह्मकर्मसमाधिना इत्येकं पदं ॥ २. ब्रह्म कर्मसमाधिना इति द्वे पदे ॥ ३. ब्रह्म कर्म समाधिना इति त्रीणि पदानि ॥ किं बहुना ॥ यत्तस्य शयनाऽऽसनादिकं कर्म तदपि ब्रह्मैव ॥ ४. अतः श्राद्धादिषु साद्गुण्याय अयं श्लोकः पठ्यते ॥ ५. ९. १६.

सह १ब्रह्मणः कर्म इति सर्वं स्वस्वामिभावसंबंधेन योऽभिजानाति तेन ब्रह्म गतव्य-मेवेत्यादि ॥ इति वा ॥ समाधिना मनःसमाधानेन य एवं जानाति ॥ इति वा॥ २४ ॥

अ ॥ अर्जुनः ॥ प्रारब्धकर्मशेषवता लोकसंग्रहार्थं क्रियमाणं कर्म अबंधक-त्वादकर्मैव भवतीति 'समग्रं प्रविलीयते' इत्यनेनोक्तं ॥ क्रियमाणस्य विद्यमानस्य कर्मणः कथमकर्मत्वं वक्तु शक्यं ॥ ब्रूहि ॥

कृष्णः ॥ सम्यग्दर्शनवता ब्रह्मविदा आरूढेन लोकसंग्रहार्थं क्रियमाणं कर्म अकर्मैव भवति ॥ अतस्तेन ब्रह्मैव गंतव्यं नतु बंधकेन तेन कर्मणा फलांतरं ॥ कर्मणोऽकर्मत्वं केन कारणेनेति चेत् सर्वं कर्म शब्दसमर्पितदेवताविशेषसंप्रदा-नादिकारकबुद्धिमत् कर्त्रभिमानफलाभिसंधिमच्च दृष्टं ॥ केनचित्कर्त्रा केनचि-त्करणेन कस्मिंश्चिदधिकरणे कस्यैचन देवतायै केनचिन्मंत्रेण किंचित्फलमुद्दिश्य किमपि कर्म अहंकरोमीत्यभिमानेन फलापेक्षया च क्रियते ॥ तत्किल कर्मेत्यु-च्यते ॥ ब्रह्मविदा सम्यग्दर्शनवता क्रियमाणं कर्म तु क्रियाकारकादिरहितं कर्त्र-भिमानफलाभिसंधिरहितं च ॥ तेषां सर्वत्र ब्रह्मबुद्ध्या उपमर्दात् ॥ यथा शुक्ति-ज्ञानवान् यत् रजतं तत् शुक्तिरेवेति पश्यति तथा ब्रह्मज्ञानवान् यत् अर्पणादि तत्सर्वं ब्रह्मैवेति पश्यति ॥ तत्र शुक्तिज्ञानेन रजतज्ञानस्य बाधाद्यथा रजतस्या-भाव फलितः ॥ तथाऽत्र ब्रह्मज्ञानेन कल्पितप्रपंचज्ञानस्य बाधात् अर्पणादीनाम-भावः फलितः ॥ कारकादिरहित कर्म लोकदृष्ट्या कर्मतया भासमानमपि विद्व-द्दृष्ट्या अकर्मैव भवति ॥ अत उक्तं 'समग्रं प्रविलीयते' इति ॥ अर्प्यते अनेनेति अर्पणं स्रुक्स्रुवादि दर्वीपिठरादि मंत्रादि च ॥ अर्प्यते अस्मै इति अर्पणं देवतादि ॥ अर्प्यते अस्मिन्निति अर्पणं देशकालादि तत्सर्वं ब्रह्मैव ॥ हविः चरुपुरोडाशपयोदध्याज्यादिकं ब्रह्मैव ॥ ब्रह्मरूपे अग्नौ ब्रह्मरूपेण कर्त्रा हुतं होमा-ख्या क्रिया या सा ब्रह्मैव ॥ हुतं तर्पितं देवब्राह्मणादि ब्रह्मैव ॥ अग्निरपि ब्रह्मैव ॥ कर्ताऽपि ब्रह्मैव ॥ क्रियाऽपि ब्रह्मैव तेन तर्पितं देवब्राह्मणादिकमपि ब्रह्मैव ॥ तेन गंतव्यं प्राप्तव्यं फलं यत् तदपि ब्रह्मैव ॥ 'ब्रह्मैव तेन गंतव्य'मि त्यस्याऽऽवृत्तिः ॥ ब्रह्मैवेत्युभयत्र संबध्यते ॥ एवकारः सर्वत्र संबध्यते ॥ अर्पण-शब्देन फलाविवक्षायामिदं ॥ तेन फलविवक्षायां तु नाऽऽवृत्त्यपेक्षा ॥ 'ब्रह्म-

१. द्वे पदे ॥

कर्मसमाधिना' इत्यस्य एकपदत्वे, हुतं यत् तत् ब्रह्मैवेति बोधनाय ब्रह्मैवेत्यस्य केवलमावृत्तिः॥ 'ब्रह्मकर्मसमाधिना' इत्यस्य द्विपदत्वे साऽपि न ॥ हुतं ब्रह्मैव तेन गंतव्यं ब्रह्म कर्मसमाधिना इत्येव पूर्तेः॥ आद्ये ब्रह्मैव कर्म ब्रह्मकर्म तस्मिन् समाधिः सम्यग्ज्ञानं यस्य तेन ब्रह्मणः कर्म कार्यं ब्रह्मविषयं कार्यं सर्वस्य ब्रह्मत्वानुसंधानरूपं तस्मिन् समाधिः चित्तस्य स्थापनं यस्य वा तेन ॥ द्वितीये कर्मणि उक्तरीत्या समाधिः ब्रह्मज्ञानं यस्य तेन तेन कर्मकर्त्रा गंतव्यं ब्रह्मैव ॥ उक्तरीत्या सर्वस्य ब्रह्मत्वानुसंधानाद्ब्रह्मविदः कर्म १ अकर्मैव भवति ॥ इदमेवोक्तं॥ 'कर्मण्यकर्म यः पश्येत्' 'कर्मण्यभिप्रवृत्तोऽपि नैव किंचित्करोति सः'॥ २ 'गुणा गुणेषु वर्तंते इति मत्वा न सज्जते'॥ इति॥ वक्ष्यते च॥ ३ 'नैव किंचित्करोमीति युक्तो मन्येत तत्ववि'दित्यादि॥ ब्रह्माग्नौ ब्रह्मणा हुतमित्यत्र कथं ब्रह्मत्वविधिरिति चेत् ब्रह्म अग्नौ इति द्वे पदे ॥ यस्मिन्नग्नौ हुतं होमः क्रियते सोऽग्निर्ब्रह्मैव॥ हुतं यत्तद्ब्रह्मणैव ॥ येन हुतं स यजमानोऽध्वर्युश्च ब्रह्मैवेति यावत्॥ इति ब्रह्मत्वविधिः॥ एवं लोकसंग्रहार्थं कर्म कुर्वता ब्रह्मविदाऽपि ब्रह्मैव गंतव्यं ॥ किंपुनः प्रारब्धकर्मशेषरहितेन अतएव निवृत्तसर्वकर्मणा कर्मसंन्यासिना ब्रह्मविदा ब्रह्मैव गंतव्यमिति॥ आद्यस्य कर्मसद्भावात् तेन कर्मयज्ञेन भगवानाराध्यते ॥ द्वितीयस्य तदभावात् केन यज्ञेन भगवानाराध्यते इति चेत् ज्ञानमेव तस्य यज्ञः तेन भगवानाराध्यते॥ श्रेयान् हि ज्ञानयज्ञः सर्वेभ्यः कर्मयज्ञेभ्यः॥ वक्ष्यते च॥ ४'श्रेयान् द्रव्यमयाद्यज्ञात् ज्ञानयज्ञः परंतप'॥ इति॥ ज्ञानस्य यज्ञत्वे तत्र अधियज्ञे प्रसिद्धानि अर्पणादीनि वाच्यानि इति चेत् परमार्थदर्शिनो ज्ञानरूपे यज्ञे ब्रह्मैव अधियज्ञे प्रसिद्धं अर्पणादिकं सर्वं संपद्यते॥ केनात्र ज्ञानस्य यज्ञत्वं विवक्षितं ज्ञायते इति चेत् अर्पणादीनां विशिष्य ब्रह्मत्वाभिधानेन ॥ अन्यथा सर्वस्यब्रह्मत्वादर्पणादीनां विशिष्य ब्रह्मत्वाभिधानमनर्थकं स्यात् ॥ तदेवं कर्म कुर्वतः त्यक्तकर्मणश्च ब्रह्मविदः ब्रह्मप्राप्तिरप्रतिहता ॥ आद्य य कर्म सदपि अकर्मतामापद्यते॥ द्वितीयस्य तु कर्मैव नास्ति॥ किंतु ज्ञानमेव यज्ञः संपद्यते ॥ अहो महिमा सम्यग्दर्शनवतो ब्रह्मविदः॥

१. यस्मात् समाधिजेनात्मसाक्षात्कारेण अर्पणादिकं फलं कर्म च इत्येतत् सर्वं ब्रह्म तस्मात् स्तय कर्म प्रविलीयते इति पूर्वेणान्वयः॥ इति केचित्॥ २. ३. २८. ३. ५. ८. ४. ४. ३३.

आरुरुक्षुपक्षे, एवं १ 'कर्मणि' ब्रह्मत्वानुसंधानपूर्वकं कर्म कुर्वता ब्रह्मैव गंतव्यं ॥ अतएवमनुसंदधता कर्म कर्तव्यं ॥ एवमनुसंधाने विगुणमपि कर्म सगुणं समग्रमेव भवति ॥ तच्च कर्म अबन्धकत्वादकर्मैव ॥ इदमेवोक्तं ॥ 'नैव किंचित्करोति सः' ॥ 'समग्रं प्रविलीयते' ॥ इत्यादि ॥ अतस्त्वमेवमनुसंदधानः कर्म कुरु ॥ २४ ॥

वि ॥ अर्जुनः ॥ 'कर्मण्यकर्मे'त्यादिना प्रकृतिवियुक्तशुद्धात्मस्वरूपानुसंधानयुक्ततया कर्मणो ज्ञानाकारत्वमुक्तं ॥ तेन च कर्मणा ज्ञाननिष्ठाव्यवधानमंतरा साक्षादात्मावलोकनसिद्धिश्चोक्ता ॥ 'कामसंकल्पवर्जिता' इत्यादिभिरुक्तांगकलापे कस्यापि लोपे ज्ञानाकारता न संपद्येत ॥ ततश्च तेन साक्षादात्मावलोकनसिद्धिश्च न जायेत ॥ का गतिः ॥ वद ॥

कृष्णः ॥ कर्मणः तत्परिकरस्य च परब्रह्मशब्दितपरमपुरुषात्मकत्वानुसंधाने तन्महिम्ना विगुणमपि सगुणं ज्ञानाकारमेव भवति ॥ ततश्च तेन साक्षादात्मावलोकनसिद्धिरपि संपद्यते ॥ कथं ब्रह्मत्वानुसंधानमिति चेत् ब्रह्मात्मकत्वाद्ब्रह्मेत्युच्यते ॥ ब्रह्मात्मकत्वं नाम ब्रह्मांतर्यामिकत्वं ब्रह्मशरीरत्वमिति यावत् ॥ ब्रह्मस्वरूपत्वं ब्रह्मणः कारणत्वात् कार्यकारणयोरभेदोपचारात् ॥ ब्रह्मकार्यत्वमिति यावत् ॥ इति वा ॥ 'ब्रह्मार्पण'मित्येकं पदं ॥ बहुव्रीहिस्समासः ॥ ब्रह्मकार्यत्वात् ब्रह्मात्मकं अर्पणं अर्पणसाधनं स्रुक्स्रुवादिकं यस्य तादृशं हविः आज्यादिकं ब्रह्मैव ॥ ब्रह्मात्मकमेव सत् ब्रह्मात्मके अग्नौ ब्रह्मात्मकेन यजमानेन हुतं भवति ॥ ब्रह्म अर्पणं इति छेदे वाक्यभेदः स्यात् ॥ अतः एकपदत्वेन हविषो विशेषणं कृतं ॥ इति ब्रह्मकर्मसमाधिना ब्रह्म इति कर्म यः समाधत्ते अनुसंधत्ते इति वा ब्रह्मात्मके कर्मणि समाधिः अनुसंधानं यस्य इति वा ब्रह्मकर्मसमाधिः तेन कर्मकर्त्रा प्राप्तव्यं ब्रह्मैव ॥ नतु ज्ञानं ज्ञाननिष्ठाव्यवधानमंतरा साक्षादात्मावलोकनं सिध्यतीति यावत् ॥ यत्किंचिदंगवैकल्येऽपि उक्तरूपब्रह्मत्वानुसंधानशालिगमेव सत् कर्म साक्षादात्मावलोकसाधनं भवतीति स्थितं ॥ २४ ॥

१. ब्रह्मात्मके कर्मणि समाधिः यस्य तेन ॥ ब्रह्मण्यर्पितं कर्म ब्रह्मकर्म तस्मिन् समाधिर्यस्य तेन ॥ समाधिः चित्तैकाग्र्यम् ॥

अर्जुनः ॥ १ 'कर्मण्येवाधिकारस्ते' इत्यादिना एतावता प्रबंधेन कर्मयोगोऽभिहितः ॥ तत्र सर्वेषामेकमेव कर्म उत तत्र अवांतरभेदाः संति ॥ अद्ये न सर्वेषामेकमेव कर्म संभवति ॥ वर्णाश्रमभेदेन कर्मभेदावश्यंभावात् ॥ देशकालव्यक्तिभेदमूलकादसौकर्याच्च ॥ द्वितीये के ते भेदाः ॥ कति ॥ ब्रूहि ॥

कृष्णः ॥ दैवमेवापरे यज्ञं योगिनः पर्युपासते ॥
ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ॥ २९ ॥

दैवमिति ॥ अपरे योगं एषामस्तीति योगिनः दैवमेव यज्ञं पर्युपासते ॥ अपरे ब्रह्मैव अग्निः ब्रह्माग्निः तस्मिन् ब्रह्माग्नौ यज्ञं यज्ञेनैव उपजुह्वति ॥ २९ ॥

कर्मयोगभेदान् ब्रवीमि ॥ शृणु ॥ ज्ञानयोगिनां यतीनां भगवदुपासनमेव यज्ञः अपरे ज्ञानयोगिनो यतयः दैवशब्दितं भगवंतमेव यज्ञं यथातथा उपासते ॥ उपासनमेव यज्ञः ॥ भगवंतं यज्ञं उपासते ॥ यज्ञतयोपासते ॥ २ 'यज्ञो वै विष्णु'रिति श्रुतिः ॥ तथोपासनमेव यज्ञः ॥ कर्मयोगिनां वानप्रस्थगृहस्थानां अग्नौ अग्निहोत्रादिषु हविषः प्रक्षेपो यज्ञः ॥ अपरे कर्मयोगिनः वनस्थाः गृहस्थाश्च ॥ 'ब्रह्मार्पणं ब्रह्म हवि'रित्याद्युक्तरीत्या ब्रह्माधीनेऽग्नौ यज्ञशब्दितभगवत्प्रेरणया अग्निहोत्रादिरूपं यज्ञमेव कुर्वंति ॥ कृतस्य कर्मणः ब्रह्मणि समर्पणं वा यज्ञः ॥ ब्रह्मण्येवाग्नौ यज्ञेन पंचमहायज्ञादिना कर्मणा यज्ञशब्दितं भगवंतं प्रति जुह्वति ॥ यथा दध्नाजुहोतीत्यत्र अग्नौ दध्नः समर्पणं होमः ॥ तथाऽत्र तृतीयांतयज्ञशब्दितपंचमहायज्ञादिकर्मणो भगवति समर्पणं होमः ॥ अत्र पूर्वार्धं ज्ञानयोगिविषयं ॥ उत्तरार्धं कर्मयोगिविषयं ॥ २९ ॥

अ ॥ पूर्वार्धं कर्मयोगिविषयं ॥ उत्तरार्धं तु ज्ञानयोगिविषयं ॥ अपरे कर्मयोगिनः देवानां इमं दैवं इंद्रादिदेवतोद्देश्यकमेव ॥ इंद्रादिषु ब्रह्मबुद्धिरहितं यज्ञं दर्शपौर्णमास्यादिकं सम्यगुपासते ॥ न तु ज्ञानयज्ञं ॥ अपरे ज्ञानयोगिनः ब्रह्मण्येवाग्नौ यज्ञं पामरैरहंभोक्तेति विषयोपभोगैराराध्यमानत्वाद्यज्ञं आत्मा

१. २. ४७. २. तै. ब्रा. ३ १. ६ ७

आत्मानं सोपाधिकं आहुतिरूपं यज्ञेन निरुपाधिकपरमात्मत्वेनैव उपजुह्वति ॥ जीवब्रह्माभेददर्शनमेव तेषां यज्ञ ॥ यथा आहुतेः प्रक्षेपे तदनंतरमाहुतिः स्वरूपेण न दृश्यते ॥ तथा ब्रह्मैवाहमिति ब्रह्माभेददर्शने आत्मा भेदेन न दृश्यते ॥ अयं ज्ञानयज्ञः ॥ यज्ञं यज्ञादिसर्वकर्माणि यज्ञेन 'ब्रह्मार्पणं ब्रह्म हवि'रित्युक्तलक्षणेन ज्ञानयज्ञेन ब्रह्मण्येवाग्नौ उपजुह्वति ॥ प्रविलापयंति ॥ इति वा ॥ यज्ञं सोपाधिकं जीवं यज्ञेन 'यज्ञो वै विष्णु'रिति श्रवणात्सोपाधिकेनेश्वरेण सह ब्रह्मण्येवाग्नौ उपजुह्वति ॥ सोपाधिकौ जीवेश्वरौ तत्तदुपाधिमपोह्य उभयोरधिष्ठानभूतेन तुरीयेण निर्विशेषब्रह्मणा अभिन्नौ पश्यंति ॥ यथा तरंगबुद्बुदौ तन्नामरूपापोहेन तदाधारभूतसमुद्राभिन्नौ पश्यंति तद्वत् ॥ नायं ज्ञानयज्ञः कर्मयज्ञादियज्ञेष्वन्यतमः ॥ तथापि 'श्रेयान् द्रव्यमयाद्यज्ञात् ज्ञानयज्ञः परंतपे'ति उत्कृष्टत्वेन स्तोतुं उत्कर्षावधिभूतेतरसाधनयज्ञमध्ये पठ्यते ॥ यथा कश्चित् ब्राह्मणः ब्रह्मवित्वेन स्तोतुं उत्कर्षावधिभूतेषु ब्राह्मणेषु ब्राह्मणत्वेन पठ्यते तद्वत् ॥ २५ ॥

वि ॥ पूर्वार्धमुत्तरार्धं चेत्युभयं कर्मयोगिविषयं ॥ अपरे कर्मयोगिनः केचित् देवतोद्देश्यकं देवार्चनरूपं यज्ञं सम्यगुपासते ॥ केचित् तत्तद्देवताविग्रहाराधनरूपं यज्ञमनुतिष्ठंति ॥ सर्वेषां यज्ञभेदानां देवतोद्देश्यकत्वेन देवसंबंधित्वाद्दैवत्वसंभवेऽपि विग्रहसपर्यारूपार्चनस्य विवक्षणादितरेभ्योऽस्यव्यावृत्तिः ॥ कर्मयोगिनां देवतार्चनं नित्यकर्मतया स्मर्यते ॥ तथाच मनुः ॥ 'देवताभ्यर्चनं चैव समिदाधानमेव च' ॥ इति ॥ सतिचैवं केषांचित्कर्मयोगिनां देवतार्चनरूपो यज्ञ इति कथमुच्यते इति चेत् दैवमेव यज्ञमुपासते तत्रैव निष्ठां कुर्वन्ति ॥ नान्यत्र ॥ इति विवक्षणात् कर्मयोगिषु केषांचिदयं केषांचिदन्य इति विकल्पो युज्यते ॥ अपरे केचित्कर्मयोगिनः 'ब्रह्मार्पण'मित्युक्तन्यायेन ब्रह्माख्ये अग्नौ यज्ञं चरुपुरोडाशादिकं हविरेव यज्ञेन स्रुक्स्रुवादिना साधनेन उपजुह्वति ॥ अग्नौ हविःप्रक्षेपरूपयज्ञ एव निष्ठां कुर्वंति ॥ इति विवक्षणात् अयं यज्ञः केषांचिदिति विकल्पो युज्यते ॥ २५ ॥

१. त्वंपदार्थभेदेनैव ॥

**कृष्णः ॥ श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति ॥**
**शब्दादीन् विषयानन्ये इंद्रियाग्निषु जुह्वति ॥ २६ ॥**

**श्रोत्रादीनीति ॥** अन्ये श्रोत्र आदिः येषां तानि श्रोत्रादीनि इन्द्रियाणि संयमाः इन्द्रियनिग्रहा एव अग्नयः संयमाग्नयः तेषु संयमाग्निषु जुह्वति ॥ अन्ये इन्द्रियाण्येव अग्नयः इन्द्रियाग्नयः तेषु इन्द्रियाग्निषु शब्दः आदिः येषां ते शब्दादयः तान् शब्दादीन् विषयान् जुह्वति ॥ २६ ॥

**अपरे नैष्ठिकब्रह्मचारिणः श्रोत्रचक्षुस्त्वक्जिह्वाघ्राणाख्यानि इंद्रियाणि तत्तदिंद्रियनियमनरूपाग्निषु जुह्वति ॥ इंद्रियस्य संयमो नाम विषयेभ्यः प्रत्याहृत्य स्वस्थाने स्थापनं ॥ भगवत्पूजात्मकयज्ञभावनया इंद्रियनियमनं कुर्वंति ॥ भगवदाज्ञारूपविध्यनुसारेण स्वस्वकर्तव्यकर्मकरणं भगवदाराधनं भवति ॥ अपरे गृहस्थाः श्रोत्रादींद्रियरूपाग्निषु अनिषिद्धान् शब्दादीन् विषयान् जुह्वति ॥ विषयोपभोगकालेऽप्यनासक्ताः अग्नित्वेन भावितेषु इंद्रियेषु हविष्ट्वेन भावितान् विषयान् प्रक्षिपंति ॥ इंद्रियाण्यग्नित्वेन विषयान् हविष्ट्वेन च ध्यात्वा भगवदाराधनत्वबुध्या अनिषिद्धविषयभोगं कुर्वन्ति ॥**

**अ ॥ केचित् ॥ समाधिर्द्विविधः ॥ संप्रज्ञातसमाधि असंप्रज्ञातसमाधिश्चेति ॥ तत्र संप्रज्ञातसमाधियोगनिष्ठाः श्रोत्रादीनि इंद्रियाणि संयमाग्निषु जुह्वति ॥ तस्मात् समाधियोगात् व्युत्थिताः श्रोत्रादिषु इंद्रियेषु अग्निषु विषयान् जुह्वति ॥ श्रोत्रादिभिरविरुद्धविषयग्रहणं कुर्वन्ति ॥**

**वि ॥ अपरे योगिनः इंद्रियाणि संयमाग्निषु जुह्वति ॥ इंद्रियसंयमनं कुर्वन्ति ॥ इंद्रियाणां संयमो नाम निर्व्यापारीकरणं ॥ विषयसंनिधानेऽपि दर्शनादिव्यापाररहित्येनावस्थापनं ॥ अयं इंद्रियनियमनाख्यो यज्ञः ॥ अन्ये विषयसंनिधाने इंद्रियाणि निर्व्यापारतया नावतिष्ठेरन् इति बिभ्यतः इंद्रियाग्निषु शब्दादीन् विषयान् जुह्वति ॥ विषयनियमनं कुर्वन्ति ॥ विषयाणां नियमनं नाम दूरीकरणं ॥ तत्संनिधिपरिहारः ॥ अयं विषयनियमनाख्यो यज्ञः ॥ यस्य**

**हविषो होमः तस्य तेन होमेन विनाशो भवति ॥ तद्वदत्र इंद्रियविषयविनाशो विवक्षणीयः ॥ तस्य चासंभवात् इंद्रियसंबंधनाशः विषयसंबंधनाशश्च विवक्षितः ॥ पूर्वार्धे विषयसंनिधिपरिहारः ॥ उत्तरार्धे संनिहितानामपि विषयाणां अकिंचित्करत्वादिंद्रियाणां निर्व्यापारतयाऽवस्थानं च उच्यत इति वा विभागः ॥ २६ ॥**

**कृष्णः ॥ सर्वाणींद्रियकर्माणि प्राणकर्माणि चापरे ॥**
**आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥ २७ ॥**

**सर्वाणीति** ॥ अपरे सर्वाणि इन्द्रियाणां कर्माणि इन्द्रियकर्माणि प्राणानां वायूनां कर्माणि प्राणकर्माणि च ज्ञानेन दीपितः ज्ञानदीपितः तस्मिन् ज्ञानदीपिते आत्मनः मनसः संयमः निग्रहः स एव योगः उपायः आत्मसंयमयोगः स एव अग्निः तस्मिन् आत्मसंयमयोगाग्नौ जुह्वति ॥ २७ ॥

**अपरे ध्यानयोगनिष्ठाः सर्वाणि ज्ञानेंद्रियाणां १चक्षुःश्रोत्रत्वकजिह्वाघ्राणानां कर्माणि दर्शनश्रवणस्पर्शग्रहणरसग्रहणगंधग्रहणानि कर्मेंद्रियाणां वाक्पाणिपादपायूपस्थानां कर्माणि वचनादानगमनविसर्जनानंदनानि ॥ मनोबुध्योः कर्माणि संकल्पाध्यवसायरूपाणि ॥ तथा प्राणानां मुख्यवायूनां २प्राणापानव्यानोदानसमानानां कर्माणि क्रमेण बहिर्गमनं अधोगमनं आकुंचनप्रसारणादि ऊर्ध्वगमनं अशितपीतसमनयनं इत्येतानि ॥ उपवायूनां नागकूर्मकृकरदेवदत्तधनंजयानां कर्माणि क्रमेण उद्गारोन्मीलनक्षुतजृंभणव्यापनानि च ध्येयवस्तुविषयकसम्यक्ज्ञानेन प्रज्वलिते आत्मनः मनसः संयमः सम्यक्नियमनं ध्याने एका-**

१. श्रोत्रादीना पूर्वमुक्तया कर्मेन्द्रियमात्रपरोऽयं श्लोक इति केचित् । २. अत्र 'प्राणोऽपानः समानश्चोदानव्यानौ च वायवः ॥ हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः ॥ उदानः कंठदेशस्थः व्यानः सर्वशरीरगः ॥ नागश्च कूर्मः कृकरो देवदत्तो धनंजयः ॥ उद्गारे नाग आख्यातः कूर्म उन्मीलने स्मृतः ॥ कृकराच्च क्षुतं ज्ञेयं देवदत्ताद्विजृंभणम् ॥ न जहाति मृतं वाऽपि सर्वव्यापी धनंजयः ॥' इत्यादिकमनुसंधेयम् ॥

प्रता एव योग उपाय तद्रूपे अग्नौ मनःसंयमरूपो योगः ध्यानयोगः तद्रूपे अग्नौ इति वा ॥ मनःसंयमस्य योगः प्राप्ति तद्रूपे अग्नौ इति वा ॥ संयम एव योगः आत्मविषयकः आत्मनि संयमयोगः मनोनिरोधरूपः समाधियोगः तद्रूपोग्निः तस्मिन् इति वा जुह्वति ॥ ध्येयं वस्तु सम्यक् ज्ञात्वा तस्मिन् मनः संयम्य सर्वाणि प्राणेंद्रियकर्माण्युपरमय्य ध्यानयोगसुखमनुभवंति ॥ 'यथायथा सदाभ्यासात् मनसः स्थिरता भवेत् ॥ वायुवाक्कायदृष्टीनां स्थिरता च तथा-तथा' ॥ इति हि स्मरंति ॥ अयं मनोनियमनाख्यो यज्ञः ॥ [१]'इंद्रियेभ्यः परा ह्यर्थाः अर्थेभ्यश्च परं मनः' ॥ इति श्रुत्यनुसारेण त्रयाणामेषां यज्ञानां क्रमो ज्ञेयः ॥

अ ॥ केचित् ॥ अपरे असंप्रज्ञातसमाधियोगनिष्ठाः सर्वाणि इंद्रियकर्माणि प्राणकर्माणि च ज्ञानं तत्वमस्यादिवेदान्तवाक्यजन्यः ब्रह्मात्मैक्यसाक्षात्कारः तेन उज्वलिते आत्मनि विषये संयमः संप्रज्ञातसमाधिः तस्मिन् सति जातः योगः असंप्रज्ञातसमाधियोगः तद्रूपे अग्नौ जुह्वति ॥ सर्वाणि आत्मसंयमयोगाग्नौ ज्ञानदीपिते इत्युक्त्या पूर्वोक्ता द्वैशेषो ज्ञातव्य ॥ २७ ॥

कृष्णः ॥ द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथापरे ॥
स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः ॥ २८ ॥

द्रव्येति ॥ अपरे द्रव्यस्य यज्ञाः याजकाः द्रव्य द्रव्येण वा यज्ञः येषां ते इति वा द्रव्ययज्ञाः ॥ अपरे तप एव यज्ञः येषां ते तपोयज्ञाः ॥ तथा अपरे योग एव यज्ञः येषां ते योगयज्ञाः ॥ अपरे स्वाध्यायः वेदः स्वाध्यायश्च ज्ञानं च स्वाध्यायज्ञाने ते एव यज्ञौ येषां ते स्वाध्यायज्ञानयज्ञाश्च एते सर्वे यतयः यत्नशीलाः सं सम्यक् शितं तीक्ष्णं व्रतं संकल्पः येषां ते संशितव्रताः ॥ २८ ॥

अपरे योगिनः द्रव्यस्य घृतादेः यजंतीति यज्ञाः याजकाः तपः कृच्छ्चान्द्रायणादिकं तस्य याजकाः योगः ध्यानं तस्य याजकाः स्वाध्यायः ऋगादिवेद-

१. का. ३. १०.

पाठः ज्ञानं वेदान्तज्ञानं तत्साधनं श्रवणादिकं वा तयोर्याजकाः स्वाध्याययज्ञाः ज्ञानयज्ञाश्च ब्रह्मरूपेऽग्नौ द्रव्यतपआदिकं जुहोमि अर्पयामीति ब्रह्मार्पणं कुर्वतः ॥ अर्पणबुद्धिरेव होमः ॥ न प्रयत्नमंतरेणेमे यज्ञाः साध्याः यतयः प्रयत्नशीलाः 'यती प्रयत्ने' इति धातुः ॥ जितेंद्रिया वा ॥ १ जितेंद्रियग्रामाः यतयो यतिन श्चोच्यंते ॥ सं नितरां शितानि तीक्ष्णानि व्रतानि विध्युक्तनियमाः एषां आवश्यकाः यतय २ संशितव्रताश्चेत्र उक्तयज्ञवतो भवति ॥ अत्र यज्ञाः पंच ॥ २८ ॥

अ॥ अपरे द्रव्यत्यागएव द्रव्येन धनेन वा यज्ञो येषां ते द्रव्ययज्ञाः द्रव्यव्ययसाध्यवापीकूपतटाकारामदेवालयादिनिर्माणरूपयज्ञवंत ॥ द्रव्यं यज्ञो येषां ते द्रव्ययज्ञाः देशविशेषे कालविशेषे पात्रविशेषे यथाशक्ति द्रव्यविनियोगं कुर्वत पात्रे द्रव्यविनियोगरूपयज्ञवतः ॥ इति वा ॥ अपरे कृच्छ्रचांद्रायणादिव्रताचरणरूपयज्ञवत ॥ अपरे द्वितीयतृतीयाध्यक्तविहितकर्मानुष्ठानरूपयोगलक्षणयज्ञवंत ॥ यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिरूपाष्टांगयोगरूपयज्ञवंत ॥ इति वा ॥ ३ ऋगादिवेदपाठरूपयज्ञवंतोऽपरे ॥ ज्ञानसाधनपूर्वोत्तरमीमांसाविचाररूपयज्ञवंतोऽपरे ॥ सर्वेऽप्येते यतयः यत्नशीला अतितीक्ष्णव्रताः अतिदृढनियमाः इतीद द्वय सर्वेषां विशेषणं ॥ एवमत्र पंच यज्ञाः ॥ अपरे संशितव्रताः अतिदृढाहिंसादिरूपमहाव्रतादिव्रतविशेषरूपयज्ञवत ॥ एवमत्र षट् यज्ञा इति वा ॥ २८ ॥

वि ॥ अपरे द्रव्यसाध्ययज्ञवत द्रव्यत्यागात्मकयज्ञवतो वा ॥ न्यायार्जितेन द्रव्येण देवतार्चनं दानं यागं होमं वा कुर्वतः ॥ अपरे कृच्छ्रचांद्रायणादिरूपव्रतलक्षणयज्ञवत ॥ अपरे योगयज्ञा योगः प्राप्तिः अवश्यंगतव्यानां दिव्यदेशानां दिव्यतीर्थानां वा प्राप्तिः तद्रूपयज्ञवत ॥ यज्ञत्वबुद्ध्या दिव्यदेशयात्रादिकं कुर्वतः ॥ अपरे वेदाभ्यासरूपयज्ञवतः ॥ अपरे तदर्थज्ञानाभ्यासरूपयज्ञ-

१. ये निर्जितेन्द्रियग्रामा यतिनो यतयश्च ते ॥ इत्यमरः ॥ २ शंसितव्रता इति पाठे विद्वत्कथितप्रथितव्रतवंतः इत्यर्थः ३ स्वाध्यायेन वेदेन यत् ज्ञानं तद्रूपयज्ञवंत ॥ स्वाध्याययज्ञा ज्ञानयज्ञाश्च इति वा ॥ आद्ये व्रतरूपो यज्ञः पंचमः ॥ द्वितीये संशितव्रता इति सर्वेषां विशेषणम् ॥

यंतः ॥ सर्वेप्येते यतयः यत्नशीलाः अतिदृढसंकल्पाश्च ॥ प्रयत्नसंकल्पदार्ढ्य-रहितानामिमे यज्ञा न सिद्ध्येयुः ॥ अतः यत्नेन संकल्पदार्ढ्येन च यज्ञा इमे संपाद्याः ॥ २८ ॥

**कृष्णः ॥ अपाने जुह्वति प्राणं प्राणेऽपानं तथा परे ॥**
**प्रणापानगती रुध्वा प्राणायामपरायणाः ॥ २९ ॥**

**अपानइति** ॥ अपरे प्राणानां आयामः नियमनं परं अयनं येषां ते परायणाः तत्पराः प्राणायामे परायणाः प्राणायामपरायणाः सन्तः प्राणश्च अपानश्च प्राणानौ तयोः गती रुध्वा प्राणं अपाने जुह्वति ॥ तथा अपानं प्राणे जुह्वति ॥ २९ ॥

**द्वै ॥ अ ॥ अपरे प्राणानां नियमनमेव परमोपायमाश्रयंतः संतः प्राणा-पानयोः १ऊर्ध्वाधोगती निरुध्य अपाने प्राणं जुह्वति ॥ प्राणे च अपान जुह्वति ॥ प्राणस्य गतिः ऊर्ध्वगमन अपानस्य गति अधोगमन ते निरुध्य ॥ प्राणस्य अपान-प्रवेशनरूपं पूरक अपानस्य प्राणे प्रवेशनरूपं रेचकं च कृत्वा उभयगतिनिरोधेन स्तंभनरूपं कुंभक कुर्वन्तः भगवत्पूजात्वेन प्राणायामयज्ञ कुर्वन्ति ॥ २९ ॥**

**कृष्णः ॥ २ अपरे नियताहाराः प्राणान् प्राणेषु जुह्वति ॥ २९॥ ॥**

**अपर इति** ॥ नियतः संकोचितः आहारः येषां ते नियताहाराः अपरे प्राणान् प्राणेषु जुह्वति ॥ २९॥ ॥

**अपरे नियमिताहाराः आहारसंकोचाभ्यासवंतः सतः प्राणान् तत्तदिंद्रिय-वृत्तीः प्राणेषु तत्तदिंद्रियेषु जुह्वति ॥ आहारसंकोचनेन इंद्रियाणां शक्तिह्रास-मापाद्य तानितानींद्रियाणि सकुचितवृत्तीनि कुर्वन्ति ॥ प्राणान् अवरेंद्रियदेवान् प्राणेषु उत्तमेंद्रियदेवेषु जुह्वति ॥ तदधीनान् चिंतयंति ॥ इति वा ॥ अस्मिन् व्याख्याने नियताहारा इत्यस्यानुपयोगात् नियताहारत्वं पृथगपरो यज्ञ इति ज्ञेयम् ॥ २९ ॥**

१. नासिकाभ्यां आन्तरस्य वायोर्निगमः श्वासः प्राणगतिः ॥ बाहिर्निर्गतस्य तस्य वायोः ताभ्या अन्तःप्रवेशः प्रश्वासोऽपानगतिः ॥ २. मार्धश्लोके एक एव यज्ञः ॥ द्वै. यज्ञाविल्यपरे ॥

अ ॥ अपरे पूर्वोक्तप्राणायामपरेषु मध्ये केचित् नियताहाराः संतः प्राणान् अजितान् वायून् जितेषु वायुषु जुह्वति ॥ वायुजयाभ्यासं कृत्वा जिते वायौ अजितं वायुं संयोज्य तमपि जयंति ॥ इंद्रियेषु इंद्रियवृत्तीः जुह्वतीति वा ॥

१अपरे पूर्वोक्तप्राणायामपरेषु मध्ये केचित् नियताहाराः संतः प्राणान् प्राणेषु जुह्वति ॥ वायुस्तंभनाभ्यासनिगृहीतेषु वायुषु प्राणान् ज्ञानेंद्रियकर्मेन्द्रिय-रूपान् जुह्वति ॥ महाकुंभकाभ्यासेन विलापयंति ॥ २अपरे नियताहाराः आहारः आहरणं विषयभोगः ॥ विरक्ताः संतः प्राणान् समनस्कानींद्रियाणि प्राणेषु मनश्चित्ताहंकारेषु अंतःकरणवृत्तिभेदेषु जुह्वति ॥ इंद्रियाणि संकल्पात्मके मनसि संहृत्य मनोऽपि स्मरणात्मके चित्ते संहृत्य तदपि अहंकारे संहरंति ॥ सचाभि-मानोऽहंकारः अभिमंतव्याभावात् स्वयमेव दग्धेंधनानलवद्विलीयते ॥ अयं द्वादशो यज्ञः ॥ इति वा ॥

अपरे प्राणं अपाने जुह्वति ॥ तथा अपानं प्राणे जुह्वति ॥ पूरकरेचकयोगावर्त-नान्निष्पद्यमानेन हंसो सोहं इत्यनुलोमतः प्रतिलोमतश्चाभिव्यज्यमानेन अजपा-मंत्रेण तत्वमसीति महावाक्योक्तं तत्त्वंपदार्थैक्यं प्रतिकलं भावयंति ॥ 'सकारेण बहिर्याति हकारेण विशेत्पुनः ॥ प्राणस्तत्र सएवाहं हंस इत्यनुचिंतयेत्' ॥ इति हि योगशास्त्रज्ञाः स्मरंति ॥ अयमेको यज्ञः ॥ 'प्राणायामगती रुध्वा प्राणायाम-परायणाः ॥ अपरे नियताहाराः प्राणान् प्राणेषु जुह्वति ॥' इति प्राणायामयज्ञः ॥ इन्द्रियाणि वायुषु जुह्वतीत्यर्थ ॥ इत्यपि व्याख्यांतरं ॥ २९॥ ॥

वि ॥ प्राणायामपरायणा अपरे अपाने प्राणं जुह्वति ॥ पूरकं कुर्वंति ॥ तथा अपरे प्राणे अपानं जुह्वति ॥ रेचकं कुर्वंति ॥ अपरे प्राणापानयोः ऊर्ध्वाधोगती रुध्वा प्राणान् वायुवृत्तिभेदान् प्राणेषु वायुषु जुह्वति ॥ कुंभकं कुर्वंति ॥ एते त्रयोऽपि नियताहाराः ॥ वक्ष्यते च ॥ ३ 'नात्यश्नतस्तु योगोऽस्ति न चैकांतमनश्नतः' ॥ इति ॥ सार्धश्लोके एको यज्ञः ॥ २९॥ ॥

अर्जुनः ॥ किमेतेषां सर्वेषां भेदानां पापनिरसनद्वारा मोक्षहेतुत्वमस्ति ॥ ब्रूहि॥

१. सार्धश्लोके एको यज्ञः ॥ २. द्वौ यज्ञौ ॥ ३. ६. १६.

कृष्णः ॥ सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ॥ ३० ॥
यज्ञशिष्टामृतभुजो यान्ति ब्रह्मसनातनम् ॥ ३० ॥ ॥

सर्वेऽपीति ॥ एते सर्वेऽपि यज्ञं विदन्तीति यज्ञं विन्दन्तीति वा यज्ञविदः यज्ञेन क्षपितं नाशितं कल्मषं येषां ते यज्ञक्षपितकल्मषाः ॥ यज्ञात् शिष्टं यज्ञशिष्टं यज्ञशिष्टं च तत् अमृतं च यज्ञशिष्टामृतं यज्ञशिष्टामृतं भुञ्जत इति यज्ञशिष्टामृतभुजः तादृशाश्च सन्तः सनातनं अनादि ब्रह्म यांति ॥ ३०॥ ॥

द्वै ॥ अ ॥ यज्ञान् विदंतीति यज्ञविदः यज्ञतत्स्वरूपतत्प्रकारतत्फलज्ञानिनः यज्ञान् विंदंति लभंते इति यज्ञविदः यज्ञलाभवंतः ॥ यज्ञस्वरूपादिकं ज्ञात्वा यज्ञानुष्ठातारः एते सर्वेऽपि [1] यज्ञान् कृत्वा अवशिष्टे काले अमृताख्ये भुंजानाः यज्ञानंतरभावित्वादमृतो भवति स कालः ॥ यज्ञशिष्टेन कालेन यज्ञशिष्टे काले वा अमृताख्यमन्नं भुंजाना इति वा ॥ यज्ञान् कृत्वा अवशिष्टममृताख्यं अन्नं भुंजाना. ॥ यज्ञशेषो ह्यमृतमुच्यते ॥ इति वा ॥ यज्ञभेदेन यथासंभव अयमर्थभेदो बोध्यः ॥ स्वानुष्ठितेन यज्ञेन नाशितमोक्षप्रतिबंधकपापाश्च संतः पुरातनं परं ब्रह्म प्राप्नुवंति ॥ ज्ञानद्वारा मोक्षं प्राप्नुवंति४ ॥

वि ॥ उक्तेषु कर्मयोगभेदेषु स्वसौकर्यानुसारेण स्वेच्छया प्रवृत्ता एते सर्वेऽपि देवयज्ञपितृयज्ञभूतयज्ञमनुष्ययज्ञब्रह्मयज्ञरूपमहायज्ञान् तत्पूर्वकनित्यनैमित्तिककर्मरूपयज्ञांश्च 'सहयज्ञैः प्रजा सृष्ट्वे'त्यभिहितान् विंदंति लभंते इति यज्ञविदः पंचमहायज्ञनित्यनैमित्तिककर्मकर्तारः संत एव उक्तैर्यज्ञैः कर्मयोगभेदैः अनुष्ठितै.

---

१. यज्ञानन्तरं शिष्टं विशिष्टं अमृताख्यं अन्नं आत्मसुखं वा भुंजानाः ॥ इति केचित् ॥ यज्ञशिष्टं यज्ञान्ते क्रियमाणं अमृतं 'यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ॥ न्यून संपूर्णतां याति सद्यो वन्दे तमच्युतम् ॥ मंत्रहीनं क्रियाहीनं भक्तिहीनं रमापते ॥ यत्कृतं तु मया देव परिपूर्ण तदस्तुमे ' ॥ अनेन मया कृतेन कर्मणा भगवान् श्रीकृष्णः प्रीयतामिति मत्स्मरणपूर्वकं ममार्पणं तद्भुजः तत्कर्तारः ॥ इति परे ॥ सर्वेषामेतेषां अन्यतममप्यनुष्ठातुमशक्ताः पंचमहायज्ञानुष्ठाय तच्छिष्टममृताख्यमन्नं भुजानाः चित्तशुद्धिज्ञानद्वारा मोक्षमाप्नुवन्ति ॥ सर्वेऽपीत्यर्धं प्रशंसापरम् ॥ इत्यन्ये ॥

महायज्ञादिभिर्वा नाशितप्रतिबंधकपापास्संतः यज्ञशिष्टेन महायज्ञशिष्टेन अमृताख्येन अन्नेन शरीरधारणं कुर्वतः संतः अनादिब्रह्मसमानाकारं प्रकृतिबंधरहितशुद्धात्मानं प्राप्नुवंति ॥ उक्तकर्मयोगभेदेषु निष्ठावतापि पंचमहायज्ञानित्यनैमित्तिककर्मणामनुष्ठानमवश्यं कर्तव्यमिति सिद्धं ॥ ३०॥ ॥

अर्जुनः ॥ उक्तयज्ञभेदानामकरणे किं बाधकं ॥ ब्रूहि ॥

कृष्णः ॥ नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यःकुरुसत्तम ॥ ३१ ॥

नायमिति ॥ कुरुषु सत्तमः श्रेष्ठः कुरुसत्तमः हे कुरुसत्तम पार्थ न विद्यते यज्ञः यस्य सः अयज्ञः तस्य अयज्ञस्य अयं लोकः नास्ति ॥ अन्यः लोकः कुतः॥३१॥

उक्तेषु यज्ञभेदेषु एकमपि यो[१]नानुतिष्ठति ॥ तस्य अयं लोकः मनुष्यलोकः नास्ति कुतः पुनः स्वर्गादिः ॥ कुरुश्रेष्ठत्वात् त्वमनुष्ठातुं शक्तोऽसि ॥ अयं लोकः मनुष्यदेह एव नास्ति ॥ कुतो देवदेहः ॥ तिर्यग्योनिषु जायते ॥ इति वा ॥ [२]अयज्ञस्य अयं लोकः प्राकृतलोकसंबंधी धर्मार्थकामाख्यत्रिवर्गः नास्ति ॥ अन्यः अप्राकृतः मोक्षः कुतः ॥ इति वा ॥ ३१ ॥

अर्जुनः ॥ किमिमे विधिविहिताः किंभगवत्प्रीतिद्वारा मोक्षसाधनभूताः किमेभिरहं मोक्षं प्राप्नुयां वद ॥

कृष्णः ॥ एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे ॥
कर्मजान् विद्धि तान् सर्वानेवं ज्ञात्वा विमोक्ष्यसे ॥ ३२ ॥

एवमिति ॥ एवं बह्वयो विधाः प्रकाराः येषां ते बहुविधाः यज्ञाः ब्रह्मणः मुखे विततः विस्तृताः ॥ तान् सर्वान् कर्मणा जायन्ते इति कर्मजाः तान् कर्मजान् विद्धि जानीहि ॥ एवं ज्ञात्वा विमोक्ष्यसे ॥ ३२॥

उक्तप्रकाराः बहुविधाः यज्ञाः हरेः परमात्मनः मुखे वदने विस्तृताः सर्वयज्ञ-

१. पंचमहायज्ञान्वा यो नानुतिष्ठति ॥ २. वि ॥ अयज्ञस्य कर्मयोगभेदनिष्ठत्वाभिमानेन सामान्यधर्मभूतपंचमहायज्ञनित्यनैमित्तिकादिपरित्यागिनः ॥

भोक्ता हि सः ॥ वक्ष्यते च ॥ १'भोक्तारं यज्ञतपसा'मिति ॥ २'अहं हि सर्व-यज्ञानां भोक्ता च प्रभुरेव च'ति च ॥ कर्तव्यानां ज्ञानद्वारा मोक्षहेतूनां यज्ञानां अनेकेषां सत्वात् किं कर्मयोगकरणनिर्बंधेन इति चेत् तान् सर्वान् यज्ञान् कर्म-जान् जानीहि ॥ उक्ताः ज्ञानकर्मात्मकाः यज्ञाः सर्वेऽपि कायिकवाचिकमान-सिककर्मसाध्याः ॥ नहि कायिकादिक्रियासामान्याभावे कोऽपि यज्ञः सिद्ध्येत् ॥ अतः सर्वेषु यज्ञेषु कर्मसद्भावात् विहितः कर्मयज्ञएव श्रेयान् ॥ बंधकत्वशंकया क्रियासामान्यपरिजिहीर्षायां सत्यां सर्वेऽपि यज्ञाः त्यक्तव्याः स्युः ॥ ततश्च ज्ञान-यज्ञोऽपि त्याज्यः स्यात्॥ तत्रापि मानसक्रियाया विद्यमानत्वात्॥ स्वाध्याययज्ञोऽपि त्याज्यः स्यात् ॥ तत्रापि वाचिकक्रियाया विद्यमानत्वात् ॥ एवमन्यत्राप्यूह्यं ॥ कर्म-जान् जानीहि इत्युच्यते ॥ एवं ज्ञाते किं स्यात् इति चेत् एवं ज्ञात्वा सर्वानपि यज्ञान् कर्मजान् ज्ञात्वा एवं कर्मणा ज्ञानं लब्ध्वा बंधे मोक्तुं बंधादात्मानं मोच-यितुं च इच्छसि ॥ ज्ञानार्थं युद्धादिकं स्वकर्म कर्तव्यमिति तवैवेच्छा भविष्यति ॥ मुचुऌ मोक्षणे इत्यस्य धातोः सन्नंतस्य रूपं ॥ सर्वेषां कर्मजत्वं ज्ञात्वा विहितं कर्मानुष्ठाय ज्ञानद्वारा मोक्ष्यसे मोक्षं प्राप्स्यसि इति वा ॥ अन्यथा कर्मजान् विद्धीत्युक्तिर्व्यर्था स्यात् ॥ अतः उक्तं सर्वं ज्ञात्वा विहितं कर्म त्वया कर्तव्यं ॥ तेन च तवज्ञानद्वारा मोक्षस्स्यात् ॥ एव मुपदिष्टो मया ते कर्मयोगविस्तरः ॥ ३२ ॥

अ ॥ उक्तप्रकाराः बहुविधा यज्ञाः ब्रह्मणो वेदस्य मुखे ब्रह्मणो मुखे ब्रह्म-मुखनिःसृते वेदे इति वा ॥ विस्तृताः वेदद्वारा सर्वैरवगताः ॥ न स्वस्वोत्प्रेक्षा-मूलकाः ॥ आत्मनोऽक्रियत्वात् कथं तस्य व्यापारात्मका इमे विधीयंते इति चेत् तान् सर्वान् कर्मजान् विद्धि ॥ कायिकवाचिकमानसिकव्यापारजन्यान् जानीहि ॥ इमे यज्ञाः व्यापारसाध्याः ॥ आत्मा तु निर्व्यापार उदासीनः ॥ अतः प्रकृति-प्राकृतव्यापारैरिमे जायंते ॥ नाहमेतेषां कर्ता ॥ किंतूदासीनः ॥ इत्येवं ज्ञात्वा अक्रियात्मज्ञानेन मुक्तो भविष्यसि ॥ 'यान्ति ब्रह्म सनातन' मित्युक्तरीत्या मोक्षहेतुभूतकर्मयज्ञैरेवालं किं ज्ञानयज्ञेन इति चेत् तान् कर्मयज्ञान् अनात्मधर्म-वागादिव्यापारजान् अतएव मोक्षेतराल्पफलप्रदान् जानीहि ॥ एवं ज्ञात्वा ज्ञानं लब्ध्वा मोक्षं प्राप्स्यसि इति वा ॥ तान् सर्वान् कर्मजान् विद्धि ॥ सर्वेषु कर्मणः

१. ५. २९. २. ९. २४.

सङ्गाभावात् कर्मापरिहार्यं जानीहि ॥ एवं कर्म कृत्वा तेन ज्ञात्वा ज्ञानयोगं प्राप्य विमोक्षं प्राप्स्यसि ॥ इति वा ॥ ३२ ॥

वि ॥ ब्रह्मणः प्रकृतिबंधरहितशुद्धात्मस्वरूपस्य मुखे प्राप्त्युपाये कर्मयोगे एवं बहुविधाः यज्ञाः वितताः ॥ आत्मप्राप्त्युपायभूतकर्मयोगस्य बहवोऽवांतरभेदाः एवं विस्तरेणोक्ताः ॥ तान् सर्वान् अहरहरनुष्ठीयमाननित्यनैमित्तिककर्मजन्यान् जानीहि ॥ कर्मयोगावांतरभेदनिष्ठस्य मम किं नित्यनैमित्तिकादिभिः इत्यभिमानेन नित्यनैमित्तिकानि कर्माणि न त्याज्यानि ॥ तदकरणे कर्मयोगावांतरभेदकरणा[1]नर्हो भवति ॥ प्रतिदिवसं पापहरणेन उत्तरोत्तरसत्वोन्मेषहेतुत्वेन च अत्यंतोपयुक्तानि विहितानि संध्यावंदनादीनि नित्यनैमित्तिकानि कर्माणि ॥ एवं ज्ञात्वा एवं अहरहरनुष्ठीयमाननित्यनैमित्तिककर्मानुष्ठानपूर्वकं उक्तकर्मयोगभेदाननुष्ठाय तेन यथावस्थितात्मस्वरूपमवाप्स्यसि ॥ अतः नित्यनैमित्तिककर्मानुष्ठानपूर्वकं कर्तव्यमुचितं विहितं स्वकर्म सर्वैः कर्तव्यमिति स्थितम् ॥ ३२ ॥

अर्जुनः ॥ महता प्रबंधेन महता तात्पर्येण कर्मयज्ञनिरूपणात् स एव श्रेष्ठः न ततोऽन्योस्ति इति भाति ॥ वद ॥ उक्तेषु यज्ञेषु कः श्रेष्ठः वद ॥ इति वा ॥

कृष्णः ॥ श्रेयान् द्रव्यमयाद्यज्ञात् ज्ञानयज्ञः परंतप ॥
सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥ ३३ ॥

**श्रेयानिति** ॥ परान् शत्रून् तपतीति परंतपः हे परंतप अर्जुन द्रव्यप्रचुरो द्रव्यमयः तस्मात् द्रव्यमयात् यज्ञात् ज्ञानमेव यज्ञः ज्ञानयज्ञः श्रेयान् अतिशयेन श्रेष्ठः हे पार्थ सर्वं कर्म खिलं सशेषं न खिलं अखिलं समग्रं यथातथा ज्ञाने परिसमाप्यते परिपूर्यते ॥ ३३ ॥

देवतोद्देशेन घृतादिद्रव्यत्यागरूपाद्यज्ञात् चरुपुरोडाशादिद्रव्यप्रचुरो यज्ञः द्रव्ययज्ञः अन्नमयो यज्ञः अन्नयज्ञः इतिवत् ॥ तस्मात् तदुपलक्षितसर्वयज्ञेभ्यः इति वा ज्ञानयज्ञः श्रेष्ठः ॥ श्रद्धाजाड्येन पंचगव्यात् षड्गव्यमाधिकं मन्वान इव कर्मयज्ञमेवाधिकं

1. अत्र, 'किमस्त्यनुपर्नातस्य वाजपेयादिभिर्मखैः' ॥ इति श्लोकोऽनुसंधेयः ॥

मामंस्थाः ॥ ज्ञानयज्ञमेवाधिकं जानीहि ॥ कुत इति चेत् सर्वं कर्म खिलं सशेषं अखिलं निश्शेषं कर्मसमूत्थधर्मांगयुक्तं ज्ञाने सति परि सम्यक् समाप्यते संपूर्णं सफलं भवति ॥ ज्ञानरूपफलेनैव फलवद्भवति ॥ ज्ञानं फलं कर्म तु साधनं ॥ अतः कर्मणो ज्ञानं श्रेष्ठं ॥ साधनापेक्षया साध्यस्य श्रेष्ठत्वात् ॥ आखिलं आ नितरां खिलं अल्पमपि कर्म ज्ञाने सति परिसमाप्यते संपूर्णं भवति ॥ ज्ञानिकृतं अल्पमपि कर्म संपूर्णं भवति ॥ अल्पस्यापि महत्वापादकत्वात् ज्ञानं श्रेष्ठं ॥ 'अल्पमात्रकृतो धर्मो भवेत् ज्ञानवतो महान् ॥ महानपि कृतो धर्मो ह्यज्ञानां निष्फलो भवे'दित्यभियुक्ताः स्मरन्ति ॥ अन्तःशत्रुजेतृत्वात्त्वं ज्ञानयज्ञार्होऽसि ॥ अतः त्वं कर्मयोगेन ज्ञानी भवितुं यतस्व ॥ ३३ ॥

अ ॥ द्रव्यमयात् द्रव्यरूपसाधनसाध्यात् परंपरया मोक्षसाधनात् उपलक्षणया उक्तेभ्यः तादृशेभ्यः सर्वेभ्यो यज्ञेभ्यः द्रव्यं बाह्यं आभ्यन्तरं च देहेंद्रियादि तद्व्यापारसाध्यात् द्रव्यं मंत्रतंत्रक्रियाऽऽश्रमादि तत्साध्यात् यज्ञात् दैवादियज्ञेभ्यः इति वा ज्ञानयज्ञः ज्ञानात्मको यज्ञः साक्षान्मोक्षसाधनभूतः श्रेयान् प्रशस्ततरः ॥ अंतःशत्रुजेतृत्वात् त्वं ज्ञानयज्ञार्होऽसि ॥ कुतो ज्ञानयज्ञस्य श्रेष्ठत्वं इति चेत् सर्वं कर्म खिलं सशेषं न भवतीत्यखिलं निःशेषं ज्ञाने परिसमाप्यते ॥ ज्ञाने पर्यवस्यति ॥ ज्ञानरूपफलेन फलवद्भवति ॥ ज्ञाने सति परिसमाप्यते समाप्तं भवति ॥ ततः परं कर्म नास्ति ॥ यथा वेलां प्राप्तस्य गंतव्यं नास्ति तथा ज्ञानोत्पत्त्यनंतरं कर्तव्यं कर्म नास्ति ॥ उक्तं हि मया ॥ १ 'तस्य कार्यं न विद्यत' इति ॥ ज्ञाने सति सर्वं आगामि संचितं च कर्म अखिलं निःशेषं यथातथा परिसमाप्यते निर्मूल्यते ॥ सूर्यप्रभया तम इव निःशेषं नश्यति ॥ वक्ष्यते च ॥ २ 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा' ॥ इति ॥ सर्वं कर्म कर्मफलं अखिलं ज्ञाने ज्ञानफले परिसमाप्यते अंतर्भवतीति वा ॥ ज्ञाने जाते तेन ज्ञानिना सर्वैः प्राणिभिः कृतं कर्म सं सम्यक् आप्यते प्राप्यते ॥ सर्वैः प्राणिभिः कृतं कर्म यथावत्तत्वज्ञानिनं प्राप्नुवंति ॥ इति वा ॥ ३ 'एवमेनꣳसर्वं तदभिसमेति यत्किंच प्रजाः

१. ३. १७. २. ४. ३७. ३. छा. ४. १. ४.

साधु कुर्वेति यस्तद्वेद यत्स वेद' ॥ इति श्रुतिः ॥ अतो द्रव्ययज्ञात् ज्ञानयज्ञः १श्रेष्ठः ॥ ३३ ॥

वि ॥ कर्तव्यतयोच्यमानं कर्म अंतर्गतज्ञानकं ॥ उक्तं च मया ॥ २ 'व्यवसायात्मिका बुद्धिरेके'ति ॥ अतस्तत्कर्माकारं ज्ञानाकारं चेत्युभयाकारं ॥ उभयाकारे तस्मिन् को'शः प्रधान इति चेत् तस्मिन् उभयाकारे कर्मणि द्रव्यमयात् कर्मरूपात् यज्ञांशात् ज्ञानयज्ञः अन्तर्गतज्ञानरूपयज्ञांशः श्रेष्ठः ॥ कुत इति चेत् सर्वं कर्म अखिलं स्वेतरसकलसाधनसहितं ज्ञाने अंतर्गते ज्ञाने पर्यवस्यति ॥ ज्ञानरूपप्राप्यफलेन फलवद्भवति ॥ कर्मांतर्गतस्य ज्ञानस्य कर्मणा प्राप्यत्वं कथं इति चेत् कर्मण्यंतर्गतं ज्ञानं कर्माभ्यासेन पुनःपुनरभ्यस्यमानं साक्षात्काररूपविपाकदशामापद्यते ॥ तादृशविपाकदशापन्नं ज्ञानं प्राप्यं फलं भवति ॥ अतो नानुपपत्तिः ॥ कुतोऽतर्गतस्य ज्ञानस्य प्राधान्यमुच्यते इत्युच्यते ॥ ततःपृथक्भूतज्ञानयोगस्यैव प्राधान्यमुच्यते इति कुतो न वाच्यमिति चेत् ३ 'कर्म ज्यायो ह्यकर्मणः' ॥ इति कर्मयोगस्य प्राधान्यमुक्तं ॥ वक्ष्यते च तत् ॥ ४ 'तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते' ॥ इति ॥ अतः पूर्वोत्तरयोस्तयोः कर्मयोगप्रधान्यवचनयोर्मध्ये पृथक्भूतज्ञानयोगप्रधान्यवचनमनुचितं ॥ अतः अंतर्गतज्ञानांशप्रशंसामुखेन तत्सहितकर्मयोगस्यैव प्राधान्योक्तिपरमिदमिति युक्तं॥३३॥

अर्जुनः ॥ तद्ज्ञानं केभ्यः केन प्रकारेण लभ्यं ॥ वद ॥

**कृष्णः ॥ तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ॥**
**उपदेक्ष्यंति ते ज्ञानं ज्ञानिनस्तत्वदर्शिनः ॥ ३४ ॥**

तदिति ॥ प्र सम्यक् निपातेन पतित्वा नमस्कारकरणेन परि सम्यक् प्रश्नेन सेवया शुश्रूषया तत् ज्ञानं विद्धि जानीहि लभस्व वा ॥ ज्ञानं एषां अस्तीति ज्ञानिनः तत्वं पश्यन्तीति तत्वं दर्शयन्तीति च तत्वदर्शिनः ते तुभ्यं ज्ञानं उपदेक्ष्यंति ॥ ३४ ॥

१. द्रव्यं स्वर्गादिविषयभोगलक्षणं तन्मयः तत्साधकः तस्मात् यज्ञात् ज्ञानयज्ञः श्रेयान् परममोक्षसुखप्रापकः ॥ कर्म द्वेधा ॥ खिलमखिलं चेति खिलं दुष्टं अखिलं सर्वं कर्म ज्ञाने परिसमाप्यते पर्यवस्यति ॥ खिलं तु अज्ञाने पर्यवस्यति ॥ अतः अदुष्टमेव कर्म कर्तव्यम् ॥ २. २. ४१. ३. ३. ८. ४. ५. २.

हे पार्थ तत् तस्मात् ज्ञानस्य सर्वाधिकत्वात् तत् ज्ञानं ज्ञातव्यं त्वं जानीहि ॥ लभस्वेति वा ॥ के उपदेक्ष्यंति इति चेत् ज्ञानिनः तुभ्यं १ज्ञातव्यं उपदेक्ष्यंति ॥ किं सामान्यज्ञानमात्रेण उपदेष्टुं शक्नुवंति इति चेत् तत्वं पश्यंतीति तत्वदर्शिनः किं सामान्यविशेषज्ञानमात्रेण उपदेष्टुं शक्नुवंतीति चेत् तत्वं दर्शयंतीति तत्वदर्शिनः बोधनाशक्तिमहिम्ना स्यांतस्थितं ज्ञानं दर्पणमहिम्ना प्रतिरूपकमिवान्यत्रोत्पादयितुं क्षमाः उपदेक्ष्यंति ॥ उपदिशेयुर्वा ते इति चेत् तान् सादरमभिगम्य दंडवत् प्रकर्षेण नीचैः पतनेन नमस्कारः कार्यः ॥ कृते नमस्कारे आशिषं हि दद्युः इति चेत् नाहमाशिषमर्थयमानो भवत्सविधमुपागमं ॥ किंतु ज्ञानसंपादनेनात्मानमुद्धर्तुं इति स्वाशयं निवेद्य सम्यक् प्रश्नः कर्तव्यः ॥ गत्वा नत्वा पृष्टे उपदिशेयुर्वा ॥ चेदेवं सुलभं खलु स्यात् ज्ञानमिति चेत् अस्मै शिष्याय सम्यगुपदेष्टव्यमिति यथा ते मन्येरन् तथा तेषां शुश्रूषा कार्या ॥ एवं कृते अवश्य ज्ञानमुपदेक्ष्यंति २ते ॥ उपदेक्ष्यंतीत्यनेन एवमुपसन्नाय शिष्याय ज्ञानिभिः ज्ञापनशक्तिमद्भिश्च विद्वद्भिरवश्यमुपदेशः कर्तव्यः इति विधिः प्रतीयते ॥ एवं परमदुर्लभत्वात् ज्ञानस्य तत्संपादने अवश्यं प्रयत्नः कर्तव्य इति स्थितं ॥ क्व क्व गत्वा केभ्यः केभ्यो मया ज्ञातव्यं ३'नत्वेवाह'मित्यादिना उपादिक्षः उपदिशसि चेदानीं उपदेक्ष्यसि च सतिचैवं कुत एवमुच्यते ॥ बिभेम्यहमतीव ॥ इति चेत् ४वयमुपदेक्ष्यामः ॥ तत् अस्मत्तः विद्धि ॥ माभैषीः ॥ उपदेक्ष्याम इति वक्तव्ये उपदेक्ष्यंतीत्युक्त्या कुतो भयोत्पादनं कृतमिति चेत् उपदेक्ष्यामः अस्मत्तस्त्वं विद्धीत्युक्ते परहितचिंतकस्य तव, मह्यमुपदिशति भगवान् उपदेक्ष्यति च ॥ का गतिरितरेषां ॥ इति चिंता समुन्मिषेत् ॥ अत एवमुक्तं ॥ ये ज्ञानिनः तत्वदर्शिनश्च ५ते

१. ज्ञायते अनेनेति ज्ञानं ज्ञानजनकं शास्त्रमिति वा ॥ २. अर्जुनः साक्षाद्विद्वत्वात् नराशिन्वान्च इदानीमपि ज्ञान्येव तथापि अधिकज्ञानार्थमेवमुक्तं ॥ ३. २. १२. ४. लकारव्यत्ययः ॥ अयंजन इत्यादाविव परोक्षनिर्देशो वा ॥ उपदेक्ष्यत्येव भगवानुपरिष्टात् ॥ वक्ष्यति च ॥ 'तत्ते पदं संग्रहेण प्रवक्ष्ये' ॥ (८. ११.) इत्यादि ॥ न च अवशिष्टविषयज्ञानार्थं उपदेक्ष्यन्तीत्युक्तमिति वाच्यं ॥ ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ॥ यद्ज्ञात्वा नेहभूयोऽन्यत् ज्ञातव्यमवशिष्यते ॥' (७. २.) इति वक्ष्यमाणत्वात् ॥ ५. तच्छब्दः प्रथमान्तः ॥

प्रणिपातेन सेवयाच प्रसन्नाः संतः, परिप्रश्नेन उपदेक्ष्यंति इति यत् तत् त्वं विद्धि ॥ इति वा ॥ ३४ ॥

भ ॥ ज्ञानिनः ज्ञानवंतः तत्वदर्शिनः अपरोक्षानुभववंतश्च आचार्याः प्रणिपातेन परिप्रश्नेन सेवया च तुभ्यं उपदेक्ष्यंति ॥ तेभ्यस्तत् त्वं विद्धि जानीहि लभस्व च ॥ विशिष्टाचार्यैरेवोपदिष्टं ज्ञानं पुरुषार्थसाधनं भवति ॥ अतस्तान् प्रश्रयेणोपसंगम्य नत्वा सेवया तोषयित्वा स्वापेक्षितं पृष्ट्वा च तेभ्यो ज्ञानं संपाद्यं॥ ज्ञानिन इति बहुवचनमाचार्यविषये कथं ॥ १ 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् ॥ समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं' ॥ इत्येकस्यैवाचार्यस्योपसत्तिः श्रूयते ॥ 'उपसीदेदेकमेव सद्‌गुरुं ब्रह्मवित्तम'मिति च स्मरंति ॥ अतः कथमिदमिहबहुवचनमिति चेत् बहुभ्यः श्रोतव्यं 'सर्वतः सारमादद्या'दिति न्यायात् ॥ इदं सामान्यज्ञानाभ्यनुज्ञानार्थं ॥ नतु निःशेषसंसारमलनिवर्तकब्रह्मात्मैक्यसाक्षात्कारलाभार्थं ॥ एकगुरूपसदनपरवचनानि तु तत्पराणि ॥ अतो नानुपपत्तिः ॥ बहुभ्यः श्रुत्वा अंततः एकस्मात् सद्‌गुरोरात्मज्ञानं संपादनीयं इति स्थितं ॥ एकस्यैवाचार्यस्य बहुवचनेन निर्देशो गौरवात् ॥ न बहुत्वविवक्षया ॥ बहुवचनेन गौरवाविष्करणं तु प्रणिपातपरिप्रश्नशुश्रूषादिषु स्वारसिकप्रवृत्तिजननायेति वा ज्ञातव्यम् ॥ ३४ ॥

वि ॥ तत् आत्मविषयं ज्ञानं तेभ्यो लभस्व ॥ ज्ञानिनः तत्वदर्शिनश्च आचार्याः प्रणिपातपरिप्रश्नसेवाभिस्तुष्टास्तुभ्यमुपदेक्ष्यंति ॥ आत्मज्ञानं तु २ 'अविनाशि तु तद्विद्धि' इत्यादिना उपदिष्टमेव त्वया ॥ किमर्थं तदन्येभ्यो विद्धीत्युच्यते ॥ इति चेत् उपदिष्टमेव मया तत् ॥ अतएव इदमित्यनुक्त्वा तदित्युक्तं ॥ उपदिष्टमेव विशदं मया तुभ्यमात्मज्ञानं ॥ अवधानादिमांश्च भवान् तथापि न तत् अनादिकर्मोपार्जितैरनंतैः पापकपाटैः अंतःकरणरूपस्य तत्वज्ञानप्रसरद्वारस्योपरुद्धत्वात् इदानीं विशदं ३ बुद्धावारोहति ॥ यथावस्थितं विहितं युद्धादिकं कर्म

---

१. मुं. २. १२. २. आत्मज्ञानमेव प्रकृते विवक्षितं ॥ कर्मयोगान्तर्गतज्ञानस्यैव पूर्वश्लोकेऽभिधानात् ॥ आत्मज्ञानस्यैव कर्मयोगांतर्गतत्वात् ॥ उक्तं चैतत् ॥ 'व्यवसायात्मिके'ति ॥ ३. अत्र, ये तु त्वदङ्‌घ्रिसरसीरुहभक्तिहीनाः तेषाममीभिरपि नैव यथार्थबोधः ॥ पितघ्नमंजनमनाप्नुषि जातु नेत्रे नैव प्रभाभिरपि शंखसितत्वबुद्धिः । इति श्लोकोऽनुसंधेयः ॥ अमीभिः न्यायादिभिः ॥

कुरु ॥ तेन निरस्तेषु भयेषु विद्यद्ज्ञानार्हः संपत्स्यसे ॥ तदा पूर्वोपदिष्टस्य सामान्यतो ज्ञातस्यार्थस्य ज्ञातांशसंवादाय अज्ञातांशज्ञानाय १ विस्तृतप्रतिबोधनाय च भूयो बहुभ्यो गुरुभ्यः अस्मत्त एव वा २ श्रवणं कृत्वा तत् ज्ञानमतिविशदं कुरु ॥ ३४ ॥

अर्जुनः ॥ एवमतिमहता प्रयत्नेन लब्धेन ज्ञानेन किं स्यात् ॥ वद ॥

कृष्णः ॥ यत् ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव ॥
येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि ॥ ३५ ॥

यदिति ॥ हे पाण्डव यत् ज्ञानं ज्ञात्वा एवं मोहं पुनः न यास्यसि प्राप्स्यसि ॥ येन ज्ञानेन भूतानि अशेषेण शेषस्याभावः अशेषं तेन सर्वाणि भूतानीति यावत् ॥ आत्मनि द्रक्ष्यसि ॥ अथो अथ मयि द्रक्ष्यसि ॥ अथो आत्मनि व्याप्ते मयि द्रक्ष्यसि ॥ इति वा ॥ ३५ ॥

लब्धेनानेन ज्ञानेन प्रथमं मोहो निवर्तते ॥ पश्चात्सत्वज्ञानं च भविष्यति ॥ यत् ज्ञातव्यं शास्त्रं वा ज्ञानं वा ज्ञात्वा प्राप्य वा पुनरेतादृशं मोहं न प्राप्स्यसि ॥ इदानीं ज्ञानाभावात् अनात्मनि देहादावात्मत्वाभिमानरूपेण अकर्तरि कर्तृत्वाभिमानरूपेण अनात्मीये आत्मीयत्वाभिमानरूपेण अधर्मे धर्मत्वाभिमानरूपेण धर्मे अधर्मत्वाभिमानरूपेण च मोहशब्दितेन विपरीतज्ञानेन निर्मूलिताशेषविवेकाविज्ञानस्त्वं पीठिकोक्तदिशा अशोच्यानन्वशोचसि प्रज्ञावादांश्चाभाषथाः ॥ यद्युक्तविधया ज्ञानं लभेथाः तर्हि पुनरेवं मोहं नाप्नुयाः ॥ इदमेकं फलं ॥ इतोऽप्यन्यदेकं विशिष्टं फलं पश्य ॥ अथो उक्तरीत्या मोहनाशाद्धेतोः अथो मोहनाशानंतरं इति वा उचितविहितकर्मयोगकरणलब्धचित्तशुद्ध्या लब्धेन सम्यग्ज्ञानेन अशेषेण सर्वाणि भूतानि आत्मनि अंतर्यामिणि व्याप्ते वा आदानादिकर्तरि वा मयि वासुदेवे द्रक्ष्यसि ॥ सर्वाणि ब्रह्मादिस्तंबांतानि भूतानि सर्वांतर्यामिणं मामाश्रित्य

---

१. अतएव अनुगीतादेः प्रवृत्तिः ॥ २. अतएव 'नेह भूयोन्यत् ज्ञातव्यमवशिष्यते' ॥ (७. २.) इति वक्ष्यति ॥ नतु श्रोतव्यमवशिष्यत इति ॥

सूत्रमणिन्यायेन लब्धसत्ताकानि द्रक्ष्यसि ॥ एतादृशमोक्षहेतुभूतविशिष्टज्ञानवान् भविष्यसि ॥ तत्तेभ्यो विद्धि ॥ अन्यस्याप्येवं ज्ञानेन मोहनिवृत्तिः सम्यग्ज्ञानेन मोक्षसिद्धिश्च भवति ॥ अतस्सर्वैर्महता यत्नेन ज्ञानं संपाद्यम् ॥

अ ॥ ज्ञानेनानेन अशेषाणि भूतानि ब्रह्मादिस्तंबपर्यन्तानि स्थावरजंगमात्मकानि आत्मनि त्वयि द्रक्ष्यसि ॥ शुक्तौ रजतमिव त्वयि तानि कल्पितानि त्वदज्ञानविजृंभितानि ज्ञास्यसि ॥ अथो परमात्मनि मयि कल्पितानि मदज्ञानविजृंभितानि ज्ञास्यसि ॥ सर्वस्य जगतः अधिष्ठानयाथात्म्याज्ञानेन तत्र कल्पितत्वं निश्चित्य अधिष्ठानत्वेन प्रतीतस्य क्षेत्रज्ञस्य परब्रह्मणो मम च एकत्वं निश्चित्य तेन ब्रह्मात्मैक्यविज्ञानेन मुक्तो भविष्यसि ॥ भूतानि १ आत्मनि द्रक्ष्यसि ॥ तमात्मानं मयि मदभिन्नं द्रक्ष्यसीति वा ॥ उपास्योपासकभावेन प्रतीयमानयोः परमात्मजीवात्मनोरैक्यनिश्चयः प्रथमं न जायेतेति आत्मैक्यब्रह्मैक्यदर्शनयोः क्रमेण निर्देशः ॥ मध्ये अथोशब्दप्रयोगश्च ॥ सर्वाणि भूतानि २ 'पितॄनथपितामहा'-नित्युक्तान् बंधून् स्वाज्ञानकल्पितानि ज्ञात्वा ततः मदज्ञानकल्पितानि ज्ञास्यसि ॥ अतः न पुनरेवं मोहं यास्यसि ॥ अज्ञानकल्पितस्य शुक्तिरजतादेर्नाश इव अधिष्ठानभूताऽऽत्मपरमात्माज्ञानकल्पितानां शुक्तिरजतादिवत् अदृष्टदृष्टनष्टस्वरूपाणां बंधूनां नाशो खेदो न कार्य इति स्वयमेव ज्ञास्यसीति वा ॥

वि ॥ इदं कर्मयोगांतर्गतं आत्मज्ञानं कर्मयोगलब्धातःकरणशुद्ध्या तेभ्यस्तेभ्यो विशदं लब्ध्वा देहात्माभिमानरूपं मोहं एवं पुनर्न प्राप्स्यसि ॥ किंच अनेन ज्ञानेन सर्वाणि भूतानि सर्वान् अचित्संसृष्टानात्मनः स्वात्मनि स्वात्मसादृश्येन द्रक्ष्यसि ॥ समं हि सर्वं प्रकृतिबंधविमुक्तं शुद्धमात्मवस्तु ॥ वक्ष्यते च ३'विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि ॥ शुनि चैव श्वपाके च पण्डिताः समदर्शिनः' ॥ इति ॥ ४ 'निर्दोषं हि समं ब्रह्मे'ति च ॥ अथ ज्ञानपरिपाकेन सर्वानात्मनः मयि मत्समान् द्रक्ष्यसि ॥ इतरात्मसाम्येन ईश्वरसाम्येन च स्वात्मानं साक्षात्करिष्यसि ॥ आत्मनां परस्परं साम्यं ईश्वरेण च साम्यं ॥ वैषम्यं तु अविद्दशागतं ॥ इति दृढनिश्चयः साक्षात्काररूपः संपत्स्यते ॥ ईदृशं

१. आत्मनि मयि आत्माभिन्ने मयि इति केचित् ॥ २. १. २६. ३. ५. १८. ४. ५. १९.

इदं ज्ञानं ॥ अतस्तत्तेभ्यो विद्धि ॥ आत्मनि मयि इत्यनयोः आत्मतुल्यानि मत्तु-
ल्यानि इति कथमर्थो लभ्यते इति चेत् स्थालीगतेषु पुलाकेषु कंचिदादाय
पक्वमिदमिति तस्मिन् दृष्टे अन्येपि स्थालीगताः पुलाकाः पक्वा इति साम्येन यथा
दृष्टप्राया भवंति ॥ यथाच कुसूलादिनिहितेषु तंडुलादिराशिषु मुष्टिमेकमादाय
ईदृशोऽयमिति तस्मिन् प्रदर्शिते अवशिष्टः सर्वोपि राशिः दृष्टमुष्टिमिततंडुलादि-
साम्येन दृष्टप्रायो भवति ॥ यथाच व्यवहरंति दृष्टाः पुलाकाः दृष्टं तंडुलादिकं
इति ॥ तथा आत्मनि निदर्शनभूते साक्षात्कृते ज्ञानाकारतया तत्समाः सर्वेऽपि
दृष्टप्राया भवंति ॥ तथा निदर्शनभूते परमात्मनि दृष्टे तत्समास्सर्वेऽप्यात्मानो
दृष्टप्राया भवंति ॥ १ 'तदा विद्वान् पुण्यपापे विधूय निरंजनः परमं साम्यमु
पैति' ॥ इति शुद्धात्मनः ईश्वरसाम्यं श्रुतिर्वक्ति वक्ष्यते च ॥ २ 'इदं ज्ञानमुपा.
श्रित्य मम साधर्म्यमागताः ॥' इति ॥ ज्ञानाकारतया ईश्वरसमानां जीवानां पर.
स्परसाम्यं न्याय्यमिति तदपि श्रुतिसित्धम् ॥ ३५ ॥

अर्जुनः ॥ स्यादिदं सर्वं यद्यहं निष्पापः स्यां ॥ न तथा ॥ अहं तु कृत·
पापः ॥ करोमि चेदानीं पापानि ॥ कुर्यां चेतःपरमपि ॥ एवं प्राप्तव्यपदप्राप्तेः
प्रतिबंधके महति वृजिनार्णवे मग्नोऽहं कथं ज्ञानिभ्यो ज्ञातव्यं ज्ञात्वा तेन लब्धेन
महता ज्ञानेन परमप्राप्यं मोक्षस्थानं १ 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं
पदं ॥' इति श्रुत्युक्तरीत्या संसाराध्वनः परपारभूतं प्राप्नुयां ॥ ब्रूहि ॥

कृष्णः ॥ अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः ॥
सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि ॥ ३६ ॥

अपीति ॥ त्वं सर्वेभ्यः पापं एषां अस्तीति पापाः तेभ्यः पापानि करोतीति
पापकृत् अतिशयेन पापकृत् पापकृत्तमः असि चेदपि ॥ सर्वं वृजिनं पापं ज्ञानमेव प्लवः
उडुपं ज्ञानप्लवः तेन ज्ञानप्लवेनैव सं सम्यक् तरिष्यसि ॥ ३६ ॥

शृणु पार्थ ज्ञानस्य माहात्म्यं ॥ ये महापातकोपपातकादिसर्वविधसकल·

१. मुं. ५. ३. २. १४. २. ३. का. १. ९.

पापकारिणः तेभ्यः सर्वेभ्योऽपि त्वं अतिशयेन पापानि कृतवान् कुर्वन् करिष्यन् असि चेदपि ॥ यद्यपीदं असंभावितं तथाऽपि ज्ञानमाहात्म्यबोधनाय अभ्युपेत्यो-च्यते ॥ 'चेदपि' इत्येतत् असंभावनाभ्युपगमप्रदर्शनार्थं ॥ सर्वं वृजिनशब्दितं १पापार्णवं २ज्ञानरूपनौकयैव सम्यक् अनायासेन तीर्त्वा परपारप्राप्तिर्यथा स्यात्तथा तरिष्यसि ॥ दृढां नावमाश्रितो यथा प्रतिबंधकं प्रवाहं तीर्त्वा परं पारं प्राप्नोति तथा ज्ञातव्यं ज्ञात्वा लब्धेन महता ज्ञानेन प्रतिबंधकसकलविधपापार्णवं तीर्त्वा परपारभूतं मोक्षस्थानं प्राप्स्यसि ॥ माभैषीः ॥ ज्ञानं लभस्वेत्युच्यते ॥ युद्धं कुर्विति निर्बध्यते ॥ किं तेन ज्ञानेन कृत्यं ॥ यद्यहं त्वद्वचनेन युद्धे प्रवर्तेय तर्हि भीष्म-द्रोणादिवधजनितपातकी स्यां ॥ कथं वृजिनस्य तरणमिति चेत् सर्वमपि पापार्णवं ज्ञानप्लवेन संतरिष्यसि ॥ किमुत भीष्मादिवधजनितमल्पं पापं ॥ युद्धस्य धर्मत्वात्पापप्रसक्तिरेव नास्ति ॥ तथाऽपि अभ्युपेत्य वादोयमिति च ॥३६॥

अर्जुनः ॥ यथा नावमाश्रितस्य अंतराले विद्यमानः प्रवाहः प्राप्तव्यप्राप्तेर-प्रतिबंधकोऽपि स्वयमविनश्यन् विद्यतैव ॥ तथा ज्ञानं प्राप्तस्यापि तन्महिम्ना पापराशिराप्तव्याप्तेरप्रतिबंधकोऽपि स्वयमविनश्यन् विद्यतैव ॥ विद्यतामिति चेत् ३'नाभुक्तं क्षीयते कर्मे'ति न्यायात् अभुक्तस्य अक्षीणस्य पापस्य फलजन-त्वावश्यंभावात्, मुक्तस्यापि पापफलानुभवप्रसंगः ॥ अत इदं सम्यक् ब्रूहि ॥

कृष्णः ॥ यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ॥
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥ ३७ ॥

यथेति ॥ सं सम्यक् इद्धः दीप्तः अग्निः एधांसि काष्ठानि यथा भस्मसात् भस्म कुरुते ॥ हे अर्जुन तथा ज्ञानमेव अग्निः ज्ञानाग्निः सर्वाणि च तानि कर्माणि च सर्वकर्माणि तानि भस्मसात् कुरुते ॥ ३७ ॥

१. मुमुक्षोरनिष्टत्वात्पुण्यमपि पापशब्देनोच्यते ॥ २. अत्र तरणसाधनस्य ज्ञानस्य प्लवत्वरूपणेन तरणकर्मणः पापस्य अर्णवरूपणं गम्यते ॥ ३. 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ॥ अवश्य-मनुभोक्तव्यं कृतं कर्म शुभाशुभं '॥ इति ब्रह्मवैवर्ते प्रकृतिखंडे ॥

न केवलं प्लव इव प्रवाहस्य ज्ञानं पापार्णवस्य तारकमात्रं ॥ किंतु नाशकमपि ॥ अतो नानुपपत्तिः ॥ कथं ज्ञानं पापं नाशयतीति चेत् यथा प्रदीप्तोऽग्निः एकोऽपि अनेकानि काष्ठानि बलिष्ठानि निरवशेषं स्वरूपहानेन भस्मीकरोति तथा सद्गुरुमुखाच्छ्रुत्वा मत्वा ध्यात्वा यदपरोक्षज्ञानाख्यं ज्ञानं लभते तदेव काष्ठानामग्निरिव पापपुण्यात्मकानां प्रतिबंधकानां कर्मणां नाशकत्वादग्निः ॥ सोऽग्निः सर्वकर्माणि पुण्यपापात्मकानि निरवशेषं भस्मीकरोति ॥ अर्जुनत्वमस्यं तथाविधज्ञानार्होऽसि ॥ कर्माणि आरब्धफलानि अनारब्धफलानि इति द्वेधा ॥ आद्यानि प्रारब्धानीत्युच्यंते ॥ द्वितीयानि तु अप्रारब्धानीत्युच्यंते ॥ तत्र ज्ञानं अप्रारब्धान्येव भस्मीकरोति ॥ प्रारब्धानि तु ज्ञानिनोऽपि भोगैकनाश्यानि ॥ १'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्' ॥ २'इतरस्याप्येवमसंश्लेषः पाते तु' ॥ ३'अनारब्धकार्ये एव तु पूर्वे तदवधेः' ॥ ४'भोगेन त्वितरे क्षपयित्वाऽथ संपत्स्यते ॥' इति सूत्राणि ॥ ५'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्यते ॥' इति श्रुतिः ॥ ज्ञानेन ६ अप्रारब्धानि नश्यंति ॥ आरब्धानि तु यावद्भोगसमाप्ति तिष्ठंति ॥ भोगश्च एकेन अनेकेन वा देहेन ॥ ७'विद्वानमृतमाप्नोति नात्र कार्या विचारणा ॥ अवसन्नं यदारब्धं कर्म तत्रैव गच्छति ॥ न चेद्बहूनि जन्मानि प्राप्यैवांते न संशयः ॥' इत्यभियुक्ताः स्मरंति ॥ ८पूर्वकर्मणां दाहेन नाशः उत्तरकर्मणां तु अश्लेषः ॥ पूर्वाणि संचितानीत्युच्यंते ॥ उत्तराणि तु आगामीनीति ॥ 'नाभुक्तं क्षीयते कर्मे'ति तु अकृतप्रायश्चित्तं ज्ञानाग्निना अदग्धं च यत् कर्म तत्परमिति बोध्यम् ॥ ३७ ॥

कर्मनिर्हरणार्थं किं ज्ञानसंपादनायासेन ॥ अनायाससाध्यैः गंगादिदिव्यतीर्थस्नानादिभिः सत्कर्मभिश्च कर्मनिर्हरणसंभवात् ॥ अहि ॥

---

१. ४. १. १३. २. ४. १. १४. ३. ४. १. १५. ४. ४. १. १९. ५. छां ६. १४. २. ६. अप्रारब्धमपि इष्टं पुण्यं न नश्यति ॥ अनिष्टमेव नश्यति ॥ प्रारब्धयोरपि अल्पयोः पुण्यपापयोर्नाशो भवत्येव ॥ इत्यादिकमाकरादवसेयं ॥ ७. नारायणाध्यात्मे ॥ ८. 'तीयिनिल् तूशाहुं इति (तिरुप्पावै मायनै) गाथाऽनुसन्धेया ॥ अत्र यद्वक्तव्यं तत् शांकरभाष्ये 'य एनं वेत्ति पुरुषं' इति १३. २४. श्लोकव्याख्यावसरे विस्तरेणोक्तम् ॥

कृष्णः ॥ न हि ज्ञानेन सदृशं पवित्रमिह विद्यते ॥
तत्स्वयं योगसंसिद्धः कालेनाऽऽत्मनि विंदति ॥ ३८ ॥

नहीति ॥ ज्ञानेन सदृशं पवित्रं वस्तु इह न विद्यते ॥ हि प्रसित्धं ॥ योगे योगेन वा सं सम्यक् सित्धः योगसंसित्धः कालेन आत्मनि तत् विंदति लभते ॥ ३८ ॥

ज्ञानेन सदृशं पवित्रं वस्तु इह लोके, लोके वेदे च इति वा ॥ अस्मिन् लोके परलोके च इति वा ॥ तपोयोगादिषु परिशुत्धिकरेषु मध्ये इति वा ॥ न विद्यते ॥ हि वेदशास्त्रादिषु प्रसित्धमेतत् ॥ यस्मादिदमेव परमपवित्रं तस्मादेतद्रूपोऽग्निः सर्वकर्माणि भस्मीकरोतीति वा ॥ कुतोऽन्यस्य गंगास्नानादेः ज्ञानतुल्यत्वं नास्ति इति चेत् गंगास्नानादीनि परमपावनानि पुण्यजनकान्येव ॥ 'अश्वमेधसहस्राणि वाजपेयशतानि च ॥ एकस्य गंगास्नानस्य कलां नार्हन्ति षोडशीं' ॥ इति स्मरंति ॥ तथाऽपि तानि पापमात्रनाशकानि ॥ नतु पुण्यनाशकानि ॥ प्रत्युत पुण्यजनकानि ॥ मुमुक्षोस्तु 'तदा विद्वान् पुण्यपापे विधूय निरंजनः परमं साम्यमुपैती'ति श्रुत्युक्तरीत्या पुण्यपापरूपोभयविधप्रतिबंधकनिवृत्तिरावश्यकी ॥ उभयनिवर्तकत्वं तु ज्ञानस्यैव ॥ नतु गंगास्नानादेरन्यस्य ॥ अत उक्तं ज्ञानेन तुल्यं पवित्रं न विद्यत इति ॥ उक्तं च उभयनिवर्तकत्वं ज्ञानस्य मया ॥ १'बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ॥' इति ॥ पापेनेव पुण्येन मोक्षप्रतिबंधोऽपि मुमुक्षोरनिष्ट एव ॥ २'षट्त्रिंशद्वर्षसाहस्रं रक्षिताऽव्याहतेंद्रियः ॥ ततो गंतासि मत्स्थानं सर्वलोकनमस्कृतं' ॥ इत्याकारकभगवदनुग्रहलब्धाखंडभूमण्डलाव्याहतसाम्राज्यभोगानुभवहेतुभूतपुण्येन भगवता सह परमपदप्राप्तिप्रतिबन्धो ध्रुवस्यानिष्टो दृष्टः ॥ अमंस्त च स तमनुग्रहमनिष्टम् ॥ अशोचच्च ३'भवच्छिदमयाचेऽहं भवं भाग्यविवर्जितः ॥' इति॥ लोके प्रभुप्रकोप इव प्रभुप्रसादातिशयोऽपि विश्रामादानेन अनुबुभूषितकार्यानुभवप्रतिबन्धकः क्लेशावहो हि दृश्यते ॥ अतः

---

१. २. ५०. २. भाग. ४. ९. ३. भाग. ४. ९.

प्रतिबन्धकसामान्यनिश्शेषनिर्हरणनिश्चितसामर्थ्यं ज्ञानमेवाभ्यर्थ्यं ॥ पापनिर्धून-
मेन शुद्धिं लब्धुकामो यथा झडिति गंगां गत्वा स्नात्वा विधूय पापानि लब्ध-
शुद्धिरागच्छति ॥ तद्वत् प्रतिबंधकसामान्यं परिजिहीर्षुणा झडिति यत्र कुत्रापि
गत्वा ज्ञानं संपाद्यमिति भाति ॥ तत्तु न शक्यं ॥ गंगास्नानादेरिव ज्ञानस्य पुरुष-
प्रयत्नासाध्यत्वात् ॥ अन्यथा सर्वेऽपि हि ज्ञानिनो भवेयुः ॥ अतः किं कार्यं
इति चेत् महता कालेन योगे ज्ञानोपाये कर्मयोगे सम्यक् सिद्धिमान् सुनि-
ष्पन्नकर्मयोग इति यावत् ॥ योगेन कर्मयोगेण समाधियोगेन च संसिद्धः
ज्ञानयोगयोग्यतामापन्न इति वा ॥ निःशेषविनष्टबाह्यवासनता संसिद्धिः तां प्राप्त
इति वा ॥ महता कालेन तत् ज्ञानं आत्मनि स्वात्मनि परमात्मनि वा विषये
आत्मनि स्वस्मिन् मनसि वा स्वयमेव तदर्थं स्वप्रयत्नं विनैव लभते ॥ गंगा-
स्नानादिकमिव ज्ञानं झडिति न संपादयितुं शक्यं ॥ अपितु तदर्थं कर्मयोगः
कार्यः ॥ तेन चित्तशुद्धिर्जायते ॥ ततः श्रुत्वा मत्वा ध्यात्वा च अपरोक्ष-
ज्ञाननिष्ठार्हो भवति ॥ तादृशयोग्यतापरिपाककाले स्वयमेव ज्ञानमुदेति ॥ वक्ष्यते
च ॥ १'बहूनां जन्मनामंते ज्ञानवा'निति । अतस्तदुपायभूतकर्मयोगादिसंपाद-
नाय प्रयत्नः कार्यः ॥ महदिदं ज्ञानं कर्मयोगस्य फलं ॥ महांश्चासौ कर्मयोगो
ज्ञानयोगस्योपायः ॥ अहो महिमा ज्ञानयोगकर्मयोगयोः ॥ ३८ ॥

अर्जुनः ॥ गत्वा गुरोः सविधं नत्वा तदीयचरणौ कृत्वा तस्य शुश्रूषां
कृत्वा च विविधान् प्रश्नान् ज्ञानं संपाद्यमित्युक्तं ॥ नहि प्रणिपातादिभिरेव ज्ञानं
लभ्येत ॥ माययाऽपि तेषां करणसंभवा२दनैकांतिकानि तानि ॥ मायाविनो हि
कंचिदाचार्यमभिगच्छन्ति ॥ प्रणमन्ति च तं ॥ शुश्रूषन्ते च तमभिनयन्तो
भक्तिं ॥ पृच्छन्ति च विविधं ॥ न ते तस्माद्ज्ञानं लभन्ते ॥ तेषां ज्ञानसंपि-
पादयिषाया अभावात् ॥ वस्तुतस्तमपहसितु मेव तेषां सा प्रवृत्तिः ॥ ज्ञानस्य
३ऐकांतिकानि साधनानि ब्रूहि ॥

कृष्णः ॥ श्रद्धावान् लभते ज्ञानं तत्परः संयतेंद्रियः ॥
ज्ञानं लब्ध्वा परां शांतिमचिरेणाधिगच्छति ॥ ३९ ॥

श्रद्धावानिति ॥ श्रद्धा अस्यास्तीति श्रद्धावान् तत् परं प्रधानं यस्य सः तत्परः

१. ७. १९. २. व्यभिचरितानि ॥ ३. अव्यभिचरितानि ॥

मत्परः इति पाठे अहं परं प्रधानं वस्तु यस्य सः मत्परः सं सम्यक् यतानि निगृहीतानि इन्द्रियाणि यस्य सः संयतेंद्रियः ज्ञानं लभते ॥ ज्ञानं लब्ध्वा प्राप्य परां उत्तमां शांतिं सुखं अचिरेण शीघ्रं अधिगच्छति प्राप्नोति ॥ ३९ ॥

अस्ति गुरूपदिष्टं सर्वमित्यास्तिक्यबुद्धिः श्रद्धा ॥ शास्त्राचार्योपदेशविस्रंभजनितेष्टफलसाधनतानिश्चयहेतुका साधनानुष्ठानत्वरा वा ॥ तद्वान् ज्ञानं लभते ॥ १'अस्तीत्येवोपलब्धस्य तत्वभावः प्रसीदती'ति श्रुतिः ॥ अयं त्वव्यभिचरितो हेतुः ॥ श्रद्धावानपि कश्चिदालस्यादिना प्रणिपातशुश्रूषापरिप्रश्नादिकं न करोति ॥ न लभते च ज्ञानं ॥ अतः न श्रद्धामात्रेण कृत्यं ॥ तत्परेण च भवितव्यं ॥ तस्मिन् ज्ञानविवर्धने वा गुरुशुश्रूषादिज्ञानलब्ध्युपाये वा आसक्तः तत्परः ॥ तत्परो ज्ञानं लभते ॥ वक्ष्यते च ॥ ज्ञानसाधनेषु गुरुशुश्रूषादिकं २'आचार्योपासन'मिति ॥ 'मत्पर' इति पाठे मदेकचित्तो ज्ञानं लभते ॥ वक्ष्यते च ॥ ज्ञानसाधनेषु ॥ ३'मयि चानन्ययोगेन भक्तिरव्यभिचारिणी'ति ॥ मयि भक्तिरहितस्य मत्प्रसादैकलभ्यं ज्ञानं नोदेति ॥ अहमेव हि ज्ञानादेर्दाता ॥ वक्ष्यते च ॥ ४'ददामि बुद्धियोगं त'मिति ॥ ५'बुद्धिर्ज्ञानमसंमोह' इति ॥ ६'मत्तः स्मृतिर्ज्ञानमपोहनं चे'ति च ॥ ७'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ॥ यमेवैष वृणुते तेन लभ्यः तस्यैष आत्मा विवृणुते तनूं स्वां' ॥ इति श्रुतिः ॥ श्रद्धावानपि तत्परोऽपि मत्परोऽपि इंद्रियसंगतैर्विषयैराकर्षाद्विक्षिप्तचेताश्चेत् ज्ञानं न लभते ॥ अतः सम्यक् निगृहीतेंद्रियेण भवितव्यं ॥ संयतेंद्रियो ज्ञानं लभते ॥ वक्ष्यते च ॥ ज्ञानसाधनेषु ८'आत्मविनिग्रहः ॥ इंद्रियार्थेषु वैराग्य'मिति ॥ एतानि अव्यभिचरितानि साधनानि ॥ एतैरवश्यं ज्ञानं लभते ॥ एवं महता प्रयत्नेन लब्धस्य ज्ञानस्य फलं किमिति चेत् ज्ञानं लब्ध्वा परां उत्कृष्टां शांतिं मोक्षसुखं अचिरेणैव शीघ्रमेव अधिगच्छति ॥ प्रारब्धकर्माभावे देहांतरव्यवधानं विनैव ॥ प्रारब्धकर्मसत्वे तद्भोगाव्यवहितकाल एव प्राप्नोति ॥ परां लिंगदेहभंगोत्तरभाविनीं वा ॥ शांतिं निःशेषाविद्यातत्कार्य-

---

१. का ६. १३. अत्र, 'कद्दनुवारिकि' इति गाथाऽनुसन्धेया ॥ २. १३. ८. ३. १३. ११, ४. १०. १०. ५. १०. ४. ६. १५. १५. ७. का. २. २३. ८. १३. ८. ९.

निवृत्तिरूपां उपरतिं मुक्तिं वा ॥ शांतिं नित्यनिरतिशयसुखात्मिकां ब्रह्मात्मनाऽवस्थानलक्षणां विदेहमुक्तिं वा ॥ १ प्रकृतिबंधराहितशुद्धात्मस्वरूपानुभवसुखं वा ॥ ईदृशं ज्ञानं उक्तोपायैः संपाद्यम् ॥ ३९ ॥

अर्जुनः ॥ ज्ञानं संपाद्यमित्युक्तं ॥ श्रद्धावानित्यत्र साधनानुष्ठानत्वराविवक्षायां तेन तस्यावश्यकत्वमुक्तं ॥ तत्परइत्यनेन वा ॥ आस्तिक्यबुद्धिविवक्षायां अस्तिवा नवा एवंवा एवंवा इति संशयाभावस्यावश्यकत्वमुक्तं ॥ एषां त्रयाणां संपादनं नाऽनायाससाध्यं ॥ अतो मैव संत्वेतानि ॥ का तेन हानिः ॥ वद ॥

कृष्णः ॥ अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ॥
नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥ ४० ॥

अज्ञ इति॥ अज्ञः ज्ञानहीनः स च श्रद्धत्ते इति श्रद्दधानः श्रद्धावान् न श्रद्दधानः अश्रद्दधानः स च संशयः आत्मा स्वभावः यस्य संशयः आत्मनि मनसि यस्य वा संशयात्मा वि अधिकं नश्यति नाशं प्राप्नोति ॥ संशयात्मा यः तस्य संशयात्मनः अयं लोकः नास्ति ॥ परलोकः नास्ति ॥ सुख नास्ति ॥ ४० ॥

अज्ञः वेदांतादिशास्त्रज्ञानरहितः मन्दो विरुद्धार्थकत्वात्तत्र विपरीतज्ञानवांश्च ॥ स च, जातेऽपि कथंचिद्ज्ञाने श्रद्धाशब्दिताऽऽस्तिक्यबुध्दिरहितः ॥ इदमेवं न भवतीति विपर्ययरूपनास्तिक्यबुद्धिलक्षणाश्रद्धासहितश्च साधनानुष्ठानत्वरारहितो वा ॥ स च, जातायामपि कथंचिच्छ्रद्धायां संशय२युक्तमनाः ॥ स च, विनश्यति ॥ पुरुषार्थशून्यो भवति ॥ नरकाद्यनर्थं प्रतिपद्यते च ॥ त्रयोऽप्येते विनश्यंति ॥

---

१. वि. अचिरेणेत्यस्य लभते इत्यनेनाप्यन्वयः ॥ ज्ञानं कर्मयोगान्तर्गतं विपाकदशापन्नं साक्षात्काराऽऽत्मावलोकनशब्दितं अचिरेण लभते ॥ पूर्वं कालेनेत्युक्तिः द्वित्रादिदिनमाससाध्यत्वव्युदासाय ॥ अत्र अचिरेणेत्युक्तिः पृथग्भूतज्ञानयोगदेहांतरादिविलंबव्युदासाय ॥ उपदेशात् ज्ञानं लब्ध्वा तत्र श्रद्धावान् तद्विवृद्धिकामः कर्माणि कृत्वा तेन समेधितं विपाकदशापन्नं ज्ञानं लभते ॥ तल्लब्ध्वा अचिरेण आत्मानुभवसुखमश्नुते ॥ २. संशयः आत्मनि यस्येति वा ॥ वि ॥ संशय्यते अनेनेति संशयः संशयकारणभत आत्मा मनो यस्येति वा संशये आत्मा मनो यस्येति वा विग्रहः ॥

तत्रापि संशयात्मा अधिकं विनश्यति ॥ यथा संशयालुर्विनश्यति न तथा अज्ञश्च अश्रद्दधानश्च ॥ संशयो हि पापीयान् ॥ एतत्सूचनायैव संशयात्मा विनश्यति ॥ अज्ञश्च अश्रद्दधानश्च इति तयोः १ चशब्दसाहित्येन निर्देशः॥ कुत इति चेत् संशयात्मनः अयं मनुष्यलोकः नास्ति ॥ संशयालुत्वेन धनविद्याद्यार्जनदेहगेहाद्यभिमानशून्यत्वेन ऐहिकसुखं नास्ति ॥ परलोकः स्वर्गादिलोकः मोक्षश्च नास्ति ॥ सद्भावहेतुहेतुमद्भावादौ संशयेन धर्मज्ञानसंपादनाभावात् ॥ किंबहुना तस्य किंमपि सुखं नास्ति ॥ सर्वत्र संशयालुत्वेन अशनशयनवपनादावप्यप्रवृत्तेः॥ अज्ञस्य अश्रद्दधानस्य च परलोको नास्ति ॥ मनुष्यलोकः अशनशयनादिसुखं च वर्तते ॥ संशयात्मातु त्रितयहीनः सर्वभ्रष्टो भवतीति पापीयसी संशयात्मता ॥ भाविन्यन्यस्मिन् जन्मनि संशयात्मनो मानुषलोको नास्ति ॥ स्वर्गादिलोकश्च नास्ति ॥ अस्मिन् जन्मनि भोजनादिसुखं च नास्तीति वा ॥ अयं लोकः प्राकृतः धर्मार्थकामरूपत्रिवर्गपुरुषार्थः नास्ति ॥ परः अप्राकृतः मोक्षपुरुषार्थश्च नास्ति ॥ सर्वत्र संशयवत्वेन सुखलवोऽपि तस्य नास्तीति वा ॥ अतो ज्ञानं संपाद्यं ॥ श्रद्धा च कर्तव्या ॥ संशयश्च दूरतः परिहरणीयः ॥ ४० ॥

अर्जुनः ॥ संशयादिदोषप्रहाणेन कर्मयोगादिकं कुर्वतः किं स्यात् ॥ वद ॥

योगसंन्यस्तकर्माणं ज्ञानसंछिन्नसंशयम् ॥
आत्मवन्तं न कर्माणि निबध्नन्ति धनंजय ॥ ४१ ॥

योगेति ॥ हे धनञ्जय पार्थ योगेन योगे वा सं सम्यक् न्यस्तानि कर्माणि येन सः योगसंन्यस्तकर्मा तं योगसंन्यस्तकर्माणं ज्ञानेन सम्यक् छिन्नः संशयः यस्य सः ज्ञानसंछिन्नसंशयः तं ज्ञानसंछिन्नसंशयं आत्मा परमात्मा मनः अप्रमादो वा अस्यास्तीति आत्मवान् तं आत्मवन्तं कर्माणि न निबध्नन्ति ॥ ४१ ॥

विवेकज्ञानेन संशयादिदोषान् दूरीकृत्य आत्मशब्दितः परमात्मा ऐहिकामुष्मिकसकलयोगक्षेमनिर्वाहकोऽस्तीति निश्चयेन तदेकाश्रयः योगेन भगवति मनोयोगेन

१. अत्र, अन्वाचये चशब्दः ॥ अन्यतरस्य आनुषंगिकत्वे अन्वाचयः ॥

फलसंगत्यागादिरूपोपायेन वा कर्माणि कृत्वा यो भगवति, तेषां संन्यासशब्दित-मर्पणं करोति तं योगसंन्यस्तकर्माणं योगाय ज्ञानयोगाय भगवति समर्पितकर्माण-मिति वा ॥ योगे सिद्धोपाये भगवति, समर्पितसाध्योपायभूतकर्मवंतमिति वा ॥ 'योगो योगविदां नेता' इति सहस्रनामसु योगशब्दो भगवत्परः पठ्यते ॥ तेन ज्ञानयोगं प्राप्य तेन १ 'भिद्यते हृदयग्रंथिः छिद्यंते सर्वसंशयाः ॥ क्षीयंते चास्य कर्माणि तस्मिन् दृष्टे परावरे॥ इति श्रुत्युक्तरीत्या संछिन्नसर्वसंशयं निस्सं-शयतत्त्वज्ञानेन लब्धभगवद्भक्तियोगातिशयं प्रतिबंधकानि पुण्यपापात्मकानि कर्मा-णि न निबध्नंति ॥ कर्मणा जातेन ज्ञानेन मुक्तो भवति ॥ पार्थेदमवधारय ॥ ४१ ॥

अ ॥ २ आत्मवंतं प्रमादरहितं उचितप्रयत्नवंतं अतएव ब्रह्मात्मैकत्वज्ञानेन छिन्नसर्वसंशयं अतएव तेन निःसंशयज्ञानयोगेन जगतः सर्वस्य स्वस्य च ब्रह्म-मात्रत्वावगाहिना सर्वस्य मिथ्यात्वनिश्चयात् निश्शेषत्यक्तपुण्यपापात्मककर्माणं कर्म-संन्यासं कृतवंतं ॥ ज्ञानाग्निनाशितसंचितागामिरूपपुण्यपापात्मकसर्वकर्माणं सं सम्यक् नि नितरां अस्तानि कर्माणि येन सः संन्यस्तकर्मा तं इति विग्रहः ॥ योगेन समत्वबुद्धियोगेन भगवदाराधनरूपयोगेन वा तस्मिन् समर्पितकृतविहित-सर्वकर्माणमिति वा ॥ कृतानि लोकसंग्रहार्थानि विहितकर्माणि शरीरयात्रामात्रा-र्थानि चेष्टारूपाणि वा कर्माणि न निबध्नंति ॥ फलारंभं न कुर्वंति ॥ 'समग्रं प्रविलीयते' इत्युक्तरीत्या अकर्मतामापद्यंते ॥ तैरप्रतिबद्धो मुक्तो भवतीति यावत्॥ तादृशज्ञानधनसंपादनार्होऽसि त्वम् ॥ ४१ ॥

वि ॥ योगः 'कर्मण्यकर्म यः पश्ये'दित्यादिनोक्तकर्मकरणप्रकारविषयक-बुद्धियोगः तेन संन्यस्तकर्माणं कर्मसंन्यासं कृतवंतं नात्र संन्यासः स्वरूपत्यागः ॥ पूर्वापरविरोधात् ॥ किंतु ज्ञानाकारतापादनेन कर्माकारत्वातिरस्कारः ॥ यथावत्कर-णेन ज्ञानाकारतापन्नकर्माणमिति यावत् ॥ कर्मयोगांतर्गतात्मयाथात्म्यज्ञानेन पुनः-पुनरभ्यस्तेन सम्यक्छिन्नात्मविषयकसर्वसंशयं गुरूपदिष्टतत्त्वार्थे दृढनिविष्टमनसं प्रतिबंधकप्राचीनानंतकर्माणि न निबध्नन्ति ॥ मुक्तो भवतीति परमप्रयोजनोपसं-हारः ॥ ईदृशमिदं अंतर्गतज्ञानकं कर्म ॥ धनंजयेदमवधेहि ॥ ४१ ॥

---

१. का. ४. ९. २. आत्मैवास्ति अस्य नान्यदित्यात्मवान् सदा ब्रह्मनिष्ठावान् तं इति परे ॥

अर्जुनः ॥ अस्त्वेवं ज्ञानयोगकर्मयोगयोर्माहात्म्यं ॥ मया किं करणीयमिदानीं ॥ वद ॥

कृष्णः ॥ तस्मादज्ञानसंभूतं हृत्स्थं ज्ञानासिनाऽऽत्मनः ॥
छित्त्वैनं संशयं योगं आतिष्ठोत्तिष्ठभारत ॥ ४२ ॥

तस्मादिति ॥ हे भारत अर्जुन तस्मात् अज्ञानेन संभूतं जातं आत्मनः अज्ञानसंभूतं हृदि तिष्ठतीति हृत्स्थं एनं संशयं ज्ञानमेव आसिः खड्गः ज्ञानासिः तेन ज्ञानासिना छित्वा योगः कर्मयोगः तं आतिष्ठ अनुतिष्ठ ॥ उत्तिष्ठ ॥ ४२ ॥

संशयस्य ऐहिकामुष्मिकपुरुषार्थभ्रंशहेतुत्वात् सर्वसुखविरोधित्वाच्च कर्मयोगानुष्ठानप्रवृत्तिप्रतिबंधकत्वाच्च आत्मपरमात्मविषयकाज्ञानेन संजातं आत्मनः मनोगतं आत्मपरमात्मविषयकं एनं 'संशयात्मा विनश्यती'त्युक्तमाहिमानं संशयं आत्मपरमात्मविषयकज्ञानरूपखड्गेन छित्वा निस्संशयस्त्वं ज्ञानयोगोपायभूतं [1]आत्मनः स्वस्य विहितं कर्मयोगं अनुतिष्ठ ॥ तदर्थं इदानीं उत्तिष्ठ ॥ युद्धाय सन्नद्धो भव ॥ संशयं छित्वा उत्तिष्ठ ॥ उत्थाय च कर्मयोगमातिष्ठ इति वा ॥ भाशब्दितब्रह्मविद्यारतत्वात् ज्ञानार्थं कर्म कर्तुं अर्होऽसि ॥ तत्रापि भरतकुलोत्पन्नत्वात् ॥ युद्धाख्यमेव तव विहितं कर्म त्वया कर्तव्यं ॥ अत उत्थाय तदेव युद्धाख्यं कर्म कर्तुमर्हसि ॥ तेन तव स्यादतिशयितं श्रेयः ॥ ४२ ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
कृष्णार्जुनसंवादे ज्ञानकर्मयोगो नाम चतुर्थोऽध्यायः ॥ ४ ॥

इतीत्यादि पूर्ववत् ॥ ज्ञानकर्मणोः योगः प्रतिपाद्यत्वेन संबन्धः यस्मिन् स ज्ञानकर्मयोगः इति नाम प्रसिद्धः चतुर्थोऽध्यायः इति संपूर्णः ॥

इति श्रीमल्लक्ष्मणाचार्यविरचिते भगवद्गीतोपन्यासदर्पणे चतुर्थाध्यायार्थ
प्रदर्शकः चतुर्थः प्रतिबिंबः ॥ ४ ॥

---

१. आत्मन इत्यस्य सर्वत्रान्वयः ॥

श्रीः

# अथ पञ्चमोऽध्यायः

संजयः ॥

एवं भगवतोक्तौ संन्यासकर्मयोगौ श्रुतवानर्जुनः महानुभावगुरुभीष्मद्रोणादि प्रतिद्वंद्वीभवनविमुखत्वाद्युद्धाख्यं नियतं कर्म कर्तुमनिच्छुः उक्तयोः संन्यासकर्मयोगयोर्मध्ये अन्यतरस्य श्रेष्ठये जिज्ञासिते संन्यासमेव श्रेष्ठं ब्रूयात् ॥ ततः तमेव श्रेष्ठमहमुररीकरोमि नावरं कर्मयोगमिति वक्तुं शक्यं ॥ इति मन्वानो गूढाभिसंधिर्भगवंतं पृच्छति ॥

अर्जुन उवाच ॥

संन्यासं कर्मणां कृष्ण पुनर्योगं च शंससि ॥ ॥
यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ॥ १ ॥

संन्यासमिति ॥ हे कृष्ण कर्मणां संबन्धिनं कामादिवर्जनरूपं संन्यासं कर्मणां संन्यासं त्यागं कर्मणां संन्यासं ज्ञानयोगं पुनः कर्मणां योगं अनुष्ठानं च शंससि वदसि ॥ एतयोर्मध्ये यत् श्रेयः श्रेष्ठं सुनिश्चितं तत् मे ब्रूहि ॥ १ ॥

द्वै ॥ हे कृष्ण संन्यासं १ च २ कर्मणां योगं च वदसि ॥ इदानीमेवोक्तत्वेन सामीप्याद्वर्तमाननिर्देशः ॥ एतयोर्मध्ये यत् श्रेष्ठं तदेकं मम यथा निश्चयो जायेत तथा ब्रूहि ॥ अनेन किमुक्तंभवतीति चेत् एतावता प्रबंधेन त्वयोक्ते कर्मयोगे द्वावंशौ ॥ ईश्वरार्पणबुद्ध्या कर्मानुष्ठानरूपो विशेष्यांश एकः ॥ तदंगभूतः फलकामादिवर्जनरूपः संन्यासशब्दोक्तो विशेषणांशोऽपरः ॥ उभौ समुदितौ कर्मयोगः

१. पुनःशब्दश्चार्थे ॥ २. कर्मणां संबंधिनं संन्यासं कर्मणां योगं इति पूर्वोत्तराभ्यामन्वयः ॥

तत्र विशेष्यांशः, १'योगस्थः कुरु कर्माणि' ॥ २'नियतं कुरु कर्म त्वं' ॥ ३'कार्यं कर्म समाचर' ॥ ४'तदर्थं कर्म कौन्तेय मुक्तसंगः समाचर' ॥ ५'कुरु कर्मैव तस्मात्त्वं' ॥ ६'आतिष्ठोत्तिष्ठ भारते'त्युक्तः ॥ विशेषणांशस्तु ७'संगं त्यक्त्वा धनंजय' ॥ ८'मुक्तस्संगस्समाचर' ॥ ९'तस्मादसक्तः सततं' ॥ १०'निराशीर्निर्ममो भूत्वा' ॥ ११'निराशीर्यतचित्तात्मा' ॥ १२'कामसंकल्पवर्जिताः' ॥ १३'त्यक्त्वा कर्मफलासंगं' ॥ १४'गतसंगस्य' ॥ १५'यदृच्छालाभसंतुष्टः' इत्युक्तः ॥ तत्र किमुभावप्यंशावनुष्ठेयौ ॥ उतान्यतरानुष्ठानमप्यलं ॥ अलमिति चेत् अन्यतरः क उपादेयः ॥ योंऽशः श्रेयान् स उपादेय इति चेत् कोंशः श्रेयान् ॥ तमेकं सुनिश्चितं ब्रूहि ॥ मंदस्य मम यथा निश्चयज्ञानं उदियात् तथा वक्तव्यं ॥ बंधुत्वात् सुहृत्वाच्च माकृथाः परिहासं ॥ संदिग्धं विपरीतं च मावद ॥ पुण्यं पापं च कारयित्वा तत्फलानुभवार्थं पुण्यवतः पापिनश्च कर्षसि ॥ अतः कृष्णोसि ॥ यथा पुण्यं मे स्यात् पापं च न स्यात् तथा ब्रूहि ॥ १ ॥

अ ॥ हेकृष्ण कर्मणां संन्यासशब्दितं त्यागं शंससि ॥ पुनः कर्मणां १६'योगशब्दितमनुष्ठानं च कथयसि ॥ एतयोर्मध्ये यत् श्रेष्ठं तदेकं मे सुनिश्चितं यथातथा वद ॥ भवता यत् श्रेष्ठत्वेन सुनिश्चितं तन्मे ब्रूहि इति वा ॥ 'हे पार्थ १७'कर्मण्यकर्मयः पश्येत्' ॥ १८'ज्ञानाग्निदग्धकर्माणं' १९'शारीरं केवलं कर्म' ॥ २०'योगसंन्यस्तकर्माणं' ॥ २१'ज्ञानाग्निःसर्वकर्माणि' ॥ २२'सर्वं कर्माखिलं पार्थ' ॥ इत्यादिभिः विदुषः कर्मत्यागोऽभिहितः ॥ २३'योगस्थः कुरु कर्माणि' इत्यादिभिः २४ आतिष्ठोत्तिष्ठ भारते'त्यनेन च अविदुषः कर्मयोगोऽभिहितः ॥ विद्वान् कर्माणि संन्यस्यतु ॥ अविद्वाननुतिष्ठतु ॥ को विरोधः ॥ किमर्थमेतयोरन्यतरस्य श्रैष्ठ्यं पृच्छसि ॥ यद्येकस्मै द्वावपि विहितौ स्यातां तर्हि परस्परविरोधादुभयोरनुष्ठानायोगेन श्रैष्ठ्यमन्यतरस्य ज्ञात्वा तदनुष्ठानाय प्रश्नोऽयं घटेत ॥ न च तथा॥ ... इति

---

१. २. ४८. २. ३. ८. ३. ३. १९. ४. ३. ९. ५. ४. १५. ६. ४. ४२. ७. २. ४८. ८. ३. ९. ९. ३. १९. १०. ३. ३०. ११. ४. २१. १२. ४. १९. १३. ४. २०. १४. ४. २३. १५. ४. २२. १६. कर्मणामित्यस्य संन्यासयोगाभ्यामन्वयः ॥ १७. ४. १८. १८. ४. १९. १९. ४. २१. २०. ४. ४१. २१. ४. ३७. २२. ४. ३३. २३. २. ४८. २४. ४. ४२.

चेत् आत्मविदं प्रति उभयोरुपदेशो न घटते ॥ तस्य कर्मयोगासंभवात् ॥ अनात्म-विदं प्रति उभयोरुपदेशो न घटते ॥ तस्य कर्मसंन्यासासंभवात् ॥ अतः विदुषः कर्मसंन्यासः अविदुषः कर्मयोगः इति व्यवस्थिताविमौ कर्मसंन्यासकर्मयोगौ ॥ अतः अन्यतरश्रैष्ठ्यप्रश्नोऽनुपपन्नः ॥ कर्मसंन्यासकर्मयोगयोर्मध्ये कः श्रेयानिति वस्तुतत्वपरिज्ञानाय ममायं प्रश्नः ॥ नान्यतरपरित्यागेन अन्यतरस्यानुष्ठानाय ॥ एकस्मिन्नधिकारिणि उभयोरनयोर्युगपत्संभवायोगात् ॥ इति चेत् अविद्वदधिका-रिककर्मयोगापेक्षया विद्वदधिकारिककर्मसंन्यासः श्रेयानिति विद्वदविद्वद्योग्यताभे-दादेव ज्ञायते ॥ किमर्थं तद्ज्ञानाय प्रश्नः ॥ नहि ज्ञानाज्ञानयोर्मध्ये किं श्रेय इति प्रष्टव्यं ॥ अतः अन्यतरपरित्यागेन अन्यतरानुष्ठानायेव तवायं प्रश्नः इत्येव वाच्यं ॥ अधिकारिभेदेन व्यवस्थितयोरनयोः कर्मयोगसंन्यासयोर्युगपदेकत्र प्रसक्तेरेवाभा-वात् तवायं प्रश्नोऽनुपपन्न एव ॥ त्वंतु अनात्मविदसि ॥ अतस्त्वया कर्मयोग-एवानुष्ठेयः ॥ किमनयोस्तारतम्यविचारेण इति चेत् निवेदयामि ममाशयं ॥ श्रो-तव्यं कृपया ॥ विदुषः कर्मयोगो नास्त्येव ॥ तथा अविदुषः कर्मसंन्यासो ना-स्तीति न वक्तुं शक्यं ॥ अविदुषोऽपि कर्मसंन्याससंभवात् ॥ विदुषः कर्मसंन्या-सवचनैः विदुषः कर्मसंन्यासो विधीयते ॥ नतु अविदुषः कर्मसंन्यासो नास्तीति निषिध्यते ॥ किंच १ 'एतमेव प्रव्राजिनो लोकमिच्छंतः प्रव्रजंति' ॥ २ 'शांतो दांत उपरतस्तितिक्षुः समाहितो भूत्वा आत्मन्येवाऽऽत्मानं पश्येत्' ॥ 'त्यजतैव हि तद्ज्ञेयं त्यक्तुः प्रत्यक् परं पद' ॥ 'सत्यानृते सुखदुःखे वेदानिमं लोकममु च परित्यज्याऽऽत्मानमन्विच्छे'दित्यादिभिरविदुषः कर्मसंन्यासो ज्ञानार्थः श्रूयते ॥ अतः कर्मयोग इव कर्मसंन्यासेऽपि अविदुषः कर्तृत्वमस्ति ॥ अतः कर्मयोगकर्म-संन्यासयोर्द्वयोरपि एकस्मिन्नविदुषि संभवेन तेन तयोर्युगपदनुष्ठानस्याशक्यत्वेन अन्यतरपरित्यागेन अन्यतरस्यैवानुष्ठातव्यत्वात् यच्छ्रेष्ठं तस्यैवानुष्ठेयत्वात् अव-रस्य परित्यागेन श्रेष्ठस्यानुष्ठानार्थमन्यतरश्रैष्ठ्यजिज्ञासया मयायं प्रश्न उपपन्नः । अनात्मज्ञं प्रति उभयोर्विधानादुभयोरप्यावश्यकत्वेन च क्रमादुभावप्यनुष्ठातव्यौ । प्रथममेकमनुष्ठाय पश्चादन्योऽनुष्ठीयतां इति चेत् कः प्रथममनुष्ठेयः कः पश्चात्

१. बृह. ६. ४. २२. २. बृह. ६. ४. २३.

यः श्रेयान् स हि प्रथममुपादेयः इति चेत् अतएव कः श्रेयानिति मम प्रश्नः ॥ अज्ञस्य मम कर्मसंन्यासकर्मयोगौ द्वावप्यनुष्ठेयतया प्रसक्तौ ॥ युगपदनुष्ठातुमशक्यौ ॥ क्रमादनुष्ठेयौ ॥ तयोरिदानीं मया कोऽनुष्ठेयः ॥ इति पृच्छामि ॥ दयया ब्रूहि ॥ १ ॥

वि ॥ हे कृष्ण कर्मणां संन्यासं १ ज्ञानयोगं प्रशंससि ॥ पुनः कर्मणां २ योगं अनुष्ठानं च प्रशंससि ॥ एतयोः ज्ञानयोगकर्मयोगयोर्मध्ये यत् श्रेष्ठं सुनिश्चितं श्रेष्ठत्वेन सम्यक् निर्णीतं तन्मे ब्रूहि ॥ कोऽर्थः प्रश्नस्यास्य इति चेत् द्वितीये प्रथमं कर्मयोगः तेन शुद्धांतःकरणस्य ज्ञानयोगः तेन चात्मावलोकनं इति ज्ञानयोगस्य साक्षादात्मावलोकनसाधनत्वेन प्रशंसा कृता ॥ ३ 'कर्मजं बुद्धियुक्ता हि' ॥ ४ 'यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ॥ तदा गंतासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥ श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला ॥ समाधावचला बुद्धिस्तदा योगमवाप्स्यसि' ॥ इत्यादिना ॥ पुनः तृतीयचतुर्थयोः ज्ञानयोगयोग्येनापि कर्मयोग एव कर्तव्यः ॥ स एव ज्ञानयोगनिष्ठाव्यवधानं विनैव आत्मावलोकनं साधयति ॥ इति कर्मयोगस्य प्रशंसा कृता ॥ ५ 'कर्म ज्यायो ह्यकर्मणः' ॥ इत्यनेन ॥ ६ 'सदृशं चेष्टते इत्यारभ्य ७ 'कामरूपं दुरासदं' ॥ इत्यन्तेन ॥ ८ 'कृत्वाऽपि न निबध्यते ॥' इत्यनेनच ॥ तेन मे संशयः ॥ ज्ञानयोगकर्मयोगयोरुभयोरपि आत्मावलोकनहेतुत्वमुक्तं ॥ आत्मावलोकनार्थं किं ज्ञानयोगः कर्तव्यः उत कर्मयोगः इति ॥ यः श्रेष्ठः स कर्तव्य इति चेत् आत्मावलोकनरूपफलैक्यादन्यतरस्य श्रैष्ठ्यासंभवात् ॥ तर्हि 'यच्छ्रेय एतयो'रिति अन्यतरश्रैष्ठ्यं कथं पृच्छसीति चेत् न फलतः श्रैष्ठ्यं पृच्छामि ॥ किंतु आत्मावलोकनसाधनयोः ज्ञानयोगकर्मयोगयोर्मध्ये कस्यानुष्ठानं सुकरं ॥ कः शीघ्रमात्मावलोकनं साधयेदिति सौकर्यात् शैघ्र्याच्च श्रैष्ठ्यमन्यतरस्य पृच्छामि ॥ पूर्णानंदघन भक्तजनमनःसंकटकर्षणशील कृष्ण कृपया मे वद ॥ १ ॥

१. कर्मणां सम्यक् न्यासः समाप्तिर्यस्मिन् सः कर्मसंन्यासः ज्ञानयोगः ॥ 'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते'॥ इति ह्युक्तम् ॥ २. कर्मणामित्यस्य संन्यासयोगाभ्यामन्वयः ॥ ३. २. ५१. ४. २. ५२. ५३. ५. ३. ८, ६. ३. ३३. ७. ३. ४३. ८. ४. १२.

संजयः ॥ एवं पार्थेन पृष्टो भगवान् सम्यगवगततद्ध्यगूढाशयः तस्य प्रश्नस्योत्तरमाह ॥

श्रीभगवानुवाच

संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ॥
तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते ॥ २ ॥

**संन्यास इति** ॥ संन्यासः कर्मणां योगः कर्मयोगश्च इत्युभौ निश्रेयसं कुरुत इति निश्रेयसकरौ मोक्षहेतू ॥ तयोः मध्ये कमणां संन्यासः कर्मसंन्यासः तस्मात् कर्मयोगः तु एव विशिष्यते ॥ १ ॥

कामादिवर्जनरूपः संन्यासशब्दितो विशेषणांशः कर्मानुष्ठानरूपो विशेष्यांशश्चेत्येतौ द्वावपि मोक्षहेतू ॥ उभाविति किमर्थमिति चेत् ॥ उभौ निश्रेयहेतू उभौ समुदितौ निःश्रेयसहेतू ॥ युगपदनुष्ठातुं शक्यौ च ॥ अतः अन्यतरश्रैष्ठ्यप्रश्नोऽनुपपन्नः ॥ अश्रेष्ठं विहाय श्रेष्ठस्य परिग्रहार्थं हि अन्यतरस्य श्रैष्ठ्यं प्रष्टव्यं ॥ नचात्र अन्यतरपरित्यागः शक्यते कर्तुं ॥ उभयोरप्यावश्यकत्वात् ॥ युगपदनुष्ठातुं शक्यत्वाच्च ॥ अन्यतरप्रहाणाय नायं श्रैष्ठ्यप्रश्नः ॥ युगपदनुष्ठातुं शक्यत्वात् ॥ किंतु वस्तुतत्वपरिज्ञानाय इति चेत् तयोः कामादिवर्जनरूपकर्मसंन्यासकर्मयोगयोर्मध्ये कर्मणां उपयोगी संन्यासशब्दितकामादिपरित्यागरूपो विशेषणांशः यः तस्मात्कर्मानुष्ठानरूपो विशेष्यांश एव [1] श्रेष्ठो भवति ॥ वस्तुतत्वपरिज्ञानाय प्रश्ने क्रियमाणे अभ्युदयहेतुकर्मकरणापेक्षया नरकाद्यनर्थप्राप्तिहेतुकामक्रोधादिवर्जनरूपं संन्यासमेव श्रेष्ठं ब्रूयात् ॥ उभयोर्युगपदनुष्ठातुं शक्यत्वेऽपि युगपदुभयानुष्ठाने श्रमापत्त्या श्रेष्ठं संन्यासमनुतिष्ठामि नावरं कर्मयोगमिति युद्धरूपं कर्म त्यक्तुं शक्यते इति तवाऽऽशयः ॥ नानेन पथा युद्धरूपकर्मयोगाच्चलितुं शक्यं ॥ कर्मयोग-

१. अतएव संन्यासशब्दो न संन्यासाश्रमपरः ॥ तथात्वे संन्यासात्कर्मयोगस्य श्रैष्ठ्यवचनानुपपत्तेः ॥

स्यैव १श्रेष्ठत्वात् ॥ अतः स एवत्वयाऽनुष्ठेयः ॥ तस्मादनुष्ठेयमेव स्वीयं कर्म सर्वैः ॥ २ ॥

अ ॥ कर्मसंन्यासः कर्मयोगश्च इत्येतावुभावपि ज्ञानोत्पत्तिद्वारा मोक्षहेतू ॥ अविद्वत्कर्तृकौ कर्मसंन्यासकर्मयोगौ द्वावपि ज्ञानद्वारा मोक्षहेतुभूतावेव ॥ अत उभावप्यावश्यकौ ॥ सति चैवं किमर्थमन्यतरस्य श्रैष्ठ्यं पृच्छसि ॥ न ह्यावश्यकयोरन्यतरस्य परित्यागो युक्तः ॥ कथं विरुद्धयोरेकदानुष्ठानं संभवतीति चेत् ॥ क्रमादनुष्ठीयेतामुभावपि ॥ तयोर्मध्ये इदानीं मयाऽनुष्ठेयः क इति चेत् तयोः कर्मसंन्यासकर्मयोगयोर्मध्ये कर्मसंन्यासापेक्षया कर्मयोग एव अशुद्धचित्तस्य तवेदानीं श्रेष्ठः ॥ अत इदानीं त्वया कर्मयोग एवानुष्ठेयः ॥ कर्मसंन्यासेऽनधिकारात् ॥ अनधिकारिणा अविदुषा साधनशून्येन सहसा विविदिषया हठात्संन्यासो न कर्तव्यः॥ अविदुषः समकाले कर्तव्यत्वेन प्राप्तयोः कर्मयोगकर्मसंन्यासयोस्तारतम्ये विचार्यमाणे सदसद्विवेकजन्यतीव्रवैराग्यतीव्रमोक्षेच्छायमनियमशमदमाद्यन्तरङ्गसाधनपौष्कल्यरहितात् केवलप्रैषमात्रोच्चारणरूपात् केवलात्संन्यासात् कर्मयोग एव श्रेष्ठः ॥ कर्मयोगः श्रद्धयाऽनुष्ठितः सदसद्विवेकादिसाधनोत्पादनद्वारा संन्यासेऽधिकारमुत्पादयति ॥ अतः संन्यासस्य स्वरूपलाभः कर्मणेति संन्यासात्कर्मयोगस्य श्रैष्ठ्यं ॥ कर्मणा हि ऋणत्रयनिवृत्तिः तज्जन्यः इंद्रादिदेवताप्रसादः ईश्वरप्रसादः इंद्रियप्रसादः चित्तशुद्धिः इत्येवमादीनां ज्ञानसाधनानां संपत्तिः संभवति ॥ अतो निष्प्रमादः कर्मयोगः ॥ सप्रमादः कर्मसंन्यासः ॥ सदसद्विवेकादिसाधनसामग्रीविरहादवशीकृतैरिंद्रियैर्मनसः आकर्षणसंभवात् ॥ उक्तं हि मया ॥ २'इंद्रियाणि प्रमाथीनि हरंति प्रसभं मनः' ॥ इति ॥ कर्मयोगः साक्षाद्वा संन्यासद्वारा वा चित्तशुद्धिद्वारा श्रवणादिभिर्ज्ञानसाधनं भवति ॥ अतः स विशिष्यते ॥ विविदिषया संन्यासस्वीकारेच्छायां सत्यामपि कर्मयोगमनुष्ठाय तेन चित्तशुद्धिवैराग्यादिसाधनवान् भूत्वा संन्यासं कुर्यात् ॥ अतः अशुद्धचित्तस्त्वमिदानीं कर्मयोगमेवानु-

१. संन्यासादित्यनुक्त्वा कर्मसंन्यासादित्युक्त्या नायं कामादिवर्जनरूपः संन्यासः स्वतंत्रः ॥ किंतु कर्मांगभूतः कर्मस्वरूपनिष्पत्त्यर्थः ॥ अंगांगिनोर्मध्ये अंगापेक्षया अंगिनः श्रेष्ठत्वात् कर्मयोगस्य उक्तरूपसंन्यासाच्छ्रेष्ठत्वं युक्तमिति सूच्यते ॥ २. २. ६०.

तिष्ठ ॥ मा ते संन्यासे मतिर्भूयात् ॥ संन्यासो द्विविधः ॥ अविद्वत्संन्यासः विद्वत्संन्यासश्चेति ॥ विद्वत्संन्यासस्तु नात्र प्रश्नोत्तरयोर्विषयः ॥ कर्मयोगाधिकृतेऽविदुषि तस्य अप्रसक्तेः ॥ अविद्वत्संन्यासोपि द्विविधः ॥ विविदिषाख्यज्ञानेच्छासहितः तद्रहितश्चेति ॥ ज्ञानेच्छासहितः संन्यासो विविदिषासंन्यास इत्युच्यते ॥ स च विविदिषासंन्यासाख्यः संन्यासः अनयोः प्रश्नोत्तरयोर्विषयः ॥ निश्रेयसहेतुत्ववचनात् ॥ ज्ञानेच्छारहितस्तु संन्यासः रागद्वेषादिभिः औत्सुक्येन च क्रियमाणः पातित्यहेतुर्भवति ॥ उक्तं हि मया ॥ १ 'न च संन्यसनादेव सिद्धिं समधिगच्छति'॥ इति २ 'मिथ्याचारः स उच्यते'॥ इति च॥ सोऽपि नानयोः प्रश्नोत्तरयोर्विषयः ॥ निश्रेयसहेतुत्ववचनानुपपत्तेः ॥ तस्मात् विविदिषासंन्यासस्य कर्मयोगाच्छ्रैष्ठ्यं मत्वा पृच्छसि ॥ सत्यं ॥ विविदिषासंन्यासः कर्मयोगाच्छ्रेष्ठ एव ॥ तथाऽपि कर्मयोगाकरणे विविदिषासंन्यासस्वीकारानधिकारात् कर्मयोगेन चित्तशुद्धिप्राप्त्यनंतरमेव तत्र अधिकारोदयात् अविरक्ततादशायामस्यां संन्यासापेक्षया कर्मयोग एव तव श्रेयान् ॥ अतः 'कर्मयोगो विशिष्यते' ॥ इत्युच्यते ॥ अस्तु ॥ अविदुषोऽपि विरक्ततादशायां संन्यास एव हि श्रेयान् ॥ अतः कथमुच्यते 'संन्यासात्कर्मयोगो विशिष्यते ॥' इति सामान्येन ॥ इति चेत् अविरक्ततादशायां अविदुषः संन्यासेऽनधिकारात् सन्यासात्कर्मयोगः स्वाधिकारानुगुणः श्रेयानिति युक्तं ॥ विरक्ततादशायां तु अविदुषः कर्मयोगात् संन्यास एव स्वाधिकारानुगुणः श्रेयान् ॥ यस्य यदा यः स्वाधिकारानुगुणः तस्य तदानीं सएव हि श्रेयान् ॥ 'संन्यासात्कर्मयोगो विशिष्यते' ॥ इत्युक्तिस्तु 'नहिनिंदा'न्यायेन कर्मयोगस्तुत्यर्था ॥ इति ज्ञातव्यं ॥ ३ संन्यासकर्मयोगयोर्मध्ये श्रेष्ठं ब्रूहीत्यापाततः प्रश्नस्तव ॥ यद्येकं प्रतिकर्मयोगकर्मसंन्यासावुक्तौ स्यातां तर्हि युगपदनुष्ठानासंभवेन अन्यतरपरित्यागार्थं अन्यतरश्रैष्ठ्यप्रश्नो युज्येत न तथा ॥ किंतु आत्मविदं प्रति संन्यास उक्तः अनात्मविदं भवंतं प्रति कर्मयोग उक्तः ॥ अधिकारिभेदेन तावुभावपि साक्षात् परंपरया वा मोक्षहेतू ॥ अतः उभावपि श्रेष्ठौ ॥ अतः अन्यतरश्रैष्ठ्यप्रश्नोऽनुपपन्नः ॥ न हि राजगृहस्वगृहयोरन्यतरश्रैष्ठ्यप्रश्नो युज्यते ॥

---

१. ३. ४. २. ३. ६. ३. केचित् ॥

स्वगृहपरित्यागेन राजगृहस्वीकारयोग्यताऽभावात्॥ एकस्यैव अज्ञानदशायां कर्मयोगः ज्ञानदशायां कर्मसंन्यासः इति क्रमसमुच्चितयोः कर्मयोगकर्मसंन्यासयोर्मध्ये तवेदानीं संन्यासापेक्षया कर्मयोगः श्रेयान् ॥ अतस्त्वमिदानीं कर्मयोगमातिष्ठ ॥ २ ॥

वि ॥ संन्यासशब्दितो ज्ञानयोगः कर्मयोगश्च इत्युभावपि साक्षात् आत्मावलोकनसाधनभूतौ ॥ तर्हि द्वयोः साम्येन द्वावप्यनियमेन यथेच्छमुपादेयौ स्यातां इति चेत् तयोः ज्ञानयोगकर्मयोगयोर्मध्ये कर्मसंन्यासशब्दितज्ञानयोगापेक्षया कर्मयोग एव विशिष्यते ॥ साक्षादेकफलसाधनयोर्द्वयोरन्यतरस्य श्रैष्ठ्यं कथमिति चेत् सौकर्यात् शैघ्र्यात् अप्रमादत्वाच्च कर्मयोगस्य श्रैष्ठ्यं ॥ अतः तव ज्ञानयोगशक्तत्वेऽपि कर्मयोग एव आत्मावलोकनसाधने श्रेयानुपायः ॥ अतस्त्वया कर्मयोग एवानुष्ठेयः ॥ २ ॥

द्वै ॥ अर्जुनः ॥ यदि कामादिवर्जनरूपसंन्यासापेक्षया कर्मयोग एव श्रेयान् तर्हि स एकएवोपदिश्यतां ॥ किमर्थं कर्मयोगादवरः संन्यासोऽप्युपदिश्यते ॥ अनावश्यकः संन्यासः ॥ कर्मयोगमात्रेण मोक्षसित्धेः ॥ वद ॥

कृष्ण ॥ ज्ञेयः स नित्यसंन्यासी यो न द्वेष्टि न कांक्षति ॥
निर्द्वंद्वो हि महाबाहो सुखं बंधात्प्रमुच्यते ॥ ३ ॥

ज्ञेय इति ॥ यः न द्वेष्टि न कांक्षति सः कर्मयोगी नित्यं सन्यासी संन्यासः अस्यास्तीति संन्यासी संन्यासवानेव ज्ञेयः ॥ हे महाबाहो द्वंद्वेभ्यः निर्गतः निर्द्वंद्वः सः सुखं अनायासेन बंधात् प्रमुच्यते ॥ हि प्रसिद्धमिदं ॥ हि यस्मात् तस्मात् इति वा ॥ ३ ॥

यस्य द्वेषः कामश्च नास्ति यश्च शीतोष्णसुखदुःखादिद्वंद्वनिमित्त हर्षशोकादिरहितः सः नित्यसंन्यासी नित्यं नियमेन संन्यासी संन्यासवान् ज्ञेयः ॥ रागद्वेषशीतोष्णसुखदुःखादिवर्जनमेव संन्यासशब्दार्थः प्रकृते न यत्याश्रमादिः ॥ उक्तरूपसंन्यासवान् यः कर्मयोगी सः प्रकृतिबन्धात् अनायासेन शीघ्रं मुच्यते ॥ संन्यासो न यत्याश्रमः ॥ तथात्वे संन्यासात्कर्मयोगस्य श्रैष्ठ्यवचनमनुपपन्नं ॥ अतः

अत्र संन्यासः कामादिवर्जनमेव ॥ स च कर्मांगभूतः ॥ अंगभूतात्संन्यासात्कर्मयोगः श्रेयानिति श्रैष्ठ्यवचनमुपपद्यते ॥ इति वक्तुं संन्यासशब्दार्थस्य स्पष्टीकरणं कृतं ॥ यदि अकृत्वा संन्यासं कर्मयोगमात्रं क्रियेत तर्हि तन्मात्रेणैव मोक्षस्स्यात् ॥ तथाऽपि कामादिभिः कर्मणां वीर्यं ह्रसते ॥ वीर्यह्रासे च शीघ्रमनायासेन मोक्षो न सिध्येत् ॥ यदि संन्याससहितः कर्मयोगः क्रियेत तर्हि प्रतिबंधकाभावात् कर्म वीर्यवत्तरं भवति ॥ तेन च शीघ्रमनायासेन च मोक्षः सिध्येत् ॥ अत आवश्यक एव विशेषणभूतः कामादिवर्जनरूपः संन्यासः ॥ महाबाहुत्वेन धीरस्त्वं बाह्यशत्रूनिव शमदमादीनंतःशत्रूनपि निग्रहीतुं समर्थोऽसि ॥ औषधसेवनं पथ्यसेवनं चेत्युभयमपि रोगशांतेस्साधनं ॥ अत उभयमप्यावश्यकं ॥ उभयानुष्ठानमसाध्यं इति चेत् अपथ्यवर्जनापेक्षया औषधसेवनमेव विशिष्यते ॥ न केवलापथ्यवर्जनाद्रोगनिवृत्तिः ॥ किंतु औषधसेवनादेव ॥ तर्हि औषधसेवनमात्रेणालमिति चेत् अलमेव तथाऽपि शीघ्रमनयासेन रोगनिवृत्तिर्न स्यात् ॥ अपथ्यसेवनादौषधे वीर्यह्रासे निर्वीर्येण औषधसेवनेन विलंबेन बहुकालमौषधसेवनतदर्थद्रव्यव्ययाद्यायासेन च रोगनिवृत्तिः स्यात् ॥ अतः अपथ्यवर्जनपथ्यसेवनसहितमेव औषधसेवनं आरोग्यकामैः कार्यमिति प्रसिद्धं लोके ॥ तद्वत् प्रकृतिबंधरूपरोगस्य शीघ्रमनायासेन निवृत्तये अपथ्यवर्जनसदृशकामक्रोधादिवर्जनरूपसंन्याससहितं औषधसेवनसदृशं कर्मयोगानुष्ठानमासेव्यतामखिलैः मोक्षकामैरकामैः ॥ २ ॥

अ ॥ अर्जुनः ॥ 'संन्यासः कर्मयोगश्च निःश्रेयसकरावुभा'विति संन्यासस्येव कर्मयोगस्यापि निःश्रेयसहेतुत्वमुक्तं अयुक्तं ॥ 'कर्मणा बध्यते जंतु'रिति कर्मणो बंधकत्वस्मरणात् । अतः कथमिदं ॥ वद ॥ अस्तुवा साम्यं ॥ 'कर्मयोगो विशिष्यते' इति तु कथं ॥ एकफलयोरुपाययोरन्यतरस्य श्रैष्ठ्यासंभवात् ॥

कृष्णः ॥ रागद्वेषादिहीनः १ द्वंद्वातीतश्च भूत्वा यः कर्म करोति सः २ कर्म-

१. द्वंद्वं स्त्रीपुंसयोर्मिथुनं तद्रहितः स्त्र्यादिपरित्यागी सुखं बन्धात्प्रमुच्यते ॥ इति केचित् ॥ द्वंद्वं सत्यानृतयोरात्मानात्मनोः मिथुनं परस्पराध्यासः तद्रहितः ॥ इत्यन्ये ॥ २. कर्मयोगीति कथं लभ्यते इति चेत् प्रकरणात् ॥ सनित्यसंन्यासी इत्येकं पदं ॥ नित्यः कर्मभिः सहितः सनित्यः स चासौ संन्यासी चेति विवक्षणाद्वा ॥

योगी कर्म्यपि नियमेन १संन्यास्येव विज्ञेयः ॥ कथं कर्मी संन्यासी स्यादिति चेत् संन्यासीत्यस्य संन्यासितुल्य इत्यर्थः ॥ सादृश्यादभेदोपचारः ॥ मुखं चंद्र इति वत् ॥ उक्तरूपः कर्मयोगी संन्यासितुल्य इत्युक्त्या यथावदनुष्ठितः कर्मयोगः संन्याससदृशः इति लभ्यते ॥ केन सादृश्यमिति चेत् बंधात्प्रमुच्यते ॥ मोक्षहेतुत्वेन उभयोः सादृश्यं ॥ अतः संन्यासस्येव कर्मयोगस्यापि मोक्षहेतुत्वादुक्तं युक्तं ॥ 'कर्मणा बध्यते जंतु'रिति तु काम्यनिषिद्धकर्मविषयं ॥ अस्तूभयोः साम्यं कथं कर्मयोगो विशिष्यते इति कर्मयोगस्य श्रैष्ठ्यमुक्तमिति चेत् सुखं प्रमुच्यते ॥ सुकरत्वादप्रमादत्वाच्च कर्मयोगस्य तेन शीघ्रमनायासेन मोक्षः सिध्येत् ॥ न तथा अविद्वत्कृतसंन्यासेन ॥ दुष्करत्वात् सप्रमादत्वाच्च विलंबेन आयासेन च मोक्षः सिध्येत् ॥ अतः संन्यासात्कर्मयोगो विशिष्यते इत्युक्तं युक्तम् ॥ ३ ॥

वि ॥ अर्जुनः ॥ संन्यासशब्दितज्ञानयोगस्य निःश्रेयसहेतुत्वमुक्तं युक्तं ॥ कर्मयोगस्य तत्कथं ॥ ज्ञानयोगादवरत्वात् ॥ अस्तु वा साम्यं ॥ कर्मयोगो विशिष्यते इति कथं ॥ साक्षादेकफलसाधनयोरुपाययोरन्यतरस्य श्रैष्ठ्यासंभवात् ॥ ब्रूहि ॥

कृष्णः ॥ आरब्धेन कर्मणा रागद्वेषरहितः द्वंद्वातीतश्च सन् यः यथोक्तं कर्म करोति सः कर्मयोगी नियमेन संन्यासशब्दितज्ञानवानेव ज्ञेयः ॥ कुत इति चेत् यथावत्कर्मयोगकृत् तेन कर्मणैव ज्ञानयोगनिरपेक्षेण साक्षात् ज्ञानयोगनिष्ठाव्यवधानं तत्संपादनायासं च विनैव शीघ्रमनायासेनबंधान्मुच्यते ॥ ज्ञानादवरस्यापि कर्मयोगस्य यथावदतिसम्यगनुष्ठितस्य साक्षादात्मावलोकनसाधनत्वेन साक्षादात्मावलोकनसाधनज्ञानयोगतुल्यत्वात् कर्मिणो ज्ञानिना सादृश्याभिप्रायेण ज्ञानीत्युच्यते ॥ अतो 'निःश्रेयसकरावुभा'विति साक्षादात्मावलोकनसाधनत्वेन ज्ञानकर्मणोस्साम्यमुक्तं ॥ अस्तु साम्यं कर्मयोगस्य श्रैष्ठ्यं कथमिति चेत् सुखं बंधात्प्रमुच्यते ॥ शैघ्र्यात् सौकर्याच्च कर्मयोगस्य श्रैष्ठ्यं ॥ अतः 'कर्मयोगो विशिष्यते' इति युक्तमुक्तम् ॥ ३ ॥

१. अत्र योगस्य विद्वत्संन्याससाम्यमुच्यते स्तुत्यर्थं ॥ यथावत्कर्मयोगमनुतिष्ठन् तेन विद्वत्संन्यासेनेव सुखं बंधात्प्रमुच्यते॥ योगस्य अविद्वत्कृतविविदिषासंन्याससाम्यमुच्यते॥ बधात्प्रमुच्यते इति॥ सुखं प्रमुच्यते इति ततो विशेषः ॥ इति बहवः ॥

अ ॥ अर्जुनः ॥ कर्मयोगी बंधात्प्रमुच्यते इति 'संन्यासः कर्मयोगश्च निःश्रेयसकरावुभा'विति च कर्मयोगस्य मोक्षसाधनत्वमुक्तं ॥ तत्कथं ॥ १'नान्यः पंथा अयनाय विद्यते ॥ २'विद्यैवतुनिर्धारणा'दिति ज्ञानस्यैवमोक्षहेतुत्वप्रतिपादक श्रुतिसूत्रविरोधात् ॥ ज्ञानद्वारेति चेत् ३'अग्निमुग्धो ह वै धूमतांतः ॥ स्वं लोकं न प्रति प्रजानाती'ति कर्मणो ज्ञानहेतुत्वाभावप्रतिपादकश्रुत्या विरोधात् ॥ अतः कथं मोक्षसाधनं कर्मेत्युच्यते ॥ किंच ४ कामादिवर्जनरूपसंन्यासस्यैव मोक्षहेतुज्ञानसाधनत्वमुच्यते तत्रतत्र ॥ अतः ज्ञानाहेतुकर्मयोगापेक्षया ज्ञानहेतुभूतसंन्यासस्य श्रेष्ठत्वे वाच्ये तस्मादवरत्वं कथमुच्यते ॥ ब्रूहि ॥

कृष्णः ॥ सांख्ययोगौ पृथग्बालाः प्रवदंति न पण्डिताः ॥
एकमप्यास्थितः सम्यगुभयोर्विंदते फलं ॥ ४ ॥

यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ॥
एकं सांख्यं च योगं च यः पश्यति स पश्यति ॥ ५ ॥

सांख्येति ॥ सांख्यं च योगश्च सांख्ययोगौ ज्ञानयोगकर्मयोगौ पृथक् साध्यसाधनभावहीनौ भिन्नफलकौ वा बालाः प्रवदंति ॥ पण्डिताः न प्रवदंति ॥ उभयोर्मध्ये एकमपि सम्यक् आस्थितः अनुतिष्ठन् उभयोः फलं विंदते प्राप्नोति ॥ सांख्यं एषामस्तीति सांख्याः ज्ञानिनः तैः यत् स्थानं प्राप्यते तत् मोक्षस्थानं योगः एषामस्तीति योगाः कर्मयोगिनः तैरपि गम्यते प्राप्यते ॥ सांख्यं च योगं च यः एकं एकफलकं पश्यति सः पश्यति ज्ञानीत्यर्थः ॥ ४ ॥ ५ ॥

कर्मणः साक्षान्मोक्षहेतुत्वं नास्ति ॥ ज्ञानद्वारा मोक्षसाधनत्वमस्ति ॥ अतः निश्रेयससाधनत्वमुक्तं युक्तं ॥ उक्तश्रुत्या ज्ञानयोगकर्मयोगयोः साध्यसाधनभावो

१. तै. आ ३. १२. अत्र 'मावः पदव्यः पितरस्मदास्थिताः या यज्ञशालाऽऽसनधूमवर्त्मनां' ॥ (भाग. ४. ४.) इति श्लोकोऽनुसन्धेयः ॥ २. ३. ३. ४८. ३. तै. का. १. ११. ४. अत्र, 'न तस्य तत्वग्रहणाय साक्षात् वरीयसीरपि वाचः समासन् ॥ स्वप्ने निरुक्तया गृहमेधसौख्यं न यस्य हेयानुमितं स्वयं स्यात्' ॥ (भाग. ५. ११.) इति श्लोकोऽनुसन्धेयः ॥

नेति केचिद्वदंति इति चेत् सांख्ययोगौ ज्ञानयोगकर्मयोगौ पृथक् साध्यसाधन-भावहीनौ इति बाला वदंति ॥ पण्डिता न वदन्ति ॥ अतः कर्म ज्ञानं प्रति साधनमेव ॥ कुत इति चेत् उभयोर्मध्ये एकं सम्यगास्थितोऽपि फलं विंदते ॥ एकं सम्यगाश्रितः उभयोरपि फलं विंदते ॥ किमुभयोः फलमिति चेत् मोक्षः ॥ यत् मोक्षस्थानं १ सांख्यशब्दितज्ञानयोगवद्भिः प्राप्यते तन्मोक्षस्थानं २ योगशब्दित-कर्मयोगवद्भिरपि गम्यते ॥ अतः ज्ञानयोगः कर्मयोगश्च मोक्षैकफलकौ ॥ उभयमेक-फलकं यः पश्यति स एव पश्यति ॥ अन्यस्तु न पश्यति ॥ अज्ञानी बालः॥ एतावताऽपि ज्ञानकर्मणोः कथं साध्यसाधनभाव उक्तो भवति इति चेत् अत्र ज्ञानकर्मणोरुभयोरपि मोक्षहेतुत्वमुच्यते ॥ तत्र ३ 'अपामसोमममृता अभूम' इति श्रुत्यनुरोधात् कर्मणो मोक्षहेतुत्वं यदुच्यते तत् त्वदुक्तश्रुतिसूत्रविरुद्धम् ॥ अतः ४ 'भाक्तंवाऽनात्मवित्वात् तथाहि दर्शयति'॥ इति सूत्रानुसारेण मोक्षहेतुज्ञान-जननद्वारा मोक्षहेतुत्वं वाच्यं ॥ तादृशमोक्षहेतुत्वमेव 'कर्मणा ज्ञानमातनोति ज्ञानेनामृतीभवति अथामृतानि कर्माणि' इति श्रुत्या कर्मण उच्यते ॥ अतः ज्ञानयोगकर्मयोगौ साध्यसाधनभावापन्नावेव ॥ अतः तौ साध्यसाधनभावहीनौ वदंतो बालाः न पण्डिताः ॥ अतस्तद्वचनमकिंचित्करम् ॥ अतः ज्ञानं साक्षान्मो-क्षसाधनं ॥ कर्म तु ज्ञानद्वारा मोक्षसाधनं ॥ अतः साक्षान्मोक्षसाधनज्ञानवत् परंपरया तत्साधनभूतकर्मणोऽपि मोक्षसाधनत्वानपायात् 'निश्रेयसकरावुभा'-विति मोक्षसाधनत्वमुक्तं ॥ 'अग्निमुग्धो ह वै धूमतांत' इत्यादिकं तु काम्यकर्म-विषयम् ॥ अतो न विरोधः ॥ बाला वदंतीत्युक्त्यैव पण्डिता न वदन्तीति लाभे पंडिता न वदन्तीति पुनरुक्तिः दार्ढ्याय ॥ संन्यासस्येव कर्मणोऽपि उक्तरीत्या ज्ञानसाधनत्वात् तयोर्मध्ये कर्मयोगस्य अङ्गित्वात् संन्यासस्य तदंगत्वात् अंगस्य संन्यासस्य अंगिभूतकर्मयोगापेक्षया अवरत्वोक्तिः संन्यासादंगादंगिनः कर्मयोगस्य श्रैष्ठ्योक्तिश्च युक्ता॥ अतो न कोऽपि विरोधः ॥

संन्यासयोगशब्दौ यत्याश्रमगृहस्थाश्रमपरौ मत्वा उभयोरेकत्रसमावेशायोगात्

१. साख्यं एषामस्तीति सांख्याः ॥ २. योगः एषामस्तीति योगाः अच्प्रत्ययः ॥ ३. तै. सं. ३. ५. ४. ३. १. ७.

अन्यतरश्रैष्ठ्यं ब्रूहि इति मयाचोदिते न मदुक्तौ संन्यासयोगौ यत्याश्रमगृहस्थाश्रमौ किंतु कामादिवर्जनकर्मयोगौ ॥ अतएव संन्यासात्कर्मयोगस्य श्रैष्ठ्यवचनमुपपद्यते इति समाहितं त्वया ॥ अधुना संन्यासयोगशब्दौ यत्याश्रमप्रतिनियतज्ञानयोग-गृहस्थाश्रमप्रतिनियतकर्मयोगपरौ॥ तयोरेकत्रसमावेशायोगादन्यतरस्य श्रैष्ठ्यं ब्रूही-ति मया पुनश्चोद्यते इति चेत् ज्ञानयोगकर्मयोगयोरेकस्मिन्नधिकारिणि न्यूनाधिक-भावेन समावेशसंभवादुभयोरावश्यकत्वेन अन्यतरश्रैष्ठ्यप्रश्नो न घटेत इति ब्रवी-मि ॥ ज्ञानकर्मयोगौ पृथक् ॥ यतिगृहिरूपाधिकारिभेदप्रतिनियतत्वेन भिन्नाधिका-रिकौ इति बाला वदंति न पंडिताः ॥ उभयोर्मध्ये एकमपि ज्ञानं कर्म वा सम्यक् आश्रित एव फलं विंदते ॥ नासम्यगास्थितः ॥ ज्ञानस्य सम्यक्त्वं कर्मयोग-साहित्यम् ॥ कर्मयोगस्य सम्यक्त्वं ज्ञानयोगसाहित्यम् ॥ अतः एकस्मिन्नधिका-रिणि ज्ञानकर्मणोर्द्वयोरपि न्यूनाधिकभावेन समावेशो युक्तः ॥ अतएव ज्ञानवद्भिः यत् स्थानं प्राप्यते तदेव योगवद्भिरपि प्राप्यते ॥ गृहस्थाश्रमप्रतिनियतकर्म-योगस्य ज्ञानयोगसमावेशाभावे ज्ञानिप्राप्यस्थानप्राप्तिः कर्मिणो न घटेत ॥ अतः ज्ञानं कर्म च एकस्मिन्नधिकारिणि समाविष्टं यः पश्यति स एव पण्डितः ॥ यद्युभयत्र उभयं स्यात् तर्हि ज्ञानी कर्मी इति व्यवस्था कथमिति चेत् न्यूनाधिक-भावात् क्षीरनीरन्यायेन कर्मविस्तारवान् गृही ज्ञानविस्तारवान् यतिः इति व्यव-स्थोपपत्तिः ॥ उक्तं चेदं मया ॥ १ 'ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनां' ॥ इत्यनेन ॥ अतोपि संन्यासयोगौ कामादिवर्जनकर्मयोगावेव ॥ तावुभावप्यावश्यकौ ॥ तयोर्मध्ये कर्मयोग एव श्रेयान् ॥ तस्य संन्यासप्साहित्ये वीर्यमधिकं भवति ॥ अतः संन्यासेनांगेन सह अंगी कर्मयोगोऽनुष्ठेयः ॥ ४ ॥ ५ ॥

अ ॥ 'संन्यासः कर्मयोगश्च निश्रेयसकरावुभा'विति 'कर्मयोगी सुखं बन्धात्प्रमुच्यते' इति च यदुक्तं कर्मयोगस्य मोक्षसाधनत्वं तदनुपपन्नम् ॥ न हि संन्यासस्येव कर्मणोमोक्षहेतुत्वं संभवति ॥ कुत इति चेत् यथा कर्मतत्संन्यासयोः भिन्नपुरुषप्रतिनियतयोः भिन्नावस्थाप्रतिनियतयोर्वा स्वरूपे विरोधः तथा फलेऽपि विरोध उचितः ॥ अतः फलैक्यासंभवात् कर्मणोऽपि

१. ३. ३.

मोक्षसाधनत्वं मत्वा 'निश्रेयसकरावुभा' विति 'कर्मो बंधात्प्रमुच्यते इति च वचनमयुक्तं ॥ किं ब्रवीषि ॥

कृष्णः ॥ संन्यासकर्मयोगौ द्वावपि मोक्षरूपैकफलकावेव ॥ अतः उक्तं युक्तं ॥ फलभेदं केचिद्वदंतीति चेत् सांख्यं संन्यासः १सांख्यशब्दो ज्ञानवाची लक्षणया तदंगक २संन्यासपरः ॥ संख्या ज्ञानं तां वहति अन्तरंगसाधनतया इति सांख्यः संन्यासः ॥ सम्यक् ख्यायते प्रतिपाद्यते इति सांख्यं परं ब्रह्म तत्प्रापकत्वात्सांख्यः संन्यासः सांख्यं ज्ञानं तत्सहितः सांख्यः संन्यासः योगः समत्वबुद्धियोगः तत्सहितः योगः कर्मयोगः उभयत्र अस्यास्तीत्यर्थकोऽच्प्रत्ययः ॥ संन्यास कर्मयोगयोरेव उक्तविशेषणसंयोजनेन सांख्ययोगशब्दाभ्यां निर्देशः ॥ तौ पृथक् फलेन भिन्नौ भिन्नफलकौ इति बाला वदंति ॥ न पंडिताः ॥ कुत इति चेत् उभयोरनयोर्मध्ये एकं ३वा सम्यगास्थितः अनुतिष्ठन् उभयोर्यत्फलं साक्षाद्ज्ञानस्य तदङ्गकसंन्यासस्य परंपरया च कर्मयोगस्य मोक्षरूपं तत्प्राप्नोति ॥ तदेव सम्यगुच्यते शृणु ॥ यत् स्थानं तिष्ठत्यस्मिन् न कदापि च्यवते इति व्युत्पत्या मोक्षाख्यं स्थानं ॥ तिष्ठति सदा एकरूपेण न कदाऽपि क्वचिदपि किंचिदपि विकरोतीति व्युत्पत्त्या अविक्रियमखंडैकरसं स्वात्मस्वरूपं वा ४सांख्यैः सन्यासवद्भिः प्राप्यते तदेव स्थानं योगैः कर्मयोगवद्भिरपि ज्ञानद्वारा आप्यते ॥ अस्यास्तीत्यर्थे अच्प्रत्ययः॥ सांख्यैः प्राप्यते योगैः आप्यते इत्युक्त्या सांख्यानां साक्षात् योगानां परंपरयेति सूच्यते ॥ संन्यासं कर्मयोगं च उक्तरीत्या मोक्षैकफलकं यः पश्यति स एव ज्ञानी ॥ फलभेदं पश्यन् मूढः ॥ अत एव पृथक् प्रवदन्तो बालाः न पंडिता इत्युक्तं ॥

१. सं एकीभावेन जीवपरमात्मानौ ब्रह्मैवाहमिति ख्याप्येते प्रकाश्येते अनया इति संख्या ज्ञानं ॥ २. अत्र, संन्यासो विद्वत्संन्यासः नित्यसंन्यासीत्यत्र प्रस्तुतः ॥ इति केचित् " विविदिषासंन्यासाख्यः अंगसंन्यासः ॥ वहति प्रापयति ॥ उभयोः पलं ज्ञानद्वारा ॥ विदते ज्ञानद्वारा ॥ प्राप्यते गम्यते ज्ञानद्वारा ॥ एकं ज्ञानद्वारा मोक्षरूपैकफलकं ॥ इति केचित् ॥ सर्वमप्येवं नेयं ॥ इति बहवः ॥ ३. अपिशब्दार्थः ॥ ४. 'ज्ञानयोगेन सांख्याना 'मित्यत्रेव सांख्यं निर्विशेषं ब्रह्म तद्विदंतीति सांख्याः ज्ञानिनः संन्यासिनः तैः ॥ (३. ३.)

अतः संन्यासकर्मयोगयोः साक्षात् ज्ञानद्वारा च मोक्षहेतुत्वात् निःश्रेयसकरावुभा-वित्याद्युक्तं युक्तम् ॥ ४ ॥ '५ ॥

वि ॥ अर्जुनः ॥ ' संन्यासः कर्मयोगश्च निश्श्रेयसकरावुभा'विति ज्ञानयोग-कर्मयोगयोः साक्षान्निश्रेयसशब्दिताऽऽत्मावलोकनसाधनत्वमुक्तं ॥ कर्मयोगी बंधा-त्प्रमुच्यत इति कर्मयोगस्य साक्षान्मोक्षशब्दितात्मावलोकनसाधनत्वमुक्तं ॥ तत्कथं ज्ञानयोगः साक्षादात्मावलोकनं साधयति ॥ कर्मयोगस्तु ज्ञानद्वारा इति हि वदंति ॥ द्वितीये त्वयाऽपि तथाह्युक्तं ॥ सतिचैवं कर्मयोगस्य साक्षादात्मावलोकनसाधनत्वं कथमुच्यते ॥ वद ॥

कृष्णः ॥ सांख्यं ज्ञानयोगः संख्या बुद्धिः तयाऽवधारणीयं आत्मतत्वं सांख्यं तद्विषयकं ज्ञानं सांख्यमिति व्युत्पत्तिः ॥ योगः कर्मयोगः तौ पृथक फलतो भिन्नौ ये प्रवदंति कर्मयोगस्य फलं ज्ञानयोगः तस्य फलं आत्मावलोकनमिति फलभेदं ये वदंति ते बालाः न पंडिताः ॥ बालाः प्रवदंति पंडिता न प्रवदंति ॥ कुत इति चेत् उभयोरनयोर्मध्ये एकं आस्थितोपि उभयोरनयोः फलं आत्माव-लोकनरूपं प्राप्नोति ॥ यत् स्थानं आत्मावलोकनरूपं फलं सांख्यैः ज्ञानिभिः सांख्यं आत्मज्ञानशास्त्रं तद्विदंतीति वा संख्या बुद्धिः तस्या इमे तन्निष्ठा इति वा सांख्यं आत्मतत्वं विदंतीति वा व्युत्पत्तिः ॥ प्राप्यते तदेव आत्मावलोकनरूपं फलं योगैः कर्मयोगवद्भिरपि प्राप्यते ॥ योगशब्दात् अस्यास्तीत्यर्थे अच्प्रत्ययः॥ अतः सांख्यं ज्ञानयोगं च कर्मयोगं च एकं एकफलकं यो जानाति स एव ज्ञानी ॥ अन्यस्तु मूढः ॥ अत एव ये वदंति ते बाला इत्युक्तं ॥ अतो ' निःश्रेयसकरा-वुभा'विति, कर्मयोगस्य साक्षादात्मावलोकनसाधनत्वमुक्तं युक्तं ॥ आत्मावलोकन-रूपं परोक्षज्ञानफलं परोक्षज्ञानं विनैव सम्यगनुष्ठितेन कर्मयोगेनैव लभ्यते ॥ अतः समानफलः सुकरः शीघ्रश्च कर्मयोग एव आत्मावलोकनार्थं ज्ञानयोगा-धिकृतेनापि कर्तव्यः ॥ ज्ञानयोगिभिर्ज्ञानयोगेन लभ्यं यत्फलं तत् ज्ञानयोगरहितैः कर्मयोगिभिः कर्मणैव कथं लभ्येत इति चेत् ज्ञानं कर्म वा स्वयं फलं दातुं नालं जडत्वात् ॥ किंतु स्वविषयकज्ञानेन स्वविषयककर्मणा वा सन्तुष्टः फलदाता

प्रभुरीश्वरः ज्ञानानुगुणं कर्मानुगुणं वा फलं ददाति ॥ वक्ष्यते च ॥ १ 'यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततं ॥ स्वकर्मणा तमभ्यर्च्य सिद्धिं विंदति मानवः' इति ॥ यदि प्रभोरीश्वरस्य ज्ञानेनेव विनैव ज्ञानं सम्यक्कृतेन कर्मणेव सन्तोषः स्यात् तदा तेन कर्मणैव विनैव ज्ञानयोगव्यवधानं विनैव तत्संपादनाऽऽयासं ज्ञानफलं ददाति ॥ तदा कर्मैव ज्ञानाकारं भवति ॥ इदमेवोक्तं मया ॥ 'ज्ञेयः स नित्यसंयासी'ति ॥ ज्ञानैकलभ्यं फलं विनैव ज्ञानव्यवधानं तत्संपादनाऽऽयासं च कर्मिणे कथं दीयते इति चेत् मैवं दातव्यमिति फलदातारमीश्वरं को निवारयितुमीष्टे॥ कस्यांचिदास्थान्यां कश्चित् कस्याश्चित् परीक्षायाः फलभूत उद्योगो वर्तते जाततत्परीक्षपुरुषैकलभ्यः ॥ कश्चिदवरोऽधिकृतः असंजाततत्परीक्षः अहर्निशं यथावत् स्वविहितकर्मकृत् तेनैव कर्मणा लब्धवरिष्ठाधिकृतप्रभुप्रसादः तमुद्योगं तां परीक्षां तद्व्यवधानं तत्संपादनायासं च विनैव तेनैव कर्मयोगेन सन्तोषितस्य वरिष्ठस्य फलदातुः प्रभोः प्रसादेन लभते ॥ तस्य यथावदनुष्ठितं कर्मैव परीक्षाकारतामापद्यते ॥ तथा कर्मणो वीर्यवत्त्वे तदेव कर्म साक्षात् ज्ञानफलसाधनायालं ॥ कर्मणोवीर्यवत्वाभावे तस्य ज्ञानयोगप्राप्यफलसाधनसामर्थ्याभावात् महताऽऽयासेन ज्ञानं लब्ध्वा विलंबेन तत्फलं प्राप्तव्यं ॥ द्वितीये कर्मणा ज्ञानं तेन चाऽऽत्मावलोकनं इत्युक्तिः साधारणकर्मविषया ॥ तृतीयचतुर्थयोः विनैवज्ञाननिष्ठाव्यवधानं कर्मणैव साक्षादात्मावलोकनमित्युक्तिस्तु सांगोपांगतया यथावदनुष्ठितवीर्यवत्तरकर्मविषया॥ कथं ज्ञानविधुरेण कर्मणा ज्ञानफलं प्राप्येत इति चेत् २ 'व्यवसायात्मिका बुद्धिरेका'॥ ३ 'कर्मण्यकर्म यः पश्येत्' इत्याद्युक्तरीत्या निवृत्तिकर्मणोऽतर्गतज्ञानकत्वादंतर्गतं अगभूतं यत् ज्ञानं तदेवांगिभूतकर्मयोगमहिमभूम्ना अमहदपि महदिव महत्फलं साधयितु शक्नोति॥ करोति हि तिमिरनिरसनं अमहानणुरङ्गभूतः अङ्गिभूतमहामहिममिहिर महिम्ना ॥ अतः अन्तर्गतज्ञानकं निवृत्तिकर्मैव यथावदनुष्ठितं साक्षादेवाऽऽत्मावलोकनसाधनं ॥ अत उक्तं युक्तं ॥ कर्मयोगे प्रवृत्तस्य तस्मिन्नेव अङ्गतया ज्ञानयोगस्य सत्वात् न पृथक् ज्ञानयोगापेक्षा ॥ ज्ञानयोगे प्रवृत्तस्य तु तदर्थं हेतुतया कर्मकरणम् ॥ ४ तदानीमपि

१. १८. ४६. २. २. ४१. ३. ४. १८. ४. ज्ञानयोगदशायामपि ॥

विहितकर्मानुष्ठानमित्युभयथा कर्मापेक्षा ॥ अतः कर्मयोग एव ज्यायान् ॥ इदमेवोक्तं मया ॥ 'कर्म ज्यायो ह्यकर्मण' इति ॥ तस्मात्त्वं कर्मैव कुरु ॥ ४ ॥ ५ ॥

अर्जुनः ॥ कर्मयोगस्येव संन्यासस्यापि ज्ञानसाधनत्ववदनादुभयोर्ज्ञानद्वारा मोक्षसाधनत्वेन 'निश्रेयसकरावुभा'वित्युक्तं युक्तं ॥ संन्यासस्य कर्मयोगादवरत्वं कथं ॥ अंगत्वादवरत्वमिति चेन् साक्षात् एकफलसाधनयोर्द्वयोः अङ्गाङ्गिभावो वा कथं ॥ ब्रूहि ॥

कृष्णः ॥ संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः ॥
योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति ॥ ६ ॥

**संन्यासस्त्विति** ॥ महांतौ बाहू यस्य सः महाबाहुः हे महाबाहो पार्थ न योगः अयोगः तस्मिन् अयोगतः योगस्य अभावे सन्यासः आप्तुं दुःखमेव ॥ दुःखं आप्तुमेव ॥ योगेन कर्मयोगेन युक्तः मुनिस्सन् न चिरेण शीघ्रं ब्रह्म अधिगच्छति ॥ ६ ॥

अयोगतः कर्मयोगाभावे केवलसंन्यासस्तु दुःखं प्राप्तुमेव साधनं भवति ॥ नतु ज्ञानद्वारा मोक्षाय ॥ १ मुनिः कर्मयोगयुक्तः अङ्गतया कामादिवर्जनरूपसंन्यासवांश्चेत् तेनसांगेन संन्याससहितस्वकर्मणा नचिरेण शीघ्रं परमात्मानं सम्यक् जानाति प्राप्नोति च ॥ सति कर्मणि संन्यासस्य ज्ञानद्वारा मोक्षसाधनता ॥ असति कर्मणि दुःखमात्रहेतुता ॥ इति संन्यासस्य योग्यतासिध्यर्थं कर्ममुखनिरीक्षणापेक्षत्वेन कर्मयोगादवरत्वं संन्यासस्य तस्मात्कर्मयोगस्य वरत्वं च युक्तम् ॥

'यं संन्यासमिति प्राहुर्योगं तं विद्धि पांडवे'ति वक्ष्यमाणयोगांगत्वरूपयोगत्वाभावे ॥ भावप्रधानोनिर्देशः ॥ संन्यासस्तु दुःखं प्राप्तुमेव ॥ योगयुक्तो मुनिः ब्रह्म न चिरेणाधिगच्छति ॥ अंगन संन्यासेन अंगिना कर्मयोगेन च

१. 'स हि लोके मुनिर्नाम यः कामक्रोधवर्जितः' ॥ इति प्रमाणवचनम् ॥

युक्तः शीघ्रं परमात्मानं प्राप्नोति ॥ अंगस्य अंगिनं विना साधनत्वमेव नास्ति ॥ अङ्गिनः अङ्गं विना वीर्यवत्त्वं नास्ति ॥ अतः अंगांगिभूतौ संन्यासकर्मयोगावुभौ समुदितावेव मोक्षहेतुः ॥ अतः संन्याससहितमेव कर्मैव त्वया कर्तव्यं ॥ सुख-हेतुकर्मकरणासमर्थेन कामक्रोधौ वर्जयित्वा दुःखं सहमानेन परैः परिभूयमानेन स्थातव्यं ॥ त्वं समर्थोऽसि ॥ अतः सुखहेतुभूतं कर्म कर्तव्यमेव त्वया ॥ ६ ॥

अ ॥ अर्जुनः ॥ ज्ञानिभिः प्राप्यं यत् तदेव कर्मिभिरपि ज्ञानतत्पूर्वकसं-न्यासद्वारा प्राप्यत इत्युक्तं ॥ तर्हि संन्यासस्य साक्षात्साधनत्वेन परंपरासाधना-त्कर्मयोगाच्छ्रैष्ठ्यमुचितं ॥ कथं संन्यासात्कर्मयोगो विशिष्यत इत्युच्यते ॥ वद ॥

कृष्णः ॥ हे पार्थ कर्मिणा परमार्थसंन्यासद्वारैव मोक्षस्य प्राप्तव्यतया कर्म-योगापेक्षया परमार्थसंन्यासशब्दितमोक्षसाधनविद्वत्संन्यास एव श्रेयान् ॥ कथं तर्हि संन्यासात्कर्मयोगस्य श्रैष्ठ्योक्तिरिति चेत् अविद्वत्कर्तृकयोः कर्मसंन्यासकर्म-योगयोर्मध्ये कः श्रेष्ठ इति त्वदीयप्रश्नस्य अविद्वत्कर्तृकसंन्यासापेक्षया कर्मयोगः श्रेयानिति प्रतिवचनमुक्तं मया ॥ न परमार्थसंन्यासात्कर्मयोगस्य श्रैष्ठ्यमुक्तं ॥ परमार्थसंन्यासस्तु मोक्षं प्रति साक्षादुपायत्वात् कर्मयोगापेक्षया श्रेष्ठ एव ॥ स एव मोक्षोपायत्वाद्योगः स्यात् इति चेत् स एव मुख्यो योगः ॥ तर्हि कथं कर्म-योगे योगशब्द इति चेत् योगार्थत्वाद्योगशब्दः ॥ योगशब्दितपरमार्थसंन्यास-हेतुत्वं कर्मयोगस्य कथमिति चेत् अयोगतः कर्मयोगाभावे संन्यासः परमार्थ-संन्यासः दुःखमाप्तुं आप्तुं दुःखं आप्तुं अशक्य एव ॥ कर्मयोगयुक्तः मुनिः मननशीलस्सन् ब्रह्म उत्तमत्वेन परब्रह्मसदृशं अतएव ब्रह्मशब्देनोच्यमानं पर-मार्थसंन्यासं शीघ्रं प्राप्नोति ॥ परत्वेन चतुर्मुखब्रह्मसादृश्यात् संन्यासं तद्वा-चकपुंलिंगब्रह्मशब्देन श्रुतिरप्याह ॥ अतः ब्रह्म संन्यास एव ॥ अतः योगशब्दित-परमार्थसंन्यासार्थत्वाद्योगः कर्मयोगः ॥ मुख्योपायस्तु परमार्थसंन्यास एव ॥ अतः कर्मयोगाच्छ्रेष्ठ एव सः ॥ इति न कोऽपि विरोधः ॥ संन्यासात्कर्मयोगस्य श्रैष्ठ्योक्तेरविद्वत्संन्यासविषयत्वादुक्तं युक्तम् ॥

१ अर्जुनः ॥ कर्मयोगिभिः ज्ञानांगसन्यासद्वारा ज्ञानमूलकपरमार्थसंन्या-

१. केचित् ..

सद्द्वारा वा मोक्षस्थानं प्राप्यत इत्युक्तं ॥ कर्मिभिरपि अंततः संन्यासस्यैव शरणीकरणीयत्वे स एव कुतः प्रथमं नाश्रयणीयः ॥ किमर्थमुभयानुसरणप्रयाससेवनं ॥ ब्रूहि ॥

कृष्णः ॥ हे पार्थ अयोगतः कर्मानुष्ठानाभावे संन्यासः अंगभूतः अंगिभूतो वा आप्तुं दुःखं प्राप्तुमशक्य एव ॥ कर्मयोगलब्धशुद्धिनैव पुंसा प्राप्तुं शक्यः ॥ कर्मयोगयुक्तः मुनिः संन्यासी भूत्वा परब्रह्म शीघ्रं जानाति प्राप्नोति च ॥ अंततः शरणीकरणीयं संन्यासं आदावेव शरणीकुर्मः इति अकृत्वा कर्मयोगं हठात्संन्यासे क्रियमाणे तेन संन्यासेन उभयभ्रष्टतामापद्यते ॥ एतदेवोक्तं मया ॥ १'न च संन्यासनादेव सिद्धिं समधिगच्छति' ॥ २'मिथ्याचारस्स उच्यते' ॥ इत्यत्र ॥ अतः कर्मयोगं कृत्वा तेन लब्धचित्तशुद्धिनैव पुंसा ज्ञानार्थं ज्ञानपूर्वकं वा संन्यासः कार्यः ॥ अतः कर्मयोगी संन्यासद्वारा मुक्तिमाप्नोतीति निर्बाधः पन्थाः ॥

३ अर्जुनः ॥ अकृत्वा कर्मयोगं कुतो न संन्यास आश्रयणीयः ॥ वद ॥

कृष्णः ॥ योगः चित्तशुद्धिः तदभावे संन्यासः आप्तुं दुःखं प्राप्तुमशक्यः ॥ मुनिः मननवान् इदानीं मया कर्मैव कर्तव्यं इत्यालोचनवान् गृही कर्माधिकृतः कर्म कृत्वा कर्ममूलकयोगशब्दितचित्तप्रसादयुक्तः ब्रह्म परमार्थसंन्यासं प्राप्नोति ॥ मुनिः संन्यासी भूत्वा ब्रह्म परब्रह्म अधिगच्छति ॥ आत्मत्वेन अहंब्रह्मेत्यनुसन्दधाति ॥ तेन ब्रह्म प्राप्नोति ॥ ब्रह्मैव भवति ॥

वि ॥ अर्जुनः ॥ 'एकं सांख्यं च योगं च यः पश्यति स पश्यति' ॥ इति ज्ञानकर्मणोरुभयोरपि साक्षादात्मावलोकनसाधनत्वं समर्थ्य 'संन्यासः कर्मयोगश्च निःश्रेयसकरावुभा'विति यदुक्तं तद्युक्तं इति समाहितं ॥ अस्तु एतावता साम्यमायातं ॥ 'तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते' ॥ इति कर्मयोगस्य श्रैष्ठ्यवचनं कथं ॥ को विशेषः ॥ वद ॥

कृष्णः ॥ हे पार्थ कर्मयोगाभावे ज्ञानयोगः प्राप्तुं दुःखं प्राप्तु-

१. ३. ४. २. ३. ६. ३. अन्ये ॥

म¹शक्यः ॥ तुशब्दः कर्मयोगस्य ज्ञानयोगाद्विशेषं सूचयति ॥ स क इति चेत् कर्मयोगयुक्तः तेन आत्ममननशीलः सुखेन कर्मयोगं साधयित्वा अल्पेन कालेन ब्रह्म परिशुद्धात्मस्वरूपं अधिगच्छति साक्षात्करोति ॥ आत्मावलोकनरूपं फलमाप्नोति ॥ ज्ञानयोगयुक्तस्तु महता दुःखेन ज्ञानयोगं साधयित्वा तेन विलंबेन आत्मानं साक्षात्करोति ॥ कर्मयोगे प्रवृत्तस्य ज्ञानयोगापेक्षा नास्ति ॥ अंतर्गतं ज्ञानमेवालं ॥ ज्ञानयोगे प्रवृत्तस्य ज्ञानयोगस्वरूपनिष्पत्त्यर्थं कर्मयोगापेक्षा ॥ कर्मयोगाभावे ज्ञानयोगस्वरूपस्यैवासिद्धेः ॥ कर्मयोगः सुसाधः ॥ अविलंबेन फलप्रदश्च ॥ ज्ञानयोगः दुःसाधः विलंबेन फलप्रदश्च ॥ अयमेवविशेषः ॥ विशेषोऽयं 'ज्ञेयस्स नित्यसंन्यासी'त्यत्र सूचितः ॥ अत्र स्पष्टं विवृतः ॥ विशेषस्यास्य सत्वात् साम्येऽपि 'कर्मयोगो विशिष्यत' इत्युक्तं युक्तं ॥ ६ ॥

द्वै ॥ अर्जुनः ॥ संन्यासेन सह कर्म कुर्वन् सुखं बंधात्प्रमुच्यते इत्युक्तं ॥ स संन्यासः कथं सिध्यति ॥ कर्मणा कथं मुक्तिर्भवति ॥ कर्म बंधकं न भवति वा॥ आकस्मिकोपनतदुष्कर्मभिः मोक्षो न प्रतिबध्यते वा ॥ वद ॥

कृष्णः ॥ योगयुक्तो विशुद्धात्मा विजितात्मा जितेंद्रियः ॥
सर्वभूताऽऽत्मभूताऽऽत्मा कुर्वन्नपि न लिप्यते ॥ ७ ॥

**योगेति** ॥ योगेन कर्मयोगेन युक्तः जीवः विशुद्धः आत्मा अंतःकरणं यस्य स विशुद्धात्मा वि अधिकं जितः वशीकृतः आत्मा मनः देहश्च यस्य सः विजितात्मा जितानि इंद्रियाणि यस्य स. जितेन्द्रियः सर्वाणि च तानि भूतानि च सर्वभूतानि सर्वभूतानां आत्मभूतः आत्मा यस्य सः सर्वभूतात्मभूतात्मा तादृशस्सन् तादृशज्ञानवान् सन् कुर्वन्नपि न लिप्यते न बध्यते ॥ ७ ॥

१. 'मेघोदरविनिर्मुक्ताः कल्हारसुखशीतलाः ॥ शक्यमञ्जलिभिः पातुं वाताः केतकिगंधिनः' ॥ (रा. कि. २८. ८.) 'शक्यमरविंदसुरभिः कणवाही मालिनीतरंगाणां ॥ अंगैरनंगतप्तैरविरलमालिंगितुं पवनः' ॥ (शाकुं. ३.) इत्यादाविव नपुंसकत्वम् ॥

कर्मयोगं कर्तुं[1] प्रवृत्तः तेन आरब्धेन कर्मणा विशुद्धाऽऽत्मा शुद्धस्वभावः विशुद्धमनाः वा भवति ॥ तेन विजितमना भवति ॥ स्वभावमनसोः शुद्धौ सत्यां मनो निग्रहो भवति ॥ निगृहीते मनसि इंद्रियनिग्रहो भवति ॥ जितेंद्रियस्य कामादिवर्जनरूपः संन्यासो भवति ॥ तेन संन्यासेन सह सम्यक् कर्म करोति ॥ तेन कर्मयोगेन युक्तः ज्ञानी भवति ॥ तत् ज्ञानं कीदृशमिति चेत् सर्वभूतात्मभूतात्मा सर्वेषां भूतानां ब्रह्मादिस्थावरांतानां आत्मा स्वामी तथाभूतः ईश्वरः परमात्मा विष्णुरेव आत्मा स्वस्य स्वामी इति ज्ञानवान् भवति ॥ तेन कुर्वन्नपि न लिप्यते ॥ एवं क्रियमाणं कर्म फलदानेन बंधकं न भवति ॥ तस्य निवृत्तिकर्मत्वेन [2]'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते'॥ इत्युक्तरीत्या ज्ञाने पर्यवसनात् ॥ आकस्मिकोपनतदुष्कर्मणा न तस्य मोक्षः प्रतिबध्यते॥ वक्ष्यते च ॥ [3]'सर्वथा वर्तमानोऽपि स योगी मयि वर्तते' ॥ इति ॥ [4]'सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते' ॥ इति च ॥ तेन विधिनिषेधातीतो भवति ॥ मुक्तो भवति ॥ अहो कर्मयोगस्य महिमा ॥

अ ॥ अर्जुनः ॥ कर्मयोगी ज्ञानतत्पूर्वकसंन्यासद्वारा मोक्षं प्राप्नोति ॥ इत्युक्तं॥ ज्ञानिनोऽपि लोकसंग्रहार्थं कर्मानुष्ठानसत्वात्तेन मोक्षप्रतिबंधः स्यात् ॥ अतः कथमिदं ॥ वद ॥

कृष्णः ॥ कर्मयोगयुक्तः तेन विशुद्धमनाः सन् तेन वशीकृतदेहः सन् तेन जितेंद्रियः सन् सर्वभूताऽऽत्मभूताऽऽत्मा भवति ॥ सर्वेषां भूतानां ब्रह्मादिस्तंबपर्यंतानां आत्मभूतः स्वात्मा यस्य स तादृशो भवति ॥ सर्वत्र आत्मैकत्वदर्शी भवति ॥ सर्वभूतः जडभूतः आत्मभूतः चेतनभूतः आत्मा यस्य स तादृशः ॥ जडाजडात्मकं सर्वं आत्ममात्रं पश्यन् सर्वस्य आत्ममात्रत्वदर्शी भवति ॥ सः ज्ञानी लोकसंग्रहार्थं कर्म कुर्वन्नपि तेन कर्मणा न लिप्यते मोक्षं प्रति न प्रतिबध्यते॥ उक्तं चेदं मया ॥ [5]'कर्मण्यभिप्रवृत्तोऽपि नैव किंचित्करोति सः' ॥ इत्यादौ

१. योगयुक्त इत्यस्याऽऽवृत्तिः ॥ आदिकर्मणि वर्तमाने च क्तः ॥ २. ३. ३३. ३. ६. ३१. ४. १३. २४. ५. ४. २०.

चतुर्थे ॥ ज्ञानानंतरं लोकसंग्रहार्थं, क्रियमाणस्य कर्मणोऽप्रतिबंधकत्वात् कर्मी-ज्ञानद्वारा मोक्षं प्राप्नोतीति युक्तमुक्तं ॥

केचित् ॥ योगेन कर्मयोगेन समाधियोगलक्षणसंन्यासेन वा युक्तः तेन विशेषेण शुद्धमनाः जितेंद्रियश्च तेन विजितात्मा निश्शेषनिर्यापितबाह्यवासना-लक्षणस्वभावः ॥ समाधिनिर्मूलितानात्मवासनः सर्वभूतानां आत्मभूत आत्मा यस्य सः तादृशो भवति ॥ तादृशो ज्ञानी शरीरयात्रानिर्वाहार्थं कर्म कुर्वन्नपि तेन कर्मणा न लिप्यते ॥ उक्तं चेदं मया ॥ १'शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिष'मित्यादौ चतुर्थे ॥ अत्र कुर्वन्नपीति शारीरं कर्मैव ॥ नतु लोकसंग्रहार्थं कर्म ॥ ब्रह्मविदो जीवन्मुक्तस्य कयाऽपि विधया वैधस्य कर्मणोऽसंभवात् ॥ सविस्तरमुक्तमिदं ॥ २'तस्य कार्यं न विद्यते' ॥ इत्यत्र मया तृतीये ॥ अतो ब्रह्मात्मैकत्वदर्शिनो जीवन्मुक्तस्य मोक्षप्राप्तिर्निर्बाधा ॥ अत उक्तं युक्तम् ॥

वि ॥ अर्जुनः ॥ कर्मयोगः सुखसाध्यः शीघ्रफलप्रदश्च इत्युक्तं ॥ तत्केन हेतुना ब्रूहि ॥

कृष्णः ॥ कर्मयोगयुक्तः तेन विशुद्धमनाः अतः विजितमनाः विशुद्धं हि मनो वशीकृतं भवति ॥ सर्वेन्द्रियकूटस्थे मनसि वशीकृते स्वत एवेंद्रियाणि वशतां यांति तदा जितेंद्रियश्च भवति ॥ कर्मकरणलब्धशुद्धिना मनसा आत्मयाथात्म्य-मनुसंदधानो भवति ॥ आत्मयाथात्म्यमनुसंदधानस्य देवादिसकलदेहेषु विद्य-मानानामात्मनां स्वात्मनश्च ज्ञानैकाकारतया साम्यदर्शनं संपद्यते ॥ तदाऽयं कुर्वन्नपि कर्मयोग्यपि आत्मावलोकनप्रतिबंधकेन अनात्मन्यात्माभिमानेन न संब-ध्यते ॥ ज्ञानयोगव्यवधानं तत्संपादनाऽऽयासं च विनैव आत्मावलोकनं लभते ॥ पूर्वाभ्यस्तत्वात्कर्मणः तस्मिन्नेव शास्त्रीये मनसः प्रवर्तनं सुकरं ॥ उपपादितं चेदं ॥ ३'असक्तः स विशिष्यते' ॥ ४'नियतं कुरु कर्म त्वं' ॥ इत्यत्र ॥ कर्मणा इंद्रिय-मनोनिग्रहस्य सुखेन लाभात् शीघ्रं फलप्राप्तिश्च भवति ॥ अतो हेतोः सुखसाध्यः शीघ्रफलप्रदः अप्रमादश्च कर्मयोगः ॥ उक्ता हि कर्मयोगस्य अप्रमादता ज्ञानयो-

१. ४. २१. २. ३. १७. ३. ३. ७. ४. ३. ८.

गस्य सप्रमादता च १ 'सदृशं चेष्टते' इत्यादिना तृतीये ॥ सर्वशरीरेषु आत्मनां समानत्वं प्रत्यक्षविरुद्धं ॥ देवनरतिर्यक्ब्राह्मणक्षत्रियब्रह्मचारिगृहस्थपंडितापंडित-शक्ताशक्तधनिकदरिद्रस्थविरतरुणादिनिरवधिकवैषम्यनिर्भरत्वादात्मनां ॥ वैष-म्यस्य सत्वादेव, २ 'वसंते ब्राह्मणो यजेत ॥ ग्रीष्मे राजन्यः ॥ शरदि वैश्यः' ॥ इति, 'वसंता ब्राह्मणोऽग्नि मादधीत ॥ वसन्तो वै ब्राह्मणस्यर्तुः ॥ स्व एवैनमृता-वाधाय ॥ ब्रह्मवर्चसी भवति ॥ मुखं वा एतदृतूनां ॥ यद्वसन्तः ॥ यो वसन्ताऽग्नि-माधत्ते ॥ मुख्य एव भवति ॥ अथो योनिमन्तमेवैनं प्रजातमाधत्ते ॥ ग्रीष्मे राजन्य आदधीत ॥ ग्रीष्मो वै राजन्यस्यर्तुः ॥ स्व एवैन मृतावाधाय ॥ इन्द्रियावी भवति॥ शरदि वैश्य आदधीत ॥ शरद्वै वैश्यस्यर्तुः ॥ स्व एवैनमृतावाधाय ॥ पशुमान् भवति' ॥ इति च ब्राह्मणत्वादिवैषम्यनिबंधनो विधिभेदो दृश्यते ॥ अतः कथं सर्वभूताऽऽत्मभूताऽऽत्मा इत्युच्यते इति चेत् अस्त्येवेदं वैषम्यं ॥ तथाऽपि तन्ना-ऽऽत्मस्वरूपगतं ॥ किंतु कर्मोपाधिकप्रकृतिपरिणामदेहभेदनिबंधनं ॥ शुद्धाकार-विवक्षया तु समानत्वमिहोच्यते ॥ वक्ष्यते च ॥ ज्ञानाकारतया साम्यं ३ 'निर्दोषं हि समं ब्रह्मे'ति ॥ अतो न किंचिद्बाधकं ॥ सर्वभूतेषु सर्वभूतानां वा आत्म-भूतः स्वाऽऽत्मा इत्युक्ते अभेदो ह्युक्तो भवति ॥ कथं साम्यमुक्तं भवेदिति चेत् स्वरूपैक्यस्य सर्वप्रमाणविरुद्धत्वात् अभेदोक्तिः साम्ये पर्यवस्यति ॥ बाधितस्य ऐक्यस्य साम्ये पर्यवसानं हि मुखं चंद्र इत्यादौ लोके दृश्यते ॥ सर्वेषु गृहेषु वर्तमानः व्रीहिरयमेव गृहे वर्तमानः सर्वोपि व्रीहिरयमेव इत्यादौ ऐक्यस्योच्य-मानस्य साम्ये पर्यवसानं स्पष्टं हि दृश्यते ॥ अत कर्मयोगस्य ईदृशमहामहि-मवत्वात् ज्ञानयोगशक्तेनापि त्वया कर्मयोग एव कार्यः ॥ इति निरवद्यमतिहृद्यं॥७॥

अर्जुनः ॥ कर्मयोगस्य वीर्यवत्वाऽऽपादनाय किं कामक्रोधादिपरित्यागरूप-संन्यास एवालं ॥ उत अन्यत् किंचिदप्यावश्यकं वद ॥

कृष्णः ॥ नैव किंचित्करोमीति युक्तो मन्येत तत्ववित् ॥
पश्यन् शृण्वन् स्पृशन् जिघ्रन्नश्नन् गच्छन् स्वपन् श्वसन् ॥ ८ ॥

१. ३. ३३. २. शतपथब्रा. ५. कां. १. अध्या. ५. ब्रा. २. वा. २. तै. ब्रा. १. १. २. ३. ५. १९.

मलपन् विसृजन् गृण्हन् उन्मिषन् निमिषन्नपि ॥
इंद्रियाणींद्रियार्थेषु वर्तंत इति धारयन् ॥ ९ ॥

**नैवेति** ॥ तत्वं वेत्तीति तत्ववित् युक्तः कर्मयोगं कुर्वन् इंद्रियाणि इंद्रियाणां अर्थाः विषयाः तेषु प्रवर्तंते इति धारयन् निश्चिन्वन् सन् पश्यन् शृण्वन् स्पृशन् जिघ्रन् अश्नन् गच्छन् स्वपन् श्वसन् प्रलपन् भाषमाणः मलमूत्रे विसृजन् गृण्हन् उन्मिषन् नेत्रोन्मीलनं कुर्वन् निमिषन् नेत्रनिमीलनं कुर्वन् सन्नपि अहं किंचिदपि नैव करोमि इति मन्येत ॥ ८ ॥ ९ ॥

युक्तः कर्मयोगी तत्ववित् 'कर्मण्यकर्म यः पश्येदकर्माणि च कर्म यः' इत्याद्युक्तरीत्या स्वस्य अस्वातंत्र्यादकर्तृत्वं परमात्मनश्च स्वातंत्र्यात्कर्तृत्वं इत्येतत्तत्वं जानन् सन् एकैकस्मिन्नपि स्वेन क्रियमाणे कर्मणि अहं किंचिदपि नैव करोमि ॥ किंतु ईश्वर एव तत्रतत्र स्थित्वा तत्तत्कर्म करोति कारयति च ॥ इति मन्येत अनुसंदधीत ॥ कथं स्वेनैव क्रियमाणे कर्मणि अहं न करोमीति युक्तमनुसंधातुं ॥ भ्रांतिर्हि सा स्यात् ॥ किंच यत्रकुत्रापि स्वीये कर्मणि स्वस्य अस्वातंत्र्यादकर्तृत्वनिश्चये सति हि कर्तव्ये प्रकृते वैधे वैदिके कर्मणि अस्वातंत्र्यादकर्तृत्वानुसंधानं स्यात् ॥ कुत्रान्यत्र तथा इति चेत् दर्शनादिषु त्रयोदशसु कर्मसु ॥ पश्यन् दर्शनं कुर्वन् शृण्वन् श्रवणं कुर्वन् स्पृशन् स्पर्शं कुर्वन् जिघ्रन् आघ्राणं कुर्वन् अश्नन् अशनं कुर्वन् गच्छन् गमनं कुर्वन् स्वपन् निद्रां कुर्वन् श्वसन् उच्छ्वासं निश्वासं च कुर्वन् ॥ प्रलपन् भाषणं कुर्वन् विसृजन् मलमूत्रयोर्विसर्गं कुर्वन् गृण्हन् ग्रहणं कुर्वन् उन्मिषन् निमिषन्नपि नेत्रोन्मीलनं नेत्रनिमीलनं च कुर्वन् एतेषु त्रयोदशसु कर्मसु अहरहरकामेनापि क्रियमाणेषु इंद्रियाणि ज्ञानेंद्रियाणि कर्मेंद्रियाणि प्राणापानादिवायवः नागकूर्मादिवायवश्च इंद्रियार्थेषु इंद्रियाणां वायूनां च वि[illegible]यभूतेषु व्यापारेषु दर्शनादिषु प्रवर्तंते ॥ तेषामस्वातंत्र्यात् जडत्वाच्च न स्वतः प्रवर्तेरन् ॥ अतः स्वतंत्रेण परमचेतनेन मुख्यक्षेत्रज्ञेन परमात्मना अधिष्ठितानि तेन प्रेरितानि

तेनैव तत्तत्कार्यकरणशक्तिमत्तां प्रापितानि संति तदिच्छया प्रवर्तंते ॥ नाहं तत्र स्वतंत्रः न मया किंचित्क्रियते ॥ यद्यहं स्वतंत्रः स्यां तर्हि मदिच्छानुरोधेन क्रियेरन्निमाः क्रियाः ॥ न तथा ॥ कदाचित् दर्शनश्रवणस्पर्शनादिकं मलमूत्रविसर्जनादिकं च सुखमनायासेन भवति ॥ कदाचित् अतिमहता प्रयत्नेनापि भिषजां शतेनापि न भवति ॥ अतो न मम कर्तृत्वं ॥ ईश्वर एव तत्रतत्र स्थित्वा करोति इति निश्चिन्वन् सन् तदभ्यासमहिम्ना विहितकर्तव्यवैधकर्मानुष्ठानदशायामपि अहं किंचिदपि नैव करोमीत्येवं मन्येत ॥ अयमेव संकल्पत्यागः ॥ अयमपि संन्यासांतर्गतः ॥ एतादृशसंन्यासपूर्वकं कर्मयोगस्त्वयाऽनुष्ठेयः ॥ अत्र दर्शनश्रवणस्पर्शनाघ्राणाशनानि पंच चक्षुःश्रोत्रत्वग्घ्राणरसनानां ज्ञानेंद्रियाणां व्यापाराः ॥ प्रलपनग्रहणगमनमलविसर्जनमूत्रविसर्जनानि पंच वाक्पाणिपादपायूपस्थानां कर्मेंद्रियाणां व्यापाराः ॥ स्वापः बुद्धेर्व्यापारः ॥ श्वसनं प्राणाख्यवायोर्व्यापारः ॥ इदं [1] प्राणापानसमानोदानव्यानाख्यवायुपंचकव्यापारोपलक्षणं ॥ उन्मेषनिमेषौ कूर्माख्यवायोर्व्यापारः ॥ इदं नागकूर्मकृकरदेवदत्तधनंजयाख्यवायुपंचकव्यापारोपलक्षणं ॥ इत्यनुसंधेयं ॥ एवं कर्म कुर्वन्नपि न लिप्यते ॥ तेन कर्मणा सुखं बंधात्प्रमुच्यते च ॥ अतस्त्वमेवं कर्म कुरु ॥ ८ ॥ ९ ॥

अ ॥ अर्जुनः ॥ ज्ञानी लोकसंग्रहार्थं कृतेन कर्मणा शरीरयात्रानिर्वाहार्थं कृतेन कर्मणा च न लिप्यते इत्युक्तं ॥ तत्कुतः ॥ कृतेन कर्मणा कथं न लिप्येत ॥ वद ॥

कृष्णः ॥ कुर्वन्नपि न लिप्यते ॥ कुत इति चेत् परमार्थदर्शी युक्तः समाहितांतःकरणः सन् लोकसंग्रहाय कर्म कुर्वन्नपि नैव किंचिदहंकरोमीति मन्यते ॥ अतो न लिप्यते ॥ कर्माणि कुर्वतः नाहंकरोमीति बुद्धिः कथमुदेतीति चेत् दर्शनादिव्यापारान् कुर्वन् एषु व्यापारेषु इंद्रियाण्येव प्रवर्तंते ॥ न मम कर्तृत्वं ॥ अविक्रियत्वान्नैव किंचित्करोमि ॥ किंतु तत्तत्क्रियासाक्षित्वेन निष्क्रियाऽऽत्मना तूष्णीमासे इत्येवं निश्चिन्वन् सन् प्रकृते कर्मणि तथा मन्यते ॥ युक्तः प्रथमं कर्मयोगयुक्तः क्रमेण तत्ववित् भूत्वा नैव किंचित्करोमीति मन्यते इति वा ॥ शरीर-

---

१. अत्र, प्राणोऽपानः समानश्च इत्यादिकं (४०५ पुटे) पूर्वोक्त मनुसन्धेयं ॥

धारणार्थं आहारादि कुर्वन्नपि न लिप्यते ॥ अलेपार्थं ज्ञानी समाहितः सन् इंद्रियव्यापारेषु इंद्रियाण्येव प्रवर्तंते इति निश्चित्य शरीरधारणार्थं क्रियमाणे दर्शनादौ आहारादौ च अहं न करोमीति मन्येत ॥ एवं दर्शनादिकं कुर्वन्नपि न लिप्यते इति वा ॥ अतः कर्म कृत्वा यो ज्ञानी भवति स निर्बाधमेव मोक्ष-माप्नोति ॥ ८ ॥ ९ ॥

वि ॥ अर्जुनः ॥ सौकर्यात् शैघ्र्याच्च कर्मयोग एव श्रेयानिति उक्तं ॥ तस्य कर्मणो यदपेक्षितं तद्ब्रूहि ॥

कृष्णः ॥ तत्ववित् अंतर्गताऽऽत्मयाथात्म्यज्ञानवान् कर्मयोगयुक्त कर्म कुर्वन् अहं किंचिदपि नैव करोमीति मन्येत ॥ एकैकस्मिन्नपि कर्मणि अकर्तृ-त्वानुसंधानमावश्यकं ॥ कथं स्वेन क्रियमाणे कर्मणि स्वस्य अकर्तृत्वमनुसंधातुं युक्तमिति चेत् दर्शनादिकं कुर्वन्नपि आत्मयाथात्म्यानुसंधानेन एतेषु ज्ञानेंद्रिय-कर्मेंद्रियमनोबुद्धिप्राणव्यापारेषु अहरहः क्रियमाणेषु ज्ञानैकस्वभावस्य मम न स्वरूपतः कर्तृत्वं संभवति ॥ किंतु कर्ममूलेंद्रियप्राणसंबंधकृतमौपाधिकमीदृशं कर्तृत्वं इति निश्चिन्वन् तद्दृष्टांतेन तादृशानुसंधानाभ्यासेन प्रकृते कर्तव्ये शास्त्रीये कर्मणि अकर्तृत्वमात्मनो मन्येत ॥ एवं कृतं कर्म साक्षादात्मावलोकनं साधयति ॥ अतस्त्वमेवं कर्मैव कुरु ॥ ८ ॥ ९ ॥

द्वै ॥ अर्जुनः ॥ 'कुर्वन्नपि न लिप्यते' ॥ इत्युक्तं ॥ तत्किं उपचारमात्रं ॥ आहोस्वित् सत्यं ॥ ब्रूहि ॥

ब्रह्मण्याधाय कर्माणि संगं त्यक्त्वा करोति यः ॥
लिप्यते न स पापेन पद्मपत्रमिवांभसा ॥ १० ॥

**ब्रह्मणीति** ॥ कर्माणि ब्रह्मणि ईश्वरे प्रकृतौ वा आधाय समर्प्य संगं फलेच्छां त्यक्त्वा यः करोति सः अंभसा जलेन पद्मस्य पत्रं पद्मपत्रं इव पापेन न लिप्यते॥१०॥

फलकामनां त्यक्त्वा कर्म ब्रह्मणि सर्वेश्वरे परमात्मनि आधाय ईश्वर एव स्वपूजात्मकानि कर्माणि अंतः स्थित्वा मदनुग्रहाय परमया कृपया कारयतीति

मत्वा यः कर्म करोति सः ज्ञानी भूत्वा मुच्यते ॥ आकस्मिकोपगतेन पापेन न लिप्यते ॥ पापं कुर्वन् तेन न लिप्येत वा इति चेत् पद्मपत्रं जले विद्यमानमपि तेन न लिप्यते ॥ जलाद्युद्धरणे जललेशोऽपि तस्मिन्न दृश्यते ॥ तद्वत् पापेन न लिप्यते ॥ कुत इति चेत् कर्मयोगसंजातज्ञानमहिम्ना पापस्याश्लेषः ॥ १ 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशा' दितिसूत्रं ॥ २ 'तद्यथेषीकातूलमग्नौ ३ प्रोतं प्रदूयेत एवं हैवास्य सर्वे पाप्मानः प्रदूयंते' ॥ इति श्रुतिश्च ॥ पूर्वोक्तमपीदं, नेदमुपचारमात्र किंतु तथ्यं इति वक्तुं पुनरत्रोक्तं विश्वासातिशयजननाय ॥ अतो मा शङ्किष्ठाः ॥ श्रद्धत्स्व च ॥ कुरु चैवं ब्रह्मण्याधाय कर्म ॥ ४ 'मयि सर्वाणि कर्माणी'त्यत्र कर्माणि त्वयि संन्यस्य कर्तव्यानीत्युक्तं ॥ अत्र तु ब्रह्मणि संन्यस्येत्युच्यते ॥ तत्कुत इति चेत् मयि इत्युक्त्वा मम ब्रह्मतां ५ 'अजोऽपि स'न्नित्यादिना ६ 'चातुर्वर्ण्यं मया सृष्टं' इत्यादिना च प्रतिपाद्य ब्रह्मणीत्युक्त्या कथमयं सारथिर्मम कृष्णः मयि संन्यस्य कर्म कुरु इति वक्ति ॥ तादृशो वाऽयं इति मा ते शङ्का भूत् ॥ परं ब्रह्म किलाहं ॥ अतो मयि संन्यस्येत्युक्तमिति सूच्यते ॥ तव ईश्वरे मयि भक्तिजननाय परोक्षतोऽपरोक्षतश्च अहं मां मया मयि सः तं तेन तस्मिन् इत्यादिरीत्या उपदेशः क्रियते ॥ १० ॥

अ ॥ अर्जुनः ॥ ज्ञानी कुर्वन्नपि न लिप्यत इत्युक्त्वा 'नैव किंचित्करोमीति युक्तो मन्येत तत्ववित्' ॥ इत्यनेन अकर्तृत्वानुसंधानान्न लिप्यत इति तदुपपादितं ॥ यद्यकर्तृत्वानुसंधातुरेव कर्मलेपाभावः स्यात् तर्हि अहङ्करोमीति कर्माणि स्वस्य कर्तृत्वमनुसंदधानस्य ज्ञानार्थं कर्मयोगमनुतिष्ठतोऽविदुषः तेन कर्मणा लेपः स्यात् ॥ लेपाभावहेतोरकर्तृत्वानुसंधानस्याभावात् ॥ सतिचैवं अज्ञः कर्मणा ज्ञानद्वारा कथं मुच्येत ॥ ब्रूहि ॥

कृष्णः ॥ अज्ञानदशायां अकर्तृत्वानुसंधानाभावेऽपि फलानभिसंधिमात्रेण ब्रह्मणि संन्यस्य ७ 'मयि सर्वाणि कर्माणी'त्युक्तरीत्या करणमात्रेण च कर्मलेपाभावः ॥ यः फले संगं त्यक्त्वा ब्रह्मणि कर्माणि आधाय कर्तृत्वं कारयि-

१. ४. १. १३. २. छा ५. २४. ३. ३. 'तीयिनिल् तूशाकुं' इति गाथाऽनुसंधेया ॥ ४. ३. ३०. ५. ४. ६. ६. ४. १३. ७. ३. ३०.

तृत्वं भोक्तृत्वं भोजयितृत्वं च स्थापयित्वा कर्तव्यं कर्म करोति सः कर्म कुर्वन् तेन क्रियमाणेन ज्ञानार्थेन वैदिकेन कर्मणा न लिप्यते ॥ जलेन संबद्धमपि पद्म-पत्रं यथा स्वच्छतया तेन जलेन न संबध्यते ॥ तथा कर्मणा संबद्धोऽपि तत्फलेन न संबध्यते ॥ कथं क्रियमाणं वैदिकं कर्म पापमित्युच्यते इति चेत् यथा पापं जन्मादिबंधकारणं तथा पुण्यमपि जन्मादिबंधकारणं भवति ॥ उक्तं हि मया ॥ १'जन्मकर्मफलप्रदा'मिति ॥ अतः क्रियमाणं वैदिकं कर्म पापमित्युच्यते ॥ तत्कु-र्वन्नपि तेन न लिप्यते ॥ लेपाभावकारणस्य ब्रह्मण्याधानस्य फलाभिसंधित्यागस्य च सत्वात् ॥ ज्ञानार्थं क्रियमाणं कर्म फलाभिसंधित्यागेन जन्मादिबंधकारणं न भवति ॥ कथं तत्पापशब्देनोच्यते इति चेत् फलापेक्षया करणे ब्रह्मण्यनर्पणे च यत् पापतुल्यं जन्मादिबंधकारणं तेन ब्रह्मार्पणफलाभिसंधित्यागाभ्यां विशोधितेन न लिप्यते इत्याशयः ॥ १० ॥

वि ॥ अर्जुनः ॥ यथावत्कर्म कुर्वन् 'नैव किंचित्करोमी'त्यकर्तृत्वानुसंधानात् देहात्माभिमानेन न लिप्यते इत्युक्तं ॥ यदि एतादृशानुसंधानेन देहात्माभिमानलेपो निवर्तेत ॥ तर्हि काम्येऽपि कर्मणि एतादृशानुसंधानसत्वे देहात्माभिमानलेपो निवर्तेत ॥ सतिचैवं काम्यादकाम्यस्य को विशेषः ॥ किंच किं स्वीयस्य कर्तृत्वस्य 'नैव किंचित्करोमी'ति 'इंद्रियाणि प्रवर्तंते' इत्यौपाधिकत्वानुसंधाने प्रयोजनं ॥ किंच ईदृशानुसंधानसत्वेऽपि प्रकृतिसंसृष्टस्य तत्र आत्मत्वाभिमानलेपः कथं निव-र्तेत ॥ ब्रूहि ॥

कृष्णः ॥ ब्रह्म प्रकृतिः वक्ष्यते च ॥ २'मम योनिर्महद्ब्रह्मे'ति ॥ इंद्रियाणि प्रवर्तंते इत्युक्तरीत्या इंद्रियाकारेणावस्थितायां प्रकृतौ कर्माणि दर्शनादीनि आधाय तद्दृष्टांतेन प्रकृतं वैदिकं कर्मापि तस्मिन् ब्रह्मण्याधाय फले संगं त्यक्त्वा यः करोति सः पापिष्ठेन आत्मावलोकनरूपफलविरोधिना अनात्मन्यात्माभिमानेन न लिप्यते॥ पद्मपत्रं अंभसा यथा न लिप्यते तथा न लिप्यते ॥ ईदृशानुसंधानेन फलाभि-संधिरहितकर्मकरण एव स्वीयकर्तृत्वस्य उक्तरीत्या औपाधिकत्वानुसंधान एव अनात्मन्यात्माभिमानदोषलेपनिवृत्तिः ॥ जलाधीनजन्मस्थित्यादिमतोऽपि पद्म-

१. ४. ९. २. १४. ३.

पत्रस्य यथा न तत्कार्यं क्लेदादि तथा प्रकृत्यधीनजन्मस्थित्यादिमतोऽदेहस्याऽऽत्मनः न प्रकृतिकार्यदेहात्माभिमानः स्यात् ॥ अतः ईदृशानुसंधानपुरःसरं अकाम्यमेव कर्म त्वया यथावत्कर्तव्यम् ॥ १० ॥

अर्जुनः ॥ न लिप्यते इति बंधकत्वाभाव उक्तः ॥ तेन क्रियमाणेन कर्मणा बंधो न भवति चेत् किंवा भवति ॥ वद ॥ उक्तरीत्या केऽपि कर्म कुर्वंति वा ॥ चेत् तमाचारं ब्रूहि ॥ १ 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' ॥ इति, २ 'कृतं कर्म पूर्वैरपि मुमुक्षुभिः ॥ कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृत 'मिति च शिष्टानामाचारः स्पष्टमुक्त एवेति चेत् तत्र आस्थिताः इति कृतं इति च भूतकालनिर्देशेन पूर्वं तथा स्यात् इदानीं केऽपि तथा आचरंति वा इति संशयो मे जायते ॥ वद ॥

कृष्णः ॥ कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि ॥
योगिनः कर्म कुर्वन्ति संगं त्यक्त्वाऽऽत्मशुद्धये ॥ ११ ॥

कायेनेति ॥ योग कर्मयोगः एषां अस्तीति योगिनः कायेन देहेन मनसा बुद्ध्या केवलैः रागद्वेषादिरहितैः इंद्रियैरपि संगं फलेच्छां त्यक्त्वा आत्मनः मनसः जीवात्मनो वा शुद्धिः आत्मशुद्धिः तस्यै तदर्थं कर्म कुर्वंति ॥ ११ ॥

केवलैरिति पदं विपरिणामेन सर्वत्रान्वेति ॥ केवलेन देहेन केवलेन मनसा केवलया बुद्ध्या केवलैरिंद्रियैरपि कर्मयोगिनः फलापेक्षां त्यक्त्वा मनसः शुद्धये तेन आत्मनः जीवात्मनः प्रतिबंधकदोषनिर्हरणाय कर्तव्यं कर्म कुर्वंति ॥ कायादिभिः समुदितैः कर्तव्यं कर्म कुर्वन्ति ॥ कायेन स्नानोपवासादि, मनसा ध्यानादि, बुद्ध्या तत्त्वनिश्चयादि, इंद्रियैः श्रवणदर्शनकीर्तनपूजनतीर्थाटनादि कुर्वन्ति ॥ मनसा संकल्प्य बुद्ध्या निश्चित्य कायेन इंद्रियैश्च कुर्वन्ति इत्यादिकं यथासंभवमूह्यं ॥ केवलशब्दस्य कोर्थः इति चेत् केवलः असहायः कर्तृत्वाभिमानममतारूपसहायरहितैः ममताबुद्धिविषयत्वरहितैर्वा एतैः कायादिभिः नैव किंचित्करोमि ब्रह्मण्याधाय कर्माणि इत्युक्तरीत्या कुर्वन्ति ॥ न केवलं पूर्वैः कृतं इदानीमपि कुर्वन्ति ॥

१. ३. २०. २. ४. १५.

**अतस्त्वया कर्तव्यमेव कर्म ॥ कुर्वाणाश्चेदानीं, अत्र कर्म येन प्रकारेण कर्तव्य मित्युच्यते तथैव कुर्वन्ति ॥ न केवलं बंधाभावमात्रं किंतु तेन कर्मणा चित्तशुद्धिरपि भवति ॥ अतस्त्वं चित्तशुद्धये आत्मनो दोषनिर्हरणाय च उक्तेन प्रकारेण कर्म कुरु ॥ ११ ॥**

**अर्जुनः ॥ अहो कर्मणो वैषम्यं ॥ यदनुष्ठितं, एकस्य फलं स्वर्गः अन्यस्य फलमपवर्गः ॥ इति भेदेन फलमुत्पादयति ॥ किमनेन फलभेदाद्विषमेण कर्मणा ॥ अन्यत् किमपि साधनमन्विच्छामि ॥ किं कर्मैव कुर्विति निर्बध्नासि ॥ वद ॥**

**कृष्णः ॥ युक्तः कर्मफलं त्यक्त्वा शांतिमाप्नोति नैष्ठिकीं ॥**
**अयुक्तः कामकारेण फले सक्तो निबध्यते ॥ १२ ॥**

**युक्त इति** ॥ कर्मणः फलं कर्मफलं त्यक्त्वा युक्तः योगं कुर्वन् नैष्ठिकीं निष्ठायां भवां शांतिं मुक्तिरूपां निर्वृतिं आप्नोति ॥ कामस्य कारः प्रेरणं कामकारः तेन फले सक्तः अतः अयुक्तः उक्तरूपं कर्मयोगं अकुर्वन् निबध्यते नितरां बध्यते ॥ १२॥

**कर्मफलं त्यक्त्वा युक्तः स्वाम्यर्थं भृत्य इव ईश्वरार्थं कर्मयोगं कुर्वन्, युक्तः मनःसमाधानवान् सन् कर्मफलं त्यक्त्वा कर्माणि कुर्वन् इति वा ॥ निष्ठा स्वभावः नैष्ठिकीं स्वाभाविकीं शांतिं स्वरूपानंदं स्वरूपानंदाविर्भावलक्षणां मुक्तिं निष्ठा कर्मनिष्ठा ज्ञाननिष्ठा वा तज्जन्यां शांतिं कर्मनिष्ठाजन्यां चित्तशुद्धिरूपामुपशांतिं ज्ञाननिष्ठाजन्यां आत्यंतिकसंसारोपरतिरूपां मुक्तिं वा ॥ निष्ठा स्थैर्यं तद्वतीं नैष्ठिकीं स्थिरां आत्यंतिकीं शांतिं उपरतिं मुक्तिमाप्नोति ॥ १ स्थिरां आत्मानुभवरूपां निर्वृतिं आप्नोति ॥ कामस्य कारेण प्रेरणया फलेच्छावान् सन् अयुक्तः उक्तरूपं कर्म अकुर्वन् अयुक्तः असमाहितांतःकरणस्सन् कामकारेण कर्म कुर्वन् यः फले सक्तो भवति इति वा ॥ सः तेन कर्मणा नितरां बध्यते ॥ इदमेवोक्तं मया ॥ २ 'यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ॥ तदर्थं कर्म कौन्तेय मुक्तसंगः समाचर' ॥ इति ३ 'तस्मादसक्तः सततं कार्यं कर्म समाचर' ॥**

१. वि ॥ . २. ३. ९. ३. ३. १९.

इति च ॥ वैषम्येण फलप्रदानरूपो दोषो न कर्मणः ॥ किंतु १ कर्मकर्तुरभिप्रायानुगुणं फलं कर्म तत्फलप्रद ईश्वरश्च ददाति ॥ उक्तरूपं कर्मयोगमकुर्वतो नितरां बंधो भवति ॥ नेतरा गतिरस्य ॥ अतः उक्तरूपं कर्मैव शरणम् ॥ १२ ॥

अर्जुनः ॥ अहं करोमीति कर्तृत्वानुसंधानं विवेकेन त्यक्तव्यमित्युक्तं ॥ कारयामीति कारयितृत्वानुसंधानं न दोषायेति भाति ब्रूहि ॥

कृष्णः ॥ सर्वकर्माणि मनसा संन्यस्याऽऽस्ते सुखं वशी ॥
नवद्वारे पुरे देही नैव कुर्वन्न कारयन् ॥ १३ ॥

**सर्वेति** ॥ देहः अस्तीति देही जीवः वशानि स्वाधीनानि देहेंन्द्रियादीनि अस्य संतीति वशी सन् मनसा सर्वाणि च तानि कर्माणि च सर्वकर्माणि संन्यस्य नव द्वाराणि यस्मिन् तत् नवद्वारं तस्मिन् नवद्वारे पुरे शरीरे सुखं यथा तथा नैव कुर्वन् न कारयन् कर्तृत्वकारयितृत्वरहितः सन् आस्ते ॥ पुरे संन्यस्य सुखं आस्त इति वा ॥ १३ ॥

नैव कुर्वन् कर्तृत्वाभिमानं निःशेषं परित्यजन् न कारयत् कारयामीति कारयितृत्वानुसंधानं निःशेषं परित्यजन् वशी जितेंद्रियस्सन् कर्माणि कृत्वा तानि क्रियमाणानि कर्माणि मनसा संन्यस्य 'मयि सर्वाणि कर्माणि' 'ब्रह्मण्याधाय कर्माणि' इत्युक्तरीत्या भगवति सन्यस्य भगवानेव स्वपूजात्मकानि कर्माणि मदनुग्रहाय मया कारयति मम कर्तृताशक्तिरपि भगवदधीनैवेत्यनुसंधाय कर्माणि कृत्वा चक्षुःश्रोत्रघ्राणानां षट् द्वाराणि आस्यमेकं द्वार पायूपस्थे द्वे द्वारे इत्येवं नवद्वारवति पुरे शरीरे सुखं यथातथा आस्ते ॥ शरीरस्य पुरत्वोक्त्या तस्य नवद्वारत्वोक्त्या च, राजा बहुद्वारगोपुरे पत्तने स्वायत्तप्रवृत्तिकैः स्वसुखसाधनभूतैः पौरैः सह यथा सुखेन वर्तते ॥ तथा स्वेच्छानुसारिप्रवृत्तिकैः स्वसुखसाधनभूतैरिंद्रियैः सह सुखेन वर्तते इति प्रतीयते ॥ उक्तं च मया ॥ २ 'रागद्वेषावित्युक्तैस्तु

---

१. कर्तृत्वाभिमानसाम्येऽपि फलेच्छानिच्छाभेदाद्वैषम्यं इति केचित् ॥ अत्र, 'अभिसंधिभेदमात्रात् मोक्षापायेन बध्यंते' इतीदमनुसंधेयं ॥ २. २. ६४.

विषयानिन्द्रियैश्चरन् ॥ आत्मवश्यैर्विधेयाऽऽत्मा प्रसादमधिगच्छति' ॥ इति ॥ कर्तृत्वानुसंधानत्याग इव कारयितृत्वानुसंधानत्यागोऽप्यावश्यकः ॥ सोऽपि संन्यासांतर्गतः ॥ 'ज्ञेयः स नित्यसंन्यासी'ति संन्यासैकदेशः कामक्रोधादिपरित्याग उक्तः ॥ 'नैव किंचित्करोमी'ति कर्तृत्वाभिमानत्याग उक्तः ॥ अत्रतु, कारयितृत्वाभिमानत्याग उक्तः ॥ इमे त्रयः समुदिताः संन्यासः ॥ तेन संन्यासेन सह फलसंगं त्यक्त्वा ब्रह्मण्याधाय कर्माणि कर्तव्यानि ॥ रागद्वेषादिभिः फलमभिसंधाय कर्मकरणे अहंकारममकाराभ्यां सुमहान् क्लेशः ॥ कामादेः सर्वस्य परित्यागे राज्ञ इव सुमहत्सुखं ॥ अत उक्तरूपसंन्यासपूर्वकं कर्मयोगस्त्वया कार्यः ॥ १३ ॥

अ ॥ 'तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते' ॥ इत्युक्त्वा 'ज्ञेय' इत्यादिना तदुपपाद्य 'युक्तः कर्मफलं त्यक्त्वा शांतिमाप्नोति नैष्ठिकीं'॥ इत्युपसंहारः कृतः ॥ यद्येवं संन्यासात्कर्मयोगस्य श्रैष्ठ्यात् सर्वैरकामनया कर्मैव कर्तव्यं स्यात् तर्हि कर्मसंन्यासविधेः का गतिः ॥ ब्रूहि ॥

कृष्णः ॥ अविदुषोऽशुद्धचित्तस्य कर्मयोग उक्तः समर्थितश्च ॥ विदुषः परमार्थदर्शिनस्तु सर्वकर्मसंन्यासः ॥ यः पुनः परमार्थदर्शी सः सर्वाणि नित्यानि नैमित्तिकानि काम्यानि प्रतिषिद्धानि च कर्माणि अधिष्ठानयाथात्म्यसंदर्शनसंजातारोपितसर्वदृश्यवस्तुमिथ्यात्वज्ञानवता मनसा कर्म कर्ता तत्साधनं तत्फलं च असदेवेति विज्ञानेन संत्यज्य ज्ञानेंद्रियकर्मेंद्रियाधिष्ठानभूतनवद्वारके ज्ञानेंद्रियाणि पंच प्राण एकः तेन कर्मेन्द्रियाणां ग्रहणं ॥ बुध्यहंकारचित्तानि त्रीणि एतानि नव द्वाराणि भोगार्थं विषयप्रवेशस्थानानि यस्मिन् तादृशे वा शरीराख्ये पुरे वशीकृतसर्वेन्द्रियः सन् त्यक्तकायवाङ्मनश्चेष्टस्सन् सुखं यथातथा सुखरूपेण निष्क्रियात्मना आस्ते ॥ कायकरणकर्माणि अविद्यया आत्मनि आरोपितानि संन्यस्यतु ॥ तथाऽपि सुखेनावस्थातुं न शक्यते ॥ आत्मन्यारोपितानां अन्यकर्तृककर्मणां विज्ञानेन त्यागेऽपि स्वाश्रयक्रियाणां संभवात् ॥ गजमारुह्य गच्छन्नविवेकी अहं गच्छामीति गजकर्तृकगमनक्रियां आत्मन्यारोप्य आत्मानं तया क्रियया क्रियावंतं मन्यते ॥ विवेकी तु गजो गच्छति नाहं गच्छामि इति तया क्रियया आत्मानं क्रियावंतं न मन्यते ॥ किंतु निष्क्रियमेव मन्यते ॥ तथाऽपि न स निष्क्रियः ॥ अविवेकिन इव

आरोपितक्रियाऽभावेऽपि स्वाश्रयचलनगजप्रेरणादिक्रियाणां भावात् ॥ इति प्रसिद्धं हि लोके ॥ इति चेत् नैव कुर्वन् न कारयन् ॥ स्वव्यापारेण कर्तृत्वं देहादिव्यापारैः कारयितृत्वं च वक्तव्यं ॥ अहंकाराभावान्न कर्तृत्वं ॥ ममकाराभावान्न कारयितृत्वं ॥ नहि परिपूर्णे निर्विकारे वस्तुनि अहंकारममकारौ संभवतः ॥ विज्ञानेन निःशेषनिरस्ताऽऽरोपिताशेषक्रियः स्वयं च निष्क्रियः ॥ अतः कर्तृत्वकारयितृत्वादिहेतुकक्लेशरहितः परमार्थदर्शी सूर्याद्यधिदैवतरक्षितनवद्वारके प्रत्यगात्मैकराजके बुद्धिप्रधानके मनःप्रभृतिसर्वकरणपरिचारकके प्राणादिदशवायुग्रामपालकके ब्रह्मविष्ण्वादिसर्वदेवतायतने पुरे राजेव स्वयमविक्रियब्रह्माऽऽत्मना सुखेनाऽऽस्ते ॥ १ 'शरीरे पाप्मनो हित्वा ॥ सर्वान् कामान् समश्नुते' इति २ 'यत्र सुहार्दः सुकृतो मदंते विहाय रोगं तन्वाः स्वायां' ॥ इति च श्रुतिः ॥ श्रूयते च आत्मनोऽविक्रियत्वं ३ 'ध्यायतीव लेलायतीवे'त्यादिश्रुतिषु ॥ वक्ष्यते च ॥ ४ 'शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते' ॥ इति ॥ न केवलं समाधिदशायामेव नैव कुर्वन्न कारयन्निति ॥ किंतु व्युत्थानेऽपि ॥ देही सन् देहाभिमानवान् सन्नपि समाधिव्युत्थानेऽपीत्यर्थः ॥ नैव कुर्वन्न कारयन् ॥ समाधौ क्षेत्रेण महाऽऽत्मनः संबंधाभावदर्शनात् ॥ 'सर्वाधिपत्यं कुरुते महात्मा' ॥ 'एष ह्येव साधु कर्म कारयति' ॥ 'एष ह्येवासाधु कर्म कारयति' ॥ इत्यादावात्मनः कर्तृत्वकारयितृत्वप्रतिपादनं तु ५ 'निष्कलं निष्क्रियं शांत'मित्यादिश्रुत्याद्यानुकूल्याय स्वसंनिधिमात्रेण चेष्टकत्वपरं ॥ वक्ष्यते च ॥ ६ 'मयाऽध्यक्षेण प्रकृतिः सूयते सचराचर'मिति ॥ परमार्थदर्शी शरीरे आस्ते इत्युक्त्या अविद्वान् शरीरे न तिष्ठतीति प्रतीयते ॥ तत्कथं ॥ शरीर एव हि तिष्ठंति सर्वे विद्वांसोऽविद्वांसश्च ॥ इति चेत् विद्वान् शरीरेतिष्ठामीतिप्रत्ययवानास्ते ॥ यद्यपि विद्वानिव अविद्वानपि शरीर एवाऽऽस्ते ॥ तथाऽपि अविद्वान् शरीरमेवाऽऽत्मानं मत्वा शरीराधिकरणमेवाऽऽत्मनोऽधिकरणं मत्वा गेहे भूमौ आसने देहल्यां आसे इत्येवं मन्यते ॥ विद्वांस्तु आत्मानं देहभिन्नं मत्वा देहस्य गेहादिकमिव आत्मनः स्वभिन्नं देहमधिकरणं मत्वा देहभिन्नोऽहं देहे तिष्ठामीत्येवं मन्यते ॥ एवमनुसंधानभेदमभिसंधाय पुरे आस्ते

१. तै. १.५. २. तै. आ. २.६. ३. बृ. ६.३.७. ४. १३. ३१.५. श्वे. ६. १९. ६. ९. १०.

इत्युक्तं ॥ सर्वाणि विहितानि प्रतिषिद्धानि उभयविलक्षणानि चेष्टारूपाणि च कर्माणि नवद्वारे पुरे देहे तदुपलक्षितप्राकृतरूपेण परिणतायां प्रकृतौ संन्यस्य कर्तृत्वभोक्तृत्वादिकं प्रकृतेरेव न ममेति निश्चित्य अनात्मतादात्म्याध्यासं परित्यज्य नित्यशुद्धबुद्धनिष्कलनिष्क्रियनिरंतरानंदैकरसाद्वितीयब्रह्मात्मनासुखमास्ते इति वा ऽन्वयः ॥ उक्तरूपस्य विदुषः कर्मसंन्यासे अधिकारः ॥ अविदुषस्तु कर्मण्येवाधिकारः ॥ इति व्यवस्थितमेतत् ॥ अतो न काऽप्यनुपपत्तिः ॥ १३ ॥

वि ॥ ज्ञानयोगापेक्षया कर्मयोगस्य श्रैष्ठ्यमुक्त्वा तदुपपाद्य 'नैव किंचि'-दित्यादिना 'निबध्यते' इत्यंतेन तदपेक्षितमकर्तृत्वानुसंधानं कर्तृत्वस्य कर्ममूलेंद्रियप्राणादिसंबंधप्रयुक्तत्वरूपौपाधिकत्वानुसंधानं च उक्तं ॥ किं देहनिरपेक्षाण्येवेंद्रियाणि इंद्रियार्थेषु वर्तंते ॥ उत देहाश्रितानि ॥ वद ॥

कृष्णः ॥ कर्म कुर्वन् सर्वाणि दर्शनादीनि तद्दृष्टांतेन क्रियमाणं वैदिकं कर्म च नवद्वारे पुरे देहे संन्यस्य प्राचीनकर्ममूलदेहसंबंधप्रयुक्तं कर्तृत्वं न स्वरूपप्रयुक्तं इत्यनुसंधाय स्वयं वशी इंद्रियनिग्रहादिमान् अतः देहाधिष्ठानप्रयत्नमकुर्वन् स्वकर्मणा देहांतरं च नैव कारयन् देहांतरारंभककर्माण्यकुर्वन् कर्तृत्वाभिमानप्रयुक्तक्लेशरहितः सन् सुखमास्ते सुस्थस्तिष्ठति ॥ पुरमिव शरीरं पौरानिवेंद्रियाणि सार्वभौममिवपरमात्मानं भृत्यमिव स्वात्मानं पश्यन् सुस्थो वर्तते ॥ शरीराश्रितेंद्रियप्राणेषु कर्तृत्वसंन्यासः पूर्वमुक्तः ॥ अत्र तदाश्रये शरीरे कर्तृत्वसंन्यास उच्यते ॥ शरीरतदाश्रितेंद्रियप्राणादिसंबंधप्रयुक्तं कर्तृत्वमौपाधिकमात्मनोऽनुसंधाय स्वरूपतोऽकर्तृत्वं चानुसंधाय फलसंगादिकं त्यक्त्वा कर्म कर्तव्यं ॥ एतावता प्रबंधेन ज्ञानयोगशक्तेनापि आत्मावलोकनाय उक्तरूपं कर्मैव कर्तव्यमित्युक्तं भवति ॥ अतः कर्मैव कुरु ॥ १३ ॥

द्वै ॥ अर्जुनः ॥ कर्म कुर्वन् 'नैव किंचित्करोमीति मन्येत' इत्युक्तं॥ 'नैव कुर्वन् न कारयन् सुखमास्ते' इति चोक्तं ॥ यो न करोति तस्य न करोमीति मननं युक्तं ॥ कर्म कुर्वतस्तथा मननं भ्रान्तिः खलु स्यात् ॥ यो न करोति न कारयति च तद्विषये न कुर्वन् न कारयन् सुखमास्ते इति वक्तुं युक्तं ॥ कुर्वतः कारयतश्च विषये न कुर्वन् न कारयन्नास्ते इति वचनमयुक्तं हि स्यात् ॥ अतः कथमिदं ब्रूहि ॥

**कृष्णः ॥ न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः ॥**
**न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥ १४ ॥**

**नेति** ॥ प्रभुः जीवः लोकस्य जनस्य कर्तृत्वं न सृजति न करोति ॥ न कारयतीत्यर्थः ॥ कर्माणि स्वयं न सृजति ॥ कर्मणः फलं कर्मफलं तेन संयोगः तं स्वस्य परस्य च न सृजति॥ किंतु स्वं जीवं भावयति उत्पत्यादिमंतं करोतीति स्वभावः परमात्मा प्रकृतिः प्रकृतिवासना वा स एव प्रवर्तते॥ १४ ॥

**जीवः स्वान्यस्य जनस्य कर्तृत्वं न सृजति ॥ स्वयं कारयिता सन् अन्यस्य कर्तृत्वं न करोति ॥ अन्यं कर्तारं न कुरुते ॥ अन्येन न कारयति ॥ स्वयं कर्माणि न करोति ॥ कारयिता कर्ता च न भवति ॥ अतः कर्मफलेन संयोगं अन्यस्य स्वस्य वा स्वयं न करोति ॥ फलप्राप्तौ फलप्रापणे वा न स्वातंत्र्यं ॥ स्वातंत्र्येण कर्तृत्वं कारयितृत्वं फलभोक्तृत्वं भोजयितृत्वं च जीवस्य नास्ति ॥ अतः अस्वातंत्र्येण कर्ता कारयिता भोक्ता भोजयिता च जीवः ॥ न करोमीति कर्तृत्वाद्यभावोक्तिस्तु तस्य स्वतंत्रकर्तृत्वाद्यभावपरा ॥ अतस्तथामननं न भ्रांतिः ॥ यो न करोति तेन तथा मंतव्यमिति वक्तुं न युक्तं ॥ तस्य अतथामननप्रसक्तेरेवाभावात् ॥ अतः यः करोति तस्य आत्मनः कर्तृत्वं अस्वातंत्र्यं च ज्ञात्वा अस्वातंत्र्याभिप्रायेण नाहं स्वतंत्रः करोमि कारयामि इत्यादिरीत्या मननं युक्तं ॥ आत्मानं अस्वातंत्र्येण कर्तारं कारयितारं च स्वातंत्र्येण कर्तृत्वाद्यभावाभिप्रायेण अकर्तारं अकारयितारं च मन्तुं युक्तं ॥ अत उक्तं युक्तं ॥ कथं जीवस्य जडवदसामर्थ्यमुच्यते ॥ समर्थः खलु जडापेक्षया अयमिति चेत् प्रभुः जडापेक्षयाऽयं समर्थ एव ॥ अतएव 'कुरु' 'समाचर' इत्यादौ कर्तृत्वेनोच्यते ॥ तथाऽपि अस्वातन्त्र्यापेक्षया 'न करोमीति मन्येत' 'नैव कुर्वन्न कारयन्नित्याद्युच्यते ॥ भृत्यः चेतनत्वेन कर्मकरणशक्तत्वात्करोति ॥ अस्वातन्त्र्यात् स्वातन्त्र्येण कर्तुमशक्तोऽस्वतन्त्रः करोति ॥ तथाऽयं जीवः चेतनत्वात्करोति ॥ अस्वातन्त्र्यात् न स्वतंत्रः करोति ॥ एवमभिप्रायकत्वादुक्तं युक्तं ॥ जीवस्य स्वतंत्रकर्तृत्वाभावात्**

भृत्यस्येव अस्वतंत्रकर्तृत्वेन 'नैव किंचित्करोमि' 'नैव कुर्वन्न कारयन्' इत्याद्युक्तं युक्तमस्तु ॥ ईश्वरेण दत्तस्य स्वातंत्र्यस्य विद्यमानत्वात् 'ब्रह्मण्याधाय कर्माणि' 'सर्वकर्माणि सन्यस्ये' त्याद्युक्तिः कथमिति चेत् ईश्वरोऽस्वतंत्रस्यास्य कर्तृत्वशक्तिमुत्पाद्य कारयति ॥ तेन ईश्वरः प्रयोजककर्ता स्वतंत्रकर्ता च भवति ॥ जीवः प्रयोज्यकर्ता अस्वतंत्रकर्ता च भवति ॥ न तु ईश्वरो जीवाय स्वातंत्र्यं ददाति ॥ प्रभुः ईश्वरः जीवस्य कर्तृत्वं कर्माणि स्वातंत्र्यं न सृजति ॥ कर्माणि कर्मजन्यादृष्टानि प्रति स्वातंत्र्यं न सृजति॥ कर्मफलसंयोगं प्रति स्वातंत्र्यं न सृजति ॥ अतो दत्तस्वातंत्र्यं जीवस्य नास्ति ॥ किंतु अस्वतंत्र एव सः ॥ स्वातंत्र्यं भगवतः स्वभावभूतो धर्मः ॥ तदन्यैः प्राप्तुं न शक्यं ॥ १'ब्रह्मेशानादिभिर्देवैः यत्प्राप्तुं नैव शक्यते ॥ तद्यत्स्वभावः कैवल्यं स भवान् केवलो हरे' ॥ इति ह्युक्तं ॥ स्वातंत्र्याभावे कथं कार्यनिष्पत्तिरिति चेत् स्वः स्वतंत्रः भवतीति भावः शाश्वतः इति वा स्वयमेव भवतीति वा स्वयमेव भावयति जगदुत्पादयतीति वा स्वं जीवं भावयति शरीरसंयोगरूपं जन्म प्रापयतीति वा स्वभावः ईश्वरः स एव सर्वत्र प्रवर्तते ॥ स्वतंत्रस्य परमकर्तुरीश्वरस्य विद्यमानत्वात् तस्य सर्वेषु कार्येषु प्रवर्तमानत्वाच्च कार्यनिष्पत्तिर्निर्बाधा ॥ प्रयोजककर्तृप्रवृत्तिमात्रेण न कार्यनिष्पत्तिर्दृश्यते इति चेत् जीवोऽपि प्रयोज्यकर्ता प्रवर्तते ॥ किंतु सः स्वभावस्सन्नेव प्रवर्तते ॥ स्वेन स्वतंत्रेण परमात्मना भवति भावयति चेति स्वभावः ईश्वरायत्तस्वरूपस्थितिप्रवृत्तिमानेव प्रवर्तते ॥ स्वं परमात्मानं भावयतीति स्वभावः परमात्मना स्वतंत्रेण प्रयोजककर्त्रा स्वामिनेव भृत्यः प्रेरितोऽहं तत्प्रसादसंपादनाय करोमीति भावयन्नेव प्रवर्तते ॥ अतः अस्वतंत्रकर्तृत्वात् 'नैव किंचित्करोमी'त्यादिकं, दत्तस्वातंत्र्याभावात् 'ब्रह्मण्याधाये'त्यादिकं च युक्तं ॥ अत उक्तं सर्वमनवद्यम् ॥ १४ ॥

अ ॥ अर्जुनः ॥ आत्मनः क्रियाश्रयत्वाभावेन कर्तृत्वाभावसंभवेऽप अयश्चालकस्यायस्कांतस्येव कारयितृत्वं स्यादेव ॥ अतः नैव कारयन्निति कथं ॥ आत्मयाथात्म्यज्ञानेन आरोपितकर्तृत्वादित्यागेपि स्वाभाविककर्तृत्वकारयितृत्वा-

१. स्कां ॥

दिकं स्यादेव ॥ अतः 'नैव कुर्वन् न कारय'न्निति कथं ॥ 'एष ह्येव साधु कर्म कारयति' 'एष ह्येवासाधु कर्म कारयती'त्यादिश्रुत्युक्तरीत्या प्रयोजककर्त्रा ईश्वरेण प्रयोज्यमानस्य जीवस्य कर्तृत्वादिमत्त्वेन 'नैव कुर्वन्न कारय'न्निति कथं वद॥

कृष्णः ॥ प्रभुः जीवः अन्यस्य जनस्य देहादेश्च कर्तृत्वं न सृजति ॥ कारयिता न भवति ॥ जनस्य देहादेश्च इष्टानि कर्माणि स्वयं न सृजति ॥ कर्मफलेन संयोगं स्वस्यान्यस्य वा न सृजति ॥ यद्यात्मा न करोति कारयति च कस्तर्हि करोति कारयति च ॥ कुर्वन् कारयंश्च कश्चिदुपलभ्यते ॥ सः कः ॥ यद्यन्यः तर्हि अद्वैतहानिः ॥ यद्यात्मा तर्हि 'न कुर्वन् न कारय'न्नित्युक्तिविरोधः ॥ इति चेत् स्वभाव एव प्रवर्तते ॥ स्वः स्वसंबन्धी भावः पदार्थः इति स्वं जीवं भावयति विकारयतीति वा स्वभावः प्रकृतिः माया वासना पूर्वसंस्कारो वा करोति कारयति च ॥ आत्मा तु प्रकृतितच्चेष्टातत्सुखदुःखादीनां साक्षी स्वयमविक्रियस्तिष्ठति ॥ वक्ष्यते च ॥ १ 'शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते'॥ इति ॥ अयस्कांतस्य संनिधानादयश्चलति ॥ न तावता तस्य कारयितृत्वं॥ क्रियाश्रयत्वाभावात् ॥ तथा प्रकृतिरात्मसन्निधानात्करोति कारयति च ॥ न तावता आत्मनः कर्तृत्वादि ॥ क्रियाश्रयत्वाभावात् ॥ क्रियाश्रयो हि कर्ता कारयिता च भवति ॥ अतः आरोपितस्य कर्तृत्वादेस्त्यागात् स्वाभाविकस्य च तस्यासंभवात् 'नैव कुर्वन्न कारय'न्निति युक्तम् ॥ ईश्वरोऽपि अनाद्यविद्यावशादनात्मगतकर्तृत्वादिकं आत्मनो मत्वा प्रवर्तमानं तत्कर्मानुगुणं प्रयुंक्ते ॥ न कर्तृत्वमात्मन उत्पादयति ॥ अतएव नेश्वरस्य वैषम्यनैर्घृण्यापत्तिः ॥ अतो 'न कुर्व'न्नित्याद्युक्तं युक्तम् ॥ १४ ॥

वि ॥ अर्जुनः ॥ 'ब्रह्मण्याधाय कर्माणी'ति 'कर्माणि नवद्वारे पुरे संन्यस्ये'ति च कर्ममूलेंद्रियप्राणसंबंधप्रयुक्तकर्ममूलदेहसंबंधप्रयुक्तकर्तृत्वकारयितृत्वादियुक्तं आत्मन औपाधिकं रूपमुक्तं ॥ आत्मनः स्वाभाविकं रूपं कीदृक् ॥ वद ॥

कृष्णः ॥ प्रभुः अचिदसंसृष्टः अतएव अकर्मवश्यः स्वाभाविकस्वरूपेणावस्थितः आत्मा देवतिर्यङ्मनुष्यस्थावराद्यात्मना प्रकृतिसंसर्गेण वर्तमानस्य जनस्य

यत् देवाद्यसाधारणं देवत्वादिजातिमत्पिंडपरिग्रहदशाप्रतिनियतं कर्तृत्वं तत् आत्मनि नोत्पादयति ॥ तथा तत्तदवस्थाप्रतिनियतानि कर्माणि च आत्मनि नोत्पादयति ॥ तथा तत्तत्कर्मजन्यदेवाद्यसाधारणफलसंयोगं च आत्मनि नोत्पादयति ॥ कस्तर्हि उत्पादयति ॥ दृश्यते च कर्तृत्वं कर्माणि फलसंयोगश्चेत्येतत् त्रयं ॥ इति चेत् स्वभावः प्रकृतिवासना तु प्रवर्तते ॥ कर्तृत्वादेरुत्पादकत्वेन प्रवर्तते ॥ अनादिकालप्रवृत्तपूर्वपूर्वकर्मजनितदेहाद्याकारपरिणतप्रकृतिसंसर्गकृततत्तदात्माभिमानजनितवासनाकृतं ईदृशं कर्तृत्वं ॥ न स्वरूपप्रयुक्तं ॥ इदमेवौपाधिकं कर्तृत्वमुक्तम् ॥ 'इंद्रियाणींद्रियार्थेषु वर्तन्ते' 'ब्रह्मण्याधाय कर्माणि' 'सर्वकर्माणि मनसा नवद्वारे पुरे संन्यस्ये'ति ॥ तुशब्दः प्रकृतिवासनाया अकर्तर्यात्मनि उक्तरीत्या औपाधिककर्तृत्वोत्पादनरूपविशेषसूचकः ॥ इदमात्मनः स्वाभाविकं रूपं स्वाभाविकमात्मनः स्वरूपं किमर्थमेवं सम्यगभिहितं त्वया इति चेत् कर्मयोगादिकरणकाले अनुसंधानार्थं अभिहितं ॥ लोके दंडनाद्यधिकृतो योऽधिकारी स्वस्य विहितं कर्मयोगं कर्तुं प्रवर्तते ॥ तेन तदा आत्मनः आगंतुकमौपाधिकं रूपं स्वाभाविकं रूपं चेत्युभयमनुसंधातव्यं ॥ एतावच्छक्तिकं एतमधिकारं प्रापितोऽस्मि ॥ एतावत् दंडनादिकं मया कर्तुं शक्यमिति आगंतुकस्वरूपानुसंधाने स्वयोग्यतानुगुणं कर्म कुर्यात् ॥ इदं तु ममागंतुकं रूपं औपाधिकं अहं दंड्य इव कश्चिदात्मा कलत्रपुत्रमित्रादिमान् संसारी इति एतदधिकारविनिर्मुक्तस्वाभाविकस्वरूपानुसंधाने नाधिकं साहसं कार्यमिति भिया धर्मे नीतौ च वर्तेत ॥ अत उभयानुसंधानमावश्यकं ॥ तद्वत् प्रकृते कर्मयोगादौ प्रवृत्तस्य देहतदाश्रितेंद्रियप्राणसंबंधप्रयुक्तकर्तृत्वरूपौपाधिकस्वरूपानुसंधाने शरीरमिंद्रियाणि प्राणांश्च दत्वा भगवाननुगृह्णाति ॥ एतादृशकर्मयोगादिकरणोपयुक्तदेहादिसामग्रीसत्वात् मया कर्मयोगादिकं कर्तव्यमिति मत्वा कुर्यात् ॥ स्वाभाविकस्वरूपाननुसंधाने किमर्थमायाससाध्यं कर्मयोगादिकं कर्तव्यं शरीरेंद्रियप्राणादिभिः ऐहिक विषयसुखमनुभवता सुखेनावस्थातव्यं इति मत्वा कर्मयोगादिकं न कुर्यात् ॥ स्वाभाविकस्वरूपानुसंधाने तु एतादृशं हि मम स्वरूपं तच्चेदानीं तिरोहितमस्ति ॥ कर्मयोगादिसामग्र्या तदाच्छादिनीं प्रकृतियवनिकामपसार्य तदनुभवाय प्रयतितव्यं इति मत्वा कुर्यात् ॥ अत उभयानुसंधानमावश्यकं ॥ अत आत्मन औपाधिकं

रूपमुक्त्वा स्वाभाविकस्वरूपमिदानीमभिहितं मया ॥ अनुसंधेहि उभयमिदं ॥ यथावत्कुरु कर्तव्यं कर्म ॥ १४ ॥

द्वे ॥ अर्जुनः ॥ जीवात्मनः कर्तृत्वं कारयितृत्वं स्वातन्त्र्यं च प्रतीयते ॥ अत्र तु तत् त्रयं नेत्युच्यते ॥ कथमिदं ॥ किंच यथोक्तं कर्मानुतिष्ठतः किं फलं मोक्ष इति चेत् सः पुण्यपापाभ्यां न प्रतिबध्यते वा ॥ वद ॥

**कृष्णः ॥ नाऽऽदत्ते कस्यचित्पापं न चैव सुकृतं विभुः ॥ १४॥ ॥**

नोति ॥ प्रभुः जीवः कस्याचित् पापं पापमूलकं दुःखं नाऽऽदत्ते न स्वीकरोति ॥ कस्याचित् सुकृतं पुण्यं तन्मूलकं सुखं च नैव आदत्ते ॥ १४॥ ॥

विभुः जीवः कस्यचित्पापं नैवादत्ते ॥ कस्यचित् सुकृतं च नैवादत्ते ॥ दुराचारस्य पापं न स्वीकरोति ॥ सदाचारस्य पुण्यमपि न स्वीकरोति ॥ यदि स्वातंत्र्येण कर्तृत्वादिमान् स्यात् तर्हि सत्यामिच्छायामेतदुभयं कुर्यात् ॥ न करोति च ॥ अतः न स्वातंत्र्यादिकमस्य ॥

किंच भार्यापुत्रादेः परमप्रियस्य पापमूलकं दुःखं नापनुदति ॥ अप्रियस्य शत्रोः पुण्यमूलकं सुखमपि नापनुदति ॥ सदाचारः पुण्यवानेव भवति ॥ दुराचारः पापवानेव भवति ॥ भार्यापुत्रादिः दुःखमनुभवति ॥ शत्रुः सुखमनुभवति ॥ जीवस्तु तत्तत्पश्यन् स्वयमस्वतंत्रः तत्तत् ग्रहीतुमपोहितुमप्यशक्तस्तिष्ठति ॥ अतो जीवस्याकर्तृत्वादिकमस्वातंत्र्यं चानुभवसिद्धं ॥ अतः उक्तं युक्तं ॥ एवं अकर्तृत्वाद्यनुसंधानपुरःसरं कर्म कुर्वतः कर्मलेपो न भवति ॥ कस्यचित्कर्मणः सकाशात् पापं न प्राप्नोति ॥ कस्यचित्कर्मणः सकाशात् पुण्यमपि न प्राप्नोति ॥ किंतु क्रियमाणेन कर्मणा ज्ञानद्वारा मोक्षमाप्नोति ॥ न तस्य पापेन पुण्येन वा मोक्षः प्रतिबध्यते ॥ इदमेवोक्तं मया ॥ 'कुर्वन्नपि न लिप्यते' ॥ इति ॥ १४॥ ॥

अ ॥ अर्जुनः ॥ 'नैव कुर्वन्न कारयन्' 'स्वभावस्तु प्रवर्तते' ॥ इत्युक्तं ॥ तत्कथं ॥ 'एष ह्येव साधु कर्म कारयति यमेभ्यो लोकेभ्यो निनीषते ॥ एष ह्येवासाधु कर्म कारयति यमधो निनीषते' ॥ इति श्रुत्या जीवः करोति ईश्वरः

कारयति इति आत्मनः जीवरूपेण कर्तृत्वं ईश्वररूपेण कारयितृत्वं च श्रूयते ॥ अतः कथमकर्तृत्वादिकं युक्तं स्यात् ॥ वद ॥

कृष्णः ॥ विभुरीश्वरः १कस्यचित्पापं नैवाऽऽदत्ते ॥ कस्यचित् सुकृतं च नैवाऽऽदत्ते ॥ पुण्यं पापं च कारयित्वा तत्पुण्यं पापं च फलदानाय नादत्ते ॥ वस्तुतोऽविक्रियस्य निष्क्रियस्याऽऽत्मनः कर्तृत्वकारयितृत्वादेरभावात् ॥ अत उक्तं युक्तम् ॥

अर्जुनः ॥ ईश्वरः भक्तानां पापमपनुदति ॥ तदीयं पुण्यकर्म स्वीकरोति ॥ अतः कथमात्मनोऽकर्तृत्वादिकं युज्यते ॥ वद ॥

कृष्णः ॥ ईश्वरः कस्यचित् कस्यापि पापं नाऽऽदत्ते नापनुदति ॥ कस्यापि पुण्यं कर्म वन्हिराहुतिमिव फलदानाय न स्वीकरोति ॥ निष्क्रियस्याऽऽत्मनः कर्तृत्वकारयितृत्वादानापनोदनानामभावात् ॥ अत उक्तं युक्तं ॥ तर्हि 'हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः' ॥ 'अनेकजन्मार्जितपापसंचयं हरत्यशेषं स्मृतमात्र एव' ॥ 'याः क्रियाः संप्रयुक्ताः स्युः एकांतगतबुद्धिभिः ॥ शिरसा प्रतिगृण्हाति भक्तानां भक्तवत्सलः' ॥ इत्यादिभिः भगवान् भक्तानां पापमपनुदति तदीयं पुण्यं च स्वीकरोतीति कथमुच्यते' ॥ इति चेत् स्मरणकीर्तनादिना पापपरिहार उच्यते ॥ नतु भगवतः पापापनोदनकर्तृत्वमुच्यते ॥ पुण्यस्वीकारप्रतिपादनपरवाक्यानां भगवदुपास्तौ रुच्युत्पादन एव तात्पर्यं ॥ अतो नानुपपत्तिः ॥ अत उक्तं युक्तम् ॥

अर्जुनः ॥ प्रवर्तयति लोकमीश्वर इत्युक्तं ॥ तर्हि वैषम्यनैर्घृण्ये पापपुण्ये च प्रसज्जेयातां ॥ तत्परिहारः कथं ॥ वद ॥

कृष्णः ॥ अवाप्तसमस्तकामः परिपूर्णः ईश्वरः कस्यचित्पापं पुण्यं च नाऽऽदत्ते ॥ फलकामनया वैषम्येण प्रवर्तने वैषम्यादिकं स्यात् ॥ न तथा ॥ अवाप्तसमस्तकामत्वेन फलकामनाऽप्रसक्तेः ॥ किंतु पूर्वपूर्वकर्मानुगुणमेव प्रवर्तयति ॥ अतो न वैषम्यनैर्घृण्ये ॥ अतः ईश्वरः कर्तृत्वादिकं नोत्पादयति ॥ किंतु तत्तदविद्याकामकर्मानुगुणं प्रवर्तयति ॥ इत्युक्तं युक्तं ॥ १४॥ ॥

१. कस्यचित् कायस्य वाचः मनसो वा इति कश्चित् ॥

वि ॥ अर्जुनः ॥ जीवस्य कर्तृत्वादिकं न स्वाभाविकस्वरूपप्रयुक्तं ॥ किंतु वासनाकृतत्वात् औपाधिकस्वरूपप्रयुक्तं ॥ इत्यकर्तृत्वादिकमुक्तं ॥ तत्कथं ॥ जीवः कस्यचित् दुःखमपनुदति ॥ कस्यचित् सुखमपनुदति ॥ सतिचैवं अकर्तृत्वादिकं कथं युज्येत ॥ ब्रूहि ॥

कृष्णः ॥ जीवः कलत्रपुत्रमित्रादेः कस्यापि पापमूलकं दुःखं न परिहरति ॥ शत्र्वादेः कस्यापि पुण्यमूलकं सुखं न परिहरति ॥ कुत इति चेत् स्वाभाविकस्वरूपेणावस्थितः अयं जीवः विभुः व्याप्तः अणोर्जीवस्य कथं विभुत्वमिति चेत् सूक्ष्मत्वात्तत्तत्कर्ममूलकसमस्तदेहानुप्रवेशयोग्यः इत्याशयः ॥ न क्वाचित्कः न देवादिदेहाद्यसाधारणदेशमात्रवर्ती॥ अतोऽयं न कस्यापि संबंधी॥ न कस्यापि प्रतिकूलः॥ अनेकसंबंध्यनेकदेहसाधारणत्वात्॥ तत्रतत्र कलत्रपुत्रत्वादिकं मित्रामित्रत्वादिकं च आगंतुकानां तत्तद्देहानामेव॥ अतो न कस्यापि सुखं दुःखं वा नापाकरोति ॥ महता प्रयत्नेन सुखं दुःखं वा परिहरन् दृश्यतेऽयं ॥ कथमुच्यते न परिहरतीति इति चेत् परिहरत्येवायं सुखं दुःखं च ॥ तत्कर्तृत्वंचास्य तत्तद्देहरूपोपाधिप्रयुक्त न स्वरूपप्रयुक्तं ॥ अतः स्वाभाविकस्वरूपाविवक्षया 'न कर्तृत्वं न कर्माणी'त्याद्युक्तं अकर्तृत्वादिकं युक्तं ॥ तत्तद्देहरूपोपाधिवशात् तत्तद्देहसंबंधिप्रतिकूलपुरुषगतसुखदुःखापनोदनं कुर्वन्नपि विभु समर्थोऽपि कस्यचित् सुखं नाऽऽदत्ते ॥ कस्यचित् दुःखं नाऽऽदत्ते ॥ न परिहरति ॥ किंतु उभयं पश्यन् परिहर्तुं न शक्नोमि किंकरणीयमिति खिद्यंस्तिष्ठति ॥ अतोऽयं न स्वतंत्रः ॥ किंतु भगवच्छेषभूतः ॥ १शेषत्वं चास्य स्वरूपांतर्गतं ॥ वक्ष्यते च ॥ जीवस्य भगवच्छेषत्वैकरसत्वं भगवतः शेषित्वं च ॥ २'अनादि मत्परं ब्रह्मे'ति ॥ ३'क्षेत्रज्ञं चापि मां विद्धी'ति च ॥ स्वतंत्रस्तु शेषी भगवानेव ॥ कर्तृत्वादिराहित्येन भगवच्छेषत्वैकरसत्वेन च स्वस्वरूपमनुसंधाय तथा स्वस्वरूपानुभवाय कर्मयोगः फलमनभिसंधाय कर्तव्य इत्युक्तं भवति ॥ १४॥ ॥

द्वे ॥ अर्जुनः ॥ जीवः अस्वतंत्रकर्ता अस्वतंत्रश्च ॥ परमात्मा तु स्वतंत्रकर्ता

१. शेषत्वमेवास्य स्वरूपमित्यादि मुमुक्षुप्पडिप्रमुखसंप्रदायग्रंथगतवाक्यान्यनुसंधेयानि ॥
२. १३. १३. ३. १३. ३.

स्वतंत्रश्च इत्युक्तं ॥ यद्येवं तर्हि कुतस्तथा नानुसंदधते ॥ सर्वत्र स्थित्वा स्वातंत्र्येण सर्वकर्तारं परमात्मानं कुतो न पश्यंति च ॥ ब्रूहि ॥

**कृष्णः ॥ अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ॥ १५ ॥**

**अज्ञानेनेति** ॥ अज्ञानेन ज्ञानं आवृतं तेन स्वरूपावरणेन जंतवः प्राणिनः मुह्यंति ॥ विपरीतं जानंति प्रवर्तंते च ॥ १५ ॥

विवेकज्ञानं अविवेकेन प्रतिबद्धं तेन जना मुह्यन्ति ॥ ज्ञानं स्वरूपज्ञानं अज्ञानेन अविद्यापरपर्यायभावरूपाज्ञानेन आच्छादितं तेन जना मुह्यंति ॥ विवेकज्ञानस्य अविवेकेन प्रतिबद्धत्वात् तथा नानुसंदधते ॥ स्वरूपज्ञानस्य अविद्यया आच्छादितत्वात् अपरोक्षज्ञानं नोत्पद्यते ॥ तेन न पश्यंति ॥ १५ ॥

अ ॥ अर्जुनः ॥ यद्येवमीश्वरः पापं नादत्ते ॥ नापनुदति च ॥ सुकृतं च न प्रतिगृण्हाति ॥ तर्हि किमर्थं पापपरिहाराय पुण्यसंपादनाय च भगवदाराधनरूपं कर्म कुर्वन्ति ॥ कृत्वा च भगवते समर्पयन्ति च ॥ ब्रूहि ॥

कृष्णः ॥ आत्म्ययाथात्म्यज्ञानं तद्विपरीतज्ञानेन आच्छादितं तेन प्राणिनो मुह्यंति ॥ यथा सार्वभौमस्य अहं सर्वेश्वरः सर्वतो निर्वृतोस्मि इति ज्ञानं स्वाप्नेनाज्ञानेन आवृतं चेत् सः तदानीं विविधानि परचक्रादीनि महांति संकटशतानि च पश्यति ॥ अहो अहं दीनोस्मि दुःख्यस्मि इति च मुह्यति ॥ तद्वदेते जंतवः स्वस्य अहंब्रह्मास्मीति प्रमाणेन ब्रह्मभावमजानंतः ईश्वरादात्मानं पृथङ्मत्वा मुह्यंति ॥ आत्मनः देहेंद्रियादिभिन्नत्वाविक्रियत्वचिद्रूपत्वपरिपूर्णत्वाखंडानंदैकरसत्वपरब्रह्माभिन्नत्ववेदनं ज्ञानं तद्विपरीतज्ञानं ब्रह्मभिन्नत्वापरिपूर्णत्वादिवेदनरूपं ज्ञानं अज्ञानं तेन अज्ञानेन ज्ञानं राहुणा रविबिंबमिवाऽऽवृतम् ॥ तेन प्राणिनः स्वस्य ईश्वराद्भेदं अपरिपूर्णतां च जानंतः ईशात्मनोः सेव्यसेवकतां च पश्यंतः कर्मणा अनेन ईश्वरः प्रीयते ॥ प्रीतश्च मह्यमीप्सितं फलं ददाति ॥ तच्च भोक्ष्ये भोजयामि चान्यान् इति मन्यमानाः तेन भ्रमेण कर्माणि कुर्वन्ति ॥ 'एषह्येव साधुकर्म कारयती'त्यादिश्रुतिः, उक्तमूढप्रत्ययानुवादिनी ॥ ज्ञानं जीवेश्वरजगद्भेदभ्रमाधिष्ठानभूतं नित्यं स्वप्रकाशं सच्चिदानन्दरूपं अद्वितीयं परमार्थसत्यं ब्रह्माभिन्नं आत्मस्वरूपं अज्ञानेन

अविद्यामायापरपर्यायेण आवरणविक्षेपशक्तिमता आच्छादितं तेन स्वरूपावरणेन मुह्यंति ॥ प्रमातृप्रमेयप्रमाणकर्तृकर्मकरणभोक्तृभोग्यभोगाख्यनवविधसंसाररूपं अतस्मिन् तदाभासरूपं विक्षेपरूपं मोहं प्राप्नुवंति ॥ यद्युक्तरीत्या वैषम्यनैर्घृण्ये न स्यातामीश्वरस्य तर्हि कुतस्तस्मिन्नीश्वरे वैषम्यादिकमारोपयंति ॥ इति चेत् अज्ञानेन स्वकृतपूर्वपुण्यपापपरिपाकेन सुखं दुःखं च प्राप्यते इति ज्ञानाभावेन समत्वज्ञानं आवृतं तेन प्राणिनः ईश्वरविषये मुह्यंति ॥ वैषम्यादिकमारोप्य विषमो निर्घृणश्च भगवानिति मन्यते वदंति च ॥ वस्तुतो न वैषम्यनैर्घृण्ये ॥ १५ ॥

वि ॥ अर्जुनः ॥ कर्तृत्वादिरहितपरिशुद्धस्वभावस्य जीवस्य वासनाकृतं कर्तृत्वादिकमित्युक्तं ॥ कथं तादृशपरिशुद्धस्वभावस्य वासनासंभवः ॥ वद ॥

कृष्णः ॥ ज्ञानं अज्ञानेन ज्ञानविरोधिना प्राचीनकर्मणा आवृतं आच्छादितदीपप्रभावत् संकुचितं तेन प्राणिनो मुह्यंति ॥ तेन ज्ञानावरणरूपेण ज्ञानविरोधिना कर्मणा देवादिदेहसंयोगः तत्रतत्र देहात्माभिमानरूपमोहश्च जायते ॥ ततः तथाविधात्माभिमानवासना तदुचितकर्मवासना च ॥ ताभ्यां वासनाभ्यां विपरीतदेहात्माभिमानः तदुचितकर्मारंभश्च जायते ॥ परिशुद्धस्वभावस्य जीवस्य अनादिकर्मणा वासनासंभवः ॥ १५ ॥

द्वै ॥ अर्जुनः ॥ ज्ञानस्य अज्ञानावृतत्वादपरोक्षज्ञानासंभवेन तदर्थयोः योगसंन्यासयोर्वैयर्थ्यं स्यात् ॥ अतः कथमिदं ॥ ब्रूहि ॥

कृष्णः ॥ ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ॥
तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परं ॥ १६ ॥

ज्ञानेनेति ॥ येषां तत् अज्ञानं आत्मनः ज्ञानेनैव नाशितं तेषां ज्ञानं आदित्यवत् तत् परं परब्रह्म प्रकाशयति ॥ १६ ॥

आत्मनः स्वस्य तत् स्वरूपज्ञानावरकं अज्ञानं येषां अज्ञानावृतज्ञानानां [1] आत्मनः परमात्मनः ज्ञानेन परमात्मविषयकपरोक्षज्ञानेन नाशितं नाशितप्रायं

१. आत्मन इत्यस्य उभाभ्यामन्वयः ॥

शिथिलितं तेषां ज्ञानं अपरोक्षज्ञानं जायते ॥ तदपरोक्षज्ञानं सूर्यवत् तत् परं ब्रह्म प्रकाशयति ॥ ज्ञानेन तु ज्ञानेनैव इत्युक्त्या अपरोक्षज्ञानप्रतिबंधकाज्ञानस्य ज्ञानादेव नाशः नान्यस्मादिति सूच्यते ॥ ज्ञानं द्विविधं ॥ स्वरूपज्ञानं वृत्तिज्ञानं चेति ॥ वृत्तिज्ञानमपि द्विविधं ॥ परोक्षं अपरोक्षं चेति ॥ तत्र स्वरूपज्ञानस्यावरणं अविद्याऽपरपर्यायं अज्ञानं ॥ सा चाविद्या परमाच्छादिका जीवाच्छादिका चेति द्विविधा तस्मिन् अज्ञाने दृढे सति नापरोक्षज्ञानमुत्पद्यते ॥ श्रवणादिजन्यपरोक्षज्ञानेन तस्मिन् शिथिलिते परमाच्छादिकामपसार्य स्वं दर्शयति भगवान् ॥ तदा अपरोक्षज्ञानमुत्पद्यते ॥ तदा पश्यति परमात्मानं जीवः ॥ निश्शेषनिवृत्ते तस्मिन् आवरणभूताज्ञाने जीवाच्छादिकां नाशयित्वा जीवस्वरूपमाविर्भावयति भगवान् ॥ तदा स्वस्वरूपानंदं अनुभवति ॥ सैव मुक्तिः ॥ परोक्षज्ञानेन शिथिलितावरणः परमात्मानमपरोक्षज्ञानेन साक्षात्करोति ॥ अतः अपरोक्षज्ञानतत्साधनपरोक्षज्ञानार्थयोः योगसंन्यासयोर्न वैयर्थ्यं ॥ श्रवणादिजन्यपरोक्षज्ञानेन अविवेकज्ञानं नाशितं चेत् विवेकज्ञानं तत् परं ब्रह्म यथावत्प्रकाशयति ॥ तदा जीवः स्वात्मानमस्वतंत्रमस्वतंत्र कर्तारं परमात्मानं स्वतंत्रं स्वतंत्रकर्तारं च यथावदनुसंधत्ते ॥ अतो ज्ञानार्थं कर्मयोगः कर्तव्यः ॥ १६ ॥

अ ॥ अर्जुनः ॥ ज्ञानस्य अज्ञानावृतत्वे ब्रह्मात्मैकत्वज्ञानजन्या संसारनिवृत्तिरूपा मुक्तिः कथं ॥ ब्रूहि ॥

कृष्णः ॥ वेदांतविचारजन्यपरोक्षज्ञानेनैव आत्मविषयेण येषां आत्मनः स्वस्य तत् ज्ञानावरणाविवेकरूपं अज्ञानं नाशितं तेषां ज्ञानं अपगतावरणं विवेकज्ञानं अनावृतसूर्यप्रभावत् तत् परोक्षं व्याप्तं तच्छब्दार्थभूतं परं ब्रह्म यथावत्प्रकाशयति ॥ सर्वं ब्रह्म ब्रह्मैवाहमिति ब्रह्मज्ञानं अपरोक्षसाक्षात्काररूपं जनयति ॥ ततः तेन ज्ञानेन स्वात्मानं ब्रह्माभिन्नं ज्ञात्वा ब्रह्मभेदज्ञानं सेव्यसेवकभावज्ञान च दूरीकृत्य तस्य भेदादिज्ञानस्य भ्रमरूपतां च निश्चित्य भेदसेव्यसेवकभावप्रतिनियतानि कर्माणि मिथ्यात्वदर्शनात्संन्यस्य जीवन्मुक्तिसुखमनुभूय विदेहकैवल्यं प्राप्नुवंति ॥ ज्ञानेन अज्ञाननाशनपर्यंतं कर्माणि कुर्वंति ॥ त्वयाऽपि तावत्कर्म कर्तव्यम् ॥

तत् अज्ञानं मायाऽविद्याख्यं ज्ञानेन गुरूपदिष्टवेदांतमहावाक्यार्थजन्येन निर्विकल्पकसाक्षात्काररूपेणैव येषां नाशितं शुक्तिज्ञानेन रजतमिव बाधितं तेषां अपरोक्षज्ञानिनां तत् अपरोक्षज्ञानं तत् परं ब्रह्म प्रकाशयति ॥ ज्ञानावरणं द्विविधं ॥ तत्र एकं सतोऽप्यसत्वापादकं ॥ अन्यत् भातोऽप्यभानापादकं ॥ आद्यं परोक्षज्ञानेनापि निवर्तते ॥ यथा पर्वतो वन्हिमानित्यनुमितिरूपेण वन्हिविषयकेण परोक्षज्ञानेन पर्वते वन्हिर्नास्तीत्यादिभ्रमो निवर्तते ॥ तद्वत् सत्यं ज्ञानमनंतं ब्रह्मास्तीति वाक्यात् परोक्षनिश्चये जातेऽपि ब्रह्म नास्तीति भ्रमो निवर्तत एव ॥ द्वितीयं तु अस्त्येव ब्रह्म किंतु मम न भातीत्येवं भ्रमजनकमावरणं साक्षात्कारादेव निवर्तते ॥ एवं परोक्षापरोक्षज्ञानाभ्यां द्विविधावरणापगमे परमार्थसत् ब्रह्म अहमेवेत्यैक्यनिश्चयः अपरोक्षसाक्षात्कारपरिपाकरूपः तेन सदेहविदेहकैवल्यसिद्धिः ॥ अतो न किंचिद्बाधकम् ॥

अर्जुनः ॥ के पुनः वैषम्यं नारोपयन्ति ॥ वद ॥

कृष्णः ॥ परमात्मनः ज्ञानेन परमात्मनः सर्वत्र साम्यज्ञानेनैव येषां तत् वैषम्याद्युपलम्भकं अज्ञानं नाशितं तेषां तत् ज्ञानं साम्यज्ञानं तत् परं परब्रह्म परमात्मानं प्रकाशयति ॥ ज्ञानिनस्तु अनाद्यविद्याकामकर्माद्यनुगुणं प्रवर्तयतीश्वरः तदनुगुणं भोजयति सुखं दुःखं च ॥ अतो नास्य वैषम्यं नैर्घृण्यं वा ॥ इति निर्दोषं ब्रह्म जानते ॥ त्वमपि ज्ञानी भूत्वा ब्रह्म निर्दोषं जानीहि ॥ १६ ॥

वि ॥ अर्जुनः ॥ परिशुद्धस्वभावस्यात्मनः अनादिकर्मणा ज्ञानसंकोचः ॥ तेन तत्रतत्र जन्मादिकमित्युक्तं ॥ यद्येवं संकुचितज्ञानस्य जन्मादिपरंपरा स्यात् तर्हि कदाऽस्य मुक्तिः ॥ वद ॥

कृष्णः ॥ येषां आत्मनां तत् आवरणभूतं अज्ञानं अनादिकालप्रवृत्ताचित्संसर्गमूलकानादिकालप्रवृत्तानन्तकर्मसंचयरूपं आत्मनः ज्ञानेन श्रवणादिजनितेन आत्मविषयेण याथात्म्यज्ञानेनैव नाशितं तेषां तत् स्वाभाविकं धर्मभूतं ज्ञानं अनावृतादित्यप्रभावत् परं असंकुचितं सत् प्रकाशयितव्यं सर्वं यथावत्प्रकाशयति॥ आदित्यदृष्टांतेन यथा दीपादित्यादिप्रभायाः आवरकसंनिधौ संकोचः ॥ तन्निवृत्तौ पुनर्विकासश्च दृश्यते ॥ तथा ज्ञानस्यापि सति कर्मणि संसारदशायां संकोचः

ज्ञानेन तन्नाशे मोक्षदशायां पुनर्विकासश्च युज्यते ॥ ज्ञानस्य प्रभातुल्यत्वादिति सूच्यते ॥ तेषां ज्ञानेन नाशितशेषकर्मणां अत एव अपगतावरणानां अत एव आदित्यवत् स्थितानां आत्मनां प्रभातुल्यं ज्ञानमिति वा अन्वयः ॥ तेषां ज्ञानमिति निर्देशात्, आत्मस्वरूपे धर्मभूतं ज्ञानमस्ति न ज्ञानमात्रमात्मा इति सूच्यते ॥ उपाधिविनिर्मुक्तानां आत्मनां तेषामिति बहुवचननिर्देशेन वास्तविक एवात्मनां भेदः नोपाधिप्रयुक्तः इति 'नत्वेवाह'मित्यत्रोक्तमत्र स्पष्टीकृतं भवति ॥ ज्ञानेन कर्मनाशाज्जन्मादिपरंपराया नाशेन मुक्तिः ॥ ज्ञानस्य तादृशं सामर्थ्यं उक्तं मया ॥ १'सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि' ॥ २ 'ज्ञानाग्निस्सर्वकर्माणि भस्मसात्कुरुते तथा'॥ ३'न हि ज्ञानेन सदृशं पवित्रमिह विद्यते'॥ इत्यादौ ॥ अतः कर्मनाशार्थं ज्ञानं संपादनीयं ॥ तत्समकक्ष्याणि वा कर्माणि कर्तव्यानि ॥ ज्ञानकर्मणोरुभयोरप्यात्मावलोकनसाधनत्वं पूर्वमुक्तं मया ॥ ४'एकं सांख्यं च योगं चे'त्यादौ ॥ १६ ॥

अर्जुनः ॥ ज्ञानावरकमज्ञानं ज्ञानेन नाशितं चेत् अपरोक्षज्ञानं ब्रह्म प्रकाशयतीत्युक्तं ॥ तदपरोक्षज्ञानं कथमुत्पद्यते ॥ किंवा फलमुत्पादयति ॥ वद ॥

**कृष्णः ॥ तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ॥**
**गच्छंत्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥ १७ ॥**

**तद्बुद्धय इति** ॥ तत् परं ब्रह्म परं अयनं आश्रयो येषां ते तत्परायणाः अतः तस्मिन् निष्ठा येषां ते तन्निष्ठाः अतः तस्मिन् आत्मा मनः येषां ते तदात्मानः अतः तस्मिन्नेव बुद्धिर्येषां ते तद्बुद्धयः ते ज्ञानेन निर्धूतं कल्मषं प्रतिबन्धकपुण्यपापरूपं येषां ते ज्ञाननिर्धूतकल्मषाः संतः अपुनरावृत्तिं मोक्षं शुद्धात्मानं वा गच्छंति ॥ १७ ॥

यस्य परमात्मनः अपरोक्षसाक्षात्कारोऽभिलषितः तस्मिन्नेव परमात्मनि बुद्धिरवस्थापनीया ॥ कथं बुद्धिः तस्मिन्नेवावस्थिता भवेदिति चेत् तदात्मानः

१. ४. ३६. २. ४. ३७. ३. ४. ३८. ४. ५. ५.

तस्मिन्नेव मनोऽवस्थापनीयं ॥ उभयमिदं कथं सिध्येदिति चेत् १ तदात्मानः स एव परमात्मा आत्मा स्वामीति ज्ञानवंतः ॥ मनसि विषयादिभिश्चंचलतां नीते कथं मनसस्तत्रैवावस्थानं घटेत इति चेत् तन्निष्ठाः तस्मिन्नेव न विषयादिषु निष्ठावंतः ॥ आपदि दुष्कर्मपरिपाकादुपनतायां अलमेतद्भजनेन यंकमप्यन्यं भजाम इति यदि चलेन्मनः तर्हि स एव स्वामीति कथं मन्येरन् इति चेत् तन्निष्ठाः आपद्यपि तस्मिन्नेव निष्ठाशब्दितस्थितिमंतः ॥ तादृशी निष्ठा कथं स्यादिति चेत् तत्परायणाः स एव परमाश्रय इति मन्यमानाः ॥ स एव परः प्रियो येषां ते तत्पराः भगवद्भक्ताः गुर्वादयः ते अयनं आश्रयो येषां ते तत्परायणाः ॥ गुर्वादीनां साधूनां संगत्या चित्तशुद्धिः तया तस्मिन्नेव निष्ठा तया तस्मिन्नेव मनसोवऽस्थानं तेन च तस्मिन्नेव बुद्धेर्व्यापृतिः तया भगवानेव परमाश्रय इति ज्ञानं तेन आपद्यपि तस्मादचलनं तेन स एव स्वामीति मतिः तया सदा बुद्ध्या तत्तत्वावमर्शः इति उत्तरोत्तरस्य पूर्वपूर्वं प्रति हेतुत्वं ॥ अनया साधनसामग्र्या अपरोक्षज्ञानं तेन ज्ञानेन निर्धूतकल्मषाः निश्शेषनिरस्तप्रतिबंधकपुण्यपापाः संतः अपुनरावृत्तिशब्दितां मुक्तिं प्राप्नुवंति ॥ अपरोक्षज्ञानमेवमुत्पद्यते ॥ तस्य च फलं मुक्तिः ॥ १७ ॥

अ ॥ अर्जुनः॥ अपरोक्षज्ञानान्मुक्तिरित्युक्तं॥ अपरोक्षज्ञानं तत्परिपाकश्च कथमुत्पद्यते ॥ किंवा तत्फलं ॥ वद ॥

कृष्णः ॥ तद्बुद्धयः तस्मिन्नेव परब्रह्मणि बुद्धिः साक्षात्काररूपा येषां ते तादृशाः तत्रैव बुद्धिरेषामित्युक्त्या भेदः प्रतीयत इति चेत् तदात्मानः सः परमात्मैव आत्मा स्वात्मा येषां ते तादृशाः ब्रह्मैवाहमिति ब्रह्माभिन्नमात्मानं जानंतः कथं तादृशज्ञानमुत्पद्यत इति चेत् तन्निष्ठाः सदा तदेकविचारपराः श्रवणादिना तादृशज्ञानमुत्पद्यते ॥ विषयाभिलाषकलुषितत्वे कथं श्रवणादेरवसरः इति चेत् तत्परायणाः तत् परं ब्रह्मैव परमप्राप्यं नतु विषयादिः इति निश्चयवंतः ॥ तत्परायणाः अतः तन्निष्ठाः अतः श्रवणादिना २ तदात्मानः अतः तद्बुद्धयः ॥ प्रथमं

१. अत्र विशेषणपदानामावृत्तिर्बोध्या ॥ २. तस्मिन्नेव मनो येषां ते तादृशाः ॥ तस्मिन्नेव प्रयत्नो येषां ते तादृशाः ॥

वैराग्यप्रकर्षः तेन वेदांतविचारः ॥ तेन ब्रह्मैवाहमित्यभेदानुसंधानरूपो निदिध्यासनपरिपाकः तेन तदपरोक्षसाक्षात्कारः इत्युत्तरोत्तरस्य पूर्वपूर्वं प्रति हेतुत्वं ॥ एवं लब्धेनापरोक्षज्ञानेन निरस्ताशेषप्रतिबंधक१पुण्यपापाः मुक्तिमाप्नुवंति ॥ सर्वेऽपि तदात्मान एव किमुच्यते विदुषामेव तदात्मान इति विशेषणमिति चेत् सर्वेऽपि ब्रह्माभिन्ना एव किंतु अज्ञाः देहादिकमात्मानं मन्यन्ते ॥ देहभिन्नमात्मानं मन्यमाना अपि ब्रह्मभिन्नं तं मन्यन्ते ॥ परमार्थदर्शिनस्तु ब्रह्मैवात्मानं मन्यन्ते ॥ अतः तदात्मान इति विशेषणम् ॥ १७ ॥

वि ॥ अर्जुनः ॥ ज्ञानेन उपाधिविनिर्मुक्तात्मस्वरूपानुभवो भवतीत्युक्तं ॥ तस्य आत्मानुभवसाधनस्य परोक्षज्ञानस्य सोपानारोहणक्रमेण आरोहणक्रमं तत्फलं च ब्रूहि ॥

कृष्णः ॥ तद्बुद्धयः बुद्धिः दर्शनाध्यवसायः तस्मिन् आत्मतत्वे बुद्धिशब्दितदर्शनाध्यवसायवंतः ततः आत्मा अवश्यं द्रष्टव्य इत्यध्यवसायात् तदात्मानः तत्रैव मनसोऽवस्थापनं कुर्वंतः द्रष्टव्यत्वाध्यवसायेन तत्रैव मनसः प्रवृत्त्या तन्निष्ठाः तस्मिन्नेव निष्ठाशब्दितस्थितिमतः तदभ्यासनिरताः विषयांतरविमुखाः ततः विषयांतरवैमुख्यात् तत्परायणाः तदेव परमं प्रयोजनं मन्वानाः एवं पूर्वपूर्वस्य उत्तरोत्तरं प्रति हेतुत्वं ॥ एवमारूढेन ज्ञानेन आत्मावलोकनरूपात्मसाक्षात्कारद्वारा निरस्तप्रतिबंधकसकलप्राचीनपापकर्माणस्संतः अपुनरावृत्तिं यदवस्थादात्मनः पुनरावृत्तिर्नास्ति ॥ तदवस्थमात्मानं स्वरूपेणावस्थितमात्मानं प्राप्नुवंति ॥ आत्मावलोकनसाधनस्य परोक्षज्ञानस्य आरोहणक्रम एवं ॥ आरूढस्य तस्य ज्ञानस्य आत्मसाक्षात्कारद्वारा यथावस्थिताऽऽत्मप्राप्तिः फलम् ॥ १७ ॥

अर्जुनः ॥ अपुनरावृत्तिप्राप्तिसाधनं२ज्ञानं कीदृशं ॥ वद ॥

कृष्णः ॥ विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि ॥
शुनि चैव श्वपाके च पंडिताः समदर्शिनः ॥ १८ ॥

१. कल्मषं संसारकारणं मूलाज्ञानं वा ॥ २. द्वै ॥ अपरोक्षज्ञानसाधनं परोक्षज्ञानं ॥ अ॥ अपरोक्ष ज्ञानं ॥ वि ॥ आत्मसाक्षात्काररूपं ॥

विद्येति॥ विद्या च विनयश्च विद्याविनयौ ताभ्यां संपन्ने युक्ते विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि गजे शुनि श्वानं पचतीति श्वपाकः चंडालः तस्मिंश्च समं पश्यंतीति समदर्शिनः पंडिता एव अपुनरावृत्तिं गच्छंति ॥१८॥

विद्याविनयरूपसंपद्युक्ते सात्विके ब्राह्मणे उत्तमे राजस्यां गवि मध्यमायां तामसे गजे अधमे शुनि च १श्वमांसपचनकर्तरि चंडाले च परमाधमे परब्रह्मणः समत्वदर्शिनः सर्वत्रविद्यमानानां भगवद्रूपाणां साम्यं जानंतः ये पंडिताः परोक्षज्ञानिनः त एव अपरोक्षज्ञानेन अपुनरावृत्तिं २प्राप्नुवंति ॥ अपुनरावृत्तिप्राप्तिसाधनापरोक्षज्ञानसाधनं परोक्षज्ञानं सर्वत्र भगवद्रूपाणां साम्यज्ञानरूपं ॥ एतादृशापरोक्षज्ञानादपरोक्षज्ञानद्वारा मुक्तिप्राप्तिः ॥ १८ ॥

अ ॥ ब्राह्मणादिषु उत्तममध्यमाधमाधमाधमेषु समं ब्रह्मैव पश्यंतः आरोपितनामरूपपरित्यागेन सर्वत्र अधिष्ठानभूतब्रह्मदर्शनमात्रवंतः पंडिताः पंडा 'तद्बुद्धय' इत्युक्ता बुद्धिरपरोक्षज्ञानरूपा तद्वंतः त एव अपुनरावृत्तिं ३ प्राप्नुवंति ॥ ४समदर्शिनो भवंति ॥ गंगायां अन्यासु नदीषु वापीकूपतटाकादौ सुरायां मूत्रे च प्रतिबिंबितस्य रवेरिव उत्तममध्यमाधमाधमाधमेषु स्थितस्य ब्रह्मणः साम्यं एकत्वं च अनुसंदधाना रवेरिव ब्रह्मणोऽपि नोपाधिगतगुणदोषसंबंध इति प्रतिसंदधानाः सर्वत्र ब्रह्मदृष्ट्या रागद्वेषराहित्येन परमानंदस्फूर्त्या च जीवन्मुक्तिसुखमनुभवंति ॥ सति देहे जीवन्मुक्तिः पतिते तस्मिन् विदेहकैवल्यं ॥ सर्वत्र समस्य ब्रह्मणः दर्शनं तस्य सर्वत्र साम्यदर्शनं च पूर्वोक्तं अपरोक्षज्ञानम् ॥ १८ ॥

वि ॥ विद्याविनयसंपन्ने महाब्राह्मणे ब्राह्मणे जाति५मात्रेण ब्राह्मणे गविहस्तिनि शुनि च श्वपाके च एतेषु शरीरेषु विद्यमानानां आत्मनां ज्ञानैकाकारतयासाम्यदर्शिनः जात्या वृत्त्या आकृत्या च अत्यंतं विषमेषु एतेषु आत्मसु ज्ञानैकाकारतया समत्वदर्शिनः ये त एव पंडिताः अपुनरावृत्तिप्राप्तिसाधनाऽऽत्मसाक्षा-

१. श्वाभावितव्यामत्यस्य पचतीति श्वपाकः पर्युषितभोजी ॥ २. पूर्वेणान्वयः ॥ ३. पूर्वेणान्वय- ४. भवंतीत्यध्याहारः ॥ ५. विद्याविनयसंपन्ने इति न ब्राह्मणविशेषणं ॥ निर्विशेषणप्रायपाठात् ॥

त्कारवंतः ते अपुनरावृत्तिं प्राप्नुवंति ॥ पंडिताः समदर्शिनो भवन्तीति वा ॥ आत्मनां साम्यदर्शनमेव आत्मसाक्षात्कारः ॥ उक्तं च मया ॥ १ 'येन भूतान्यशेषेण द्रक्ष्यस्यात्मनो 'ति ॥ १८ ॥

अर्जुनः ॥ 'पंडिताः समदर्शिन' इत्युक्तं ॥ कथं साम्यदर्शनं सम्यक्दर्शनं स्यात् ॥ अधमस्थलेषु स्थितस्य तद्दोषात् दोषवत्वेन निर्दोषोत्तमस्थलस्थितेन साम्यायोगात् ॥ किंवा साम्यज्ञानफलं ॥ वद ॥

कृष्णः ॥ इहैव तैर्जितस्सर्गो येषां साम्ये स्थितं मनः ॥
निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः ॥ १९ ॥

इहेति ॥ येषां मनः साम्ये स्थितं तैः इहैव सर्गः जितः हि यस्मात् ब्रह्म निर्गताः दोषाः यस्मात् तत् निर्दोषं समं तस्मात् ते समदर्शिनः ब्रह्मणिस्थिताः ब्रह्मज्ञाननिष्ठावंतः ॥ यस्मादेवं तस्मात् पुनर्जन्म न प्राप्नुवंति ॥ १९ ॥

साम्यदर्शनं सम्यक्दर्शनमेव ॥ परमात्मयाथात्म्यज्ञानं हि तत् ॥ समं हि ब्रह्म सर्वत्र ॥ कथं समं स्यात् अधमस्थलेषु सदोषत्वात् इति चेत् तद्ब्रह्म सर्वत्र निर्दोषं ॥ अतः समं ॥ सर्वत्र निर्दोषं ब्रह्म पूर्णं च ॥ अतः निर्दोषत्वेन पूर्णत्वेन च समं ॥ सर्वत्र समं मया लक्ष्म्या ज्ञानेन च सहितं ॥ अतः लक्ष्मीसाहित्येन ज्ञानसाहित्येन च सर्वत्र २ समं ॥ एवं ब्रह्मणः सर्वत्र समत्वात् साम्यदर्शनं सम्यग्ज्ञानमेव ॥ तस्मात् ते समदर्शिनः ब्रह्मणि स्थिताः ॥ ब्रह्मविषयकयथार्थज्ञाननिष्ठावंत एव ॥ अतः येषां साम्ये मनः स्थितं येषां मनसि साम्यज्ञानं उदितं तैः इहैव अस्मिन्नेव जन्मनि सर्गशब्दितः जननमरणात्मकः संसारः जितः तेषां पुनर्जन्म न विद्यते ॥ स्तुतिरियं समदर्शिनः ॥ १९ ॥

अ॥ सर्वत्र ब्रह्मदर्शनं तस्य साम्यैकत्वयोर्दर्शनं च सम्यग्दर्शनमित्युक्तं॥ तत्कथं॥ ब्राह्मणगोहस्तिश्वश्वपाकादिषु साम्यदर्शनस्य दोषत्वस्मरणात् ॥ तस्यान्नमभोज्य-

१. ४. ३५. २. समम्रित्यस्याऽऽवृत्तिः ॥

मित्युपक्रम्य समासमाभ्यां विषमसमे पूजात इति ह्यस्मरद्गौतमः ॥ अतः कथमिदं ब्रूहि ॥

कृष्णः ॥ येषां मनः १ साम्ये २ स्थितं ब्रह्मणः तत्साम्यैकत्वयोश्च दर्शने सुदृढमवस्थितं ॥ सर्वत्र ब्रह्मज्ञानवत् सर्वत्र विद्यमानस्य परब्रह्मणः साम्यैकत्वज्ञानवद्भि तैः इहैव देहे जीवदशायामेव सर्गशब्दितः जन्माख्यः ३ पुनर्देहसंबंधः जितः अभावं गमितः॥ कथं साम्यदर्शनरूपदोषवतां जन्मान्तरराहित्यापादकत्वरूपो महिमा इति चेत् ते ब्रह्मणि ४ स्थिताः ब्रह्मात्मैकत्वज्ञानिनो महात्मानो हि ते ॥ कथं ब्रह्म सममेकं च जानतां ब्रह्मज्ञानित्वमिति चेत् ब्रह्म सर्वत्र समं हि ॥ कुत इति चेत् निर्दोषं ब्रह्म निर्दोषं अतएव समं तस्मात् समत्वदर्शिनो महांतः ॥ न तेषां महामहिमवतां गौतमस्मृत्युक्तदोषसंस्पर्शः॥ निर्दोषेण ब्रह्मणा एकीभावानुसंधानात् ॥ नहि निर्दोषेण एकीभूते दोषस्पृष्टिः संभवति ॥ तर्हि गौतमस्मृतेः का गतिरिति चेत् अनुपजातज्ञानः कर्मयोगी यः कर्म करोति तद्विषया सा स्मृतिः ॥ इदं ज्ञानयोगिविषयं ॥ तत्र पूजात इति कर्मोच्यते ॥ अत्र तु समदर्शिन इति ज्ञानमुच्यते ॥ यावद्ज्ञानोदयं कर्मयोगिना ब्राह्मणादिषु तारतम्येनैव पूजादिकं कार्यं ॥ ज्ञानिना तु सर्वत्र ब्रह्मदृष्टिः साम्यदृष्टिश्च कार्या ॥ इति दशाभेदेन व्यवस्थापनान्न कोऽपि बाधः ॥ १९ ॥

वि ॥ अर्जुनः ॥ आत्मनां साम्यज्ञानं शुद्धात्मस्वरूपप्राप्तिरूपसंसारनिवृत्तिहेतुरित्युक्तं ॥ तत्कथं ॥ शुद्धात्मस्वरूपज्ञाननिष्ठा हि तत्प्राप्तौ हेतुः ॥ ब्रूहि ॥

कृष्णः ॥ येषां मनः आत्मनां साम्ये स्थितं आत्मनां साम्यमनुसंधत्ते तैः इहैव साधनानुष्ठानदशायामेव सर्गशब्दितः संसारो जितः ॥ ते संसारमतिक्रांताः मुक्ताः इति स्तुतिः ॥ मुक्तप्राया इत्यर्थः ॥ साम्यज्ञानं कथं संसारजयहेतुरिति

१. सममेव साम्यं स्वार्थे ष्यञ्प्रत्ययः ॥ ब्रह्मणीत्यर्थः ॥ २. कुतो ब्रह्मण्येवावस्थानं तेषामिति चेत् ब्रह्म निर्दोषं निर्दुःखं आनंदरूपं सर्वत्र समं सच्चिदानन्दमात्रमेकरसं तस्मात् ब्रह्मणः तादृशत्वात् ब्रह्मानन्दामृतरसास्वादाय ब्रह्मण्येव स्थिता भवंति ॥ येषां मन एवं ब्रह्मण्येव स्थितं ते विदेहकैवल्यं प्राप्नुवंति ॥ ३. द्वैतप्रपंचः संसारः ॥ सृज्यत इति सर्गः इति व्युत्पत्तिः ॥ ४. ब्रह्मभावं गता भवंति वा ॥

चेत् ॥ निर्दोषं अत एव सर्वत्र समं यत् वस्तु तत् ब्रह्म ब्रह्मतुल्यं शुद्धात्मस्वरूपं तस्मात् निर्दोषस्य सर्वत्र समस्य वस्तुनः ब्रह्मतुल्याऽऽत्मवस्तुत्वात् तत्र स्थितमनसस्ते ब्रह्मतुल्यशुद्धाऽऽत्मवस्तुयाथात्म्यज्ञाननिष्ठा एव ॥ अतः आत्मनां साम्यज्ञानस्य शुद्धात्मज्ञाननिष्ठात्वेन अपुनरावृत्तिप्राप्तिरूपसंसारातिक्रमहेतुत्वं उक्तं युक्तं ॥ अतस्त्वं समदर्शी भव ॥ समदर्शिनः अपुनरावृत्तिशब्दितशुद्धात्मस्वरूपं प्राप्नुवन्तीत्युक्तं ॥ तत्कथं फलमुच्यते ॥ जननमरणसुखदुःखरूपसंसारातिक्रमो हि फलत्वेन वाच्यः इति चेत् साम्यज्ञानिनः संसारातिक्रमः फलं ॥ स च साधनानुष्ठानदशायामेव भवति ॥ किमुत साध्यानुभवदशायां इति स्तुतिः ॥ कथं तेषां संसारनिवृत्तिरिति चेत् ते ब्रह्मतुल्यवस्तुनि स्थिताः ॥ ब्रह्मतुल्यवस्तुस्थितिर्हि संसारनिवृत्तिहेतुः ॥ कथं साम्यदर्शिनः ब्रह्मतुल्यवस्तुनि स्थिताः इति चेत् निर्दोषस्य समस्य आत्मवस्तुनः ब्रह्मतुल्यत्वात् ॥ तस्मात् उक्तं युक्तं ॥ १९ ॥

वि ॥ अर्जुनः ॥ समदर्शिनः अपुनरावृत्तिं गच्छन्तीत्युक्तं ॥ तत् समदर्शनं कथं सिध्यति ॥ कर्मयोगेन इति चेत् स कर्मयोगः केन प्रकारेण करणीयः ॥ वद ॥

कृष्णः ॥ न प्रहृष्येत्प्रियं प्राप्य नोद्विजेत्प्राप्य चाप्रियं ॥
स्थिरबुद्धिरसंमूढो ब्रह्मविद्ब्रह्मणि स्थितः ॥ २० ॥

नीति ॥ ब्रह्मवेत्तीति ब्रह्मवित् ब्रह्मणि स्थितश्च सन् अतः स्थिरबुद्धिः स्थिरा-बुद्धिर्यस्य सः स्थिरे आत्मनि बुद्धिर्यस्य स इति वा सम्मूढः संमोहवान् न संमूढः असंमूढः तादृशश्च सन् प्रियं प्राप्य न प्रहृष्येत् अप्रियं प्राप्य नोद्विजेत् उद्वेगं नाप्नुयात् च ॥ २० ॥

प्रियं वस्तु स्तुतिवचनपूजनादिकं पुत्रादिकं वा प्राप्य न प्रहृष्येत् ॥ अप्रियं वस्तु निंदावचनतिरस्कारादिकं शत्रुं वा आध्यात्मिकं ज्वरादि आधिभौतिकं सर्पचोरादि आधिदैविकं वर्षवातादि वा प्राप्य नोद्विजेत् ॥ न विषादं प्राप्नुयात् ॥ प्रियाप्रियाभ्यां हर्षविषादौ न कुर्यात् ॥ कथं तत्साध्यमिति चेत् स्थिरबुद्धिः भगवानेव स्वतंत्रः जीवस्तु अस्वतंत्रः अतः भगवता प्रापिते प्रियाप्रियं प्राप्य हर्षविषादौ न कार्यौ इति स्थिरज्ञानवान् विपरीतज्ञानरहितश्च ॥ स्थिरबुद्धिरसंमूढश्च

भूत्वा हर्षविषादौ त्यजेत् ॥ य एतादृशः प्रियाप्रियप्राप्तावपि हर्षविषादावकुर्वन् कर्मयोगी सः ब्रह्मविद्भवति । तस्मिन्नेव ब्रह्मणि स्थितश्च भवति ॥ १ ब्रह्मवित् ब्रह्मणि स्थितः निरंतरतदनुसंधानवान् अत एव असंमूढः अत एव स्थिरबुद्धिः अतः हर्षविषादौ त्यक्तुं समर्थो भवति ॥ २ तत्वविदामुपदेशेन ब्रह्मतुल्यशुद्धात्मस्वरूपज्ञानवान् भूत्वा नित्यं तदभ्यासनिरतः अत असंमूढः सं एकीभावेन मूढः मोहवान् संमूढः तद्रहित असंमूढः अस्थिरेण शरीरेण स्थिरमात्मानमेकीकृत्य मोहः संमोहः तद्रहितः देहात्माभिमानरहितः देहभिन्नमात्मानं जानन् अतः स्थिरे आत्मन्येव नतु अस्थिरे देहे निवेशितबुद्धिः तादृशस्सन् प्रियाप्रिये प्राप्यापि हर्षविषादौ न कुर्यात् ॥ एतादृशः कर्मयोगः समदर्शनसिद्धिमापादयति ॥ २० ॥

अ ॥ अर्जुनः ॥ ब्रह्मणि ते स्थिता इत्युक्तं ॥ ब्रह्मणि स्थितानां किं लक्षणं ब्रूहि ॥

कृष्णः ॥ यः ब्रह्मवित् भूत्वा ब्रह्मणि स्थितः निरंतरब्रह्मनिष्ठावान् सः प्रियं प्राप्य न हर्षं कुर्यात् ॥ अप्रियं प्राप्य च न विषादं कुर्यात् ॥ कुतः स्थिरबुद्धिः असंमूढश्च स्यात् खलु सः ॥ अतः हर्षविषादौ न कुर्यात् ॥ उक्तरीत्या आत्मनः निर्दोषत्वस्य समत्वस्य एकत्वस्य च सम्यगध्यवसायात् आत्मनि सुखदुःखादिकमविद्यमानमारोप्य हर्षविषादौ न कुर्यात् ॥ इदमपरोक्षज्ञानिनो लक्षणं ॥ मुमुक्षोस्तु यत्नतः साधनीयं ३ साधनं ॥ स्पष्टा चेयं रीतिः ४ 'स्थितप्रज्ञस्य 'त्यादौ ॥ ५ दुःखेष्वनुद्विग्नमनाः ' ६ तत्तत्प्राप्य शुभाशुभं ' इत्युक्तस्येदं विवरणं ॥ स्थिरबुद्धिः असंमूढः अतएव ब्रह्मवित् ब्रह्मैवाहमिति ब्रह्मसाक्षात्कारवान् अतः ब्रह्मण्येव स्थितः जीवन्मुक्तः न प्रहृष्येत् नोद्विजेत् ॥ स्थिरबुद्धिः असंमूढः अतः ब्रह्मवित् ब्रह्मभावं गतः ॥ विद्लृ लाभे इति धातुः ॥ व्युत्थानदशायामपि ब्रह्मण्येव स्थितः सर्वं ब्रह्मैव पश्यन् न प्रहृष्येत् नोद्विजेत् ॥ ब्रह्मवित् बाह्यदृष्ट्या हर्षविषादौ न कुर्यात् ॥ किंतु स्थिरबुद्धिः असंमूढश्च सन् ब्रह्मणि स्थितो भवेत् ॥ निरंतरब्रह्मनिष्ठयैव तिष्ठेत् ॥ २० ॥

१. द्वे ॥ केचित् ॥ २. वि ॥ ३. लिङ्प्रयोगेणेदं सूच्यते ॥ ४. २. ५४. ५. २. ५६. ६. २. ५७.

**अर्जुन:** ॥ कामादिपरित्याग आवश्यक इत्युक्तं ॥ तेनैव सुखं सित्स्यति ॥ उक्तं चाभियुक्तैः ॥ 'यच्च कामसुखं लोके यच्च दिव्यं महत्सुखं ॥ तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलां' ॥ इति ॥ किं कर्मयोगादिना ब्रह्मनिष्ठया च ॥ वद ॥

**कृष्ण:** ॥ **बाह्यस्पर्शेष्वसक्तात्मा विंदत्यात्मनि यत्सुखं ॥**
**स ब्रह्मयोगयुक्तात्मा सुखमक्षयमश्नुते ॥ २१ ॥**

**बाह्येति** ॥ बहिर्भवाः बाह्याः स्पृश्यंते इंद्रियैर्ज्ञायंते इति स्पर्शाः बाह्याश्च ते स्पर्शाश्च बाह्यस्पर्शाः तेषु न सक्तः असक्तः आत्मा मनः यस्य सः असक्तात्मा आत्मनि अन्तःकरणे स्वरूपे वा यत् सुखं विंदति लभते तदेव सुखं यः ब्रह्मयोगयुक्तात्मा ब्रह्मणि योगः ध्यानयोगः तेन युक्तः आत्मा यस्य सः अक्षयं न विद्यते क्षयः नाशः यस्य तत् तादृशं अश्नुते ॥ २१ ॥

बाह्याः विषयाः शब्दादयः तेषु अनासक्तमनाः आत्मनि अंतःकरणे यत् सुखं प्राप्नोति तदेव सुखं यः ब्रह्मयोगयुक्तात्मा सः अक्षयं प्राप्नोति ॥ आत्मनि स्वरूपे यत्सुखं सुषुप्तावुपलभ्यमानं वर्तते तद्विंदति ॥ तथाऽपि तत्सुखं तात्कालिकं स्वल्पं च ब्रह्मयोगयुक्तात्मा यः सः अक्षयं सुखं प्राप्नोति ॥ स्पृश्यंते ज्ञायंते इति स्पर्शाः विषयाः ते च बाह्याः आत्मनः अस्वभूताः अतएव बाह्याः श्रोत्राद्यविषयाः कर्तव्याः ॥ तथाकृतेषु तेष्वासक्तिवर्जनेनापि सुखं लभ्यत एव ॥ तथाऽपि तदल्पं योगप्रभावाऽऽविर्भूतमात्मसुखं तु अक्षयं ॥ अतो [1] योगादिकं यत्नतः साधनीयं ॥ [2] ब्रह्मणि विषये योगः कर्मयोगः ध्यानयोगश्च तेन युक्त आत्मा अंतःकरणं यस्य तादृशः कर्मयोगहेतुकज्ञानद्वारा अभिव्यक्तं स्वरूपसुखं अक्षयं प्राप्नोति ॥ ब्रह्मणि योगः समाधियोगः तस्मिन् युक्तः योजितः आत्मा अंतःकरणं यस्य तादृशः अक्षयं सुखमश्नुते ॥ ब्रह्मणि योगः समाधियोगः तेन युक्तः योगं ब्रह्मणा एकीभावं प्राप्तः

१. अतः 'संन्यासस्तु' इत्यादावुक्त सन्यासाद्यागस्य आवश्यकमुक्तं ॥ ९ । ७ ॥ ब्रह्मरा[illegible]: शुद्धात्मपरः ॥ सुखं विंदति ॥ उपदेशादिजन्यज्ञानमूलकं सुखं लभते ॥ अक्षयं सुखं अश्नुते ॥ साक्षात्कारानन्तरभावि नित्यं सुखं ब्रह्मतुल्यशुद्धात्मानुभवरूपं प्राप्नोति ॥ 'यः सुख'मिति पाठः ॥

आत्मा प्रत्यगात्मा यस्य तादृशः सन् १सुखमक्षयमश्नुते ॥ २बाह्यस्पर्शान् दूरीकृत्य गिरिगुहादौ रहसि समाधिं कुर्वतोऽपि समाधिकाल एवानंदानुभवः ॥ व्युत्थाने तु बाह्यविषयप्रीतिप्रतिबंधात् न ब्रह्मणि स्थितिः तयाऽऽनंदानुभवश्च ॥ सर्वत्र ब्रह्ममात्रदर्शनरूपब्रह्मयोगयुक्तात्मनस्तु समाधौ व्युत्थानेऽपि अक्षयस्वरूपानंदानुभव ॥ अतः बाह्यविषयप्रीतेः क्षणिकाया इंद्रियाणि निवर्तयेत् आत्मसुखलाभाय ॥ न तावताऽलं तस्य सुखस्याल्पत्वात् ॥ किंतु अक्षयात्मसुखलाभायब्रह्मयोगयुक्तात्मना भवितव्यं ॥ अतो ब्रह्मयोगयुक्तात्मा भव ॥ २१ ॥

अर्जुनः ॥ 'बाह्यस्पर्शेष्वसक्तात्मा' इत्युक्तं ॥ बाह्यविषयेष्वासक्तिवर्जनं कथं कर्तुं शक्यं ॥ तदनुभवस्य सुखहेतुत्वात् ॥ तस्य च सुखस्य स्पृहणीयत्वात् ॥ वद ॥

कृष्णः ॥ ये हि संस्पर्शजा भोगा दुःखयोनय एव ते ॥
आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ॥ २२ ॥

ये हीति॥ये संस्पर्शात् विषयेन्द्रियसंबंधात् जायंत इति संस्पर्शजाः भोगाः आदिश्च अंतश्च आद्यंतौ एषां स्त इति आद्यंतवंतः ते भोगाः दुःखस्य योनयः हेतवः दुःखयोनयः एव हि प्रसिद्धं ॥ अतः हे कौन्तेय बुधः विवेकी तेषु न रमते ॥ अबुधः अविवेकी तेषु न रमते इति काकुः ॥ रमत एवेत्यर्थः ॥ २२ ॥

विषयविमर्शे क्रियमाणे विषयेष्वासक्तिवर्जनं सुशकमेव ॥ कीदृशो विमर्श इति चेत् विषयेंद्रियसंबंधात् सुखान्युत्पद्यन्ते ॥ तानि च दुःखकारणभूतान्येव ॥ विषयेंद्रियसंयोगात् पूर्वं स्वकारणासिद्ध्या स्वासिद्ध्या च, विषयेंद्रियवियोगानंतरं स्वकारणनाशेन स्वनाशेन च दुःखप्रदत्वात् ॥ अतएव परिणामे विषोपमं

१. आत्मनि स्वरूपे यत् सुखं मुमुक्षावुपलभ्यते ब्रह्मयोगयुक्तात्मा तदेव सुखं भवति ॥ 'ब्रह्मवित् ब्रह्मैव भवती'ति श्रुतिः ॥ २. सुप्तिसमाध्योरुभयोरपि आत्मसुखानुभवसाम्यात्कुतः समाधिरेष्टव्यः इति चेत् सुप्तः तात्कालिकं सुखं लभते ॥ समाधिस्थस्तु अक्षयं सुखं ॥ अतः समाधिरेष्टव्यः ॥ आत्मसुखस्याप्यनुभूतत्वात् तदर्थं बाह्यसुखं त्यजेदेवेति भावः ॥

इदं राजससुखमिति वक्ष्यते ॥ आद्यन्तवन्तो हि विषयेन्द्रियसंबंधमूलकाः सुखानुभवाः ॥ अतो दुःखयोनयः सुखोत्पत्तेः पूर्वतनकालं स्मृत्वा निर्भाग्योऽहं नैतावदिदं सुखमन्वभूवं इति, सुखापगमानन्तरं हा हतोऽस्मि मंदभाग्यः सुखमनुपमं उपनतं अपगतं इति च दूयते हि लोके ॥ पूर्वोत्तरकालयोरसंतः मध्यकाले स्वप्नवदाविर्भूता भोगाः पूर्वं अभावस्य पश्चाद्वियोगस्य च प्रतिसंधानेन वर्तमानेऽपि १ दुःखप्रदाः ॥ न तदानीमपि दुःखास्पृष्टसुखानुभवः ॥ अत एतादृशेषु बाह्यविषयभोगेषु विवेकी न रतिं करोति ॥ अबुधस्तु तेषु न रमते इति काकुः ॥ किंतु रमत एव ॥ अतः आर्जनदोषः रक्षणदोषः क्षयदोषः भोगदोषः हिंसादोषः इति पंचविध२दोषाणां प्रतिविषयभोगं विमर्शे क्रियमाणे तेष्वासक्तिवर्जनमनायासेन कर्तुं शक्यं ॥ वक्ष्यते च॥ 'जन्ममृत्युजराव्याधिदुःखदोषानुदर्शन'मिति ॥ २२ ॥

अर्जुनः ॥ उक्तरीत्या विमृश्य कामक्रोधादिकं वर्जनीयमित्युक्तं ॥ भवतु ॥ विमृश्य कालक्रमेण तद्वर्जने प्रयतामहे इति कालविलंबे क्रियमाणे कोऽनर्थः ॥ सद्य एव तद्वर्जनप्रयत्ने क्रियमाणे कोऽर्थः॥ तावुभावर्थानर्थौ ब्रूहि ॥

कृष्णः ॥ शक्नोतीहैव यः सोढुं प्राक् शरीरविमोक्षणात् ॥
कामक्रोधोद्भवं वेगं स युक्तः स सुखी नरः ॥ २३ ॥

शक्नोतीति ॥ यः शरीरस्य विमोक्षणं त्यागः शरीरविमोक्षणं तस्मात् प्राक्

१. अत्र 'भोगे रोगभयं कुले च्युतिभयं वित्ते नृपालाद्भयं माने दैन्यभयं बले रिपुभयं रूपे जराया भयं ॥ शास्त्रे वादिभयं गुणे खलभयं काये कृतांताद्भयं सर्वं वस्तु भयान्वितं भुवि नृणां वैराग्यमेवाभयं'॥ 'स्तनौ मांसग्रंथी कनककलशावित्युपमितौ मुखं श्लेष्मागारं तदपि च शशांकेन तुलितं ॥ स्रवन्मूत्रक्लिन्नं करिवरशिरस्स्पर्धि जघनं मुहुर्निन्द्यं कायं कविजनविशेषैर्गुरु कृतं' ॥ 'अस्राक्षीन्नवनीलनीरजदलोपांतातिसूक्ष्मायतत्वङ्मात्रांतरितामिषं यदि वपुर्नैव प्रजानां पतिः ॥ प्रत्यङ्गक्षरदस्रविस्रपिशितप्रासग्रहं गृण्हतो गृध्रध्वांक्षवृकान् तनौ निपततः को वा कथं वारयेत्' ॥ इति श्लोकाः ॥ 'लोक एष विषयानुरंजनं दुःखगर्भमपि मन्यते सुखं ॥ आमिषं बडिशगर्भमप्यहो मोहतो ग्रसति यद्वदंडजः' ॥ इति श्लोकश्चानुसन्धेयाः ॥ २. वि ॥

इहैव अस्मिन्नेव जन्मनि कामश्च क्रोधश्च कामक्रोधौ ताभ्यां उद्भवो यस्य तं वेगं सोढुं शक्नोति शक्तो भवति ॥ सः युक्तः योगवान् सः सुखं अस्यास्तीति सुखी सः नरः मनुष्यः अन्यस्तु पशुः ॥२३॥

श्वः परश्व इति कालविलंबे क्रियमाणे सहसा मृतिरुपगमति चेत् यावच्छरीर-मोक्षं कामक्रोधावजित्वा तद्वशे स्थित्वा शरीरपातानन्तरं तत्फलमनर्थमेव प्रपद्येत ॥ अतः यः नरः इहैव अस्मिन्नेव लोके अस्मिन्नेव देहे जीवनदशायामेव साधनानुष्ठानदशायामेव शरीरत्यागात्पूर्वमेव कामक्रोधातिशय१हेतुकां मनसः क्षोभरूपां वेगशब्दितां कामादीनामुत्कटावस्थां सोढुं प्रयत्नं कृत्वा तेन प्रयत्नेन सोढुं समर्थो भवति ॥ कामक्रोधवेगं सहते ॥ तयोर्न वशमागच्छतीति यावत् ॥ स नरः शरीरपातात्पूर्वमेव ध्यानज्ञानयोगादियुक्तः सन् शरीरपतनानंतरं दिव्यं सुखमाप्नोति ॥ स एव सुखी भवति नान्यः इति सूचनाय स इत्यस्य द्विःप्रयोगः ॥ स एव नरः अन्यस्तु २पशुरिति वा ॥ नर इत्युक्त्या मनुष्य एव विवेकेन कामक्रोधौ जेतुं शक्नोति ॥ न तिर्यंचोऽविवेकिन इति सूच्यते ॥ इहैवेत्युक्त्या सत्येव शरीरे कामक्रोधजये प्रयत्नः कर्तुं शक्य इति सूच्यते ॥ 'प्राक्शरीरविमोक्षणात्' इत्युक्त्या महति प्रयत्ने अक्रियमाणे यावच्छरीरपतनं नानानिमित्तोपनिपातसंभवादवश्यं भावी कामक्रोधवेग इति सूच्यते ॥ कामक्रोधावित्यनुक्त्वा वेगशब्दप्रयोगेण यावत्प्रकृतिबंधं कामक्रोधौ सर्वात्मना न परिहर्तुं शक्यौ ॥ अतस्तद्वेगो दूरतः परिहर्तव्यः ॥ तस्य वेगस्यावकाशदाने स वेगः अमार्गे नीत्वा विषयगर्तेषु मज्जयित्वा अधो नयेत् ॥ न पुनस्तस्योत्थितिः ॥ इति नदीवेगदृष्टांतसूचनमुखेन सूच्यते ॥ शरीर-पातानन्तरं गाढमालिंग्य विलपंतीषु रमणीषु कामः शरीरे अग्निं क्षिपति पुत्रे

१. तौ उद्भवौ यस्य ताभ्यां उद्भवो यस्य वा तं ॥ २. अत्र 'आहारनिद्राभयमैथुनानि सामान्यमेतत्पशुभिर्नराणां ॥ ज्ञानं नराणामधिको विशेषो ज्ञानेन हीनाः पशुभिः समानाः' ॥ 'काले काले न किमुपनतं भुंजते भोग्यजातं गृण्हंत्यंभो न किमथ न किं संविशन्ति क्षपासु ॥ पुष्णंति स्वान् किमु न पृथुकान् स्त्रीषु किं नो रमंते कृत्याकृत्यव्यपगतधियां कस्तिरश्चां च भेदः' ॥ इत्यादिकमनुसन्धेयम् ॥

क्रोधश्च यथा नोत्पद्यते शरीराभिमानत्यागात्॥ तथा १जीवतोपि यथा तौ नोत्पद्येयातां तथा प्रयत्नः करणीय इति 'प्राक्शरीरविमोक्षणा'दित्यनेन सूच्यते ॥ सद्य एव कामक्रोधौ जेतव्यावित्याशयः ॥ तयोः शत्रुत्वात्॥ उक्तं च मया ॥ २ 'इंद्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ॥ तयोर्न वशमागच्छेत् तौ ह्यस्य परिपंथिनौ ॥' इति ॥ शत्रोरिव रोगस्येव तयोरवकाशो न देयः ॥ दीयमानेऽवकाशे ३ रूढमूलौ तौ ४ 'अथ केने'त्यादि प्रश्नोत्तराभ्यां प्रदर्शितविधया नियतं नाशयेतामुमित्यवधेहि ॥ कुंतीगर्भसंभूतस्त्वं विवेकी जेतुं शक्तोऽसि ॥ २३ ॥

द्वै ॥ अर्जुनः ॥ कामादिवर्जनरूपसंन्यासकर्मयोगयोरुभयोरप्यावश्यकत्वमुक्त्वा कर्मणि आत्मनः अकर्तृत्वानुसंधानस्याऽऽवश्यकतामभिधाय अकर्तृत्वादिकमात्मनस्समर्थ्य अकर्तृत्वादिमति च आत्मनि कर्तृत्वादिप्रतीतिरूपभ्रमस्य अज्ञानावरणं कारणमभिधाय तस्यापसारणे ज्ञानरूपमुपायमुक्त्वा तस्य च ज्ञानस्य स्वरूपं स्पष्टीकृत्य पुनः 'न प्रहृष्येत् प्रियं प्राप्ये'त्यादिना संन्यासस्वरूपप्रपंचनपूर्वकं संन्याससहितो यथोक्तः कर्मयोगः स्पष्टीकृतः ॥ तस्य च मोक्षहेतुत्वं 'सुखं वंधात्प्रमुच्यत' इत्यभिधाय तच्च मोक्षहेतुत्वं ज्ञानद्वारेत्यभिहितं ॥ 'सर्वभूताऽऽत्मभूताऽऽत्मा कुर्वन्नपि न लिप्यते'॥ इत्यनेन ॥ तत् कर्मणो ज्ञानद्वारा मोक्षहेतुत्वं तात्पर्यजननाय ज्ञानिस्वरूपविवेचनपुरःसरं भूयोपि ब्रूहि ॥

कृष्णः ॥ योऽतः सुखोऽन्तरारामः तथाऽन्तर्ज्योतिरेव यः ॥
स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति ॥ २४ ॥

य इति ॥ यः अंतः सुखं यस्य सः अंतःसुखः अंतः आरामः क्रीडा यस्य सः अंतराराम: तथा यः अंतः ज्योतिः यस्य सः अंतर्ज्योतिः एवंभूत एव भवेत् सः योगी

१. अत्र 'प्राणे गते यथा देहः सुखं दुःखं न विंदति ॥ तथा चेत् प्राणयुक्तोऽपि स कैवल्याश्रयो भवेत्' ॥ इति वासिष्ठवचनमनुसन्धेयं ॥ २. ३. ३४. ३. अत्र, 'उत्तिष्ठमानस्तु परो नोपेक्ष्यः पथ्यमिच्छता ॥ समौ हि शिष्टैराम्नातौ वर्त्स्यंतावामयः स च'॥ इति श्लोकोऽनुसन्धेयः ॥ ४. ३. ३६.

ब्रह्मणि भूतः स्थितः ब्रह्म ब्रह्मत्वं भूतः प्राप्त इति वा निर्वाणं प्राकृतशरीररहितं आनन्द-रूपं ब्रह्म ब्रह्मनिर्वाणं ब्रह्मानन्दं इत्येकं पदं वा अधिगच्छति प्राप्नोति ॥ २४ ॥

यः अंतः कामादिक्षयादभिव्यक्तस्वरूपसुखः सः अंतःसुखः यः अंतः भगवद्दर्शनजन्यसुखवान् सः अंतरारामः यः अंतः अभिव्यक्तज्योतिःशब्दित-भगवत्स्वरूपः सः अंतर्ज्योतिः 'दर्शनस्पर्शसंभाषाद्यत्सुखं जायते नृणां ॥ आरामः स तु विज्ञेयः सुखं कामक्षयोदितं' ॥ इति वचनात् ॥ यः अंतःसुख एव अंतराराम एव तथा अंतर्ज्योतिरेव सः यः एवं स एव इति वा ॥ युक्तशब्दोदितज्ञानवान् ॥ युक्तशब्दोदितस्य ज्ञानिन इदं स्वरूपं ॥ कुतो हेतोरस्य अंतःसुखादित्वमिति चेत् कर्मध्यानयोगजन्यापरोक्षज्ञानवत्वादस्यांतस्सुखादित्वं ॥ [1]यस्मात् सः योगी कर्मयो-गादिमान् सन् तेन ब्रह्मणि भूतः स्थितः सन् 'तद्बुद्धयः' इत्यनेनोक्तपरोक्षज्ञानवान् सन् तेन प्राकृतदेहशून्यं ब्रह्म अधिगच्छति अपरोक्षतो जानाति तस्मात् सः अंतःसुखत्वादिमान् ॥ यः अंतस्सुखत्वादिमान् स एव युक्तपदोदितो ज्ञानी ॥ यो ज्ञानी स एव मोक्षसुखमश्नुते ॥ यः उक्तरूपो ज्ञानी सः योगी ज्ञानयोगी असं-प्रज्ञातसमाधियोगेन सदा ब्रह्मणि स्थितः सन् प्रकृतिप्राकृतमिश्रणशून्यं परब्रह्म प्राप्नोति ॥ यथोक्ते कर्मणि स्थितः उक्तरूपो ज्ञानी भूत्वा क्रमेण मुक्तिं विंदती-त्याशयः ॥ २४ ॥

अर्जुनः ॥ परोक्षज्ञानेनापरोक्षज्ञानान्मुक्तिरित्युक्तं ॥ प्रतिबंधकपापसद्भावे कथं परोक्षज्ञानं सति वा परोक्षज्ञाने कथं अपरोक्षज्ञानं सति वा अपरोक्षज्ञाने कथं मुक्तिः ॥ ब्रूहि ॥

कृष्णः ॥ लभन्ते ब्रह्मनिर्वाणमृषयः क्षीणकल्मषाः ॥
छिन्नद्वैधा यतात्मानः सर्वभूतहिते रताः ॥ २५ ॥

लभंते इति ॥ यतः निगृहीत आत्मा मनः येषां ते यतात्मानः अतः ऋषयः ज्ञान-वंतः अतः छिन्नद्वैधाः छिन्नौ द्वैधौ संशयविपर्ययौ येषां ते छिन्नः द्वैधः संशयो येषां ते छिन्ना-

१. उत्तरार्धस्याऽऽवृत्त्या एवमपि योजनमूह्यम् ॥

नि द्वैधानि शीतोष्णादिद्वंद्वानि येषां ते वा ॥ अतः क्षीणानि ज्ञानाग्निना क्षयं प्राप्तानि कल्मषाणि प्रतिबंधकपापानि पुण्यानि च येषां ते क्षीणकल्मषाः सन्तः ब्रह्मनिर्वाणं लभंते ॥ २५ ॥

प्रतिबंधकपापानां तन्निवर्तनक्रमेणोपायेन नाशात् परोक्षापरोक्षज्ञाने मुक्तिश्च निर्निरोधं संपद्यन्ते ॥ उपायश्च क इति चेत् कर्मणा यतात्मानः निगृहीतमनसः शुद्धान्तःकरणाः तेन च निरस्तपरोक्षज्ञानोत्पत्तिप्रतिबंधकपापाः तेन च ऋषयः परोक्षज्ञानिनः तद्दार्ढ्यात् छिन्नद्वैधाः द्वेधा भावः द्वैधं विषयापेक्षया अन्यप्रकारत्वं अयथार्थत्वं तदुपेतज्ञानं संशयः विपर्ययश्च तदुभयरहिताः ॥ छिन्नद्वैधायतात्मानः इत्येकं पदं वा ॥ छिन्नद्वैधाश्च ते आयताऽऽत्मानश्च इति विग्रहः ॥ आयतात्मानः दीर्घमनस्काः श्रवणादिना विदितसर्ववेद्याः संशयविपर्ययरहितनिश्चयज्ञानवंतः ॥ तेन तदुत्तरकर्मानुष्ठानेन अपरोक्षज्ञानप्रतिबंधकपापनिवृत्त्या ऋषयः जातापरोक्ष ज्ञानाः तेन च 'तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेत ॥ एवं हैवास्य सर्वे पाप्मानः प्रदूयन्ते' ॥ इति 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशा'दिति च श्रुतिसूत्रोक्तरीत्या निर्धूतमोक्षप्रतिबन्धकपुण्यपापरूपोभयकर्माणः 'तदा विद्वान् पुण्यपापे विधूय निरंजनः परमं साम्यमुपैती'ति श्रुतिः ॥ उक्तं च मया ॥ १ 'बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते' ॥ इति ॥ २ 'न हि ज्ञानेन सदृशं पवित्रमिह विद्यते' ॥ इति च ॥ एवं सर्वत्र परमात्मनः 'पंडिताः समदर्शिनः' इत्युक्तरीत्या साम्यदर्शनादिमत्वेन सर्वेषां भूतानां हिताचरणे निरताः संतः यथोक्तं निर्वाणं ब्रह्म लभंते ॥ २५ ॥

अर्जुनः ॥ किमुक्तक्रमेण जातापरोक्षाणां सकृत् उतासकृत् अपरोक्षतो दर्शनं॥ ब्रूहि ॥

कृष्णः ॥ कामक्रोधवियुक्तानां यतीनां यतचेतसाम् ॥
अभितो ब्रह्म निर्वाणं वर्तते विदितात्मनाम् ॥ २६ ॥

१. २. ५०. २. ४. ३८.

कामेति॥यत चेतसां यतं निगृहीतं चेतः मनः येषां तेषां यतीनां यत्नशीलानां कामश्च क्रोधश्च कामक्रोधौ ताभ्यां विमुक्ताः रहिताः तेषां विदितः ज्ञातः आत्मा परमात्मा येषां ते विदितात्मानः तेषां ब्रह्मनिर्वाण अभितः वर्तते ॥ २६ ॥

कर्मयोगादिभिः यत्नं कुर्वतां तेन निगृहीतमनसां तेन कामक्रोधादिरहितानां तेन परमात्मविषयकपरोक्षापरोक्षज्ञानवतां न केवलं ध्यानकाल एव ॥ किंतु निर्वाणं ब्रह्म अभितो वर्तते ॥ सर्वेषु देशेषु सर्वेषु कालेषु च अपरोक्षज्ञानविषयतया वर्तते ॥ उक्तक्रमेण जातापरोक्षज्ञानानां सदा भगवदपरोक्षसाक्षात्कारसुखानुभवो भवतीत्यहो महिमा कर्मयोगस्य ॥ अतस्त्वमीदृशमहासुखानुभवाय कर्तव्यं कर्मयोगमनुतिष्ठ ॥ २६ ॥

अ ॥ अर्जुनः ॥ यः कामक्रोधोद्भवं वेगं सोढुं शक्नोति तस्य 'ससुखी'ति पुमर्थशिरोरत्नमोक्षसुखवत्त्वमुक्तं ॥ तत्कथं ॥ 'बाह्यस्पर्शेष्वसक्तात्मा विंदत्यात्मनि यत्सुख'मिति कामादिवर्जनमूलकसुखस्य अल्पत्वविनाशित्वयोरुक्तत्वात् ॥ संततब्रह्मनिष्ठावदेकलभ्यमोक्षसुखस्य कामक्रोधवेगसहनमात्रेण प्राप्तुमशक्यत्वाच्च ॥ वद ॥

कृष्णः ॥ न कामक्रोधवेगसहनमात्रेण मुक्तिसुखप्राप्तिः ॥ किंतु यः योगी अंतस्सुख एव भवेत् ॥ अंतः आत्मन्येव सुखं बाह्यविषयनिरपेक्षं यस्य सः तादृशः भवेत् ॥ बाह्यविषयनिरपेक्षात्मसुखानुभववान् भवेत् नतु बाह्यविषयसुखवान् भवेत् ॥ स एव जीवन्मुक्तिसुखं विदेहकैवल्यं च प्राप्नोति ॥ कुतो बाह्यसुखाभावस्तस्येति चेत् अंतरारामः अंतः आत्मन्येव आरामः [1]आरमणं क्रीडनं सुखोत्पत्त्यनुकूलव्यापारः यस्य स तादृशो भवेत् ॥ नतु बाह्ये स्त्र्यादौ क्रीडमानो भवेत् ॥ स एव सुखी भवेत् ॥ त्यक्तसर्वपरिग्रहस्यापि ब्रह्मविदः यदृच्छोपनतैः कोकिलादिमधुरशब्दश्रवणमंदपवनस्पर्शचंद्रोदयमयूरनृत्यादिदर्शनातिमधुरशीतलगंगोदकपानकेतकीकुसुमसौरभाद्यवघ्राणादिभिःसुखोत्पत्तिसंभवात् कथं बाह्य-

१. आत्मन्येव आरमणं अहंबुद्धिः यस्य नतु अनात्मनि देहादौ सः ॥

सुखतत्साधनशून्यत्वमिति चेत् तथा यः अंतरेव आत्मन्येव १ज्योतिः ज्ञानरूपप्रकाशो यस्य सः तादृशो भवेत् ॥ आत्मविषयकज्ञानवानेव भवेत् ॥ नतु श्रोत्रादिजन्यशब्दादिविषयज्ञानवान्न भवेत् ॥ समाधिकालेशब्दादिप्रतिभासाभावात् ॥ व्युत्थाने तत्प्रतिभासेऽपि तेषां मिथ्यात्वनिश्चयात् ॥ स एव सुखी भवेत् ॥ श्रोत्रादिभिः सुखसाधनशब्दादिग्रहणरहितः अतएव सुखसाधनरहितः अतएव बाह्यसुखरहितश्च भवति ब्रह्मवित् ॥ य एवं भवेत् स एव मुच्यते नान्यः ॥ तस्य कीदृशं सुखं संपद्यते ॥ वद ॥ इति चेत् स ज्ञानयोगी ब्रह्मत्वं प्राप्त एव सन् निर्वाणं आनन्दरूपं ब्रह्म अभेदेन प्राप्नोति ॥ अविद्यावरणादविद्यमानप्रायं नित्यसिद्धमेव ब्रह्मत्वं विद्यमानमेवदीपं आवरणनिवृत्त्येव प्राप्नोति 'ब्रह्मैव सन् ब्रह्माप्येती'ति श्रुतिः ॥ 'ब्रह्मनिर्वाण'मित्येकं पदं वा ॥ ब्रह्मणि निर्वाणं निर्वृतिं परमानंदं ब्रह्मणि निर्वाणं लयं वा प्राप्नोति ॥ २४ ॥

अर्जुनः ॥ प्रतिबंधकपापसद्भावे कथं ब्रह्मप्राप्तिः ॥ ब्रूहि ॥

कृष्णः ॥ यतात्मानः शुद्धान्तःकरणाः तेन ऋषयः सम्यग्दर्शिनः तेन छिन्नद्वैधाः निर्धूतसंशयाः सर्वभूतानां हिते रताः संतः ज्ञाननिर्धूतप्रतिबंधकपुण्यपापरूपकर्माणः संतः ब्रह्मनिर्वाणं लभंते ॥ येषां ब्रह्मज्ञानं उत्पन्नं ते सर्वेऽपि मुक्तिं लभन्ते इत्यनियमप्रदर्शनाय बहुवचनं ॥ स्थाणुर्वा पुरुषो वा इति एकस्यां व्यक्तौ स्थाणुत्वपुरुषत्वबुद्ध्योस्समावेशात्संशयो जायते ॥ आत्मज्ञानिनां आत्मनि कयोः बुद्ध्योः समावेशात्संशयः ॥ तत्प्रकाराश्च के ॥ येषां छेदस्सम्यक्दर्शनाज्जायते ॥ इति चेत् आत्मा चिद्रूपोवाऽचिद्रूपो वा ॥ चिद्रूपत्वेऽपि नित्यो वाऽनित्यो वा ॥ नित्यत्वेऽपि देहेन्द्रियादिभ्यो भिन्नो वाऽभिन्नो वा ॥ भिन्नत्वेऽपि देहादिभिः संसृष्टो वा न वा ॥ असंसृष्टत्वेऽपि स्वयं कर्तृत्वादिधर्मविशिष्टो वा न वा ॥ कर्तृत्वादिधर्मवैशिष्ट्याभावेऽपि स्वयं असंगो वा न वा ॥ असंगत्वेऽपि देहादिकृतकर्मभिर्लिप्यते वा न वा ॥ कर्मलेपाभावेऽपि स्वयं ब्रह्माभिन्नो वा न वा ॥ ब्रह्माभिन्नत्वेऽपि ब्रह्मात्मैकत्वविज्ञानं ममोत्पन्नं वा न वा ॥ उत्पन्नत्वेऽपि तद्ज्ञानं

१. अन्तः आत्मन्येव ज्योतिः दृष्टिः मनो वा नतु नृत्यगीतादौ यस्य सः ॥

यथार्थं वा अयथार्थं वा ॥ यथार्थत्वेऽपि मुक्तेः साधकं वा असाधकं वा ॥ मुक्तिसाधकत्वेऽपि मम जीवन्मुक्तिरस्ति वा न वा ॥ तत्सत्वेऽपि विदेहमुक्तिः सिद्ध्यति वा न वा ॥ इत्येवमादयः संशयाः ॥ सर्वेऽपि ते छिद्यंते सम्यक्दर्शनात् ॥ १ 'भिद्यते हृदयग्रन्थिः छिद्यंते सर्वसंशयाः ॥ क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' ॥ इति श्रुतिः ॥ २५ ॥

अर्जुनः ॥ ऋषयः ब्रह्मनिर्वाणं लभंते इत्युक्तं ॥ किं तेषां मृतानामेव ब्रह्मनिर्वाणलाभः ॥ उत जीवतामपि ॥ वद ॥

कृष्णः ॥ निगृहीतमनसां तेन कामक्रोधवियुक्तानां यतीनां यत्नशीलानां संन्यासिनां वा ज्ञातात्मतत्वानां ब्रह्मविदां ब्रह्मनिर्वाणं अभितः उभयतः जीवतां मृतानां च वर्तते ॥ जीवन्मुक्ता भूत्वा पतिते देहे विदेहकैवल्यं प्राप्नुवंति ॥ जीवत एव ब्रह्मभावं गताः ब्रह्मानंदमनुभूय मृताः ब्रह्मणा एकीभवंति ॥ भविष्यतीत्यनुक्त्वा वर्तते इत्युक्त्या नित्यसिद्धमेव ब्रह्मत्व तेषामावरणनिवृत्याऽभिव्यज्यते इति सूच्यते ॥ ईदृशं ब्रह्मज्ञानं कर्मणा सिद्ध्यतीत्यहो महिमा कर्मयोगस्य ॥ अतोऽनुष्ठेयमेव कर्तव्यं कर्म ॥ २६ ॥

वि ॥ अर्जुनः ॥ समदर्शित्वरूपज्ञानविपाकसिद्ध्यर्थं अनुष्ठेयः कर्मयोगः केन प्रकारेणानुष्ठेयः इति पृष्टेन त्वया 'न प्रहृष्येत्प्रियं प्राप्य' त्यादिना कर्मयोगानुष्ठानप्रकारोऽभिहितः ॥ तत्र हर्षोद्वेगनिवृत्तिः बाह्यसर्वविषयसंगराहित्यं तदर्थं तेषु दोषदर्शनं कामक्रोधवेगनिवारणं इत्येतानि क्रमादभिहितानि ॥ यद्येवं बाह्यसर्वविषयसंगः परित्यक्तः तर्हि कयाऽपि विधया सुखानुभवप्रसक्तेरभावादात्मद्रोहः संपद्येत ॥ केनापि प्रकारेण आत्मनः सुखं ह्युत्पादनीयं ॥ किंच उक्तप्रकारेणानुष्ठितेन कर्मणा किं फलं संपद्यते ॥ ब्रूहि ॥

कृष्णः ॥ परित्यक्तं सर्वं भोगभोग्यभोगस्थानभोगोपकरणादिकं आत्मन्येव कल्पयन् आत्मन्येव सुखमनुभवेत् ॥ तर्हि न पुनरात्मने द्रुह्यन् भवति ॥ यः अंतः आत्मैव आत्मन्येव वा सुखं यस्य सः तादृश एव ॥ आत्मानुभवजन्यसुखवानेव ॥

१. मु. ४. ८.

आत्मानुभवेनैव आत्मानं सुखयन् वर्तते ॥ यः अंतः आत्मैव आरामः उद्यानं यस्य सः तादृश एव ॥ आरामो हि भोगस्थानं ॥ यः उद्यान इव भोगस्थाने आत्मन्येव आत्मानं सुखयेत् ॥ भोगस्थानभूत आरामः स्वगुणैः छायापल्लवपुष्पादिभिरनुभूयमानैस्सुखवर्धकः ॥ तद्वत् आत्माऽपि स्वगुणैः अपहतपाप्मत्वासंकुचितज्ञानानंदत्वादिभिरनुसंधीयमानैस्सुखवर्धकः ॥ यः उद्यानेनेव आत्मनैव आत्मानं सुखं प्रापयन् वर्तते ॥ तथा यः अंतर्ज्योतिरेव भवेत् ॥ अंतः आत्मन्येव ज्योतिः ज्ञानं यस्य सः तादृश एव ॥ अन्येषां भोग्यवस्तूनां विषये भोग्यादुपकरणस्य भिन्नत्वेन भोग्यमिव उपकरणमपि पृथक ज्ञातव्यं भवति ॥ आत्मविषये तु भोग्यं भोगोपकरणं च आत्मैवेति नाऽऽत्मज्ञानात्पृथक् उपकरणज्ञानापेक्षा ॥ अतः यः [1] आत्ममात्रविषयकज्ञानाभ्यासवान् वर्तते सः कर्मयोगी ब्रह्मभूतस्सन् पूर्वं शरीरात्माभिमानदशायां देवभूतोऽहं मनुष्यभूतोऽहं इत्यनुसंदधानः कर्मणाऽन्तःकरणशुद्ध्या देहात्माभिमानत्यागात् परं यथावस्थितब्रह्मतुल्यशुद्धाऽऽत्मभूतोऽहमित्यनुसन्दधानः निर्वाणं आनन्दरूप ब्रह्म ब्रह्मतुल्यं आत्मानं, ब्रह्मनिर्वाणमित्येकं पदं ॥ ब्रह्मैव आत्मैव निर्वाणं सुखं, ब्रह्मणि आत्मनि निर्वाणं सुखमिति वा, प्राप्नोति ॥ २४ ॥

अर्जुनः ॥ प्रतिबन्धकपापसद्भावे कथं आत्मानुभवसुखप्राप्तिः संभवति ॥ वद ॥

कृष्णः ॥ छिन्नद्वैधाः [2] 'द्वंद्वातीतो विमत्सरः' ॥ [3] 'निर्द्वंद्वो हि महाबाहो सुखं बंधात्प्रमुच्यते' ॥ इत्युक्तरीत्या शीतोष्णसुखदुःखादिद्वंद्वैर्विमुक्ताः विषयेभ्यः प्रत्याहृत्य आत्मन्येवावस्थापितमनसः कर्मयोगलब्धया अंतःकरणशुद्ध्या आत्मन इव सर्वेषामप्यात्मनां हितेष्वेव निरताः कर्मयोगिनः ऋषयः [4] 'कृत्वाऽपि न निबध्यते' 'निर्द्वंद्वो हि महाबाहो सुखं बंधात्प्रमुच्यते' ॥ [5] 'यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते' ॥ इत्याद्युक्तरीत्या कर्मणैव आत्मसाक्षात्कारवन्तः संतः आत्मप्राप्तिप्रतिबन्धकपापेभ्यो मुक्ताः सन्तः निर्वाणं ब्रह्म लभन्ते ॥ २५ ॥

१. आत्मैव प्रकाशकं ज्योतिर्यस्य सः न तस्य प्रकाशकान्तरापेक्षा ॥ आत्मन्येव ज्योतिः ज्ञानं यस्य सः न तस्य श्रोत्रादिभिः शब्दादिविषयकज्ञानम् ॥ २. ४. २२. ३. ५. ३. ४. ४. १२. ५. ५. ५.

अर्जुनः ॥ 'ब्रह्म निर्वाणं अधिगच्छति' 'ब्रह्म निर्वाणं लभन्ते' इति कथं सुलभमिवोच्यते ॥ दुर्लभं हि तत् ॥ यत् ॥

कृष्णः ॥ कामक्रोधरहितानां यत्नशीलानां आत्मन्येवावस्थापितमनसां १ विजितात्मनां दोषप्रदर्शनेन वशीकृतमनसां कर्मयोगिनां ब्रह्म निर्वाणं अभितः सर्वतो वर्तते ॥ अभितो विद्यमानमिव करस्थं ब्रह्म निर्वाणमीदृशानां योगिनां ॥ करस्थमिव साक्षादविलंबेन प्राप्यं ॥ नतु हस्तोमृतदण्डादिग्राह्यफलादिवद्व्यवहितं ॥ अर्थतः शब्दतश्च पुनरुक्तिः अनुवादमुखेन उक्तार्थे महातात्पर्यद्योतनाय ॥ साक्षादविलंबेनाऽऽत्मावलोकनसाधनत्वादन्यादृशो महिमा कर्मयोगस्य ॥ अतः कर्मयोगो ज्ञानयोगादपि श्रेयानित्यवधेहि ॥ २६ ॥

संजयः ॥ एतावता प्रबन्धेन कर्मयोगं सांगोपांगमुक्त्वा 'स ब्रह्मयोगयुक्ताऽऽत्मा इत्यनेन कर्मणा ध्यानं ध्यानेन ज्ञानं ज्ञानान्मोक्ष इति सूचितं ॥ कर्मण फलं ज्ञानस्य साधनं तं ध्यानयोगं सपरिकरं उपदिशेति पार्थेन प्रार्थितः पार्थसारथिर्भगवान् ध्यानयोगं सपरिकरं षष्ठेनाध्यायेन समग्रेण निरूपयिष्यन् 'संक्षेपविस्तराभ्यां च प्रवदन्ति मनीषिणः' ॥ इति न्यायेन श्रोतृबुद्ध्यनुकूलनाय त्रिभिः श्लोकैः सूत्रविधया ध्यानं ध्येयं फलं च संग्रहेणाऽऽह ॥

कृष्णः ॥ स्पर्शान् कृत्वा बहिर्बाह्यान् चक्षुश्चैवान्तरे भ्रुवोः ॥
प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ ॥ २७ ॥
यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः ॥
विगतेच्छाभयक्रोधो यस्सदा मुक्त एव सः ॥ २८ ॥

स्पर्शानिति ॥ इंद्रियाणि च मनश्च बुद्धिश्च इंद्रियमनोबुद्धयः यताः निगृहीताः इन्द्रियमनोबुद्धयः येन सः यतेंद्रियमनोबुद्धिः अतः विगतेच्छाभयक्रोधः इच्छा च भयं च क्रोधश्च इच्छाभयक्रोधाः विगताः इच्छाभयक्रोधाः यस्य सः तादृशः॥ बाह्यान् स्पर्शान् बहिः कृत्वा चक्षुश्च भ्रुवोः अंतरे मध्य एव कृत्वा मोक्ष एव परं अयनं आश्रयः यस्य सः

१. विजिताऽऽत्मनामिति पाठः ॥

मोक्षपरायणः सन् नासाया अभ्यन्तरं नासाभ्यन्तरं नासाभ्यंतरे चरत इति नासाभ्यन्तरचारिणौ प्राणश्च ापानश्च प्राणापानौ समौ कृत्वा मुनिः मनशीलः ध्यानयोगी स्यात् ॥ यः एवं सः सर्वदा मुक्तएव ॥ स एव मुक्त इति वा ॥ २७ ॥ २८ ॥

स्वतो बाह्यान् सुखाभाससाधनभूतान् शब्दादीन् स्रक्चन्दनवनितादींश्च विषयान् कर्मजनितान्तःकरणशुद्धया विवेकेन बहिः कृत्वा श्रोत्रनेत्राद्यविषयीकरणमेव तेषां बहिष्करणं ॥ श्रोत्रनेत्रादिभिः शब्दादीन् विषयानगृहीत्वेति यावत् ॥ बाह्यानिति विशेषणं किमर्थमिति चेत यदि स्पर्शा आन्तराः स्युः तर्हि प्रयत्नशतेनापि तेषां बहिष्करणं न शक्यते कर्तुं ॥ न तथा ॥ ते तु बाह्याः अविवेकेन चिन्तिताः मनो बुद्धिभ्यां अंतः प्रवेशिताः व्याकुलयन्ति ॥ रागवशादन्तःप्रविष्टानां वैराग्येण बहिर्गमनं संभवतीति सूचनाय बाह्यानित्युक्तं ॥ यदि मनोगतान् विषयान् न बहिष्कुर्यात् ॥ तर्हि ध्येयमात्मवस्तु मनसा कथं ध्यायेत् ॥ अतः तेषां बहिष्करणमावश्यकं ॥ यतेन्द्रियमनोबुद्धिः सन् इंद्रियाणां मनसो बुद्धेश्च विषयेषु प्रवृत्तिं सर्वथा निरुध्य विगतेच्छाभयक्रोधस्सन् इच्छां भयं क्रोधं च सर्वथा परित्यज्य इच्छाभयक्रोधेषु सत्सु न मनो ध्येये वस्तुनि निविशेत ॥ अत इच्छादयो दूरतस्त्याज्याः ॥ यदि कुत्रापि इच्छा न स्यात तर्हि किमर्थं ध्यानयोगे प्रवर्तेत इति चेत् मोक्षपरायणः मोक्षमेव परममाश्रयं मन्वानः सन्, मोक्षेच्छुरित्यनुक्त्वा मोक्षपरायणा इत्युक्त्या मोक्षेऽपि नेच्छा कार्या ॥ किंतु ध्यानजन्यज्ञानहेतुकभगवदत्यर्थप्रसादान्मोक्षः सित्ध्येदेवेति निश्चयवान् स्यादिति सूच्यते ॥ मुनिः मननशब्दितं ध्यानं कुर्वन् ध्यानयोगी स्यात् ॥ कथं ध्यानयोगं कुर्यादिति चेत् भ्रुवोर्मध्ये चक्षुषी कृत्वा क्वापि चक्षुषोरप्रसारणाय भ्रूमध्ये [1] वक्ष्यमाणरीत्या नासाग्रे चैव चक्षुषी विनिवेशयन् सन्, नेत्रयोर्निमीलने निद्रया मनो लीयेत ॥ उन्मीलने च बहिः प्र .रत् अतः अर्धनिमीलितां अर्धमुन्मीलितां च दृष्टिं भ्रूमध्ये नासाग्रे च निधाय, नासाभ्यन्तरचारिणौ प्राणापानौ वायू समौ कृत्वा मुनिः स्यात् ॥ नासिकामध्यचारिणौ

१. ६. १३.

उच्छ्वासनिश्वासरूपौ प्राणापानौ वायू ऊर्ध्वाधोगतिनिरोधेन समौ निष्क्रमणप्रवेश-रूपव्यापारहीनौ समानगतौ नासापुटमध्यचारिणावेव कृत्वा, प्राणापानौ कुंभकेन हृदये निरुध्य न दीर्घमुच्छ्वसन् नापि दीर्घं निश्वसन् किंतु मंदमुच्छ्वसन् मंदं निश्वसन् ध्यानं कुर्यात् ॥ एक एव हृदि वर्तमानः प्राणाख्यो वायुः नासापुटेन बहिर्निष्कामन् प्राण इति, अंतःप्रविशन्नपान इति उच्यते ॥ उच्छ्वासनिश्वासरूपौ तौ प्राणापानौ समौ नासाभ्यन्तरचारिणौ कृत्वा मुनिर्भवेत् ॥ एवं यो मुनिर्वर्तते ॥ सः सदा मुक्त एव ॥ असुक्तोऽपि मुक्तप्रायत्वा[१]न्मुक्त एव ॥ [२]जीवन्नपि [३]साधनानुष्ठान-दशायामपि मुक्त एव ॥ स एव मुक्त इति वा ॥ यः सदा एवं मुनिर्भवति ॥ स मुक्त एवेति वा ॥ २७ ॥ २८ ॥

अर्जुनः ॥ एवं ध्यानयोगे प्रवृत्तेन किं ध्येयं ॥ किंवा तद्ध्यानस्य फलं ॥ वद ॥

कृष्णः ॥ भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरं ॥
सुहृदं सर्वभूतानां ज्ञात्वा मां शांतिमृच्छति ॥ २९ ॥

भोक्तारमिति ॥ यज्ञश्च तपांसि च यज्ञतपांसि तेषां भोक्तारं सर्वे च ते लोकाश्च सर्वलोकाः महांश्चासावीश्वरश्च महेश्वरः सर्वलोकानां महेश्वरः सर्वलोकमहेश्वरः तं सर्वाणि च तानि भूतानि च सर्वभूतानि तेषां सुहृदं अनिमित्तोपकारिणं मां ज्ञात्वा शांतिं मोक्षं सुखं वा ऋच्छति प्राप्नोति ॥ २९ ॥

सर्वैः क्रियमाणानां यज्ञानां तपसां च भोक्तारं ॥ वक्ष्यते च ॥ [४]'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव चे'ति ॥ सर्वेषां लोकानां ईश्वराः ब्रह्मरुद्रेन्द्रादयः तेषामपीश्वरं सर्वभूतानां अनिमित्तोपकारिणं शांतिर्मोक्षः तत्साधनज्ञानविषय त्वात् शांतिशब्दितं मां ध्यात्वा ऋच्छति साक्षात्करोति ॥ तेन च साक्षात्का-रेण मां प्राप्नोति च ॥ कर्मणा शुद्धांतःकरणैः मोक्षसाधनापरोक्षसाक्षात्काराय

१. द्व ॥ २. अ ॥ ३. व ॥ ४. ९. २४.

ब्रह्मचारिभिः ध्याने प्रवर्तितव्यं ॥ तेन च साक्षात्कारद्वारा स्यात् तेषां मोक्षरूपं श्रेयः ॥ २९ ॥

अ ॥ अर्जुनः ॥ य एवं मुनिः स मुक्त एवे त्युक्तं ॥ न तावन्मात्रेण मुक्तिस्स्यात्॥ किंतु ज्ञानादेव मुक्तिः ॥ अतः कथमिदं ॥ वद ॥

कृष्णः ॥ यज्ञानां तपसां च कर्तृरूपेण देवतारूपेण च भोगकर्तारं पालकं वा सर्वेषामपि ईश्वराणां अधीश्वरत्वात् सर्वलोकानां महेश्वरं लोक्यन्ते दृश्यन्ते इति लोकाः अव्यक्तादिस्थूलान्ताः तेभ्यो महान् स्वसंनिधिमात्रेण सर्वचेष्टकत्वादीश्वरश्च तं इति वा ॥ ब्रह्मादिस्तंबांतानां सर्वेषांभूतानां आत्मत्वेन प्रेष्ठतमं ॥ आत्मा हि सर्वेषां भूतानां प्रियतमः ॥ प्रत्युपकारनिरपेक्षतयोपकारिणं॥ वक्ष्यते च ॥ १'निवासः शरणं सुहृ'दिति ॥ मां ज्ञात्वा उक्तरूपेण ध्यानेन साक्षात्कृत्य शान्तिं सर्वोपरतिरूपां मुक्तिं प्राप्नोति ॥ सर्वेषां भूतानां सुशोभनं निर्दोषं हृत् हृदयं उपलब्धिस्थानं यस्य तमिति वा ॥ वक्ष्यते च ॥ २'हृदि सर्वस्य विष्ठितं' ॥ इति ॥ यज्ञतपसां भोक्तारं सोपाधिकं सर्वलोकमहेश्वरं सर्वभूतानां सुहृदं च निरुपाधिकं मां ज्ञात्वा सोपाधिकनिरुपाधिकब्रह्माभिन्नं मां ब्रह्मैवाहमित्यात्माभेदेन ज्ञात्वा शान्तिमृच्छति ॥ नेन्द्रियसंयमादिमात्रेण मुक्तिः ॥ किंतु उक्तरूपब्रह्मात्मैक्यसाक्षात्कारद्वारा ॥ अतः मोक्षाय ज्ञेयं ब्रह्म ॥ तद्ज्ञानाय च कर्मणा शुद्धान्तःकरणैरेवन्ध्यानयोगः कार्यः ॥ स्यात् तेन ज्ञानद्वारा मुक्तिरूपं श्रेयः ॥ २९ ॥

वि ॥ संजयः ॥ कर्मयोगमुक्त्वा तत्फलभूतात्मसाक्षात्काराय आत्मध्यानमुक्त्वा द्वितीयादिभिरध्यायैरुक्तं कर्मयोगमुपसंहरिष्यन्, महता प्रबन्धेनाहं कर्मयोगे नियोजितः ॥ शपसि च तव प्रियं कर्मयोगमकुर्वन्तं ॥ का गतिः किं कर्तव्यं ॥ ईश्वरोऽसि ॥ कर्तुमकर्तुमन्यथा कर्तुं च शक्तोऽसि ॥ अतः त्वत्तोऽहमतिमात्रं भीतः कर्तुमनिच्छन्नपि कर्मयोगं अनुतिष्ठामि त्वदर्थमिति पार्थेनाभिहितः पार्थमाह भगवान् वासुदेवः ॥

कृष्णः ॥ मां ईश्वरं ज्ञात्वा भयात् कर्म माकुरु ॥ किंतु सर्वभूतानां सुहृदं ज्ञात्वा सुहृद आराधनमिव मम आराधनरूपं कर्म सन्तोषेण कुरु ॥ कर्म कुर्वाण

१. ९. १८. २. १३. १८.

एव शान्तिशब्दितं सुखमुपगच्छति ॥ मा कुर्वाण: ॥ कर्तव्यमेव कर्म ॥ वैमनस्येन कृतं कर्म न मम तोषाय भवति ॥ किंतु सुहृद: कर्तव्य उपचारो यथा सतोषेण सुख-रूपेण क्रियते ॥ तथा मां सुहृदं ज्ञात्वा सुहृदर्थं कर्म करोमीति मत्वा संतोषेण सुखरूपेण मदर्थं कर्म कर्तव्यं ॥ तथाकृतमेव कर्म मम तोषाय कल्पते ॥ लोके अवराधिकृता: अकरणे अनर्थापादकं वरिष्ठाधिकारिणं आराधयन्तोऽपि दु:खरूपे-णाराधयन्ति ॥ सुहृदस्त्वाराधनं सुखरूपेण कुर्वन्ति ॥ निर्धनं सुहृदमाराधयन्ति के ॥ न कोऽपि ॥ इति चेत् नाहं निर्धन: सखा किंतु सर्वलोकमहेश्वर: आढ्यतम: सुहृत् ॥ आढ्यतमस्यापि सुहृद: आराधकान्तराभावे नोपचारं कुर्वते ॥ इति चेत् नाहं तथा ॥ किंतु यज्ञतपसां भोक्ता ॥ यज्ञैस्तपोभिश्चाराधयन्तो मम बहवो वर्तन्ते॥ अनेकै: परमेणादरेण परमोपचारैराराध्यमानं महैश्वर्यवंतं सर्वभूतानां सुहृदं आरा-धकेषु बहुषु सत्सु सौहार्दात् स्वगेहमुपागतं स्वस्य सुहृदमिव मां यज्ञतपसां भोक्तारं सर्वलोकमहेश्वरं सर्वभूतानां सुहृदं ज्ञात्वा सुखरूपेण परमेण सन्तोषेण मदर्थं कर्म कुर्वाणो मामाराधयन्नेव सुखं प्राप्नोति ॥ अत: त्वं मां सुहृदं मत्वा परमया प्रीत्या सुखबुद्ध्या कर्मभिराराधय ॥ स्यात्तेन ते परमं मंगलम् ॥ २९ ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे कृष्णार्जुनसंवादे
संन्यासयोगो नाम पंचमोऽध्याय: ॥ ५ ॥

इतीत्यादि ॥ पूर्ववत् ॥ संन्यासस्य कामक्रोधादिवर्जनस्य कर्मसंन्यासस्य ज्ञानयोगस्य च योग: कर्मयोगादवरत्वेन प्रतिपाद्यत्वरूप: संबंधो यस्मिन् स: संन्यास-योग: इति नाम प्रसिद्ध: पंचमोऽध्याय: इति पूर्ण: ॥

इति श्रीमद्भगवद्गीतोपन्यासदर्पणे श्रीलक्ष्मणाचार्यविरचिते संन्यास-
योगाध्यायार्थप्रदर्शक: पंचम: प्रतिबिंब: ॥ ५ ॥

---

श्रीगुरुभ्योनमः

# अथ षष्ठोऽध्यायः ॥

संजयः ॥ द्वितीयतृतीयचतुर्थपंचमैरध्यायैः कर्मयोगः सांगोपांगमभिहितः ॥ पंचमांते कर्मयोगफलभूतः ध्यानयोगः सूत्रभूताभ्यां द्वाभ्यां श्लोकाभ्यामभिहितः ॥ कथं कर्मयोगी ध्यानयोगी भवितुमर्हति ॥ संन्यासिनो योगिनश्च हि ध्यानयोगे अधिकुर्वंति ॥ ध्यानयोगः कर्मयोगस्य फलमस्तु नाम ॥ कथं तं ध्यानयोगं सूचनेन ज्ञातुं शक्नुयां ॥ विस्तरेण तं ध्यानयोगं ब्रूहीति पार्थेन पृष्टो भगवान् तं ध्यानयोगं १ 'उद्धरेदात्मनाऽऽत्मान'मित्यादिना विस्तरेणाभिधास्यन् कर्मयोगप्रशंसामुखेन कर्मयोगी ध्यानयोगाधिकारीत्याह ॥

श्रीभगवानुवाच—

कृष्णः ॥ अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ॥
स संन्यासी च योगी च न निरग्निर्न चाक्रियः ॥ १ ॥

अनाश्रित इति ॥ यः कर्मणः फलं कर्मफलं न आश्रितः अनाश्रितः सन् कर्तुं योग्यं कार्यं कर्म करोति ॥ सः संन्यासः अस्यास्तीति संन्यासी च ॥ योगः अस्यास्तीति योगी च ॥ निर्गताः अग्नयः यस्मात् सः निरग्निः न ॥ न विद्यन्ते क्रियाः यस्य सः अक्रियः स च न ॥ १ ॥

यः क्रियमाणस्य कर्मणः फलं फलत्वेन श्रुतं स्वर्गपशुपुत्रादिकं कर्मकरणनिमित्ततया अनाश्रित्य स्ववर्णाश्रमानुरोधेन कर्तव्यं कर्म करोति सः यथावदनुष्ठितस्वकर्मा २ 'यदृच्छालाभसंतुष्टो द्वंद्वातीतो विमत्सरः' ॥ इत्यादौ कर्मांगत्वेनाक्ककामादिवर्जनरूपसंन्यासवत्वात्संन्यासी ३ 'नियतं कुरु कर्म त्वं ४ 'तदर्थं कर्म कौंतेय मुक्तसंगः समाचर' ॥ ५ 'तस्मादसक्तः सततं कार्यं कर्म समाचर' ॥ इत्यादौ

१. ६. ५. २. ४. २२. ३. ३. ८. ४. ३. ९. ५. ३. १९.

कर्तव्यत्वेनोक्तकर्मयोगरूपयोग[illegible]योगी च ॥ स एव ध्यानाधिकारी ॥ पूर्वाध्यायांते सूचितस्य ध्यानयोगस्य विवरिष्यमाणत्वात् ध्यानयोगाधिकारीति लभ्यते ॥ कर्मयोगिन एव ध्यानयोगाधिकारित्वात्संन्यासकर्मयोगौ विशेषणविशेष्यभूतौ ध्यानयोगाधिकारिविशेषणभूतौ ॥ तदुक्त्या तद्वान् ध्यानयोगाधिकारी लभ्यते ॥ संन्यासी योगी च ध्यानयोगाधिकारीति ध्यानयोगाधिकारिविशेषणभूतौ संन्यासयोगौ तत्र तत्रोच्येते ॥ तौ निरग्नित्वाक्रियत्वरूपाविति केचिन्मन्यंते ॥ न तथा किंतु कामादिवर्जनकर्मयोगरूपा[1]वेव ॥ निरग्निः अग्निरहितः संन्यासी योगी च न ॥ अक्रियः क्रियारहितः संन्यासी योगी च [2]न ॥ ध्यानाधिकारिविशेषणभूतसंन्यासयोगवान् न किंतु उक्तरूपकर्मानुष्ठातैव संन्यासी योगी च ॥ कामादिवर्जनकर्मानुष्ठानरूपसंन्यासयोगवत्वात् ॥ निरग्निः अक्रियश्च यः संन्यासाश्रमी स हि संन्यासी योगी च ॥ तत्कथं यः कर्म करोति सः संन्यासी योगी चेति इति चेत् निरग्निः संन्यासी योगी च न ॥ अक्रियः संन्यासी योगी च न ॥ निरग्निः अक्रियश्च संन्यासी न भवति ॥ संन्यासिनोऽपि अग्नेः क्रियायाश्च सत्वात् ॥ साग्निः सक्रिय एव संन्यासी ॥ उक्तौ हि मया ॥ संन्यासिनो ब्रह्मरूपाऽग्निः तत्पूजारूपा क्रिया च ॥ [3]'दैवमेवापरेयज्ञ'मित्यत्र ॥ अतः साग्निः सक्रियश्च यथोक्तकर्मकारी संन्यासी योगी चेत्युक्तं [4]युक्तं ॥ पूर्वाश्रमस्वीकृतस्याग्नेः संन्यासाश्रमस्वीकारकाले आत्मनि समारोपणाच्च साग्निः संन्यासी ॥ १ ॥

अर्जुनः ॥ यः कर्म करोति स संन्यासी योगी चेत्युक्तं ॥ तत्कथं ॥ कर्मकरणस्य योगत्वात् सः योगी स्यात् ॥ कथं संन्यासी स्यात् ॥ कर्मकरणस्य संन्यासत्वाभावात् ॥ संन्यासवान् हि संन्यासी स्यात् ॥ अतः कथं ॥

१. 'स संन्यासी च योगी चे'ति न कर्मयोगिनः स्तुतिः ॥ किंतु ध्यानाधिकारिविशेषणभूतकामादिवर्जनकर्मयोगयोरुक्तिः ॥ २. नञ्द्वयं प्रतिषेधदार्ढ्याय ॥ ३. ४. २५. ४. निरग्निः अग्न्युपास्तिसहायत्वेन 'योषा वाव गौतमाग्नि'रिति श्रुत्या वा अग्निशब्दोदितभार्यापरित्यागी न संन्यासी ॥ अक्रियः विहितकर्मपरित्यागी न योगी ॥ भार्यापरित्यागमात्रेण न संन्यासी ॥ क्रियापरित्यागमात्रेण न योगी ॥ किंतु सभार्योऽपि सक्रियोऽपि उक्तरूपकर्मकृत् संन्यासी योगी च ब्रुवंति केचित् ॥

कृष्णः ॥ यं संन्यासमिति प्राहुर्योगं तं विद्धि पांडव ॥
न ह्यसंन्यस्तसंकल्पो योगी भवति कश्चन ॥ २ ॥

यमिति ॥ हे पांडव यं संन्यासं इति प्राहुः ॥ तं योगं योगैकदेशं विद्धि ॥ योगं तं तत्सदृशं विद्धि ॥ तं योगं योगान्तर्गतं विद्धि ॥ सम्यक् न्यस्तः त्यक्तः संकल्पः येन सः संन्यस्तसंकल्पः सः न भवतीत्यसंन्यस्तसंकल्पः कश्चन कोऽपि योगः अस्यास्तीति योगी न भवति ॥ हि प्रसिद्धम् ॥ २ ॥

'ज्ञेयः स नित्यसंन्यासी' इति पूर्वोक्तरीत्या यं कामादिवर्जनरूपं संन्यासं प्राहुः ॥ सः संन्यासः योगशब्दितकर्मयोगविशेषणतया योगांतर्गतत्वाद्योगशब्दितः ॥ संन्यासं योगांतर्गतत्वाद्योगशब्दितं जानीहि ॥ योगे संन्यासो वर्तते इति कुत इति चेत् संकल्पतदुपलक्षितकामादिवर्जनरूपसंन्यासरहितः कोपि कर्मयोगी न भवति ॥ उक्तरूपसंन्यासवानेव कर्मयोगी भवति ॥ उक्तरूपसंन्यासविशिष्टकर्मयोग एव कर्मयोगः ॥ विशेषणाभावे कर्मयोग एव न भवति ॥ 'अनाश्रितः कर्मफलं इत्युक्तविधया संन्याससहितं कर्म यः करोति सः कर्मयोगी ॥ तेन क्रियमाणे कर्मणि संन्यासस्य विद्यमानत्वात् तादृशकर्मयोगवान् संन्यासवानपि स्यात् ॥ न हि विशिष्टवान् विशेषणवान् न भवति ॥ अतः योगः संन्यासः योगी संन्यासी इति विद्धि ॥ अतः कर्म कुर्वाणो योगी संन्यासी चेत्युक्तः ॥ अत उक्तं युक्तं ॥ पांडवस्त्वमुक्तविधकर्मयोगवान् भूत्वा ध्यानयोगाधिकारी भवितुमर्हसि ॥ २ ॥

अ ॥ कृष्णः ॥ अनाश्रितः कर्मफलं कार्यं कर्म यः करोति सः संन्यासी च योगी च ज्ञानपूर्वकसर्वकर्मसंन्यासरूपमुख्यसंन्यासवांश्च ॥ चित्तवृत्तिनिरोधरूपयोगवांश्च भवति ॥ कर्मयोगिनः स्तुतिरियं ॥ यः अग्निशब्दवाच्यगार्हपत्याहवनीयदक्षिणाग्निरहितः तेन अग्निशब्दलक्षिताग्निसाध्याग्निहोत्रादिक्रियारहितः अनग्निसाध्यतपोदानादिक्रियारहितः देहेंद्रियादिचेष्टारूपक्रियारहितश्च स एव संन्यासी योगी च ॥ कथं कर्म कुर्वन् संन्यासी योगी च स्यात् इति चेत्

१न निरग्निः 'न च अक्रियः' 'सर्वं वाक्यं सावधारणम्' इति न्यायेन निरग्निरेव अक्रिय एव इति लभ्यते ॥ निरग्निरेव संन्यासी योगी च न ॥ अक्रिय एव संन्यासी योगी च न ॥ किंतु साग्निः सक्रियः गृहस्थादिरपि संन्यासी योगी च ॥ अहो महिमा कर्मयोगस्य ॥ स संन्यासी योगी च ॥ निरग्निः अक्रियश्च यः सहि संन्यासी योगी च ॥ कथं कर्म कुर्वन् संन्यासी योगी च भवति इति चेत् कर्म कुर्वन् यद्यपि न निरग्निः नच अक्रियः तथाऽपि संन्यासी योगी च स्तुतिरियं ॥ अथवा निरग्निः न संन्यासी योगी च ॥ अक्रियः न संन्यासी योगी च ॥ किंतु साग्निः सक्रियश्च उक्तरूपं कर्म कुर्वन् संन्यासी योगी च ॥ स्तुतिरियं ॥ 'नहि निंदा' न्यायेन 'अपशवो वा अन्ये गो अश्वेभ्य' इत्यत्र गवाश्वेतरपशूनां पशुत्वनिषेधो यथा गोरश्वस्य च प्रशंसायां पर्यवस्यति तथा निरग्नेरक्रियस्य च संन्यासित्वयोगित्वप्रतिषेधः तदन्यस्य साग्नेः सक्रियस्य कर्मिणः प्रशंसायां पर्यवस्यति ॥ १निरग्निः अग्निशब्दलक्षिततत्साध्यक्रियोपलक्षितसर्वकर्मपरित्यागी संन्यासी न ॥ अक्रियः निरुद्धचित्तवृत्तिः योगी न ॥ इति क्रमात्प्रतिषेधः ॥ एवं सति नञ्द्वयमुपपन्नम् ॥ १ ॥

अर्जुनः ॥ कथं कर्मयोगिनः संन्यासित्वं योगित्वं च ॥ निरग्निरक्रियो हि संन्यासी योगी च ॥ अयंतु साग्निः सक्रियश्च ॥ अत कथमिदं ॥ साग्निरपि सक्रियोऽपि कर्मयोगी संन्यासी योगीचेति स्तूयत इत्युक्तमिति चेत् स्तूयता ॥ असंन्यासिनि अयोगिनि कथं संन्यासियोगिशब्दयोः प्रवृत्तिः संन्यासित्वयोगित्वयोः प्रवृत्तिनिमित्तयो रभावात् ॥ ब्रूहि ॥

कृष्णः ॥ हे पांडव यं सन्यासं अग्निसंन्यासपरमार्थसंन्यासविद्वत्संन्यासशब्दितं इति संन्यासत्वेन हेतुना प्राहुः प्रकृष्टं वदंति २'तस्मान्न्यासमेषां तपसामतिरिक्तमाहुः' ॥ 'न्यास एवात्यरेचयत्' ॥ इति च श्रुतिः ॥ योगं तं ज्ञानपूर्वकसर्वकर्मसंन्यासं जानीहि ॥ कर्मयोगं संन्यासं जानीहि ॥ अतः कर्मयोगी संन्यासी

१. निरग्निः अग्निहोत्रादिपरित्यागी अक्रियः करचरणचेष्टारहितः संन्यासी योगी च न ॥ किंतु मिथ्याचारो भ्रष्टः ॥ उक्तं हि मया ॥ 'मिथ्याचारस्सउच्यते ॥ (३. ६.) इति ॥ २. नां. ७९. ७८.

योगी च भवति ॥ कथं कर्मयोगः संन्यासः स्यात् तयोर्भेदादिति चेत् न तयोः साक्षादभेद उच्यते ॥ किंतु सादृश्यादभेदव्यपदेशः ॥ मुखचंद्रयोर्भेदेऽपि सादृश्यात् मुखं चंद्र इत्यभेदव्यपदेशवत् ॥ कर्मयोगस्य सन्याससादृश्यात्संन्यासत्वेन कर्मयोगिनि संन्यासिशब्दः स्तुत्यर्थं प्रयुज्यते ॥ मुखे स्तुत्यर्थं चंद्रशब्दप्रयोगवत् ॥ यः संन्यासी सः चित्तवृत्तिनिरोधरूपयोगवान् भवति अतो योगी ॥ कर्मिणः सादृश्यात् संन्यासित्वं योगित्वं च संपद्यते ॥ अतः कार्मिणि योगिशब्दोऽपि स्तुत्यर्थं प्रयुज्यते ॥ कर्मयोगवतः प्रधानसंन्यासवतश्च केन साम्यमिति चेत् कर्मफलसंकल्पमूलकचित्तविक्षेपाभावेन साम्यम् ॥ उभयोरपि उक्तचित्तविक्षेपाभावात् ॥ संन्यासिनः संकल्पमूलकचित्तविक्षेपाभावोऽस्ति ॥ स कथमसंन्यासिनः कर्मिण इति चेत् तस्यापि सोऽस्त्येव ॥ तदभावे कर्मयोगित्वमेव नास्ति ॥ अत्यक्तसंकल्पः कोऽपि कर्मयोगी न भवति ॥ प्रसिद्धमिदम् ॥ अतः कर्मयोगी संन्यासी योगी चेति 'स संन्यासी च योगी चे'ति स्तुत्यर्थमुक्तं युक्तम् ॥ असंन्यस्तसंकल्पः कश्चिदपि कर्मी योगी विक्षेपाभावरूपमनःसमाधानवान् न भवति ॥ किंतु संन्यस्तसंकल्प एव कर्मी उक्तसमाधानवान् भवति ॥ अतः केवलकर्मयोगी संन्यासी योगी च न भवति ॥ फलसंकल्पत्यागपूर्वककर्मानुष्ठानवानेव फलसंकल्पत्यागसाम्यात्संन्यासी चित्तविक्षेपाभावसाम्याद्योगी च भवति ॥ अत उक्तं युक्तं ॥ असंन्यस्तसंकल्पः कश्चिदपि कर्मी ज्ञानी वा योगी न भवति ॥ कर्मी ज्ञानी वा सन्यस्तसंकल्पश्चेदेव [१] योगी भवति ॥ अतः कर्मिणः संन्यासिनश्च विक्षेपाभावेन साम्यं सपद्यते ॥ यं धर्मं कर्मित्वादर्शनरूपं सर्वत्र ब्रह्मदृष्ट्या बाह्यपदार्थभावनापरिवर्जनरूपं संन्यासमिति प्राहुः ॥ योगं तं जानीहि ॥ अंगांगिभावेन एकफलकत्वात् ॥ एकफलकयोः फलैक्यादेकत्वमुक्त प्राक् ॥ [२] 'व्यवसायात्मिका बुद्धिरेके'ति ॥ [३] 'एकं सांख्यं च योगं चे'ति च ॥ साम्याद्वा ऐक्यव्यपदेशः ॥ असंन्यस्तसंकल्पः कश्चिदपि योगी समाधानवान्न भवति ॥ अथवा योगी मोक्षयोगार्हो न भवति ॥ किंतु [४] जन्मादि दुःखयोगी भवति ॥ [५] 'कामान्

१. योगी कर्मयोगी ज्ञानयोगी वा मनःसमाधानवान्वा ॥ २. २. ४१. ३. ५. ५. ४. कश्च न इति छेदः ॥ न भवतीति नहि इत्यन्वयः ॥ ५. मुं. ६. २.

यः कामयते मन्यमानः स कामभिर्जायते तत्र तत्र'॥ इति श्रुतिप्रसिद्धमिदं ॥ अतः 'स संन्यासी च योगी चे'ति युक्तम् ॥ २ ॥

वि ॥ कृष्णः ॥ यः कर्मफलं अनाश्रितः कार्यं कर्म करोति सः संन्यासी-ज्ञानयोगी च योगी कर्मयोगी च इति मंतव्यः ॥ १ 'एकं सांख्यं च योगं च यः पश्यति स पश्यति'॥ इति २ 'कृत्वाऽपि न निबध्यते' ॥ इति कर्मिणः ज्ञान-निष्ठाव्यवधानमंतरेणैव आत्मावलोकनसिद्धेरुक्तत्वात् पृथक्साधनभूतकर्मयोग-ज्ञानयोगरूपोभयसाधनसाध्यफलवत्वेन ज्ञानकर्मोभयनिष्ठत्वमुपचारादस्योच्यते ॥ कर्मयोगांतर्गतज्ञानवत्वेन ज्ञानयोगित्व कर्मयोगवत्वात् कर्मयोगित्वं चेति वा ॥ उक्तं च मया ॥ कर्मयोगस्य अंतर्गतज्ञानयोगकत्वं 'व्यवसायात्मिका बुद्धिरेकेहे'ति ॥ ३ 'कर्मण्यकर्म यः पश्ये'दिति च ॥ ४ निरग्निः अग्निशब्दलक्षिताग्निसाध्य-क्रियोपलक्षितसर्वक्रियारहितः कर्मयोगाभावेन नोभययोगयोगी अक्रियः कर्म-भिन्नतत्प्रतिनिर्देश्यज्ञानयोगमात्रनिष्ठश्च न संन्यासी योगी च ॥ ५ निरग्निः श्रौत-क्रियारहितः अक्रियः स्मार्तक्रियारहितः केवलज्ञाननिष्ठः नोभययोगयोगी इति वा ॥ कर्मयोगनिष्ठस्तु उक्तविधया उभययोगयोगी ॥ अतः केवलपरोक्षज्ञानयो-ग्यपेक्षया उक्तरूपकर्मयोगी विशिष्यते ॥ स एव आत्मावलोकनरूपध्यानयोगा-धिकारी ज्ञेयः ॥ १ ॥

अर्जुनः ॥ कथं कर्मयोगिन उभययोगयोगित्वं कर्मयोगानुष्ठानेन कर्मयोगित्व-सत्वेऽपि ज्ञानयोगाभावेन ज्ञानयोगित्वाभावात् ॥ अतः 'स संन्यासी च योगी चे'त्युक्तमयुक्तं इति भाति ॥ ब्रूहि ॥

कृष्णः ॥ हे पांडव यं संन्यासं ज्ञानयोगं इति प्राहुः तं ज्ञानयोगं योगं कर्म-योगमेव जानीहि ॥ कर्मयोगान्तर्गतत्वेन कर्मयोगैकदेशमेव जानीहि ॥ अतः कर्म-योगवान् तदेकदेशज्ञानयोगवानपि भवति ॥ नहि विशिष्टवान् विशेषणवान्न भवति ॥ कुतः कर्मयोगे ज्ञानमस्तीत्यभ्युपगंतव्यं इति चेत् उक्तनानाविधकर्म-

१. ५. ५. २. ४. ११. ३. ४. १८. ४. अत्र नञ्द्वयमुपपन्नम् ॥ ५. अत्र उभाभ्यां केवल-ज्ञानयोगिलाभ. ॥ नञ्द्वयं दार्ढ्याय ॥

योगिषु मध्ये कोऽपि योगी असंन्यस्तसंकल्पः नहि भवति ॥ सं एकीकृत्य कल्पः संकल्पः अनात्मना देहेन एकीकृत्य आत्मनः कल्पनं ॥ देहात्मैक्यज्ञानमिति यावत् ॥ तत् येन न त्यक्तं सः असंन्यस्तसंकल्पः ॥ देहात्मैक्यज्ञानवानिति यावत् ॥ एवंविधो न भवति ॥ अकाम्यकर्मयोगी वा काम्यकर्मयोगी वा देहात्मैक्यज्ञानवान्न भवति ॥ किंतु देहातिरिक्तात्मास्तित्वज्ञानवानेव भवति ॥ तत्र काम्यकर्मयोगी देहातिरिक्तात्मास्तित्वज्ञानवान् ॥ अकाम्यकर्मयोगी तु देहातिरिक्तात्मस्वरूपयाथात्म्यज्ञानवान् ॥ देहातिरिक्तात्मास्तित्वज्ञानाभावे स्वर्गाद्यर्थं काम्यं कर्म वा मोक्षार्थं अकाम्यं कर्म वा कोऽपि न कुर्यात् ॥ अतः आत्मज्ञानंविना कस्यापि कर्मयोगस्याभावात् कर्मयोगी ज्ञानयोगी भवति ॥ अतः कर्मयोगी कर्मानुष्ठानात् कर्मयोगी ॥ उक्तरीत्या तत्र ज्ञानसत्वात् ज्ञानयोगी च भवति ॥ अतः 'स संन्यासी च योगी, च'त्युक्तं युक्तं ॥ काम्यकर्मयोगवानेव उभययोगयोगी ॥ किमुत अकाम्यकर्मयोगवान् ॥ अतः तादृशः अकाम्यकर्मयोगः ॥ उक्तं च मया १'यस्य सर्वे समारंभाः कामसंकल्पवर्जिताः' ॥ इति ॥ २ ॥

अर्जुनः ॥ ध्यानाधिकारत्वेनोक्तो यथोक्तः कर्मयोगः कियत्पर्यंतमनुष्ठेयः किं सकृत् ॥ उत फलप्राप्तिपर्यंतं ॥ ब्रूहि ॥

कृष्णः ॥ आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ॥
योगारूढस्य तस्यैव शमः कारणमुच्यते ॥ ३ ॥

आरुरुक्षोरिति ॥ योगं आरोढुं इच्छुः आरुरुक्षुः तस्य मुनेः कर्म कारणं उच्यते ॥ योगं आरूढः योगारूढः तस्य शम एव कारणं उच्यते ॥ ३ ॥

कर्मलब्धांतःकरणशुद्धिद्वारा मुनेः परोक्षज्ञानिनः योगशब्दितं अपरोक्षज्ञानयोगं प्राप्तुमिच्छोः योगशब्दितापरोक्षज्ञानलाभस्य कर्मयोगः कारणमुच्यते ॥ अपरोक्षज्ञानसिद्धिपर्यंतं कर्मयोगोनुष्ठेयः ॥ योगं अपरोक्षज्ञानं प्राप्तस्य तस्य शम एव सार्वकालिकभगवद्ध्यानमेव कारणमुच्यते ॥ शमः कस्य कारणमिति चेत्

१. ५. १९.

भुक्तत्वातिशयस्येति बोध्यं ॥ १'यदा ते मोहकलिल'मित्यत्र परोक्षज्ञानोदयपर्यंतं कर्मयोगः कर्तव्य इत्युक्तं ॥ अत्र तु अपरोक्षज्ञानोदयपर्यंतं कर्तव्य इत्युच्यते ॥ इति भेदः ॥ तस्यैवानुवादो वा ॥ अपरोक्षज्ञानोदयपर्यंतं नानाजनशुश्रूषारूपं कर्म कर्तव्यं ॥ अपरोक्षज्ञानानंतरं भगवदेकनिष्ठतया नानाजनशुश्रूषारूपकर्मतो निवर्तनीयं ॥ इदमेवोक्तं मया ॥ २'न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः' ॥ इति ॥ 'कर्मकारणमुच्यते' ॥ 'शमः कारणमुच्यते' ॥ इत्युच्यतेपदावृत्त्या द्वयमपीदं श्रुत्यादिप्रमाणप्रमितमिति सूच्यते ॥ प्राप्तेः आरुरुक्षोः आरूढस्येत्यारोहपदेनोक्त्या योगस्य आरोढव्योपरिभागवत्साधनपरंपराप्राप्यत्वं सूच्यते ॥ ३ ॥

अ ॥ योगं ज्ञानयोगं प्राप्तुमिच्छोः मुनेः भाविनीं वृत्तिमाश्रित्य निर्देशः ॥ 'गृहस्थः स्त्रियमुद्वहे'दिति वत् ॥ मुनेर्भविष्यतः ज्ञानप्राप्तेः कर्मयोगः कारणमुच्यते॥ ज्ञानयोगं प्राप्तस्य तस्य शम सर्वकर्मोपरम एव कारणमुच्यते॥ कस्य कारणमिति चेत् ज्ञानयोगपरिपाकस्य कारणं विदेहमुक्तेर्वा कारणं ॥ इदमेवोक्तं मया ॥ ३'तस्य कार्यं न विद्यते' ॥ इति ॥ ध्यानयोगं प्राप्तुमिच्छोः मुनेः कर्मफलत्यागिनः कर्म ध्यानयोगनिष्पत्तौ कारणं ध्यानयोगं प्राप्तस्य सर्वकर्मनिवृत्तिरेव ध्यानपरिपाके कारणं॥ यावत् यावत् कर्मोपरमः तावत्तावत् चित्तसमाधानेन ध्यानयोगपरिपाकः ॥ 'नैतादृशं ब्राह्मणस्यास्ति वित्तं यथैकता समता सत्यता च ॥ शीलं स्थितिर्दंडनिधानमार्जवं ततस्ततश्चोपरमः क्रियाभ्यः' ॥ इति ह्युक्तमभियुक्तैः ॥ योगं चित्तशुद्धिं प्राप्तुकामस्य भविष्यन्मुनेः कर्म चित्तशुद्धेः कारणं ॥ तं योगमारूढस्य तस्य शमः सर्वकर्मसंन्यास एव ज्ञानपरिपाके कारणं ॥ यावद्योगारोहणं कर्मयोगः ॥ योगारूढस्य ४कर्मनिवृत्तिरिति तत्वं ॥ ३ ॥

वि ॥ अर्जुनः ॥ पृथक्साधनभूतज्ञानकर्माभयसाध्यात्मावलोकनरूपफलवत्वात् कर्मयोगी संन्यासी योगी चेत्युच्यते ॥ इत्युक्तं ॥ किं कर्मयोगिनः कर्मणा

१. २. ५२. २. ३. १८. ३. ३. १७. ४. शमः विक्षेपोपरमः स्वत एव कर्मोपरमः ॥ अत्र, सम्यक् न्यासः समाप्तिर्विमलतरधियः कर्मणां संविदाप्तौ संन्यासो यद्वदश्वा स्वयमुपरमति ग्रामवत्कं प्रवेश्य ॥ रंभा तावद्विवृद्धिं भजति फलभरं यावदुच्चैः प्रसूतं ह्रासं पश्चात्तथवामृतमभिलषतो ज्ञानमुत्पाद्यकर्म ' ॥ इति अध्यात्ममीमांसावचनमनुसंधेयम् ॥

ज्ञानयोगव्यवधानमंतरेण साक्षादात्मावलोकनं सिध्यति ॥ किं कर्मणः आत्मावलोकनं प्रति ज्ञानयोगनैरपेक्ष्येण कारणत्वमस्ति ॥ इति शंकते मे मानसं ॥ ब्रूहि ॥

कृष्णः ॥ योगशब्दितं आत्मावलोकनं प्राप्तुमिच्छोः मुनेः कर्मयोगस्य अंतर्गताऽऽत्मयाथात्म्यज्ञानकत्वेन यथावदात्मस्वरूपमनुसंदधतः कर्मयोगिनः कर्म आत्मावलोकनप्राप्तेः कारणं भवतीत्युच्यते ॥ आत्मावलोकनसिद्धिं प्राप्तस्य तस्य-शमः कर्मनिवृत्तिरेव आत्मावलोकनात्मकयोगपरिपाकस्य कारणं उच्यते ॥ आत्मावलोकनस्य कर्म कारणमिति विशेषविधिः शेषनिषेधपरः ॥ शेषश्च परोक्षज्ञानरूपः ॥ ततश्च यथावदनुष्ठितः कर्मयोग एव ज्ञानयोगनिरपेक्षः आत्मावलोकनसाधनं भवतीति सिद्धं ॥ उत्तरार्धे योगारूढस्य कर्मनिषेधः योगमनारूढस्य तत्प्राप्तीच्छोः कर्मकरण[1]विधिपरः ॥ ततश्च योगमनारूढेन तत्प्राप्तीच्छुना तत्प्राप्तिपर्यंतमवश्यं कर्मानुष्ठेयमिति सिद्धं ॥ उक्तरीत्या यथावदनुष्ठितकर्मयोगस्य स्वसाध्यज्ञानयोगस्येव साक्षादात्मावलोकनहेतुत्वात्पृथगुभययोगसाध्यफलसाधनत्वेन संन्यासी च योगी चेति उभययोगयोगित्वोक्तिर्युक्तेत्यवगंतव्यं ॥ आत्मावलोकने मोक्षत्वोपचारेण कर्मयोगो मोक्षहेतुरित्युक्तिः ॥ उक्तं च तथा मया ॥ 'कृत्वाऽपि न निबध्यते' ॥ इति ॥ 'निःश्रेयसकरावुभा'विति ॥ 'निर्द्वंद्वो हि महाबाहो सुखं बंधात्प्रमुच्यते' ॥ इति च ॥ कर्मयोगस्य आत्मावलोकनं फलमुक्तं मया ॥ 'तदा योगमवाप्स्यसी'ति॥ ज्ञानयोगफलमात्मावलोकनं कर्मयोगेनापि साक्षात्पृथक् लभ्यते ॥ अतः उभययोगसाध्यफलसाधकत्वात् कर्मयोगस्य उभयात्मकत्वोक्तिः ॥ उक्तं च मया 'यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते' ॥ इति ॥ पूर्वमसकृदुक्तस्यैवास्यार्थस्य दार्ढ्यार्थमत्र विशेषविधिना अन्यनिषेधेन प्रतिपादनं इति बोध्यम् ॥ ३ ॥

अर्जुनः ॥ योगारोहणशब्दितयोगप्राप्तिपर्यंतं कर्मयोगः कर्तव्य इत्युक्तं ॥ कदा योगारूढ इत्युच्येत ॥ योगारूढलक्षणमस्य कदा भवति ॥ ब्रूहि ॥

१. विशेषविधेः शेषनिषेधे पर्यवसानं अन्यनिषेधस्य अन्यविधिपर्यवसानं च 'रेणुर्द्वयोः स्त्रियां धूलिः पांसुर्ना न द्वयोरजः ॥' इत्यादौ व्यक्तम् ॥

कृष्णः ॥ यदा हि नेंद्रियार्थेषु न कर्मस्वनुषज्जते ॥
सर्वसंकल्पसंन्यासी योगारूढस्तदोच्यते ॥ ४ ॥

यदेति ॥ सर्वे च ते संकल्पाश्च सर्वसंकल्पाः तान् संन्यस्यतीति सर्वसंकल्पसंन्यासी सन् यदा इन्द्रियाणां अर्थाः विषयाः तेषु नानुषज्जते॥ कर्मसु च नानुषज्जते॥ तदा योगं आरूढः योगारूढः उच्यते ॥ हि प्रसिद्धम् ॥ ४ ॥

सर्वेषु कर्मसु क्रियमाणेषु संकल्पसंगफलादित्यागी संकल्पादिकं त्यक्त्वा-कर्म कुर्वाणः कर्मयोगी यदा इंद्रियग्राह्येषु विषयेषु कर्मसु च नानुषज्जते ॥ कर्मफलसंगादिरूपं संबंधं न प्राप्नोति ॥ संकल्पादित्यागात् स्वत एवाप्रयत्नेन विषयेषु कर्मसु च अस्य असंगो यदा जायते तदाऽयं तेन हेतुना योगमारूढ उच्यते ॥ योगारूढलक्षणसंपत्त्या योगारूढ इति व्यवह्रियते ॥ आरुरुक्षोः विषयेषु कर्मसु च अननुषङ्गो महता प्रयत्नेन ॥ आरूढस्य तु प्रयत्नं विना स्वत एवेति भेदः ॥ प्रयत्नं विना स्वत एव अनुषङ्गराहित्यं योगारूढलक्षणं तत्प्राप्तिपर्यन्तं कर्मयोगोऽनुष्ठेयः ॥ ४ ॥

अ॥ विषयेषु नित्यनैमित्तिककाम्यप्रतिषिद्धेषु कर्मसु च यदा कर्तव्यतादिबुद्धिं न करोति तदा सर्वसंकल्पसंन्यासी भवति ॥ सर्वविषयविषयकान् संकल्पान् त्यजति ॥ संकल्पत्यागे कामत्यागो भवति ॥ मूलोन्मूलने तत्कार्यानुदयात् ॥ संकल्पमूलो हि कामः ॥ कामत्यागे च कर्मत्यागी भवति ॥ काममूलानि हि कर्माणि ॥ यदा सम्यग्ज्ञानेन सर्वस्य मिथ्यात्वदर्शनेन सर्वकर्मसंन्यासार्हो भवति तदैव योगारूढ उच्यते ॥ अनेन, कर्मणा अंतःकरणशुद्ध्या लब्धज्ञानस्य विदुषः कर्मसंन्यासो विधीयते ॥ नानुषज्जते अहमेतेषां कर्ता ममैते भोग्या इत्यभिनिवेशरूपं अनुषङ्गं न करोति ॥ सर्वसंकल्पसंन्यासी सर्वेषां मयेदं कर्तव्यं अनेन इदं फलं मया भोक्तव्यं इत्येवंरूपाणां संकल्पशब्दितमनोवृत्तिविशेषाणां तद्विषयाणां कामानां तत्साधनानां च [१]कर्मणां त्यागशीलः योगारूढः विषयेषु कर्मसु च

१. कर्मात्र काम्यं निषिद्धं च॥

अनुषङ्गस्य तद्धेतोः संकल्पस्य च योगारोहणप्रतिबंधकस्याभावात् समाधियोगमारूढो भवति ॥ सर्वेषु द्रव्यगुणकर्मादिषु सं इति कल्पनाः संकल्पाः समीचीनत्वबुद्धयः तेषां त्यागशीलः ॥ अधिष्ठानयाथात्म्यदर्शनेन तत्राऽऽरोपितानां तेषां शुक्तावारोपितस्य रजतस्येव मिथ्यात्वनिश्चयात् ॥ नहि मिथ्यात्वेन निश्चिते वस्तुनि समीचीनत्वबुद्धिर्भवति ॥ भिक्षाटनादौ उपलभ्यमानेपु शब्दादिषु वासनया कर्तव्यत्वेन प्रतीतेषु स्नानशौचादिषु च नानुषज्जते ॥ अहं भुंजे अहं करोमीत्यादिरूपेण कर्तृभोक्तृतादात्म्यापत्तिं न करोति ॥ किंतु उदासीनत्वेन साक्षिभूतस्तिष्ठति ॥ यथावदात्मस्वरूपमनुभवति ॥ वक्ष्यते च ॥ आत्मनः स्वरूपं 'न करोति न लिप्यते' ॥ इति ॥ तदा योगारूढो भवति ॥ सम्यक् शुक्तौ रजतप्रत्ययवत् अद्वितीये ब्रह्मणि कल्पंत इति संकल्पाः विपरीतप्रत्ययाः तत्त्यागी विषयेषु कर्मसु च विषये नानुषज्जते ॥ दृष्टार्थानुरूप्येण वृत्तेः परिणतिं चक्षुरादिभिरिंद्रियैः तत्तद्विषयग्रहणादिरूपकर्माण्यपि न करोति ॥ तदा योगारूढो भवति ॥ यस्माद्योगारूढ एवं विधः तस्मात्तस्य शम एव कारणमुच्यते ॥ प्रसिद्धमिदमुपनिषदादौ ॥ ४ ॥

वि ॥ यदा आत्मव्यतिरिक्तेषु प्राकृतविषयेषु नानुषज्जते तत्साधनभूतेषु काम्यनिषिद्धकर्मसु च सङ्गं न करोति ॥ सङ्गं त्यजतीत्यनुक्त्वा नानुषज्जते इत्युक्त्या न जातं सङ्गं निवर्तयति ॥ किंतु संगः स्वत एव न जायत इति सूच्यते ॥ तदैव सर्वविषयसर्वकर्मविषयकसंकल्पत्यागी योगारूढो भवति ॥ संकल्पत्यागात् योगशब्दितमात्मावलोकनं प्राप्तो भवति ॥ प्रसित्धमिदं ॥ तावदनुष्ठेयं नियतं कर्म ॥ ४ ॥

अर्जुनः ॥ कर्मयोगेन शुद्धान्तःकरण एव ध्यानयोगाधिकारीत्युक्तं ॥ तत्कृतः॥ ब्रूहि ॥

कृष्णः ॥ उद्धरेदात्मनाऽऽत्मानं नाऽऽत्मानमवसादयेत् ॥
आत्मैव ह्यात्मनो बंधुरात्मैव रिपुरात्मनः ॥ ५ ॥

उद्धरेदिति ॥ आत्मना आत्मानं उद्धरेत् ॥ आत्मानं नावसादयेत् ॥ आत्मनः आत्मैव बंधुः ॥ आत्मैव आत्मन रिपुः शत्रुः ॥ हि प्रसिद्धम् ॥ ५ ॥

ईप्सिते आत्मवस्तुनि परमात्मवस्तुनि च आत्मशब्दितस्य मनसो योजनं हि ध्यानं ॥ तच्च शोधितस्यैव मनसः संभवति ॥ नाऽशोधितस्य ॥ मनसः शुद्धिश्च कर्मणैव नान्येन ॥ अतः कर्मयोग्येव ध्यानाधिकारी भवति ॥ कर्मणा शोधितेन मनसा स्वं योगारूढतामापाद्य संसारापाराकूपारादुत्धरेत् ॥ आत्मानं नावसादयेत् न नाशयेत् ॥ न स्वं तस्मिन्निमज्जयेत् ॥ बंधुरुत्धरति रिपुरवसादयति ॥ अतः कथं मनसा उत्धरेत् नावसादयेदित्युच्यते इति चेत् आत्मनः स्वस्य आत्मैव मन एव बंधुः नान्यः ॥ आत्मनः स्वस्य आत्मैव मन एव शत्रुः नान्यः ॥ बंधवो रिपवश्च बाह्यप्रयोजनानुकूल्यप्रातिकूल्याभ्यां देहबंधवः देहशत्रवश्च ॥ मनस्तु पुरुषार्थानुकूल्यप्रातिकूल्याभ्यां आत्मबंधुः आत्मशत्रुश्च ॥ ये बंधवः ये च रिपवः तेऽपि आत्मप्रयुक्ता एवेति युक्तं आत्मन एव बंधुत्वं शत्रुत्वं च ॥ प्रसित्धमिदं ॥ आत्मशब्दाऽऽवृत्तिरुक्तार्थे तात्पर्यद्योतनाय ॥ यो नोत्धरति अवसादयति चात्मानं स १ आत्मद्रोही भवति ॥ आत्मद्रोहिणस्तु अधोगतिर्नियता ॥ २ 'असुर्या नाम ते लोका अंधेन तमसावृताः ॥ तांस्ते प्रेत्याभिगच्छंति ये के चात्महनो जनाः'॥ इति श्रुतिः ॥ आत्मना स्वेनैव स्वमुत्धरेत् ॥ स्वेनैव स्वं नावसादयेत् ॥ स्वस्य स्वयमेव बंधुः ॥ स्वस्य स्वयमेव रिपुश्च ॥ यथा रोगी महाज्वरादिप्रचंडरोगनिमग्नं आत्मानं अपथ्यसेवनमपास्य दिव्यौषधपथ्यसेवननिरतो भूत्वा स्वेनैव रोगादुत्धरति ॥ तथा पुत्रमित्रकलत्रादिगोचरमहामोहावर्तशताकुले कामक्रोधलोभाहंकारममकारादिचित्तविकारमहाग्राहसमुज्जृंभिते नानाविधमहारोगतिमितिमिङ्गिलकोटिविराजिते अशनायापिपासादिमहाकल्लोलोद्वेल्लिते तापत्रयनिबिडबडबानलज्वालामालासंवीते स्वेष्टजननष्टिप्रयुक्तप्रलापमहाध्वनिविघूर्णिते नित्यनिरंतरदुर्वासनाशैवालपटलसंकीर्णे विषयविषपरिपूर्णे संसारार्णवे निमग्नं स्वं श्रद्धाभक्तिसमाराधितपरमेश्वरप्रसादवता सदसद्विवेकवैराग्यशमदमादिसाधनवता श्र-

१. अत, लब्ध्वा कथं चिन्नरजन्म दुर्लभं तत्रापि पुंस्त्वं श्रुतिपारदर्शनं ॥ यस्त्वात्ममुक्तौ न यतेत मूढधीः स ह्यात्महा स्वं विनिहंत्यसद्ग्रहात्' इति विवेकचूडामणिश्लोकोऽनुसंधेयः ॥ २. ई. ३.

वर्णादिसमुत्पन्नात्मज्ञानवता स्वेनैव तस्मात्संसारसागरादुत्धरेत् ॥ अविद्यातत्कार्य-संबंधलेशरहितेन सच्चिदानंदैकस्वरूपेणावस्थापयेत् ॥ स्वस्वरूपेणावस्थानं मोक्षः तं प्रापयेत् ॥ यथा रोगी जिह्वाचापल्यदोषवेगवशगो भूत्वा स्वाऽऽरोग्यप्रातिकूल-मपथ्यं भुक्त्वा स्वं स्वेन नाशयति तथा बाह्यविषयप्रावण्यरूपापथ्यसेवनेन स्वं स्वेन न नाशयेत् ॥ स्वस्य स्वयमेव बंधुः ॥ स्वस्य स्वयमेव शत्रुश्च ॥ अतः उक्तरीत्या आत्मोत्धरणपरेण भवितव्यं ॥ तादृशी योग्यता तु कर्मयोगादेव भवतीति कर्मयोगवानेव ध्यानयोगाधिकारी भवतीति युक्तम् ॥ ५ ॥

अर्जुनः ॥ कस्यात्मनः आत्मा बंधुः शत्रुश्च भवति ॥ कीदृश आत्मा बंधुः शत्रुश्च भवति ॥ ब्रूहि ॥

कृष्णः ॥ बंधुरात्माऽऽत्मनस्तस्य येनाऽऽत्मैवाऽऽत्मना जितः ॥
अनात्मनस्तु शत्रुत्वे वर्तेताऽऽत्मैव शत्रुवत् ॥ ६ ॥

बंधुरिति ॥ येन आत्मना आत्मा जित एव तस्य आत्मनः आत्मा बंधुः ॥ न विद्यते आत्मा यस्य सः अनात्मा तस्य तु आत्मा शत्रुणा तुल्यं शत्रुवत् शत्रोर्भावः शत्रुत्वं तस्मिन् शत्रुत्वएव वर्तेत ॥ ६ ॥

तस्य आत्मनः आत्मा बंधुः ॥ कस्येति चेत् येन आत्मना येन जीवेन आत्मना मनसा बुध्या स्वेनैव वा आत्मा मनः कार्यकारणसंघातो वा वशीकृतः ॥ तस्य आत्मनः मनः स्वरूपं वा बंधुः ॥ तस्य तादृशं जितं मनो बंधुः तादृशः जितेन्द्रिय आत्मा तस्याऽऽत्मनो बंधुः ॥ अनात्मनः येन मनो न वशीकृतं तस्य येन कार्य-करणसंघातः न वशीकृतः तस्य अजितात्मनः आत्मा मन एव स्वरूपमेव वा प्रसित्धशत्रुवत् शत्रुत्वे शत्रुभावे शत्रुकार्ये वर्तेत ॥ तुशब्दः अजितात्मनो महांत-मनर्थं सूचयति ॥ अनात्मनः आत्मभिन्नस्य देहेंद्रियादेः शत्रुत्वे सति आत्मैवस्वय-मेव स्वस्य शत्रुवत् वर्तेत ॥ अनात्मन इति कथमुच्यत इति चेत् सन्नप्यात्मा अवशीकृतत्वेन यस्य नोपकरोति सः अनात्मेत्युच्यते ॥ सदपि धनं यस्य नोप-भोगाय भवति सोऽधन इत्येवोच्यते ॥ बंधुरेवेति वा तस्यैवेति वा येनैवेति वा

मित्र एवेति वाऽन्वयः ॥ शत्रुवदेवेति वा शत्रुत्व एवेति वा वर्ततेवेति वाऽन्वयः ॥ आत्मनो विषयसंगतदसंगाभ्यां शत्रुत्वं मित्रत्वं च भवति ॥ अत एव वदंति ॥ 'मन एव मनुष्याणां कारणं बंधमोक्षयोः ॥ बंधायविषयासक्तं मुक्त्यैनिर्विषयं स्मृतं' ॥ इति ॥ अत आत्मानं कर्मयोगेन शोधितं कृत्वा तेन स्वयमात्मान-मुद्धरेत् ॥ ६ ॥

अर्जुनः ॥ अजितात्मनः आत्मनाऽनर्थो भवतीत्युक्तं ॥ जितात्मनः आत्मना किं भवति ॥ ब्रूहि ॥

कृष्णः ॥ जितात्मनः प्रशांतस्य परमात्मा समाहितः ॥ ६॥ ॥

जितेति ॥ जित आत्मा येन सः जिताऽऽत्मा तस्य प्रशांतस्य परमश्चासौ आत्मा च परमात्मा सम्यक् आहितः स्थापितः समाहितः भवति ॥ ६॥ ॥

जितमनसः अतएव स्वतएव विषयेष्वप्रवृत्तिरूपां प्रशांतिं प्राप्तस्य परमात्मा सम्यक् आहितो भवति ॥ ध्यानयोग विषयीभूय अपरोक्षज्ञानविषयी भवति ॥ तदा योगारूढ उच्यते ॥ ६॥ ॥

अर्जुनः ॥ योगारूढस्य लक्षणं 'यदाहीति संग्रहेणोक्तम् ॥ तद्विस्तरेण स्पष्टं ब्रूहि ॥

कृष्णः ॥ शीतोष्णसुखदुःखेषु तथा मानापमानयोः ॥ ७ ॥
ज्ञानविज्ञानतृप्ताऽऽत्मा कूटस्थो विजितेन्द्रियः ॥
युक्त इत्युच्यते योगी समलोष्टाश्मकांचनः ॥ ८ ॥
सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबंधुषु ॥
साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥ ९ ॥

शीतेति ॥ शीतं च उष्णं च सुखं च दुःखं च शीतोष्णसुखदुःखानि तेषु तथा मानश्च अपमानश्च मानोपमानौ तयोः सम इति शेषः ॥ ७ ॥

ज्ञानेति ॥ ज्ञानं च विज्ञानं च ज्ञानविज्ञाने ताभ्यां तृप्तः आत्मा यस्य सः ज्ञान-

विज्ञानतृप्तात्मा कूटं आकाशं तद्वत् तिष्ठतीति कूटस्थः। विजितानि इंद्रियाणि येन सः विजितेन्द्रियः लोष्टश्च अश्मा च कांचनं च लोष्टाश्मकांचनानि समानि लोष्टाश्मकांचनानि यस्य सः तादृशः सः योगी युक्तः इति उच्यते ॥ ८ ॥

सुहृदिति ॥ सुहृच्च मित्रं च अरिश्च उदासीनश्च मध्यस्थश्च द्वेष्यश्च बंधुश्च सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबंधवः तेषु साधुष्वपि पापेषु च समा बुद्धिः यस्य सः समबुद्धिः विशिष्यते श्रेष्ठो भवति ॥ ९ ॥

शीते उष्णे सुखे दुःखे च प्राप्तेषु तथा मानापमानयोः प्राप्तयोः कूटस्थः कूटं आकाशं तद्वन्निर्विकारः भवति ॥ कुत इति चेत् ज्ञानविज्ञानतृप्तात्मा भगवद्विषयसामान्यज्ञानविशेषज्ञानाभ्यां परोक्षापरोक्षज्ञानाभ्यां वा तृप्तिशब्दितां अन्यआलंबुद्धिं प्राप्नोति तस्य मनः ॥ तादृशः अतो नितरां जितेन्द्रियः ॥ अतः लोष्टशब्दितोमृत्पिंडः अश्मा पाषाणः कांचनं स्वर्णं च तस्य समानि भासन्ते ॥ कांचनं लोष्टाश्मवत् तुच्छं मन्यते ॥ तादृशः योगी योगं कुर्वन् युक्त योगारूढ उच्यते ॥ ध्यानयोगी यदा एतादृशो भवति तदा योगारूढ इति उच्यते ॥ योगारूढस्यैदं लक्षणं ॥ आरुरुक्षोः यथासंभवं साधनम् ॥ ७ ॥ ८ ॥

अर्जुनः ॥ एतल्लक्षणोपेतास्सर्वे योगारूढाः समाः उत तेषु कश्चिद्विशिष्यते ॥ वद ॥ इति चेत् सुहृदादिषु नवसु समबुद्धिर्यो योगारूढः स इतरेभ्यो योगारूढेभ्यः श्रेष्ठो भवति ॥ सुहृत् अनिमित्तोपकारी ॥ मित्रं निमित्तेनोपकारी वधादिकर्ता अरिः उपकारापकारयोरप्रवृत्तः उदासीनः तयोरुभयोः प्रवृत्तः मध्यस्थः ॥ अप्रियकृत् द्वेष्यः ॥ १ सुहृदादिषु समबुद्धिः किमुचिता ॥ अन्याय्या हि सा ॥ कथमेतत् वद ॥ इति चेत् भगवदेकनिष्ठतया ज्ञानश्रेष्ठतरागद्वेषादिदोषवत्त्वेन सुहृदादिषु चित्त्वेन साम्यं गृह्णाति ॥ न सुहृत्त्वादिरूपानागंतुकान् धर्मान् ॥ अतः चित्त्वेन साम्यग्राहिणा समबुद्धिरुचितैव ॥ सुहृदादिषु भगवान् वर्तते ॥ अतस्ते [illegible] इति भगवद्विषयतया साम्यबुद्धिरुचिता ॥ क्वचित् मित्रत्वं क्वचित् शत्रुत्वं इत्यादिरीत्या वैषम्यं भगवान् करोति अतो विषमो भगवानिति वैषम्यमनारोप्य यस्य

१. अत्र विशेषो भाष्यतात्पर्ययोर्द्रष्टव्यः ॥

यदर्हे तदेव तस्मिन् करोति ॥ अतो भगवान् सम इति समबुध्धिरुचिता ॥ सुहृदादिषु स्थितस्य भगवतो गुणादिषु तारतम्यं नास्ति ॥ किंतु साम्यमेव इति समबुध्धिरुचिता ॥ सुहृदादिषु साम्यज्ञानं युक्तं ॥ न साम्येन पूजादिकं युक्तं ॥ अतः सुहृदादिषु पूजादिकं यथायथा कार्यं तथातथैव करणीयं इति ज्ञानं तथा प्रवृत्तिश्च इत्येवं रूपा समबुध्धिरुचिता ॥ एतादृशसमबुध्धिमान् परमो योगारूढ इत्युच्यते ॥ एतादृशयोगारूढत्वप्राप्तिः कर्मयोगफलभूतध्यानयोगस्य फलं ॥ अतो योगारूढत्वाय कर्मयोगलब्धशुद्धिना मनसा ध्यानयोगं कुर्यात् ॥ ६ ॥

अ ॥ कृष्ण ॥ जितात्मनः आत्मशब्दितकार्यकरणसंघातं जितवतः अतएव प्रशांतस्य अतिमात्रोपरतबाह्याभ्यंतरकरणस्य आत्मनः परमात्मा परंब्रह्म सम्यक् आहितो भवति ॥ सम्यक् ध्यानयोगविषयो भवति ॥ चक्षुषो रूपमिव बुद्धिवृत्तेः स्वयमेव विषयो भवति ॥ किंच ॥ शीतोष्णसुखदुःखेषु तथा मानापमानयोः [1]समश्च भवति ॥ तदा योगारूढ उच्यते ॥ शीतोष्णादिभिरपि नासौ चाल्यते ॥ शीतोष्णादिषु सत्स्वपि जितात्मनः परमात्मा स्वप्रकाशज्ञानस्वभावत्वेन परम आत्मा समाधिविषयो भवति परं आत्मा इति वा छेदः ॥ जितात्मनः प्रशांतस्य केवलं आत्मा समाहितो भवति नान्यस्य ॥ तस्माज्जितात्मा प्रशांतश्च भवेत् ॥ यस्य आत्मा समाहितः स योगारूढ उच्यते ॥ [2]जितात्मनः प्रशांतस्य केवलं आत्मा शीतोष्णादिषु सत्स्वपि समाधिविषयो भवति ॥ ७ ॥

किंच [3]ज्ञानविज्ञानाभ्यां परोक्षापरोक्षज्ञानाभ्यां तृप्तमनाः अन्यत्रालंबुध्धिमन्मनाः अतो विजितेंद्रियः अतः समलोष्टाश्मकांचनः अत कूटस्थ आकाशवन्निर्विकारः अप्रकंप्यश्च भवति ॥

[4]किंच 'ज्ञानं शास्त्रेण सर्वस्य ब्रह्ममात्रत्वज्ञानं शास्त्रेण सूर्यचन्द्रग्रहणनिश्चयवत् ॥ विज्ञानं ब्रह्मैवाहमिदं जगच्चेति साक्षादपरोक्षीकरणं ताभ्यां तृप्तात्मा विजि-

१. सम इत्यध्याहारः ॥ २. जितमनसः ॥ ३. अत्र, 'अस्ति ब्रह्मेति चेद्वेद परोक्षज्ञानमेव तत् ॥ अहं ब्रह्मेति चेद्वेद साक्षात्कारः स उच्यते' ॥ इति पंचदशीश्लोकोऽनुसन्धेयः ॥ ४. शीतोष्णेत्यादिसार्धश्लोकः एकं वाक्यम् ॥

तेंद्रियः समलोष्टाश्मकांचनः अतः शीतोष्णादिषु प्राप्तेष्वपि कूटस्थः निर्विकारः तैरप्यप्रकंप्यो भवति ॥ एतादृ॰ योगी ध्यानयोगी युक्तः योगारूढ इत्युच्यते ॥ योगारूढलक्षणमिदम् ॥ ८ ॥

कृष्णः ॥ वादिप्रतिवादिनोर्द्वयोर्विवदमानयोः कस्यापि पक्षमभजमानः उदासीनः उभयोरपि हितैषी मध्यस्थः समबुद्धि॰ कः किंकर्मा इत्यव्यापृतबुद्धिः रागद्वेषादिराहित्येन समबुद्धिः योगारूढेषु विशिष्यते १ विशिष्टोभवति ॥ २ समा बुद्धिः तत्तज्जातिगुणनामरूपक्रियाग्रहणं विना ब्रह्मत्वग्राहिणी बुद्धिः विशिष्यते स्थिरीभवति ॥ अयं योगारूढानां मध्ये श्रेष्ठः ॥ अतो योगारूढत्वाय कर्मयोगं कुर्यात् ॥ ९ ॥

वि ॥ अर्जुनः ॥ कर्मयोग्येव ज्ञानयोगाधिकारी स च कर्मयोगः आत्मावलोकनरूपयोगारोहणपर्यंतं कार्यः ॥ तस्य च योगारोहणस्य मनोजय उपायः इत्यादिकमुक्तं ॥ एतादृशस्य कर्मयोगिनः ध्यानयोगारंभदशां ब्रूहि ॥

कृष्णः ॥ शीतोष्णादिषु प्राप्तेष्वपि जितात्मनः विकाररहितमनसः प्रशांतस्य निवृत्तबाह्येंद्रियव्यापारस्य मनसि परमः कर्मयोगारंभात्पूर्वतनाशुद्धमनस्त्वावस्थापेक्षया कर्मयोगलब्धशुद्धिमदंतःकरणत्वेन उत्तमः आत्मा जीवात्मा समाधियोगार्हो भवति ॥ विशदानुसंधानयोग्यो भवति ॥ ७ ॥

किंच आत्मस्वरूपविषयकसामान्यविशेषज्ञानाभ्यां तृप्तमनाः अतः कूटस्थः कूटं लोहकारयंत्रं तत्सदृशः निर्विकार आत्मा तत्र तिष्ठतीति कूटस्थः ॥ आत्मस्वरूपानुसंधानैकनिष्ठः ॥ कूटं यथा आगंतुकविनश्वरायःपिंडादिसंश्लेषविश्लेषरूपावस्थाप्रवाहे वर्तमानेऽपि स्वस्वरूपे न शैथिल्यादिविकारवत् तथा आत्मा देवमनुष्यादिशरीरसंश्लेषविश्लेषरूपावस्थाप्रवाहे वर्तमानेऽपि 'न जायते म्रियते' इत्याद्युक्तरीत्या न जन्ममरणादिविकारवान् अतः कूटसादृश्यात् कूटशब्देनोच्यते ॥ कूटं शिखरं ॥ देहाद्यपेक्षया उत्तमत्वेन शिखरतुल्यत्वात् कूटशब्दे.

१. विमुच्यते इति पाठांतर ॥ २. विशिष्यते इति पाठे कर्मधारयः बहुमाहवो ॥ विमुच्यत इति पाठे बहुव्रीहिः ॥

नोच्यते ॥ कूटस्थः साधारणो बंशमूलपुरुषः ॥ स यथा स्वीयं साधारणत्वं अनुसंधत्ते ॥ तथा उक्तलक्षणः कृतात्मा स्वीयं साधारणत्वं अनुसंधत्ते ॥ अतः कूटस्थपुरुषसादृश्यात् कूटस्थशब्देनोच्यते ॥ अतः विजितेंद्रियः समलोष्टाश्मकांचनश्च योगी कर्मयोगी युक्तः योगाभ्यासार्हः इत्युच्यते ॥ इयं योगारंभदशा ॥ कर्मणा शोधितेन मनसा ईदृशीं योगारंभदशां आरोहेत् ॥ ८ ॥

वयस्तारतम्ये सत्यपि हितैषिणः सुहृदः ॥ सवयसो मित्राणि ॥ अरयो निमित्तादनिष्टकारिणः ॥ द्वेष्याः स्वभावादेवानिष्टकारिणः ॥ सति हेतौ हिताहितोभयप्रवृत्तियोग्याः हेत्वभावादुभयप्रवृत्तिरहिता उदासीनाः ॥ सत्यपि हेतौ स्वभावत एव उभयप्रवृत्तिरहिता मध्यस्थाः ॥ सुहृदादिषु समबुद्धिः योगाभ्यासार्हेषु विशिष्यते ॥ सुहृदादिषु समबुद्धित्वं युक्तं ॥ साधुषु पापेषु च समबुद्धित्वं कथं युक्तं स्यात् ॥ प्रयोजनाभावसाम्यात्तेषु समबुद्धित्वं युक्तमिति चेत् कथं प्रयोजनाभावः सत्संगमादेर्ज्ञानवृद्धिहेतुत्वेन प्रयोजनसद्भावात् ॥ इति चेत् सत्संगादिसापेक्षो योगी यदीह विवक्षितः स्यात् तर्हि प्रयोजनाभावसाम्यात् समबुद्धित्वं युक्तमित्येतदयुक्तं स्यात् ॥ न तथा किंतु श्रुतसकलश्रोतव्यः कृतसकलकर्तव्यः साक्षात्कारात्यंतयोग्यदशापन्नो योगी विवक्षितः ॥ तस्य च योगोपयुक्तरहस्यस्थानादेरेवोपादेयतया साधुभिः पापैश्च प्रयोजनाभावः समः ॥ अतः तेषु समबुद्धित्वं युक्तं ॥ अत एतादृशो भूत्वा योगारंभदशार्हतामापद्य आत्मावलोकनयोगाभ्यासमारभेत ॥ ९ ॥

अर्जुनः ॥ यस्य ध्यानयोगस्य अधिकारिसाधनफलादि परिकरोऽभिहितः तं ध्यानयोगं सप्रकारं ब्रूहि ॥

कृष्णः ॥ योगी युंजीत सततं आत्मानं रहसि स्थितः ॥
एकाकी [1]यतचित्तात्मा निराशीरपरिग्रहः ॥ १० ॥

योगीति ॥ योगः अस्यास्तीति योगी रहसि एकान्ते स्थितः एकाकी यती

---

१. वि ॥ यतचित्तमनाः आत्मा मनः चित्तं चिंतायुक्तं मनः इति भेदः ॥

चित्तं च आत्मा च चित्ताऽऽत्मानौ यस्य सः यतचित्ताऽऽत्मा निर्गता आशीः यस्मात् सः निराशीः सर्वे च ते परिग्रहाश्च सर्वपरिग्रहाः त्यक्ताः सर्वपरिग्रहाः येन सः त्यक्तसर्वपरिग्रहः तादृशश्च सन् सततं सर्वदा आत्मानं मनः युंजीत योजयेत् ॥ १० ॥

योगी कर्मयोगी कर्मणा लब्धाधिकारः ध्यानयोगे प्रवृत्त एकांते स्थितः तत्रापि एकाकी सन् निरंतरं अहरहः योगाभ्यासकाले विच्छेदराहित्येन संततधारया आत्मानं मनः युंजीत ॥ ध्येये परमात्मवस्तुनि आत्मस्वरूपे वा योजयेत् ॥ चंचलं मनः कथमेकत्र योजयितुं शक्यं ॥ तादृशस्य मनसः ध्येये अवस्थापनपर्यंतं देहः स्थिरीभूय कथं तत्कार्यं साधयेदिति चेत् यतचित्तात्मा मन देहं च नियम्य योगाभ्यासानुकूलतां आपादयेत् ॥ तादृशः अतो निराशीः संछिन्नसर्वविषयाऽऽशापाशः ॥ अन्यथा रागित्वेन ध्यानफलं प्रेप्सेत् ॥ ततश्च तद्ध्यानं कामनया कृतमपार्थकं स्यात् ॥ अतः फलनिरपेक्षः ॥ भार्यापुत्रादिसर्वपरिग्रहशून्यः परिग्रहपरित्यागस्य अशक्यत्वादनुचितत्वाच्च तत्र ममताशून्यः अन्यथा कथंचित् मनसो योजनावसरे परिग्रहस्मरणतद्वचनश्रवणादिना सद्यस्ततो निश्चरेत् चंचलं मनः ॥ अतः तत्राभिमानरहितः तादृशश्च सन् मनः युंजीत ॥ आत्मानं युंजीत योगनिष्ठं कुर्यादिति वा ॥ अयं ध्यानयोगः ॥ १० ॥

कृष्णः ॥ शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ॥
नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥ ११ ॥
तत्रैकाग्रं मनः कृत्वा यतचित्तेंद्रियक्रियः ॥
उपविश्यासने युंज्याद्योगमात्मविशुद्धये ॥ १२ ॥

शुचाविति ॥ आत्मनः स्वस्य न अत्युच्छ्रितं अत्युन्नतं नात्युच्छ्रितं न अतिनीचं अत्यवनतं नातिनीचं चैलं वस्त्रं अजिनं कृष्णाजिनादिकं कुशाः दर्भा उत्तरे यस्य तत् चैलाजिनकुशोत्तरं स्थिरं आसनं शुचौ शुद्धे देशे प्रतिष्ठाप्य तत्र आसने उपविश्य चित्तं च इन्द्रियाणि च चित्तेन्द्रियाणि चित्तेन्द्रियाणां क्रियाः व्यापाराः यताः निगृहीताः

चित्तेंद्रियक्रियः यायेन सः निगृहीतेन्द्रियक्रियः सन् मनः एकं अग्रं विषयः यस्य तत् एकाग्रं कृत्वा आत्मन मनसः स्वस्य वा विशुद्धिः आत्मविशुद्धिः तस्यै आत्मविशुद्धये योगं ध्यानयोगं युंज्यात् कुर्यात् ॥ ११ ॥ १२ ॥

स्वभावतः संस्कारतो वा शुद्धे क्रिमिकीटादिरहिते देशे स्वस्य दार्वादिनिर्मितं आसनं स्थिरं यथातथा प्रतिष्ठाप्य कीदृशमासनमिति चेत् अत्युच्छ्रितिहीनं अत्यवनतिहीनं वस्त्रं कृष्णाजिनं दर्भाश्च उपरि यस्य तादृशं सुखोपवेशार्थं आसनोपरि १कुशानास्तीर्य तदुपरि कृष्णाजिनं प्रसार्य तस्मिन् वस्त्रमास्तीर्य तस्मिन् आसने उपविश्य मनः २ध्येयवस्त्वेकनिष्ठं कृत्वा अतः चित्तस्य इंद्रियाणां च व्यापारान् विहाय चित्तेंद्रियव्यापारोपरमं कृत्वा आत्मनः मनसः शुद्धये आत्मनः स्वस्य बंधनिवृत्तये ध्यानयोगं कुर्यात् ॥ ११ ॥ १२ ॥

कृष्णः ॥ समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ॥
संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥ १३ ॥

प्रशांतात्मा विगतभीः ब्रह्मचारिव्रते स्थितः ॥
मनस्संयम्य मच्चित्तो युक्त आसीत मत्परः ॥ १४ ॥

समामिति ॥ कायश्च शिरश्च ग्रीवा च एषां समाहारः कायशिरोग्रीवं तत् समं यथातथा न चलं अचलं यथातथा धारयन् सन् स्थिरः सन् स्थिरमिति पाठे स्थिरं यथातथा धारयन् स्वं स्वकीयं नासिकाया अग्रं नासिकाग्रं संप्रेक्ष्य दृष्ट्वा दिशः न अवलोकयन् अनवलोकयन् तादृशश्च सन् प्रशांतः आत्मा यस्य सः प्रशांतात्मा विगता भीः भयं यस्मात्

१. औचित्यादत्र विपरीतक्रमो ज्ञेयः चेलाजिनकुशाः उत्तरं यस्य तत् चेलाजिने कुशेभ्यः उत्तरे यस्मिन् तत् ॥ वि ॥ स्थिरत्वार्थं दार्वादिनिर्मितत्व तस्य मृदुत्वार्थं उपरि चेलं तस्य निस्तरंगत्वार्थं शुद्धयर्थं च अजिनं मृदुत्वार्थं शुद्धयर्थं सत्वोन्मेषार्थं च कुशा इति यथाश्रुत एव वा क्रमः ॥
२. एकं अग्रं विषयो यस्य तत् ॥

सः विगतभीः ब्रह्मचारिणां व्रतं ब्रह्मचारिव्रतं तत्र स्थितः मनः संयम्य सम्यक् निगृह्य मयि चित्तं यस्य सः मच्चित्तः तादृशश्च सन् अहं परो यस्य सः मत्परः स च सन् युक्तः ध्यानयोगं कुर्वन् आसीत उपविशेत् ॥ १३ ॥ १४ ॥

कायः मध्यदेहः शिरः ग्रीवा च इत्येतत्त्रयं समं यथातथा अचलं यथातथा धारयन् अत एव [1] स्थिरः ॥ स्वीयं नासाग्रं संप्रेक्ष्य स्थित इव दिशः अनवलोकयंश्च ॥ किं नासाग्रसंप्रेक्षणं योगे अंतर्भूतमिति चेत् न चक्षुषा रूपादिविषयग्रहणराहित्यं विवक्षितं ॥ दिशश्चानवलोकयन्निति किमर्थमिति चेत् चक्षुषा रूपाद्यग्रहणेऽपि अंतरा पुरः पश्चात् पार्श्वयोश्च विपरीतशब्दाद्युत्पत्तौ दिशामवलोकनं कुर्यात् ॥ तच्च योगप्रतिबंधकं अतः अंतरा दिशामवलोकनमकुर्वन् ॥ अनेनैव पूर्त्तौ नासिकाग्रं संप्रेक्ष्येति किमर्थमुच्यते इति चेत् रूपादिग्रहणपरित्यागाय नेत्रनिमीलनं कर्तव्यं प्रतीयेत ॥ तत्करणे लयविक्षेपरस्यात् ॥ तत्परिहाराय नासाग्रं संप्रेक्ष्येति ॥ अर्धनिमीलितनेत्र इत्यर्थः ॥ दिशः अनवलोकयन् हेत्वर्थे शतृप्रत्ययः ॥ [2] 'तस्य संजनयन् हर्षं'मिति वत् ॥ दिशामवलोकनमकर्तुं नासिकाग्रं संप्रेक्ष्य [3] स्थितः, कथमुक्ता स्थितिः सिध्यतीति चेत् प्रशांतात्मा विषयेभ्यो व्यावृत्तमनाः विगतभीः प्रमादालस्याद्यंतरायभयरहितः विजनस्थितिसंभावितसिंहव्याघ्रादिदुष्टजंतुबाधाभयरहितः शास्त्रीयनिश्चयवशात् कर्मपरित्यागजनितपारत्रिकबाधधंभावनासंजातसाध्वसरहितः ब्रह्मचारिणां व्रते ब्रह्मचर्यगुरुशुश्रूषादिरूपे स्थितः ॥ तदर्थं मनः संयम्य पुनर्विषयोन्मुखमकृत्वा न केवलं विषयौन्मुख्यराहित्येनालं मच्चित्तः तस्य नियमितस्य मनसः मयि योजनं कृत्वा, चिंतनीयेषु स्त्र्यादिषु सत्सु कथं त्वयि मनसो योजनं कर्तुं शक्यमिति चेत् मत्परः मामेव परं मन्वानः मम परत्वनिश्चये मनः स्वत एव निविष्टं भवति ॥ परत्वज्ञानाभावेऽपि स्त्र्यादिषु औत्कंठ्यादिना मनोनिवेशदर्शनात् मत्पर इत्युक्तं ॥

१. वि ॥ स्थिरमिति पाठः ॥ समं अचलं स्थिरं च यथातथा इति त्रीणि क्रियाविशेषणानि ॥ २. १. १२. ३. योगं युंज्यादिति पूर्वेण वा युक्त आसीतेत्युत्तरेण वा संबंधः ॥ इति वा ॥

मत्परत्वानुसंधानपूर्वकं मयि निवेशितमनाः युक्तः १ ध्यानयोगं कुर्वन् आसीत ॥ उपविष्टो भवेत् ॥ नतु स्वेच्छया उत्तिष्ठेत् ॥ ब्रह्मचर्यं नाम किमिति चेत् स्नानादिमति स्त्र्यादिवस्तुनि विशेषतः पिंडरूपे मैथुनानुकूलस्मरणावलोकनाऽऽलापनादिराहित्यं ॥ 'ब्रह्मचर्यं च योषित्सु मैथुनानुकूलवर्जनं' ॥ इति स्मरणात् ॥ 'स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणं ॥ संकल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च ॥ एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः ॥ विपरीतं ब्रह्मचर्यं एतदेवाष्टलक्षणं' ॥ इति स्मरणाच्च ॥ एतादृशब्रह्मचर्यादिरूपे ब्रह्मचारिव्रते स्थितः युक्तः आसीतेति कथमुच्यते ॥ नहि उपविश्य योगकरणसमये कश्चिदपि उक्तब्रह्मचर्यरहितस्स्यात् ॥ गुरुशुश्रूषादिमान्वा स्यात् ॥ इति चेत् ॥ अहरहर्योगमभ्यस्यतः यावता दिनाद्यात्मकेन कालेन योगपूर्तिर्भवति तावंतं कालं ब्रह्मचर्यं गुरुशुश्रूषादौ च स्थातव्यं ॥ अत उक्तं युक्तं ॥ १४ ॥

संजयः ॥ उक्तपरिकरपरिष्कृतध्यानयोगकरणमशक्यमिति चिंतयानं पार्थमालक्ष्य विचिततदाशयः फलगौरवपरिज्ञाने महताऽपि प्रयत्नेनेदं साधनीयमिति स्वारसिकी प्रवृत्तिः स्यादिति मत्वा ध्यानयोगनिरूपणे सावशेषेऽपि मध्ये तस्य फलं मोक्षरूपमाह ॥

कृष्णः ॥ युंजन्नेवं सदाऽऽत्मानं योगी नियतमानसः ॥
शांतिं निर्वाणपरमां मत्संस्थामधिगच्छति ॥ १५ ॥

युंजन्निति ॥ नियतं निगृहीतं मानसं मनः यस्य सः नियतमानसः मनसः इमे मानसाः मनोविकाराः नियताः मानसाः यस्य सः इति वा एवं सदा आत्मानं मनः युंजन् योगी ध्यानयोगी निर्वाणं शरीरनाशः तस्मात् परमा उत्तरकालभाविनी निर्वाणपरमा तां मयि संस्था स्थितिः तद्रूपा मत्संस्था तां शांतिं मोक्षसुखं निर्वाणं मोक्षः परमं यस्यां यया वा तां मया मद्रूपेण संस्था स्थितिः यया सा मत्संस्था तां शांतिं उपरतिं

१. ध्यानयोगप्रकारः सविस्तरमुक्तः परमार्थप्रपायाम् ॥

निर्वाणे सुखे परमा निर्वाणपरमा तां मयि संस्था स्थितिः यस्याः सा मत्संस्था तां शांतिं सुखं अधिगच्छति प्राप्नोति । १५ ॥

उक्तप्रकारेण आत्मानं परमात्मानं ध्यायन् मनः योजयन् ध्यानयोगी क्रमेण विषयेभ्यो व्यावर्तितमनाः मानसाः मनोव्यापाराः निश्शेषनिर्धूततरसकलमनोव्यापारो वा सन् निर्वाणपरमां निर्वाणं लिंगदेहत्यागः तस्य परमां तदुत्तरकालभाविनीं मयि संस्था स्थितिः तद्रूपां शांतिं मुक्तिं प्राप्नोति ॥ निर्वाणं मोक्षः परमं परमप्राप्यफलं यस्यास्तां मोक्षपर्यवसायिनीं मयि संस्था यस्यास्तां मदधीनां ममैव मय्येव वा सम्यक् स्थितिः यस्यां तां मदेकनिष्ठापर्यवसायिनीं मया मद्रूपेण सम्यक् स्थिति र्यया तां मद्रूपेणावस्थानहेतुभूतां शांतिं सर्वसंसारोपरतिं प्राप्नोति ॥ [1]मद्रूपेणावस्थानरूपां संसारोपरतिरूपां मुक्तिं प्राप्नोति ॥ [2] निर्वाणस्य सुखस्य परमां परमावस्थारूपां मयि संस्थितां च शांतिं निर्वृतिं प्राप्नोति ॥ अशनायापिपासादिषडूर्मिरहिता मयि विद्यमाना या निर्वृतिः तत्सदृशीं निर्वृतिं प्राप्नोति ॥ उक्तमहाफलसाधनत्वेन ध्यानयोगस्य महता प्रयत्नेन तं [3]ध्यानयोगं साधयेत् । १५ ॥

अर्जुनः ॥ उक्तरीत्या महाफलसाधनत्वात् कथंचिद्योगं साधयामि । मनोयोजनस्य कालविलंबसाध्यत्वात्तावदशनायाऽनुदयार्थं अत्यशनं कृत्वा उपविश्य निद्रां दूरतस्त्यक्त्वा योगमभ्यस्यामि ॥ उचितमेव हि तथाकरणं ॥ वद ॥

कृष्णः ॥ नाऽत्यश्नतस्तु योगोऽस्ति न चैकांतमनश्नतः ॥
न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन ॥ १६ ॥

युक्ताऽऽहारविहारस्य युक्तचेष्टस्य कर्मसु ॥
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥ १७ ॥

१. 'युंजानः प्रथमं मनस्तत्त्वाय सविता धियः' ॥ इति (तै. सं. ४. १. १.) श्रुतिः ॥ २. निर्वाणेषु मध्ये परमा मदीया या निर्वृतिः तां इति वा ॥ ३. योगप्रक्रियाविस्तरोऽत्र ७७ मधुसूदनीये द्रष्टव्यः ॥

नेति ॥ हे अर्जुन अत्यंतं अश्नन् अत्यश्नन् तस्य अत्यश्नत तु योगः नास्ति ॥ एकांतं सर्वथा न अश्नन् अनश्नन् तस्य अनश्नतश्च योगः नास्ति ॥ स्वप्नः निद्रा शीलं यस्य सः स्वप्नशीलः अत्यन्तं स्वप्नशीलः अतिस्वप्नशीलः तस्य च योगः नास्ति ॥ अति जाग्रतः जागरणं कुर्वतश्च योगः नैवास्ति ॥ आहारश्च विहारः संचारः स च आहारविहारौ युक्तौ आहारविहारौ यस्य सः युक्ताहारविहारः तस्य कर्मसु युक्ता चेष्टा करचरणादिव्यापार यस्य सः युक्तचेष्टः तस्य स्वप्नश्च अवबोधः प्रबोधः स च स्वप्नावबोधौ युक्तौ स्वप्नावबोधौ यस्य सः युक्तस्वप्नावबोध तस्य दुःखं हंतीति दुःखहा योगः भवति ॥ १६ ॥ १७ ।

अत्यशनं कुर्वतः योगो नास्ति ॥ तथाचेत् अशनमेव मास्त्विति चेत् एकांतं सर्वात्मना अशनमकुर्वतश्च योगो नास्ति ॥ अतिनिद्राशीलस्य च योगो नास्ति ॥ अतिजाग्रतश्च योगो नैवास्ति ॥ जागरणं योगसिद्धिसाधनमिति शंकावारणाय नैवास्तीत्युक्तं ॥ आहारः अशनं विहारः संचारः योगानुकूलमशनं कार्यं ॥ अतिसंचारेण श्रमोदयात् योगविरोधः स्यात् ॥ अतः युक्त एव संचारः कार्यः ॥ तत्तत्कर्मसु करचरणादिचेष्टा यथोचितं कार्या ॥ करचरणचेष्टाधिक्ये श्रमेण योगप्रतिबंधः स्यात् ॥ अतः कर्मसु युक्तचेष्टेन भवितव्यं ॥ यथोचितं निद्रा कार्या ॥ जागरणमपि यथोचितं कार्यं ॥ अतिस्वप्ने निद्रया कालहरणात् योगो न सिध्येत् ॥ अतिजागरणे यत्नतो निद्राया दूरीकरणेन श्रमोदयात् मनो ध्येये वस्तुनि न लगेत ॥ अतो युक्तस्वप्नावबोधेन भवितव्यं ॥ एवं कुर्वतः सर्वदुःखनिवृत्तिरूपमोक्षहेतुः योगः निष्पन्नो भवति ॥ अत आहारादिकमेवं कुर्वन् योगाभ्यासं कुर्यात् ॥ १६ ॥ १७ ॥

अर्जुनः ॥ एवं योगं कुर्वतः कदा योगपूर्तिर्भवति ॥ वद ॥

कृष्णः ॥ यदा विनियतं चित्तं आत्मन्येवावतिष्ठते ॥
निस्स्पृहस्सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥ १८ ॥

यदेति ॥ वि सम्यक् नियतं निगृहीतं चित्तं मनः यदा आत्मन्येव परमात्मन्येव स्वात्मन्येव वा अवतिष्ठते काम्यंत इति कामाः विषयाः सर्वे च ते कामाश्च सर्वकामाः तेभ्यः निर्गता स्पृहा इच्छा यस्य सः निस्स्पृहः सः तदा युक्तः इत्युच्यते ॥

यदा विशेषेण विषयेभ्यो व्यावर्तितं मनः ध्येये परमात्मनि परब्रह्माभिन्ने आत्मस्वरूपे निश्चलतया अवस्थितं भवति ॥ यदा व्युत्थानदशायामपि सर्वेभ्यो विषयेभ्यो निर्गतस्पृहः । ध्येये वस्तुनि सुदृढं लग्नस्य तत्रैव लब्धरुचेः मनसः न काप्यन्यत्र स्पृहा जायते । तादृशश्च यदा भवति तदा योगसंपूर्तिमान योगारूढ उच्यते ॥ योगसंपूर्तिदशेयं ॥ संप्रज्ञातसमाधिः पूर्वमुक्तः ॥ असंप्रज्ञातसमाधिरनेनोच्यते ॥ 'यदा ही' त्यादिनोक्तं योगारूढलक्षणमनेन विवृतं तत्र दार्ढ्यजननाय ॥ १८ ॥

वि ॥ अर्जुनः । एवं लब्धयोगपरिकरः कदा योगयोग्यो भवति ॥ वद ॥

कृष्णः ॥ यदा चित्तं निरतिशयप्रयोजनरूपे आत्मन्येव निश्चलमवतिष्ठते तदा सर्वकामेषु निस्पृहो योगयोग्य उच्यते ॥ 'युक्त इत्युच्यते योगी' त्युक्तस्य विवरणमिदमतिदार्ढ्याय ॥ १८ ॥

अर्जुनः ॥ योगसंपूर्तिमतो दृष्टांतं मे ब्रूहि ॥ [१]योगदशा मे ब्रूहि ॥

**कृष्णः । यथा दीपो निवातस्थो नेंगते सोपमास्मृता ॥**
**योगिनो यतचित्तस्य युंजतो योगमात्मनः ॥ १९ ॥**

यथेति । नि अविद्यमानः वातः वायुः यस्मिन् सः निवातः निवाते तिष्ठतीति निवातस्थः दीपः यथा नेंगते न चलति ॥ यतं चित्तं यस्य सः यतचित्तः तस्य आत्मनः योगं युंजतः योगिनः आत्मनः मनसः सा उपमा सः दृष्टान्तः स्मृता ॥ १९ ॥

आत्मनः परमात्मनः स्वात्मनो वा योगं [२]तद्विषयकं ध्यानयोगं कुर्वतः विषयेभ्यो व्यावर्तितमनसः योगिनः योगसंपूर्तिमतः सा उपमा स दृष्टांतः ॥ क इति

१. वि ॥ २. आत्मनः स्वस्य श्रेयस्साधनं योगं ॥

चेत् निवातदीपः ॥ कथमिति चेत् वायुसंचाररहितदेशे विद्यमानो दीपः यथा नेंगते न चलति तथा नेंगते ॥ कस्येति चेत् चित्तस्येत्यस्येति शेषः ॥ यतचित्तस्येति कर्मधारयः ॥ यतस्य चित्तस्य वा ॥ यतचित्तस्येति भावप्रधानं ॥ यतचित्तत्वस्य वा ॥ आत्मनः मनसो वा ॥ युंजतो योगिनो वा ॥ युंजतः योगिनः आत्मनः आत्मस्वरूपस्य वा दृष्टान्तः ॥ दीपो वातेन यदा चलति तदा न किमपि वस्तु प्रकाशयति ॥ यदा निवाते स्थितो न चलति तदा प्रकाशयति ॥ तथा बाह्यविषयवासनया चंचलं मनो ध्येयं वस्तु न प्रकाशयति ॥ ध्यानयोगेन निश्चलं तत् ध्येयं प्रकाशयति ॥ अतो मनसो दीपो दृष्टान्तः ॥ वाते स्थितो दीपश्चलनिष्प्रभो वर्तते ॥ निवाते स्थितो दीपः सप्रभस्तिष्ठति ॥ तथा ध्यानयोगमलभमानस्य आत्मा चंचलचेताः ज्ञानरूपप्रभाहीनो वर्तते ॥ ध्यानयोगं कुर्वतस्तु आत्मा निवृत्तसकलेतरविषयमनोवृत्तिः ज्ञानरूपप्रभाभासमानास्तिष्ठति ॥ अतो योगिनः योगिन आत्मस्वरूपस्य वा दृष्टांतः ॥ अयमेव [1]असंप्रज्ञातसमाधिः ॥ 'मनसो वृत्तिशून्यस्य निर्विकाराऽऽत्मनास्थितिः ॥ असंप्रज्ञातनामासौ समाधिर्योगिनां प्रियः' ॥ इति निरूपितोऽयमभियुक्तैः ॥ इयं योगसंपूर्तिमतो योगारूढस्य दशा ॥ [2]इयं योगादशा ॥ १९ ॥

संजयः ॥ अशक्यसाधनमिमं योगं कथमहं साधयेयं इति चिंतयंतं तमालक्ष्य रुच्युत्पादनाय असंप्रज्ञातसमाधि [3]योगं प्रशस्य पुनर्विधत्ते भगवान् ॥

कृष्णः । यत्रोपरमते चित्तं निरुद्धं योगसेवया ।
यत्र चैवात्मनाऽऽत्मानं पश्यन्नात्मनि तुष्यति ॥ २० ॥

यत्रेति । यत्र यस्मिन् योगस्य सेवा योगसेवा तया निरुद्धं चित्तं उपरमते ॥ यत्र यस्मिन् आत्मना आत्मानं आत्मनि पश्यन् सन् तुष्यति चैव ॥ २० ॥

यत्र यस्मिन् काले यस्मिन योगे यस्मिन्नवस्थाविशेषे योगस्य सेवया निरंतराऽऽवृत्त्या निरुद्धं मनः अन्यत्र उपरतिं प्राप्नोति ॥ उप सर्वाधिके विष्णौ

---

१. सामान्येन समाधिनिरूपणमिदम् ॥ असंप्रज्ञातसमाधिस्तु 'यत्रोपरमते' इत्यादिना निरूपयिष्यते ॥ २. चि ॥ ३. योगदशांप्रशस्य तं पुनः विधत्ते ॥

रमते ॥ यस्मिन् योगे संबद्धं मनः इदमातिशयितसुखमिति तत्रैव रमते ॥ यत्र आत्मना मनसा आत्मना परमात्मप्रसादेन आत्मानं परमात्मानं प्रत्यगात्मानं आत्मनि देहे पश्यन् आत्मनि स्वात्मन्येव तुष्टिमनुभवति ॥ आत्मनि अंतःकरणे प्रतिबिंबितं आत्मानं परमात्मानं आत्मना स्वात्मत्वेन ब्रह्मैवाहमिति साक्षात्कुर्वन् तुष्यति ॥ 'समोदते मोदनीयं हि लब्ध्वा ॥' इति श्रुतिः ॥ आत्मानमेवेति वा आत्मन्येवेति वा तुष्यत्येवेति वाऽन्वयः । 'तं विद्या' दिति चतुर्थेनान्वयः ॥ तस्मिन काले योगसिद्धिर्भवतीति शेषः ॥ इति वा ॥ २० ॥

अर्जुनः ॥ आत्मनि सुखमनुभवतीत्युक्तं तत्सुखं कीदृशं केनेंद्रियेण ग्राह्यं ॥ वद ॥

कृष्णः ॥ सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतींद्रियम् ॥
वेत्ति यत्र न चैवायं स्थितश्चलति तत्वतः । २१ ॥

सुखमिति । यत्र यस्मिन् अत्यन्तं भवं आत्यन्तिकं बुद्ध्या ग्राह्यं बुद्धिग्राह्यं इंन्द्रियाण्यतिक्रांतं अतींद्रियं यत् सुखं तत् वेत्ति अनुभवति ॥ यत्र स्थितः अयं तत्वतः नैव चलति च ॥ २१ ॥

यत्र स्थितः अंतमतिक्रम्य वर्तमानं निरपायं बुद्ध्यैव ग्राह्यं इंद्रियाण्यतिक्रान्तं इंद्रियगोचरातीतं अविषयजनितं सुखं यत् तत् अनुभवति ॥ यत्तत् किमपि निरतिशयमिति वा । पार्थ कर्तव्यत्वेन मयोच्यमाने योगे सुखमस्ति ॥ कीदृशमिति चेत् कथं वक्तुं शक्यं । अतींद्रियं हि तत् ॥ इन्द्रियग्राह्यसुखे हि तवानुभवः ॥ यदि तादृशं स्यात् तर्हि एवंस्यात् एवंस्यात् इति वक्तुं शक्यं ॥ न तथा ॥ अतो न वक्तुं शक्यते ॥ अस्तीति कुत इति चेत् बुद्ध्या गृह्यते ॥ अतो नास्तीति वक्तुमयुक्तं ॥ ईदृशं सुखमन्यतोऽपि स्यात् इति चेत् अन्यतोऽपि सुखं स्यात् ॥ तन्नश्वरं ॥ इदं तु अनश्वरं ॥ अननुभवात् एवमिति प्रदर्शयितुमशक्यं ॥ सुखमस्तीति मदीये वचसि विस्रम्भेण प्रवेष्टव्यमत्र योगे त्वया ॥ अतींद्रियमित्यनने इन्द्रियग्राह्यविषयसुखवैलक्षण्यं बुद्धिग्राह्यमित्यनेन बुद्धेर्लीनत्वेन तयाऽप्यग्राह्यात्सौषुप्तिकसुखाद्वैलक्षण्यं चास्य ज्ञातव्यं ॥ किंच यत्र च स्थितः अयं योगी

तत्वतः भगवत्स्वरूपात् अवांचितात्मस्वरूपात् तस्य योगिनो भावः तत्त्वं तस्मात् योगित्वात् नैव चलति ॥ ध्यानयोगे सुखमस्तीति हितमुपदिश्य बलात्प्रवर्तितस्यास्य मनसो स योगो रोचेत वा न वा इति न मे शंका ॥ किंतु विलक्षणसुखानुभवहेतुत्वेन प्रियभगिनीपतिरयं तस्मान्नैव चलेत् ॥ यदि तथा का गतिः इति चिंता मम ॥ तादृशोऽयं ध्यानयोगः ॥ यत्रेत्यस्य उभयत्र संबंधः ॥ अयं [1]योगी यत्सुखमनुभवति तत् बुद्धिग्राह्यं अतींद्रियं आत्यन्तिकं च ॥ तत्सुखं कीदृशमिति चेत् यत्र सुखे स्थितः तत्वतः निश्चयेन नैव चलेत् सुखान्तरं नापेक्षेत ॥ परमानन्दे क्षुद्रानन्दानामन्तर्भावात् ॥ तादृशं तत्सुखं ॥ अत्र यत्रेत्यस्यकेनैव संबंधः ॥ तं योगं विद्यादित्युत्तरेणान्वयः ॥ तस्मिन् काले इति पूर्वेणान्वयः ॥ २१ ॥

कृष्णः ॥ यं लब्ध्वा चा परं लाभं मन्यते नाधिकं ततः ॥
यस्मिन् स्थितो न दुःखेन गुरुणाऽपि विचाल्यते ॥२२॥

यमिति ॥ यं लब्ध्वा अपरं लाभं ततः अधिकं न मन्यते च ॥ यस्मिन् स्थितः गुरुणापि दुःखेन न विचाल्यते ॥ २२ ॥

यं योगं अवस्थाविशेषं वा लब्ध्वा स्थितः अपरं [2]लाभं तस्मादधिकं न मन्यते ॥ सर्वमपि लाभं तस्मादवरमेव मन्यते ॥ यस्मिन् स्थितः महतापि दुःखहेतुना दुःखेन वा न विचाल्यते ॥ दुःखहेतोः दुःखस्य वा उपनिपातेऽपि न विकारं प्राप्नोति ॥ तं विद्यादित्युत्तरेणा [3]न्वयः ॥ २२ ॥

१. अत्र, 'जाग्रत्या मंतरात्मा विषयसुखकृतेऽनेकयत्नांश्च कुर्वन् श्राम्यन् सर्वेन्द्रियेभ्योऽधिगतमपि सुखं विस्मरन् याति निद्रां ॥ विश्रामायात्मरूपे स्वानितरसुलभं तेन चातीन्द्रियं हि सौख्यं सर्वोत्तमं स्यात् परिणतिविरसादिंद्रियोत्थात्सुखाच्च' ॥ इत्यध्यात्ममीमांसावचनमनुसंधेयम् ॥ २. लाभः इष्टप्राप्तिः ॥ ३. चलब्ध्वेति पाठः ॥ यत् सुखं लब्ध्वा न मन्यते ॥ यस्मिन् सुखे स्थितः न विचाल्यते ॥ तत् सुखमयं योगी अनुभवतीति पूर्वेणान्वयः ॥

कृष्णः ॥ तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम् ॥
स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा ॥ २३ ॥

तमिति ॥ दुःखैः संयोगः दुःखसंयोगः तस्य वियोगः येन सः दुःखसंयोगवियोगः तं योग इति संज्ञा अस्य संजाता योगसंज्ञितः तं तं योगं विद्यात् जानीयात् ॥ सः योगः ध्यानयोगः न निर्विण्णं अनिर्विण्णं तच्च तत् चेतश्च अनिर्विण्णचेतः तेन अनिर्विण्णचेतसा निश्चयेन योक्तव्यः कर्तव्यः ॥ निर्विण्णचेतसा इति वा ॥ २३ ॥

तं योगं अवस्थाविशेषं वा योगसंज्ञाविशिष्टं जानीयात् ॥ स एव योगः ॥ कर्मणि योगशब्दप्रयोगस्तु तत्साधनत्वादौपचारिकः ॥ स कीदृश इति चेत् दुःखसंयोगवियोगः दुःखानां तत्तुल्यविषयसुखानां च यः संयोगः तैर्वा यः संयोगः तेन वियोगो यस्मिन् सः ॥ वियुज्यते इति वियोगः दुःखसंयोगेन वियुक्तः ॥ दुःखसंयोगस्य वियोगो यस्मिन् यस्मात् वा सः ॥ दुःखसंयोगाभाववान् ॥ दुःखसंयोगनाशकः ॥ वियुज्यतेऽनेनेति वियोगः दुःखसंयोगस्य वियोगः ॥ दुःखस्य संयोगेन वियोगो यस्मिन् सः ॥ दुःखस्य संयोगो यैस्ते दुःखसंयोगाः विषयाः तेषां वियोगो यस्मिन् सः ॥ उक्तं चेदं मया ॥ [1] 'ये हि संस्पर्शजा भोगाः दुःखयोनय एव ते' ॥ इति ॥ तादृशं तं योगं विद्धि ॥ न केवलमुत्पन्नदुःखनाशकं किंतु दुःखोत्पत्तिमेव निवारयतीति संयोगपदेन सूचितं ॥ ईदृशमहाफलोऽसौ योगः ॥ अस्त्वीदृशो योगः ततः किमिति चेत् स योगः निर्विण्णेन निर्वेदशब्दितं विषयवैराग्यं प्राप्तेन मनसा निश्चयेन योक्तव्यः अवश्यं कर्तव्यः ॥ अनिर्विण्णेन एतावताऽपि कालेन योगो न सिद्ध इति दुःखबुद्ध्या प्रयत्नशैथिल्यं निर्वेदः योगविषये तद्रहितेन चेतसा इह

१. ५. २२.

[1]जन्मनि जन्मांतरे वा शोषयिष्यामीति शास्त्राचार्योपदेशजनिताध्यवसायेन कर्तव्य: ॥ अध्यवसायेन हेतुना अनिर्विण्णेन चेतसा योक्तव्य: ॥ 'यत्रोपरमते' इत्यनेन इतरनिरपेक्षत्वोक्ति: ॥ सुखमात्यंतिक' मित्यनेन साक्षात्कारजन्यसुखोक्ति: ॥ 'यं लब्ध्वे' त्यनेन योगानुष्ठानेऽपि बाह्यसुखाभिलाषेण दु:खेन च अनाक्रम्यमाणत्वोक्ति: ॥ इति विवेक: ॥ विहित एव योग: पुनरत्र विधीयते निश्चयेन योक्तव्य: अनिर्विण्णचेतसा योक्तव्य: इति गुणविधानार्थं ॥ दध्ना जुहोतीत्यादिवत् ॥ २३ ॥

अर्जुन: ॥ उक्तरूपमहाफलोक्त्या विहितस्य पुनर्विधानेन च श्रद्धातिशयजननात् अथैव ध्यानयोगमेव साधयितुमारभे ॥ किमन्येन ॥

कृष्ण: ॥ संकल्पप्रभवान् कामान् त्यक्त्वा सर्वानशेषत: ॥
मनसैवेन्द्रियग्रामं विनियम्य समंतत: ॥ २४ ॥
शनैश्शनैरुपरमेत् बुद्ध्या धृतिगृहीतया ॥
आत्मसंस्थं मन: कृत्वा न किंचिदपि चिंतयेत् ॥ २५ ॥

संकल्पेति ॥ संकल्प: प्रभवत्यस्मादितिप्रभव: कारणं येषां ते संकल्पप्रभवा: तान् सर्वान् कामान् न विद्यते शेष: यस्मिन् कर्मणि तत् अशेषं तेन अशेषत: त्यक्त्वा इन्द्रियाणां ग्राम: समूह: इन्द्रियग्राम: तं मनसैव समंतत: सर्वत: विनियम्य धृति: धैर्यं तेन गृहीता धृति: गृहीता यया वा धृतिगृहीता तया बुद्ध्या शनै: शनै: उपरमेत् मन: आत्मनि संस्था स्थिति: यस्य तत् आत्मसंस्थं कृत्वा किंचिदपि न चिन्तयेत् ॥

संकल्प: एतदर्थमिदं कुर्यामिति संकल्पपूर्वकानुष्ठानं तेन काम्यकर्मानुष्ठानेन ये विषयभोगा: जायन्ते तान् सर्वान् निश्शेषं त्यक्त्वा संकल्प: विषयध्यानं

---

1. अत्र संप्रदायविद: आख्यायिकामाचक्षते ॥ कस्यचित् किल पक्षिणोऽण्डानि तीरस्थानि तरंगवेगेन समुद्रोऽपजहार ॥ सच समुद्रं शोषयिष्याम्येवेति प्रवृत्त: स्वमुखाग्रेणैकैकं जलबिंदुमुपरि प्रचिक्षेप ॥ तदा च बहुभि: पक्षिभिर्बंधुवर्गैर्वार्यमाणोऽपि नैवोपरराम ॥ यदृच्छया च तत्रागतेन नारदेन निवारितोऽप्यस्मिन् जन्मनि जन्मान्तरे वा येन केनाप्युपायेन समुद्रं शोषयिष्याम्येवेति प्रतिजज्ञे ॥ ततश्च दैवानुकूल्यात् कृपालुर्नारद: गरुडं तत्साहाय्याय प्रेषयामास ॥ समुद्रस्त्वद्ज्ञातिद्रोहेण त्वामवमन्यत इति वचनेन ॥ ततो गरुडपक्षवातेन शुष्यन् समुद्रो भीतस्तान्यण्डानि तस्मै पक्षिणे प्रददौ ॥ इति ॥ एवमखेदेन मनोनिरोधे परमधर्मे प्रवर्तमानं योगिनमीश्वरोऽनुगृह्णाति ॥ ततश्च पक्षिण इव तस्याभिमतं सिध्यतीति भाव: ॥

तत्प्रभवाः कामाः तान् सर्वविषयविषयकान् कामान् निःशेषं त्यक्त्वा उक्तं हि मया ॥ [१] 'ध्यायतो विषयान् पुंसः संगस्तेषूपजायते । संगात्संजायते कामः' इत्यादि ॥ सं समीचीनं इति कल्पः कल्पना संकल्पः समीचीनत्वबुद्धिः शोभनाध्यासः तन्मूलकान् इदं मे स्यादित्यादिरूपान् सर्वविषयविषयकान् अभिलाषान् अशेषतः, यथा त्यक्तेऽपि तैले लेपरूपेण पात्रे शेषस्तिष्ठति ॥ तथा कामेषु त्यक्तेष्वपि विषयेषु रंजनारूपेण कामशेषः स्यात् ॥ स यथा न स्यात् तथा, विषयेषु भोग्यत्वबुद्धिरूपया वासनया सह त्यक्त्वा, कामाः विषयाः द्विविधाः ॥ संकल्पजाः स्पर्शजाश्च ॥ तत्र संकल्पजाः पुत्रक्षेत्रादयः । स्पर्शजाः शीतोष्णादयः ॥ संकल्पजाः पुत्रादयः स्वरूपेणैव त्यक्तुं शक्याः । तान् [२] मनसैव निश्शेषं त्यक्त्वा, स्पर्शजाः शीतोष्णादयः अवर्जनीयाः स्वरूपेण त्यक्तुमशक्याः ॥ तेषु हर्षशोकौ त्यक्त्वा, समंततः सर्वेभ्यो विषयेभ्यः समंततः इतस्ततः प्रसरंतमिति वा चक्षुरादीनां इंद्रियाणां समूहं मनसैव निगृह्य व्यावर्त्य एवकारेण मनसैव नियन्तुं शक्यते नान्येनेति सूच्यते । [३] मनसैव विवेकयुक्तेन नान्यैर्वायुनिरोधादिभिर्हठोपायैः ॥ मनसः इंद्रियैः सह संयोगाकरणेनैव इंद्रियनियमनं संपद्यते न साधनांतरापेक्षा । [४] शनैः शनैः क्रमेण उपरमेत् ॥ मनः उपरमयेत् ॥ उपरतं कुर्यात् । स्व सर्वाधिके परमात्मनि रमयेत् । स्वयमुपरतिं प्राप्नुयात् । परमात्मन्येव रतिं प्राप्नुयात् ॥ केन साधनेनेति चेत् धृतिगृहीतया बुद्ध्या उपरमेत् ॥ धृतिर्धैर्यं तेन गृहीता धृतिः गृहीता यया धैर्योपेता तया धृतिः धारणा तया गृहीता वशीकृता तया 'ब्रह्मैवेदं सर्वं' मित्यादि श्रुत्यर्थावष्टम्भसमुत्पन्नानिश्चयवती दृढवृत्तिर्धृतिः तया नियमिता तया बुद्ध्या उपरमेत् एवं [५] बुद्ध्या परमात्मन्येव

१. २. ६२. २. मनसैवत्यस्य काकाक्षिन्यायेन त्यक्त्वा नियम्येत्युभाभ्यां संबंधः ॥ संकल्पप्रभवान् अशेषतः त्यक्त्वेत्युक्त्या अशेषतस्त्यक्तुमशक्या अन्येपि कामाः वर्तन्ते इति सूचनादेवमर्थः प्रतीयते ॥ ३. अत्र, 'न याहि चेतस्त्वामतस्ततोऽपि देहेंद्रियाद्यैर्न कुरुष्व कर्म ॥ त्वं यत्र कुत्राप्युपविश्य नित्यं विचारयस्व स्वनिदानमन्तः' ॥ इति श्लोकोऽनुसंधेयः ॥ ४. 'प्रसह्य सकल्पपरंपराणां संच्छेदने सततसावधानं । आलंबनाशादपचीयमानं शनैःशनैः शांतिमुपैति चेतः' ॥ इति श्लोकोनुसन्धयः ॥ ५. बुद्ध्येत्यस्य उपरमेत् कृत्वा इत्युभाभ्यां संबंधः ॥

स्वात्मन्येव वा मनः सम्यक् स्थितं कृत्वा मनसः स्थितिं दृढतरामापाद्य [1]ततो- न्यत् न किंचिदपि चिंतयेत् । [2]आत्मानमनात्मानं वा न किमपि चिंतयेत् ॥ अनात्माकारवृत्तौ हि व्युत्थानमेव स्यात् ॥ आत्माकारवृत्तौ तु संप्रज्ञातसमाधे रवस्थांतरं । अतः असंप्रज्ञातसमाधेः काष्ठामारूढः स्वप्रकाशपरमानन्दस्वरूपो भूत्वा वृत्तिं विनैव स्वात्मानमनुभवेत् ॥ एवमतिप्रयाससाध्यत्वात् शनैःशनैरेवायं योगः साधनीयः ॥ २४ । २५ ॥

अर्जुनः ॥ चंचलं मनः कथमात्मसंस्थं कर्तुं शक्यं ॥

कृष्णः यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् ।
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥ २६ ॥

यत इति । चंचलं न स्थिरं अस्थिरं मनः यतो यतः निश्चरति निर्गच्छति ततस्ततः एतत् मनः नियम्य आत्मन्येव वशं वशतां नयेत् ॥ २६ ॥

चंचलं अतः अस्थिरं मनः यस्माद्यस्माच्छब्दादेर्निमित्तात् निर्गच्छति हेतुभूतेन येनयेन शब्दादिना निर्गच्छति यस्मिन् यस्मिन् शब्दादौ विषये निर्गच्छति यंयं विषयं प्रति निर्गच्छति येनयेनेंद्रियद्वारेण निर्गच्छति तस्मात्तस्मात् एतत् निगृह्य परमात्मविषय एव आत्मविषय एव वशतां नयेत् । यथा वशं वस्तु, विहाय नान्यत्र गच्छेत् तथा वशतां नीतं मनो नान्यत्र गच्छेत् ॥ शब्दादयो विक्षेपहेतवः ॥ निद्राशेषबहुशनश्रमादयो लयहेतवः । यस्माद्यस्मात् शब्दादेर्विक्षेपहेतोः निर्गच्छति विषयाभिमुखीं वृत्तिमुत्पादयति यस्माद्यस्मात् निद्राशेषादेर्लयहेतोः निर्गच्छति निद्राख्यां वृत्तिमुत्पादयति तस्मात् तस्मात् विक्षेपहेतोः लयहेतोश्च सकाशात् नियम्य आत्मन्येव वशं नयेत् । यथा न विक्षिप्येत यथाच न विलीयेत तथा आत्मसंस्थं मनः कुर्यात् । मनो नैकया रीत्या सर्वत्र लगति ॥ किंतु प्रकारभेदेन । क्वचिदधिकं लगति ।

---

१. विनियम्य योक्तव्य इति पूर्वेणान्वयः ॥ कृत्वा उपरमेत् ॥ न किंचिदपि चिंतयेत् इत्यन्वयः ॥ उपरमस्वरूपमिदम् ॥ २. अ ॥

कश्चिद्दीपत् । यत्राधिकलंग तस्मात्सद्यो नियमनमशक्यं । अत: चंचलं अस्थिरं मनो यस्माद्यस्मात् नातिप्रीतिविषयात् प्रथममनायासेन नियंतु शक्यते ॥ तस्मात्तस्माद्विषयान्नियम्य आत्मन्येव वशं नयेत् ॥ नातिप्रीतिविषयात् विषयाद्व्यावर्तितं मन: अतिप्रीतिविषये विषये रमना नाम । तस्यैवैकस्य विषयस्य पुन: पुनश्रवणे 'अतिपरिचयादवज्ञे'ति न्यायेन तत्र विरमीभूय तस्मादपि निगृहीतं भवति ॥ एवं नातिप्रीतिविषयाणां अतिप्रीतिविषयाणां च विषयाणां परित्यागे लब्धस्वास्थ्यं सन् यत्रस्थातव्यं तत्रैव सुस्थितं भवति । एवमत्र हि निगृह्यन्ते श्रवणदर्शनभोजनरमणादिषु यथेच्छं प्रवर्तमाना: विषयिणो विषयेभ्य: ॥ तथा योगं कुर्वन् अनेनोपायेन मन आत्मसंस्थं कुर्यात् । २६ ॥

अर्जुन: ॥ एवं योगं महता प्रयासेनानुष्ठाय तज्जन्यसुखलाभाय पुन: प्रयतितव्यं किं ॥ वद ॥

कृष्ण: । प्रशांतमनसं ह्येनं योगिनं सुखमुत्तमम् ।
उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥ २७ ॥

प्रशांतेति । प्रकर्षेण शातं प्रशांतं मन: यस्य स: प्रशांतमना: तं प्रशांतमनसं शांतं रज: यस्य स: शातरजा: तं शातरजसं न विद्यते कल्मषं यस्य स: अकल्मष: तं ब्रह्मणि भूत: स्थित: तं ब्रह्मभूतं एनं योगिनं प्रति उत्तमं सुखं उपैति ॥ हि प्रसिद्धम् ॥ २७ ॥

एवं ब्रह्मभूतं परमात्मन्येव स्थितिमंतं रजस्तमोगुणतद्व्यापारशून्यं अत: कामक्रोधादिकल्मषरहितं अत: प्रशान्तमनसं योगिनं प्रति निरतिशयं स्वरूपसुखं स्वत एव शीघ्रमेव आगच्छति ॥ न तदर्थं पुन: प्रयत्न: कार्य: ॥ मनसा ब्रह्मणिस्थितस्य रजस्तमसोरुपशमो भवति ॥ तेन च कामक्रोधादयो दोषा नश्यंति ॥ तेन च मनस: स्वत एव विषयेष्वप्रवृत्तिरूपा शांतिर्भवति ॥ तया च स्वयमेव निरतिशयं सुखमनेनलब्धं भवति । श्रुत्यादौ प्रसिद्धमिदं । सुखस्य कर्तृत्वेन निर्देशात् तदर्थमस्य पृथक् प्रयत्नो नापेक्षित इति सूच्यते ॥ रजस्तमोगुणोपरम-

यंतं विक्षेपहेतोः रजसः लयहेतोस्तमसश्चाभावात् शांतमनसं [१]अकल्मषं प्रतिबंधकधर्माधर्मवर्जितं [२]एनं योगिनं ब्रह्मणा ब्रह्मत्वेन ब्रह्मरूपेणावस्थितं ब्रह्मैवाहमिति ब्रह्मत्वेनावस्थितं जीवन्मुक्तं प्रति [३]स्वरूपसुखमुपैति । [४]सुषुप्तौ स्वरूपसुखाविर्भावः प्रसिद्धः । [५]प्रशांतमनसं तत एव दग्धाशेषकल्मषं तत एव शांतरजसं तत एव ब्रह्मरूपेण ब्रह्मसदृशशुद्धात्मस्वरूपेणावस्थितं एनं योगिनं प्रति आत्मानुभवरूपमुत्तमं सुखं स्वत एवाऽऽगच्छति ॥ तस्माद्धेतोरात्मन्येव वशं नयेत् । भगवद्ध्यानस्य कल्मषनिवर्तकत्वं स्यान्नाम ॥ स्वविषयकध्यानस्य स्वकल्मषनिवर्तकत्वं कथमिति चेत् पंचगव्यप्राशनादेः कथं । भगवत्संकल्पेनेति चेत् समं प्रकृतेऽपि ॥ योगाद्यत्नेन सुखमुपैति ॥ २७ ॥

अर्जुनः ॥ सुखमुपैतीत्युक्तं । तत्सुखं कथमयमाप्नोति ॥ कीदृशं च तत्सुखं । विस्पष्टं ब्रूहि ॥

कृष्णः ॥ [६]युंजन्नेवं सदाऽऽत्मानं योगी विगतकल्मषः ॥
सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ॥ २८ ॥

युंजन्निति ॥ एवं सदा आत्मानं मनः युंजन् विगत कल्मषं यस्य सः विगतकल्मषः योगी ध्यानयोगी ब्रह्मणः संस्पर्शः संबन्धः यस्य तत् ब्रह्मसंस्पर्शं अन्तं नाशं अतिक्रांतं अत्यंतं नित्यं सुखं सुखेन अनायासेन अश्नुते प्राप्नोति ॥ २८ ॥

एवं 'योगी युंजीत सततं'मित्यादिनोक्तप्रकारेण 'मनसैवेंद्रियग्रामं विनियम्ये'त्यादिनोक्तप्रकारेण च सदा परमात्मानं ध्यायन् आत्मनि मनो योजयन् अतः निश्शेषनिर्धूतकामक्रोधादिदोषः प्रतिबंधकधर्माधर्मवर्जितः अज्ञानशून्यः विगत-

---

१. तमोगुणरहितं ॥ भेदवासना कल्मषं तद्रहितं ॥ निरस्तमोहजालं ॥ २. एवमिति पाठः ॥ ३. समाधिसुखं ॥ ४. अन्यादौ प्रसिद्धमिदं ॥ ५. वि ॥ अत्र, तेशुं तिरलुं तिरवुं उरुवंमु माशिल् कुडिप्पिरप्पु मट्टवैयुं ॥ पेशिल् वलपुरिदवान् शान्न कोण्डान् पेरोद नलं पुरिंदु शण्ड्रडैयुं नन्गु' ॥ (३. ३. ९.) इति गथा अनुसंधेया ॥ ६. केचित् 'एवं युंजन्' इति पाठः ॥

पाप: निश्शेषनिर्धूतभेदवासन: विगतप्राचीनसमस्तकल्मष: तादृशस्सन् अंत-मतिक्रांतं नाशरहितं ब्रह्मसंस्पर्शि सुखं अनायासेन प्राप्नोति ब्रह्मसंस्पर्शमित्युक्ते कोऽर्थ इति चेत् ब्रह्मण: संबन्ध: हेतुर्यस्य तत् भगवत्संसर्गाभिव्यक्त अपरोक्षज्ञानाभिव्यक्तं स्वरूपसुखं । ब्रह्मण: संस्पर्श. साक्षात्कार: तद्रूपं सुखं ॥ ब्रह्मण: संस्पर्श तादात्म्यं यस्य यस्मिन्वा ब्रह्मस्वरूपं सुखं सुखरूपं प्रत्यगात्मभिन्नं ब्रह्म ॥ संस्पृश्यते गृह्यते अनेनेति सम्पर्श: स्वरूपं ब्रह्मैव स्वरूपं यस्य तत् ॥ ब्रह्मणा ब्रह्मात्मना संस्पृश्यते ज्ञायते इति ब्रह्मसंस्पर्शि ब्रह्मरूपेणावगतं ब्रह्मरूपं सुखं जीवन्मुक्तिसुखं ब्रह्मतुल्याऽऽत्मस्वरूपानुभवरूपं अत्यन्तं अपरिमितं सुखं सदा अश्नुते ॥ ब्रह्मसंस्पर्शमत्यन्तं इत्येकं पदं ॥ संस्पर्शो विषय: ब्रह्मविषया मति: ज्ञानं अन्तो आन्तिमो हेतु यस्य तत् ब्रह्मज्ञानैकसाध्यं स्वरूपसुखं प्राप्नोति ॥ एतादृशमहासुखसाधनत्वादवश्य कर्मयोगशोधितेनान्त:करणेन ध्यानयोग: कर्तव्यो मुमुक्षुभिरिति सिद्धम् । २८ ॥

अर्जुन: । एतावता प्रबंधेन ध्यानयोग: साशेषपरिकर उक्त । ईदृशस्य ध्यानस्य ध्येयं ब्रूहि ।

कृष्ण: । सर्वभूतस्थमात्मानं सर्वभूतानि चाऽऽत्मनि ।
ईक्षते योगयुक्ताऽऽत्मा सर्वत्र समदर्शन: । २९ ।

सर्वेति । योगेन युक्त. आत्मा यस्य स योगयुक्ताऽऽत्मा सर्वत्र समं समस्य समेन समत्वेन वा दर्शनं यस्य स: समदर्शन: योगी आत्मानं सर्वाणि च तानि भूतानि च सर्वभूतानि सर्वभूतेषु तिष्ठतीति सर्वभूतस्थ: तं ईक्षते पश्यति । सर्वाणि च तानि भूतानि च सर्वभूतानि तानि आत्मनि च पश्यति । २५ ॥

ध्येयं परमात्मस्वरूपं ॥ तस्य ध्येयत्वेन ''भोक्तारं यज्ञतपसा' मित्यत्र 'मच्चित्तो युक्त आसीते' त्यत्र च स्पष्टमुक्तं ॥ किमिति पुनरत्र तदेवोच्यते । इति

१. सर्वपरिच्छेदातीत ॥ २. ५. २९.

चेत् तत्र सामान्यतो ध्येयमुक्तं । अत्र तु महाधिकारिणो ध्येयमुच्यते ॥ इति भेदः ॥ योगयुक्तात्मा ध्यानयोगेन योजितमनाः योगी ब्रह्मादिस्थावरान्तेषु उत्तममध्यमाधमेषु स्थितं परमात्मानं साम्येन पश्यन् सर्वत्र स्थितानां भगवद्रूपाणां [1]'पंडिताः समदर्शिनः' इत्युक्तन्यायेन साम्यदर्शी सन् परमात्मानं सर्वेषु भूतेषु अंतर्यामित्वेन स्थितं सर्वाणि च भूतानि भगवदाश्रितानि पश्यति ॥ भगवंतमेवं ध्यायति महाधिकारी । अभ्याससंसिद्धमहाधिकारी योगी योगारूढस्सन् भगवंतमीदृशं ध्यायति । २९ ॥

अर्जुनः ॥ एतादृशस्य ध्यानस्य किं फलं ब्रूहि ॥

**कृष्णः । यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।**
**तस्याहं न प्रणश्यामि स च मे न प्रणश्यति । ३० ॥**

य इति । यः मां सर्वत्र पश्यति ॥ सर्वं मयि पश्यति च ॥ तस्य अहं न प्रणश्यामि ॥ सः मे न प्रणश्यति च ॥ ३० ।

आत्मानमित्यस्य जीवात्मानमिति वा स्वं इति वा नार्थः ॥ किंतु परमात्मानमित्येवार्थः । यः उक्तरीत्या मां सर्वत्र स्थितं सर्वं च मदाश्रितं ध्यायति । तस्य अहं न प्रणश्यामि । तस्याहं न मृतः । मृतो नाथ इव अनुपकारी न भवामि । किंतु सदा तदीयं योगक्षेमं वहामि ॥ स च मे न प्रणश्यति स च मे न मृतः ॥ मृतो भृत्य इव सेवां न त्यजति ॥ किंतु सदा मद्भजनशीलो भवति ॥ ध्यानस्यास्य फलमीदृशम् ॥ ३० ।

अर्जुनः । 'सर्वभूतस्थमात्मानं' 'मां सर्वत्र' 'समदर्शनः' इत्युक्त्या परमात्मनः सर्वत्र स्थितिः साम्यं च ध्येयमित्युक्तं भवति ॥ साम्यं च भेदनियतं ॥ तथा च तत्रतत्र स्थितानां भगवद्रूपाणां भिन्नानां साम्येन दर्शनमित्यर्थः स्यात् ॥ भगवद्रूपाणि किं भिन्नानि उत अभिन्नानि ॥ स्पष्टं मे ब्रूहि ॥

१. ५. १८.

कृष्णः ॥ सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ॥
सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥ ३१ ॥

सर्वेति ॥ यः एकस्य भावः एकत्वं आस्थितः सम्यगनुसंदधानः सन् सर्वाणि च तानि भूतानि च सर्वभूतानि सर्वभूतेषु स्थितः सर्वभूतस्थितः तं मां भजति । सः योगी सर्वथा वर्तमानोऽपि मयि वर्तते ॥ ३१ ॥

परमात्मा एक एव सन् साम्येन सर्वत्र वर्तते ॥ इत्येकत्वेन ध्यानं कर्तव्यं । [1] 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतांतरात्मा ॥ कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च' ॥ इति श्रुतिः य: मम सर्वत्र एकत्वं आस्थितः सम्यक् जानन् सन् सर्वभूतस्थितं मां ध्यायति स योगी सर्वथा सर्वैः प्रकारैः न्यायेन अन्यायेन वा वर्तमानोऽपि अन्ते मय्येव वर्तते । मयि स्थितिरूपां मुक्तिं प्राप्नोति भगवंतं सर्वत्र एकं समं च ध्यायति महाधिकारी । ३१ ॥

अर्जुनः । किं भगवद्रूपेषु साम्यदर्शनमेवालं । उत अन्यत्रापि तदावश्यकं ॥ वद ॥

कृष्णः ॥ आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ।
सुखं वा यदि वा दुःखं स योगी परमो मतः ॥ ३२ ॥

आत्मेति । यः उपमैव औपम्यं आत्मनः औपम्यं आत्मौपम्यं तेन आत्मदृष्टान्तेन सर्वत्र सुखं दुःखं यदिवा दुःखं चापिसमं पश्यति । सः परमः योगी मतः

सुखं अथवा दुःखं सर्वेषु भगवद्भक्तेषु [2] आत्मदृष्टांतेन स्वसुखसमं स्वदुःखसमं च यः पश्यति । स्वस्येव भगवद्भक्तानां सुखं वाञ्छति ॥ स्वस्येव भगवद्भक्तानां दुःखं द्वेष्टि ॥ स योगी परमो ध्यानयोगी मे संमतः । [3] स्वसुखं परसुखं च अनुकूलत्वेन समं ज्ञात्वा स्वदुःखं परदुःखं च प्रतिकूलत्वेन समं

१. श्वे. ६. ११. २. उपमा सादृश्यं सैव औपम्यं तेन ॥ ३. व्याख्यानान्तरम् ॥

ज्ञात्वा अनुकूलं सुखं भगवद्भक्तानां भूयात् प्रतिकूलं दुःखं भगवदभक्तानां भूयादिति भक्ताभक्तयोः य. सुखदुःखे वांछति ॥ स परमो योगी ॥ एतादृशसाम्यदर्शनमपि महाधिकारिणा कर्तव्यं ॥ चतुर्भिः श्लोकैरुक्ता ध्यानयोगस्य परा काष्ठा ॥ विमृश्येमां संपादय ॥ १२ ॥

अ ॥ अर्जुनः ॥ योगी ब्रह्मसंस्पर्शं सुखमश्नुते इत्युक्तं ॥ तस्य स्वरूपसुखस्य प्राप्तिक्रमं ब्रूहि ॥

कृष्णः ॥ प्रथमं योगेन त्वंपदलक्ष्यार्थशुद्धात्मसाक्षात्कारः ॥ ततः तत्पदलक्ष्यार्थपरब्रह्मसाक्षात्कारः ॥ ततः असिपदोक्तब्रह्मात्मैक्यसाक्षात्कारानुभवः ॥ इत्येवं क्रमः ॥ तत्र प्रथमं योगेन समाहितांतःकरणः तेन ब्रह्मादिस्थावरांतेषु निर्विशेषं आत्मैकत्वविषयकज्ञानवान् सर्वत्र समदर्शनः ब्रह्मदर्शनः सर्वं ब्रह्म पश्यन् सर्वत्र सूक्ष्मं स्थूलमिव व्यवहितमव्यवहितमिव विप्रकृष्टं संनिकृष्टमिव योगप्रत्यक्षेण यथावस्थितमेव पश्यन् सर्वत्र समं विशेषग्रहणशून्यं सन्मात्रग्रहणशीलं यद्दर्शनं तद्वान् आत्मानं स्वं सर्वेषु शरीरेषु आत्मतया तिष्ठंतं सर्वानपि जीवान् आत्मनि अभेदेन विद्यमानांश्च ईक्षते ॥ स्वमेकमेव शुद्धमात्मानं सर्वोपाधिषु विद्यमानं साक्षात्करोति ॥ तथा सर्वाणि च भूतानि तत्तदुपाध्यवच्छिन्नान् तांस्तांश्च जीवान् स्वाभेदेन पश्यति ॥ सर्वेषु शरीरेषु आत्मतया तिष्ठंतं स्वमेकमेवात्मानं तथा सर्वाण्यपि जडानि अधिष्ठानभूते आत्मनि रजतादीनीव शुक्त्यादौ कल्पितानि पश्यति ॥ सर्वेषु शरीरेषु ब्रह्मांडे सूर्यवत् गृहे दीपवत् घटादिष्वाकाशवत् अविकारात्मा तिष्ठंतं आत्मानं पश्यति ॥ यथा अस्मिन् कार्यकारणसंघातात्मके देहे देहेंद्रियप्राणमनोबुद्ध्यादीनां तद्धर्मतत्कर्मतदवस्थानां च साक्षित्वेन सर्वप्रकाशकत्वेन अहमर्थतयाऽहं तिष्ठामि तथा कार्यकारणसंघातात्मकेषु सर्वेष्वपि देहेषु साक्षित्वेन प्रकाशकत्वेन अहमेव एकरूपेण चैतन्यात्मना तिष्ठामीत्यनुभूय सर्वेषु देहेषु प्रत्यग्रूपेण तिष्ठंतं स्वात्मानमेकमेवेक्षते ॥ तथा सर्वाणि भूतानि जडानि आत्मनि पश्यति ॥ यथा घटशरावादीनि मृण्मात्राणि जलतरंगफेनबुद्बुदादीनि सलिलमात्राणि सर्पशिरउरःपुच्छादीनि रज्जुमात्राणि समीक्षते तथा

योगानुष्ठानसमुत्थमप्रतिबद्धाद्वैतात्मविज्ञानेन सर्वाण्यपि जडानि आत्ममात्राण्येव समीक्षते ।। अहमेवेदं सर्वमिति सर्वमात्मानमेव साक्षादनुभवति ।। नतु स्वस्मात् तेषां पृथक् सत्तां पश्यति ।। आत्मानं सर्वभूतेषु तरंगेषु जलमिव तिष्ठंतं पश्यति ।। सर्वाण्यपि जडानि आत्मनि जले तरंगमिव पश्यति ।। [1] 'यस्तु सर्वाणि भूतानि आत्मन्येवानुपश्यति ।। सर्वभूतेषु चात्मानं ततो न विजुगुप्सते' ।। इति श्रुतिः ।। अयं त्वंपदलक्ष्यार्थभूतशुद्धात्मसाक्षात्कार ।। योगयुक्तात्मा इति योगी, समदर्शनः इति ज्ञानी इत्युभावधिकारिणौ निर्दिष्टौ ।। योगी, ज्ञानी च ईक्षते इत्यर्थः।। उक्तं चेदं अधिकारिद्वैविध्यं योगवासिष्ठे ।। 'द्वौ क्रमौ चित्तनाशस्य योगो ज्ञानं च राघव ।। योगो वृत्तिनिरोधो हि ज्ञानं सम्यगवेक्षणम् ।। असाध्यः कस्य चिद्योगः कस्यचित्तत्वनिश्चयः ।। प्रकारौ द्वौ ततो देवो जगाद परमः शिवः' ।। इति ।।

अर्जुनः ।। तत्पदलक्ष्यार्थ भूतब्रह्मसाक्षात्कारं तत्फलं च ब्रूहि ।।

कृष्णः ।। यः मां परमात्मानं सर्वत्र अंतर्यामित्वेनानुस्यूतं पश्यति ।। सर्वं च मयि पश्यति ।। मयि अधिष्ठानभूते कल्पितं पश्यति ।। तस्य तत्पदलक्ष्यार्थपरब्रह्मसाक्षात्कारवतः सर्वभूतस्थत्वसर्वाधारत्वलक्षणाभ्यां नियताभ्यां श्रुतियुक्तिबलाच्च स्वस्य मम च स्वरूपेणैकत्वमेव पश्यतो ब्रह्मवित्तमस्य अहं न प्रणश्यामि।। ' णश् अदर्शने ' इति धातुः ।। न परोक्षो भवामि।। कदाऽपि वृत्तेरविषयो न भवामि ।। किंतु तिष्ठतः गच्छतः आसीनस्य शयानस्य उन्मिषतो निमिषतो भुंजतो वा वृत्तेः सदा चक्षुषो रूपवत् परमानंदमावहन् विषयो भवामि ।। ईश्वरः कश्चित् मद्भिन्नोऽस्तीति परोक्षज्ञानविषयो न भवामि ।। किंतु अपरोक्षविषयोभवामि ।। सदैवानुभवारूढस्तिष्ठामि ।। स च मे न प्रणश्यति ।। न परोक्षो भवति ।। सर्वदा प्रत्यक्षो भूत्वा कृपाकटाक्षेण तमनुगृह्णामि ।। स्वात्मा हि मम सः उक्तं हि मया ।। [2] 'ज्ञानी त्वात्मैव मे मत' मिति ।। अतोऽतिनिरयस्वात्सर्वदा मदपरोक्षज्ञानगोचरो भवति ।। अनात्मन्यात्मभावः नाशः कचिदप्यनात्मनि आत्मभावं न करोति ।। किंतु ब्रह्मैवाहमिति स्वात्मना विषयीकृते निर्बि-

---

१. ई. ६. २. ७. १८.

होवे परे ब्रह्मणि मय्येव सर्वदा अहंवृत्त्या तिष्ठति ॥ जीवन्मुक्तो भवति ॥ जीवन्मुक्तः परां काष्ठामाप्नोति । अयं त्वंपदलक्ष्यार्थपरमात्मसाक्षात्कारः ॥ १० ॥

अर्जुनः ॥ एवं जीवब्रह्मसाक्षात्कारवतः तदेकत्वदर्शिनः किं जीवन्मुक्तिरेव फलं उत विदेहमुक्तिरपि ॥

कृष्णः ॥ यः सर्वेषु भूतेषु स्थितं सर्वभूतात्मनास्थितं मां एकत्वं सर्वेषु भूतेषु एकत्वं स्वेन एकत्वं च सम्यक् निश्चिन्वन् भजति ॥ ब्रह्मैवाहमस्मीति साक्षात्करोति स योगी न्यायेन अन्यायेन वा वर्तमानोऽपि तद्देहपातानंतरं मयि वर्तते ॥ मयि अभेदेन वर्तते ॥ नानानामरूपाकारेण वर्तमानोऽपि मदाकारो भवति । सर्वथा जनकादिवत् विहितेन कर्मणा वा दत्तात्रेयादिवत् प्रतिषिद्धेन कर्मणा वा याज्ञवल्क्यादिवत् सर्वकर्मत्यागेन वा वर्तमानोऽपि स योगी स्वप्रारब्धानुरूपेण विविधचेष्टावद्देहचेष्टया लोकदृष्ट्या बालवत् मूढवत् उन्मत्तवत् शिष्टवत् अशिष्टवत् प्रतीयमानोऽपि स्वदृष्ट्या निर्विकारब्रह्मात्मनैव स्थितः पतितेऽस्मिन् देहे मय्यभेदेन तिष्ठति ॥ विदेहमुक्तिं प्राप्नोति ॥ न तस्य मोक्षं प्रति केनापि प्रतिबंधः शक्यते कर्तुं । 'तस्य ह न देवाश्च नाभूत्या ईशते आत्मा ह्येषां स भवति' । इति श्रुतिः ॥ कथमीदृशो महाविरुद्धकार्ये प्रवर्तेत इति चेत् अकार्ये प्रवर्तमानोऽपि मुक्तो भवति ॥ न मोक्षं प्रति केनचित् प्रतिबध्यते इति स्तुत्यर्थमुच्यते अभ्युपेत्यवादेन । उक्तरीत्या योगं कुर्वन् योगी आत्मैकत्वदर्शनसिद्धिं लब्ध्वा तथा जीवन्मुक्तो भूत्वा देहपातानन्तरं विदेहमुक्तिमपि प्राप्नोति ॥ इयं असिपदोक्तब्रह्मात्मैक्यप्राप्तिः ॥ ११ ॥

---

१. बृ. १. ४. १०. २. त्रिभिरेभिः श्लोकैः त्रयाणां षट्कानां अर्थो निरूपितः ॥ प्रथमषट्कार्थः शुद्धात्मा ॥ द्वितीयषट्कार्थः परमात्मा तृतीयषट्कार्थः तयोरैक्यम् ॥ उक्तं च तत् प्रथमे अवतरणिकायां ॥ 'तत्र तु प्रथमे कांडे कर्मतत्त्यागवर्त्मना ॥ त्वंपदार्थो विशुद्धात्मा सोपपत्ति निरूप्यते ॥ द्वितीये भगवद्भक्तिनिष्ठावर्णनवर्त्मना ॥ भगवान् परमानन्दस्तत्पदार्थोऽवधार्यते ॥ तृतीये तु तयोरैक्यं वाक्यार्थो वर्ण्यते स्फुटम् ॥ एवमप्यत्र कांडानां संबंधोऽस्ति परस्परम् ॥' इति मधुसूदनमिश्रैः ॥

अर्जुनः ॥ सर्वथा वर्तमानोऽपीति वचनेन परपीडनमपि न ब्रह्मविदो मोक्षं प्रति प्रतिबंधकं इत्युक्तं भवति ॥ किंतद्युक्तं ॥ परपीडनस्याधर्मत्वात् ॥ वद ॥

कृष्णः ॥ जीवन्मुक्तः प्रारब्धवशात् समाधेर्व्युत्थानकाले आत्मवदन्यांश्च पश्येत् ॥ सर्वेषु प्राणिषु विषये सुखं वा सुखं च दुःखं वा यदि दुःखं चापि आत्मदृष्टान्तेन आत्मसुखसमं आत्मदुःखसमं च यः पश्यति ॥ उपमीयते अनये-त्युपमा दृष्टान्तः उपमेव औपम्यं आत्मैव औपम्यं तेन, आत्मा उपमा यस्य स आत्मोपमः तस्य भावः आत्मौपम्यं तेन, स्वसुखमिव अन्यसुखं स्वदुःख-मिव अन्यदुःखं यः पश्यति ॥ न कस्यापि दुःखमिच्छति स्वस्येव ॥ किंतु सर्वेषां सुखमिच्छति स्वस्येव ॥ स योगी योगिनां मध्ये उत्तमः मे संमतः ॥ यः समाधिमान् व्युत्थानकाले परसुखदुःखे स्वसुखदुःखे न पश्यति । किंतु विषमदृष्टिर्भवति ॥ सः अपरमो योगी ॥ न योगसंपूर्तिमान् ॥ अतो जीवन्मुक्ति-सुखं नानुभवति ॥ यः स्वसुखदुःखसमे परसुखदुःखे पश्यति ॥ सः समदृष्टि-र्योगी योगिनां मध्ये उत्तमो भवति ॥ स एव जीवन्मुक्तो भूत्वा जीवन्मुक्ति सुखमनुभवति ॥ स एव देहपातानन्तरं पूर्वोक्तरीत्या विदेहकैवल्यं प्राप्नोति ॥ योगानुष्ठानसंभावितसम्यग्दर्शनः सर्वत्र ब्रह्ममात्रत्वावगाही यो ज्ञानी सर्वत्र सुखं दुःखं च आत्मौपम्येन समं पश्यति ॥ सुखं दुःखं च यथा स्वस्मिन् असंबद्धं तथा सर्वेष्वपि देहिषु सुखं दुःखं चासंबद्धं पश्यति ॥ यथाऽहं देह-तद्धर्मतत्कर्मसुखदुःखादिसंबन्धरहितः तथा सर्वेऽपि देहिनः देहतद्धर्मतत्कर्म-सुखदुःखादिसंबन्धरहिताः इत्यात्मौपम्येन पश्यति सः ज्ञानी ज्ञानिनां मध्ये श्रेष्ठो मे संमतः ॥ अत एवं भवितुं उक्तरीत्या योगाभ्यासः कार्यः ॥ ३२ ॥

वि ॥ अर्जुनः ॥ उक्तस्य योगस्य विपाकदशां ब्रूहि ॥

कृष्णः ॥ उक्तस्य योगस्य विपाकदशा चतुष्प्रकारा ॥ उत्तरोत्तरा पूर्वपूर्व-निष्पाद्या ॥ तत्र प्रथमदशां ब्रवीमि । योगे योजितमनाः योगं कुर्वन् योगेन युक्तः अधिगतः साक्षात्कृतः आत्मा येन सः तादृशः सर्वत्र प्रकृतिवियुक्तेषु आत्मसु ज्ञानाकारतया साम्यं पश्यन् आत्मानं स्वं सर्वभूतस्थं सर्वभूतानि स्वात्मस्थानि च ईक्षते ॥ स्वात्मानं सर्वभूतसमाकारं सर्वभूतानि च स्वात्म-

समानाकाराणि पश्यति । उक्तं च मया ॥ 'पंडिताः समदर्शिनः' इति ॥ सर्वभूतस्थमित्यस्य सर्वभूतसमानाकारं इति कथमर्थो लभ्यते इति चेत् सर्वाणि भूतानि शरीराणि तेषु स्थितमित्येवार्थः ॥ तेन स्वात्मनः स्वशरीरेतरसर्वशरीरवर्त्यात्मनां च अभेदः प्रतीयते । स चासंगतः ॥ अतः साम्यादयमभेदोपचार इति फलति ॥ गृहे विद्यमानो व्रीहिः सर्वोऽप्ययमेवेतिवत् । ततश्च सर्वशरीरस्थात्मसमानाकारं इति पर्यवस्यति । अतएव ह्युक्तं मया ॥ 'सर्वभूताऽऽत्मभूताऽऽत्मे'ति ॥ आत्मनीत्यस्य आत्मस्थानीत्यर्थं । तस्य आत्मसमानाकाराणीति कथमर्थो लभ्यत इति चेत् स्थाल्यां विद्यमानेषु पुलाकेषु मध्ये एकस्मिन् पक्के पुलाके दृष्टे पुलाकांतरेषु तद्वत् पक्कता निश्चीयते । न हि पुलाकांतराण्यपश्यद्वं ॥ दृष्टांतभूते एकस्मिन् पक्के पुलाके दृष्टे पुलाकांतराण्यपि पक्कानि पश्यति ॥ एकजातीयेषु पदार्थेषु एकव्यक्तिदर्शनेनैव तज्जातीयं सर्वमन्यदपि तथाऽनुसंहितं भवति । अतः पुलाकान्तराणि दृष्टपुलाकतुल्यतया दृष्टप्रायाणि भवन्ति ॥ अनेन स्थालीपुलाकन्यायेन निदर्शनभूते स्वात्मनि सर्वभूतानि पश्यति । स्वात्मदर्शनेन तज्जातीयान्यात्मवस्तून्यन्यानपि दृष्टप्रायाणि भवंति । अतएव ह्युक्तं मया ॥ 'येन भूतान्यशेषेण द्रक्ष्यस्यात्मनी'ति ॥ जीवात्मनां सर्वेषां परस्परसाम्यदर्शनं प्रथमा विपाकदशा ॥ २९ ॥

अर्जुनः ॥ ततो विपाकदशां ब्रूहि ॥

कृष्णः ॥ यः मां सर्वत्र स्थितं पश्यति तत्रतत्र स्थितमात्मानं पश्यति ॥ अभेदस्य बाधितत्वात् उक्तव्रीहिन्यायेन तत्तदात्मतुल्यं पश्यति । तत्तदात्मनि दृष्टांतभूते मां पश्यति ॥ स्थालीपुलाकन्यायेन मामात्मसदृशमनुसंदधाति वा । सर्वमात्मवस्तु मयि पश्यति ॥ मयि निदर्शनभूते सर्वानात्मनः पश्यति ॥ दृष्टांतभूतमदनुसंधानेन मत्तुल्यसर्वात्मानुसंधानवान् भवति ॥ परमात्मना आत्मनां स्वस्य साम्यं पश्यतः तस्य अहं न प्रणश्यामि ॥ नादर्शनमुपयामि ॥ किंतु सर्वदा दर्शनमुपयामि ॥ स्वात्मस्वरूपं मत्समं पश्यतः तस्यास्य ममापि

---

२. शरीरेषु ॥

वर्तमानं भवति । अन्योन्यसमयोरन्यतरदर्शने साम्यप्रतियोगितया अन्यस्यापि अनुसंधानं भवति हि लोके ।। स्वात्मानं मत्सममवलोकयन् स च मे न प्रणश्यति । सर्वदा मां पश्यतो मम मत्साम्यात् साम्यप्रतियोगितया अनुसंहितो भवति ।। स्वस्य इतरेषामात्मनां च परमात्मना साम्यदर्शनं द्वितीया विपाकदशा ।। १० ।।

अर्जुनः ।। ततोऽपि विपाकदशां ब्रूहि ।।

कृष्णः ।। सर्वेषु भूतेषु अंतर्यामितया स्थितं मां योगदशायां यो भजति ।। कथं इति चेत् एकत्वं सुदृढं जानन कर्मोपाधिकप्रकृतिविशेषसंसर्गकृतज्ञानता रतम्यरूपभेदपरित्यागेन असंकुचितज्ञानैकाकारतया साम्यं निश्चिन्वन् यो मां मत्सममात्मानमवलोकयति । स तादृशो योगी व्युत्थानकाले सर्वथा वर्तमानोऽपि दर्शनश्रवणभाषणभोजनादिलौकिकक्रियाव्यापृतोऽपि मयि वर्तते । योगदशायामिव स्वात्मनि सर्वभूतेषु च मत्साम्यमेवानुसंदधानो वर्तते । तथाविधानुसंधानप्रवाहहेतुभूतसंस्कारबलात् ।। भार्यापुत्रादिषु सुदृढलग्नहृदयः पुमान् वैदिकलौकिककार्यांतरव्यापृतोऽपि भार्यापुत्रादीनेवानुसंदधानो वर्तते । परमभोग्ये स्वात्मस्वरूपे सुदृढलग्नहृदयो योगी व्युत्थितोऽपि कार्यांतरव्यापृतोऽपि कथं तदनुसंधानहीनो वर्तते ।। अतो व्युत्थितोऽपि तथाविधानुसंधानवानेव वर्तते ।। व्युत्थानकालेऽपि कार्यांतरकरणकालेऽपि योगदशायामिव साम्यदर्शनं तृतीया विपाकदशा ।। ११ ।।

अर्जुनः ।। ततोऽपि विपाकदशां ब्रूहि ।।

कृष्णः ।। सर्वत्र आत्मौपम्येन[1] सर्वत्र स्थितानां आत्मनां साम्येन सर्वत्र[2] सर्वत्र आत्मानांविद्यमानं पुत्रजन्मादिरूपं सुखं च पुत्रमरणादिरूपं दुःखं चापि असंबंधसाम्यात् समं यः पश्यति ।। स्वपुत्रजन्ममरणादेः परस्य परपुत्रजन्ममरणादेश्च स्वस्मिन् यथा न संबंधः तथा स्वपुत्रजननमरणादेः स्वात्मन्यपि असंबंधं यः

---

१. उपमा तुल्यं वस्तु तस्य भाव औपम्य साम्यं आत्मनां औपम्यं आत्मौपम्यं तेन २. अस्य उभयत्र संबंधः ।।

पश्यति परपुत्रजन्ममरणादिकमं स्वपुत्रजन्ममरणादिकं यः पश्यति ॥ स परमो योगी योगकाष्ठां चतुर्थीं विपाकदशां प्राप्तो मे संमतः ॥ नात्र संशयः कार्यः ॥ स्वपरसुखदुःखसाम्यानुसंधानं चतुर्थी विपाकदशा ॥ अर्जुनत्वात् त्वमेवं भवितुमर्हसि । जीवात्मयोगकाष्ठेयं । परमात्मयोगस्तु वक्ष्यते ॥ ३२ ॥

संजयः ॥ एतावता प्रबंधेन सपरिकरमुक्तं ध्यानयोगं श्रुतवानर्जुनः, न कर्मयोग इवायं योगः शरीरनिग्रहमात्रसाध्यः ॥ अपितु मनोनिग्रहैकसाध्यः ॥ मनश्च न निग्रहीतुं शक्यं ॥ अतो न कस्यापि सेत्स्यत्ययं योगः । सतिचैवं किमशक्यसाधनस्यास्य योगस्य महता प्रबंधेन निरूपणायासेन । श्रवणावधारणायासेन वा ॥ इति मन्वानो भगवंतमाह ॥

अर्जुनउवाच—

योयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन ॥
एतस्याहं न पश्यामि चञ्चलत्वात् स्थितिं स्थिराम् ॥ ३२ ॥

य इति । हे मधुसूदन कृष्ण त्वया अयं यः योग साम्येन प्रोक्तः ॥ अहं चंचलस्य भावः चंचलत्वं तस्मात् एतस्य यागष्य स्थिरां स्थितिं न पश्यामि ॥

अयं त्वन्मुखात् मया श्रुतः यो ध्यानयोगः साम्येन 'सर्वत्रसमदर्शन' इत्युक्तरीत्या भगवद्रूपाणां सर्वत्र साम्यदर्शनफलेन 'समंपश्यतियोऽर्जुने' त्युक्तरीत्या भगवद्भक्तानां सुखदुःखेषु स्वसुखदुःखसाम्यदर्शनफलेन च सह प्र विस्तरेण उक्तः ॥ उक्तसाम्येन विषयीभूतेन युक्तो ध्यानयोग इति वा ॥ मनसः साम्येन लयविक्षेपशून्यतया केवलमात्माकारतयाऽवस्थानरूपेण साध्यः ध्यानयोगः इति वा ॥ योगः साम्येन साधारण्येन प्रोक्तः ॥ न तु मनोनिरोधसाधनोपदेशपूर्वकस्वरूपविशेषेणोक्त इति वा ॥ 'सर्वभूतस्थमात्मानं' 'योमांपश्यति सर्वत्र' इत्युक्तरीत्या आत्मनां परस्परं ईश्वरेण मया च साम्येन 'सर्वत्रसमदर्शनरूपो ध्यानयोग इति वा ॥ एतस्य त्वया प्रोक्तस्य ध्यानयोगस्य स्थिरां स्थितिं अहं न पश्यामि ॥ कुत इति चेत् एतत्साधनस्य मनसश्चंचलत्वात् ॥ एतस्य

चंचलत्वात् मनसश्चंचलत्वेन तत्साध्ययोगस्यास्य दीर्घकालावस्थानासंभवात् ॥ कथंचिन्महताऽऽयासेन योगसिषाधयिषया प्रयतने कृतेऽपि साधनस्य मनसश्चं-चलत्वेन न दीर्घकालं योगस्यावस्थानं संभवति ॥ दीर्घकालमवस्थानाभावे न फलाय कल्पेत ॥ अतस्तव निरूपणाऽऽयासः मम श्रवणधारणाऽऽयासश्च नि-ष्फलः ॥ भक्तविरोधिनिरसनशीलोऽपि त्वं न मदीयमनोनियमने समर्थोऽसि ॥ शक्त एव समुपेक्षसे वा ॥ किमहमसमीक्ष्य कारी ॥ यतिमनसश्चंचलत्वादसाध्य एवायं योगः स्यात् । तर्हि नाहमिमं योगमुक्तवान् स्यां । साध्य एवायं योगः ॥ अतएव मया प्रोक्तः इति चेत् हृषीकेशतया सर्वप्राणिमनोनियमनसमर्थेन त्वया साध्य एवायमिति मत्वा प्रोक्तः ॥ मदीयमेकमपि मनो नियंतुमशक्तोऽहं असा-ध्यतामस्य योगस्य मत्वा अस्य योगस्य कथंचिदुत्पादितामपि स्थितिं स्थिरां न मन्ये ॥ अतएव त्वया प्रोक्तः अहं न पश्यामीति युष्मदस्मच्छब्दप्रयोगपूर्वकम-भिहितं मया कोपं मा कुरु ॥ ममैवं भाति ॥ प्रसीद ॥ ३३ ॥

कृष्णः ॥ कुत एवं बिभेषि ॥ धैर्येण मनोनिग्रहे प्रयतस्व ॥

अर्जुनः ॥ चंचलं हि मनः कृष्ण प्रमाथि बलवद्दृढम् ॥
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥ ३४ ॥

चञ्चलमिति ॥ हे कृष्ण मनः चञ्चलं प्रमथ्नातीति प्रमाथि बलं अस्या-स्तीति बलवत् दृढं ॥ अहं तस्य निग्रहं वायोः निग्रहमिव सुदुष्करं महता दुःखेनापि कर्तुमशक्यं मन्ये ॥ ३४ ॥

मनः अतिचंचलं चंचलत्वादित्युक्त्वा पुनश्चंचलमित्युक्त्या अतिचंचल-मिति लभ्यते ॥ अत एकत्रावस्थापयितुमशक्यं ॥ अस्तु चंचलं चंचलेन पक्ष्मणा कोऽनर्थस्संपद्यते इति चेत् प्रमाथि शरीरेंद्रियक्षोभकरं तत्तद्विषयवासनाभिस्तत्त-त्कार्यैरागद्वेषादिदोषैश्च धीरमपि पुरुषं प्रमथ्नाति विक्षोभयति परवशं करोति ॥ तादृशम् ॥ अस्तु प्रमाथि प्रमथनशीलस्यापि विषादेः मंत्रौषधादिना निग्रहः शक्यते कर्तुमिति चेत् बलवत् मंत्रादिसाधनैर्निग्रहीतुमशक्यं ॥ विदुषा विवे-

१. बलवत्प्रमाथि बलवदिति प्रमथनक्रियाविशेषणम् ॥ बलवत् अतः बलवत्त्वात् प्रमाथि इति वा ॥

केनापि छेत्तुमशक्यं ॥ अस्तु बलवत् बलवतां महावेगवतामपि प्राणानां वायोः छेदः शक्यते कर्तुमिति चेत् इदं विषयवासनानुविद्धतया छेत्तुमशक्यं ॥ तेन तस्य एतादृशस्य मनसः निग्रहं आकाशे सदा संचरतो वायोः इवेन व्यजना-दिना वा निग्रहमिव नितरां दुष्करं मन्ये ॥ [3] अतः चंचलत्वात् स्थितिं स्थिरां न पश्यामि । प्रसिद्धमेतत् पुराणादौ । भक्तदुःखकर्षणशीलत्वात् भक्तानां पुरुषार्थप्रापकत्वाच्च मदीयं मनो नियम्य मामुद्धर्तुमर्हसि । त्वं तु पूर्णानंदं परं ब्रह्मासि । ३४ ॥

संजयः ॥ मनो नियम्य ध्येयेऽवस्थापयितुं शक्यमिति निश्चित्य भगवान् ध्यानयोगं महता प्रबंधेन स्पष्टमाचष्ट ॥ मनो नियंतुमशक्तेन मया, उक्तस्य योगस्य स्थिरा स्थितिर्न स्यात् ॥ अशक्यस्यास्य निरूपणायासो वृथा इत्याक्षेपः कृतः कथं वा मन्येतायं इति शंकमानमर्जुनं तां शंकामपनुदन्नभिमुखीकृत्य मनोनिग्रहोपाय-माह भगवान् ॥

श्रीभगवानुवाच—

असंशयं महाबाहो मनो दुर्निग्रहं चलम् ॥
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥ ३५ ॥

असंशयमिति । हे महाबाहो चलं मनः दुर्निग्रहं दुःखेनापि निग्रहीतुम-शक्यं ॥ न संशयः असंशयम् ॥ हे कौन्तेय अभ्यासेन तु विरागस्य भावो वैराग्यं तेन च गृह्यते ॥ ३५ ॥

चंचलं मनः प्रमाथित्वात् बलवत्वात् दृढत्वाच्च महता प्रयत्नेनापि निग्रहीतु-

१. तंतुनागवदच्छेद्य ॥ तंतुनागो नाम वरुणपाशशब्दितः ॥ जलचारी अत्यन्तदृ-ढतया छेत्तुमशक्यः पदार्थः ॥ तंतुनागो नागपाशः इति वा ॥ २. हि शब्दो हेतौ ॥ ३. हि शब्दो हेतौ ॥ ४. 'अप्यब्धिपानान्महतः सुमेरून्मूलादपि ॥ अपि वन्ह्यशनात्साधो विषम-श्चित्तनिग्रहः ॥' इति श्लोकोनुसंधेयः ५. 'कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ॥ तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते' ॥ इति श्लोकोऽनुसंधेयः ॥

मशक्यमेव ॥ तत्र संशयो नास्ति । यदुक्तं त्वया तत्सत्यमेव ॥ मनसश्चांचल्या-दिकं सम्यक् ज्ञातवानसि ॥ अतीव परितोषो मम ॥ महाबाहोस्त्वयापि दुष्करो मनसो निग्रहः ॥ किमुतान्यस्य ॥ तादृशमेव मनः ॥ अशक्तोऽहं मनसो निग्रहं दुष्करं मन्ये कागतिर्मम किंवा कुर्यामिति चिंतयानेन मया मनोनिग्रहोपायबुभु-त्सया एवं निवेदिते मनोनिग्रहोपायमनुक्त्वा मनो दुर्निग्रहमेव असंशयमित्यु-च्यते ॥ न मन्मतस्थिरीकरणायैवमावेदितं ॥ किंतु मनोनिग्रहोपायोपदेशेन मच्चिं-ताऽपनोदाय ॥ किमसंशयमित्युक्त्वा सुदृढीक्रियते मे मानसी चिंता इति चेत् पितृष्वसुः पुत्रत्वात्तव मनोनिग्रहोपायमुपदिशामि ॥ शृणु ॥ मनः अदुर्निग्रहमिति छेदः ॥ चलं अतो दुर्निग्रहं संशयो नास्ति ॥ तथाऽपि अदुर्निग्रहं दुर्निग्रहं न किंतु सुनिग्रहं अनायासेन निग्रहीतुं शक्यं ॥ संशयो नास्ति ॥ असंशयमिति मनसो विशेषणं वा ॥ संशयविपर्ययादिना खलु विषयाननुधावति मनः ॥ विचारेण संशयविपर्यययोरपगमे सम्यगवगतविषयगतदोषं सम्यगवगतध्येयगतगुणविशेषं च सत् स्वत एव निगृहीतं भवति ॥ स्वत एवोपरतं भवतीत्यनुक्त्वा निग्रहीतुं शक्यं भवतीति निग्रहसापेक्षता कुत उच्यत इति चेत् विचारादवगत-गुणदोषमपि मनः वासनावशादनुधावेदेव विषयान् ॥ नायं मनसो दोषः ॥ किंतु यदीयं मनस्तस्य दोषः ॥ कुत इति चेत् अभ्यासेन अभ्यासो नाम सजाती-यानुभवाऽऽवृत्तिः तेन दुरभ्यासेन यत् वैराग्यं वि विशेषेण रागः यस्य तत् विरागं उत्कटेच्छावत् तस्य भावः वैराग्यं उत्कटेच्छा तेनैव हेतुना विषयैः गृह्यते आकृष्यते ॥ उक्तं च मया ॥ १ 'ध्यायतो विषयान् पुंसः संगस्तेषूपजायते ॥ संगात्संजायते काम ' इत्यादि ॥ दुरभ्यासस्य उक्तरूपविशेषसूचकस्तुशब्दः ॥ उत्कटेच्छयैवेत्येवशब्दार्थश्चशब्दः ॥ अयमेव हि असद्भिः सहवासं लब्ध्वा तदु-पदेशादिना मनसो दुर्विषयेषु रुचिमुत्पादयति ॥ विषयेषु लब्धरुचि मनः तेषु विशेषेण रक्तं भवति ॥ ततश्च विषयैराकृष्यते ॥ सत्यं ॥ यदीयं मनः तस्यैव दोषः किं करणीयमिति चेत् शृणु ॥ अभ्यासेन सदभ्यासेन यद्वैराग्यं वि विगतः

१. २. ६२.

रागो यस्मात् तत् विरागं तस्य भावः वैराग्यं तेन गृह्यत एव निगृह्यत एव ॥ न संशयः ॥ भगवदनुग्रहेण पूर्वपुण्येन च सद्भिः सहवासं लब्ध्वा तदुपदेशादिना मनसो ध्येये वस्तुनि रुचिमुत्पादयति ॥ तत्र लंभितरुचि मनः इतरत्र विरक्तं भवति ॥ तदा अनायासेन निगृह्यते ॥ तेनैव ध्येयेन विषयेण गृह्यते इति वा ॥ इंद्रियाणि हयाः ॥ १ 'इंद्रियाणिहयानाहु'रिति श्रुतिः ॥ तेषु प्रधानं मनः महाश्वः ॥ स चाभ्यासानुसारी ॥ कश्चित्प्रभुरपररथ्यामधिवसतः कस्यचिदश्वं महान्तं दिव्यलक्षणलक्षितं सहस्राधिकेन धनेन सादरमक्रीणात् ॥ स च दिव्याश्वः शकटे योजितो गच्छन् जवेन तद्रथ्योपांतगामी शकटं तद्रथ्यायामाचकर्ष ॥ तदा तमश्वं क्रीतवान् प्रभुः, अभ्यासवशादेवं ॥ विस्मारयेममभ्यासं ॥ कारय च अस्मद्रथ्यागमनाभ्यासमिति सारथिं ब्रूते ॥ स च यत्नान्निगृहीतप्रग्रहः प्राचीनमभ्यासं विस्मार्य नवीनमभ्यासं कारयति ॥ ततः सोऽश्वः अविच्छिन्नपूर्वो रथ्यां विस्मृत्य नूतनरथ्यामेव स्मरन् वर्तते ॥ तथा मनोरूपोऽश्वोऽपि दुरभ्यासवशाद्विषयाननुधावन् यत्नात्सदभ्यासं ग्राहितः विस्मृत्य विषयान् ध्येयमेव वस्तु स्मरन् वर्तेत ॥ अतः उक्तरूपोपायेन सुनिग्रहमेव मनः ॥ अभ्यासेन लयनिरोधः ॥ वैराग्येण विक्षेपनिरोधः ॥ ताभ्यामुपायाभ्यां निगृह्यते मनः ॥ यमुपयार्थप्रश्नः ॥ पार्थ मैवं शंकिष्ठाः ॥ अस्ति मनोनिग्रहे प्रसुश्चित उपायः ॥ न सुनिग्रहमेव मनः ॥ इति यदि मयोच्यते तर्हि सुनिग्रहमेव मनः मया त्वन्यथा शंकितं इति मनो निग्रहे प्रयत्नशैथिल्यं स्यात् ॥ सुनिग्रहं मनो दुर्निग्रहमुक्तं मया भ्रांतेन ॥ परिहसेदयं कृष्णः ॥ इति चिंता च स्यात्तव । तदुभयपरिहाराय त्वदुक्तमेव असंशयमिति दृढीकृतं मया ॥ दुर्निग्रहमिति यदुक्तं तत्सत्यमेव न संशयः ॥ अतः उक्तोपायेन महता प्रयत्नेन मनसो निग्रहे प्रयतितव्यं ॥ अत्र अभ्यासे वैराग्ये च सति मनोनिग्रहः ॥ सति तस्मिन अभ्यासवैराग्ये ॥ इति अन्योऽन्याश्रय इति मां शङ्किष्ठा ॥

---

१. का. ३. ४.

[1]विचारेणाऽभ्यासः ॥ तेन च वैराग्यं ॥ तेन च मनसो निग्रहः ॥ इत्याशयात् ॥ अतो मा भैषीः ॥ ३५ ॥

अर्जुनः ॥ मनो निग्रहीतुं उक्तोपाय आवश्यको वा ॥ विषयैस्तृप्तं मनः कदाचित् स्वयमेव शांतं न भवेद्वा ॥ मत्तगजोऽपि हि श्रांतः स्वयमेव शांतो भवति ॥ वद ॥

कृष्णः ॥ असंयताऽऽत्मना योगो दुष्प्राप इति मे मतिः ।
वश्याऽऽत्मना तु यतता शक्योऽवाप्तुमुपायतः ॥ ३६ ॥

असंयतेति ॥ न संयतः असंयतः आत्मा मनः येन सः असंयताऽऽत्मा तेन योगः ध्यानयोगः दुष्प्रापः दुःखेनापि प्राप्तुमशक्यः ।, उपायतः उपायेन वशे भवः वश्यः आत्मा यस्य सः वश्यात्मा तेन यतता यत्नं कुर्वता योगः अवाप्तुं शक्यः तु एव ॥ इति मे मतिः ॥ ३६ ॥

मनस्तु विषयैस्तृप्तं सत् नैवोपशाम्यति ।, किं तु विषयसेवनया तस्य विषयप्रवृत्तिरधिका भवति ॥ उक्तं हि पूर्वैः ॥ 'न जातु कामः कामानां उपभोगेन शाम्यति ॥ हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते' ॥ इति ॥ अतः उक्तोपायेन निग्रहे प्रयत्नः कार्य एव ॥ अन्यथा अयं ध्यानयोगो न सिद्ध्येत् ॥ उक्तोपायेन येन पुंसा मनः न निगृहीतं तेन अयं [2]योगः प्राप्तुमशक्यः ॥ उक्तोपायेन

---

१. वैराग्यमंगं अभ्यासोऽगी अंगेन वैराग्येण अंगिना अभ्यासेन च निगृह्यते ॥ इति परे ॥ अयं क्रमनिग्रहः अयमेव मनसो युक्तः ॥ नतु चक्षुरादीनामिव हठनिग्रहः ॥ चक्षुरादीनि ज्ञानेंद्रियाणि वाक्पाण्यादीनि कर्मेन्द्रियाणि च तत्तद्गोलकमात्रोपरोधेन हठान्निगृह्यन्ते ॥ मनस्तु न तथा निग्रहीतुं शक्यम् ॥ तद्गोलकस्य हृदयकमलस्य निरोद्धुमशक्यत्वात् ॥ उक्तं च ॥ 'सतीषु युक्तिष्वेतासु हठान्नियमयंति ये । चेतस्ते दीपमुत्सृज्य विनिघ्नन्ति तमोंजनैः' ॥ इत्यादि ॥ पूर्वार्धेन हठनिग्रहो न संभवतीत्युक्तम् ॥ उत्तरार्धेन तु क्रमनिग्रहस्संभवतीत्युक्तं ॥ इत्यपरे ॥ २. असंयताऽऽत्मना ब्रह्मण्यस्थापिताचित्तेन समाधिमकुर्वता योगो ज्ञानयोगः दुष्प्रापः ॥ अतः तदर्थं समाधियोगः कार्यः ॥ तदर्थं मनोनिग्रहः उक्तोपायेन कार्यः ॥ इति केचित् ।

वशीकृतमनसैव ध्येयेऽवस्थापनार्थं यत्नं कुर्वतैव योगोऽवाप्तुं शक्यः ॥ उक्तोपायेन मनो निग्रहीतव्यं ॥ मनोवशीकरणानंतरमपि ध्येयेऽवस्थापनार्थं प्रयत्नः कर्तव्यः ॥ तथा प्रयत्नं कुर्वतैव योगः शक्यते लब्धुं ॥ अतो योगसिद्धये मनोनिग्रहः उक्तोपायेन कर्तव्य एव ॥ इति मे निश्चयः ॥ अतस्त्वमत्र संशयं मा कुरु ॥ अत एव महता प्रबंधेनोपदिष्टो मया अयं योगः ॥ ३६ ॥

संजयः ॥ एवमुपायं श्रुतवानर्जुनः उक्तोपायेन मनो निगृह्य तेन मनसा ध्यानयोगं कर्तुं यतिष्ये ॥ महायासासाध्येन उक्तेनोपायेन मनो निगृह्य योगे अभ्यस्यमानेऽपि तस्य संपूर्तिर्नैकस्मिन् जन्मनि स्यात् । पूर्वसंस्कारवशात् भगवदनुग्रहवशात् सत्सहवासादिवशाच्च कर्मयोगे श्रद्धोदयः ॥ ततः कर्मकरणं । तेन चांतःकरणशुद्धिः । तथा च श्रवणमननकरणाभिलाषः । तेन श्रवणादिकं ॥ तदनंतरं योगाभ्यासारंभः ॥ इति बहोः कालादनंतरमेव योगारंभः स्यात् ॥ तस्य च योगस्य तस्मिन्नेव पूर्तिः जन्मनि कथं स्यात् ॥ योगसंपूर्तिं पर्यंतं जीवननियमो नास्ति । कालनियमेन क्लृप्तस्य मृत्योरपरिहार्यत्वात् योगारंभयोगसंपूर्त्योरंतराले यद्यहं म्रियेयं तर्ह्यहं आरब्धाद्योगात् भ्रश्येयं ॥ यदि च जीवन्नेव मरणात्पूर्वमेव केनापि बलवता कारणेन बलवद्भिरिंद्रियैराकृष्टं मनो योगं त्यक्त्वा विषयासक्तं स्यात् ॥ तर्ह्यप्ययं योगात् भ्रश्येयं ॥ यद्येकैकस्मिन्नपि जन्मनि एवं स्यात् तर्हि जन्मसहस्रेणापि न योगसंपूर्तिः स्यात् ॥ असंपूर्त्या योगस्य न ज्ञानद्वारा मोक्षलाभः ॥ एवमफले योगाभ्यासे किमर्थं मां प्रवर्तयसि । आरब्धासंपूर्णयोगस्यापि काचिद्गतिरस्ति न वा ॥ नेति चेत् महदिदमन्याय्यं ॥ हंत हंत कष्टं कष्टं ॥ अस्तीति चेत् सा गतिः का ॥ तां तत्प्रकारं च ब्रूहि ॥ इति [1]पृच्छति भगवंतं वासुदेवम् ॥

१. योगमाहात्म्यं श्रोतुकामः पृच्छति ॥ वि ॥ 'नेहाभिक्रमनाशोऽस्ति' इत्यादावेव श्रुतं योगमाहात्म्यं यथावच्छ्रोतुमर्जुनः पृच्छति ॥ तत्कर्ममाहात्म्यमपि योगमाहात्म्यमेव । योगांकुरभूताऽऽत्मज्ञानगर्भतया पुष्कलयोगस्वरूपसाधनतया च हि कर्मयोगस्य माहात्म्यं तत्रोदितं ॥ ततश्च योगोपाधिके तदंगभूतकर्मयोगमाहात्म्ये अभिहिते अंगिभूतयोगमाहात्म्यमेवोक्तं भवतीति भावः ॥

अर्जुन उवाच---

अयतिः श्रद्धयोपेतो योगाच्चलितमानसः ॥

अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ॥ ३७ ॥

अयतिरिति । हे कृष्ण श्रद्धया उपेतः युक्तः यतिः यत्नं कुर्वन् न यतिः अयतिः योगात् चलितं मानसं यस्य सः चलितमानसः. योगस्य ध्यानयोगस्य संसिद्धिं फलं अप्राप्य कां गम्यत इति गतिः फलं गच्छति प्राप्नोति ॥३७॥

श्रद्धयोपेतः श्रद्धया कर्मयोगमनुष्ठाय तज्जनितया अंतःकरणशुद्ध्या ध्यानयोगे प्रवृत्तः अयतिः अल्पप्रयत्नः 'अनुदरा कन्या' 'अलवणा यवागू'रिति वत् ॥ योगसंपूर्त्यौपयिकप्रयत्नरहितः अतएव आरब्धात् ध्यानयोगात् चलितचेताः योगस्य प्रधानफलं ज्ञानरूपं न लभते अलब्ध्वा तत्फलं किं १ फलं प्राप्नोति ॥ हे कृष्ण वद ॥ श्रद्धाभावे योग एव न प्रवर्तेत। श्रद्धासत्वाद्योगे प्रवृत्तः । प्रयत्नपौष्कल्ये योगपूर्तिः स्यात् ॥ प्रयत्नशैथिल्याद्योगस्य पूर्तिर्न जाता ॥ सतिचैवं अपरिहार्यत्वान्मरणस्य तत्प्राप्तौ मरणसंकटाऽऽतंककलंकव्याकुलतया मरणात्पूर्वं बलवता कारणेन बलवदिंद्रियाऽऽकृष्यमाणमानसतया वा योगाद्भ्रष्टः ॥ तस्य क गतिः ॥ योगाभ्यासकरणात्सुगतिर्वा ॥ तदसंपूर्त्या दुर्गतिर्वा । तत्कृतकर्मणो निवृत्तिकर्मत्वेन न स्वर्गादिकं ॥ योगस्यासंपूर्त्या ज्ञानानुदयेन न मोक्षः ॥ पापकर्माकरणात् न नरकादिकं अतः का गतिस्तस्य ॥ का गतिरिति किं मां पृच्छसीति चेत् त्वं कृष्णोऽसि ॥ २ पुण्यं पापं च कारयित्वा तत्फलप्रापकोऽसि ॥ अतस्त्वां पृच्छामि ॥ ३७ ॥

अर्जुनः ॥ कच्चिन्नोभयविभ्रष्टः छिन्नाभ्रमिव नश्यति ॥

अप्रतिष्ठो महाबाहो विमूढो ब्रह्मणः पथि ॥ ३८ ॥

---

१. गम्यते इति गतिः ॥ २. 'यतः कर्षसि देवेश नियम्य सकलं जगत् ॥ अतो वदंति मुनयः कृष्णं त्वां ब्रह्मवादिनः' ॥ इति कौर्मपुराणवचनमनुसंधेयं ॥

कच्चिदिति ॥ हे महाबाहो कृष्ण न विद्यते प्रतिष्ठा आश्रयः यस्य सः अप्रतिष्ठः ब्रह्मणः पथि मार्गे विमूढः उभयस्मात् विभ्रष्टः उभयविभ्रष्टः सन् छिन्नं भ्रष्टं च तत् अभ्रं मेघः स च छिन्नाभ्रं तदिव न नश्यति कच्चित् किं ॥ ३८ ॥

अयं योगभ्रष्ट' अप्रतिष्ठ' स्वर्गादिसाधनभूतं कर्म फलाभिसंधिरहितस्वास्य स्वफलसाधनत्वेन प्रतिष्ठा न भवति ॥ अतः कर्मयोगरूपाश्रयहीनः ब्रह्मणः पथि विमूढ' ब्रह्मप्राप्तिमार्गे योगे पूर्तिमलभमानः तस्माच्च्युत' अत उभयस्मात् कर्ममार्गात् योगमार्गाच्च विभ्रष्टः ॥ [1]उभयविभ्रष्टः अतएव अप्रतिष्ठः कर्मयोगध्यानयोगरूपाश्रयरहितः अत एव ब्रह्मणः पथि साक्षात् ब्रह्मप्राप्तिमार्गे ज्ञानयोगे विमूढः तमप्राप्तः इति वा। एतादृशः सन् कस्माच्चित्सहायभूतान्मेघसमूहात् च्युतः अन्यं मेघसमूहमप्राप्य मध्ये वायुना दोधूयमानः मेघः यथा वृष्ट्यादेरनुपयुक्तः सन् नाशं प्राप्नोति तद्वत् [2]नाशं प्राप्नोति किं वद ॥ त्वं महाबाहुरसि ॥ भक्तेभ्यः चतुर्भि :भुजैः पुरुषार्थचतुष्टयदानसमर्थोऽसि ॥ अतस्तादृशस्य तव एतत्संशयापाकरणेन मय्यनुग्रहकरणं युक्तं ॥ पूर्वं कां गतिं गच्छतीति सामान्यतः पृष्टं ॥ तत्र, तस्य का गतिः तां ब्रूहि इत्याशयः ॥ अत्र तु न नश्यति किमिति पृच्छ्यते ॥ तस्य नरकाद्यनर्थप्राप्तिर्नास्ति किं तन्मे ब्रूहि इति विशिष्य पृच्छ्यते ॥ अस्तु, तस्य गतिर्यावा कावा भवतु तां पश्चात् ज्ञास्यामि ॥ तस्य नरकाद्यनर्थप्राप्तिर्नोस्तीति चेत् अलमेतत् ॥ गतिर्यावा कावा भवतु ॥ इत्याशयः ॥ ३८ ॥

अर्जुनः ॥ एतन्मे संशयं कृष्ण छेत्तुमर्हस्यशेषतः ॥
त्वदन्यस्संशयस्यास्य छेत्ता न ह्युपपद्यते ॥ ३९ ॥

---

१. स्वर्गोपायात् काम्यकर्ममार्गात् मोक्षोपायात् ध्यानयोगमार्गाच्च ऐहिकादामुष्मिकाच्च पुमर्थात् स्वर्गान्मोक्षाच्च विभ्रष्टः इत्यर्थः ॥ पूर्वमेव कर्ममार्गाच्च्युतः इदानीं ब्रह्मणःपथि विमूढः अतः उभयभ्रष्टः अत एव अप्रतिष्ठो निराश्रयः ॥ योगाच्चलितमानस इत्यस्य कर्मयोगं त्यक्तवान् इत्यर्थः ॥

२. अ ॥ अयं प्रश्नः कर्मत्यागिनं प्रति ॥ न तु कर्मिणं प्रति ॥ तस्य यागफलासंभवेऽपि कर्मफलावश्यंभावात् ॥ निवृत्तिकर्मणामपि फलसद्भावस्य द्वितीये सविस्तरमुपपादितत्वात् ॥

एतदिति ।। हे कृष्ण मे एतत् संशयं न विद्यते शेषः यस्मिन् कर्मणि तत् अशेषं यथा तथा छेत्तुं अर्हसि ।। हि यस्मात् अस्य संशयस्य छेत्ता त्वत् अन्यः नोपपद्यते तस्मात् त्वमेव छेत्तुमर्हसि ।। ३९ ।

हे कृष्ण त्वं मम [१]एतत् संशयं छेत्तुमर्हसि ।। भक्तजनमनःसंकटकर्षणशीलत्वात् मदीयं संशयरूपं मनःसंकटं परिहर ।। छिंधीत्यनुक्त्वा छेत्तुमर्हसि इत्युक्त्या निःसंशयेन शिष्यसंशयच्छेदलक्षेण शिष्याणां संशयः परिहर्तव्य एवेति सूच्यते ।। परिहर्तुमित्यनुक्त्वा छेत्तुमित्युक्त्या समूलमुन्मूलयितव्योऽयं संशयः इति प्रतीयते ।। एतस्य योगभ्रष्टगतिविषयकसंशयस्य गंधोऽपि आरब्धस्य असंपूर्णस्य योगस्य अफलत्वानिष्टफलत्वभयोत्पादनेन योगाभ्यासप्रवृत्तिं प्रतिबध्नीयात् ।। अतोऽमुं संशयं समूलमुन्मूलय ।। अन्यो यः कोऽपि संशयमेतं छिंद्यादिति चेत् अस्य संशयस्य त्वदन्यः छेत्ता न युज्यते ।। सर्वज्ञत्वात्त्वमेवेमं संशयं परिहर्तुं शक्तः नान्यः ।। अन्येषां ऋष्यादीनां संशयपरिहरणशक्तिर्नास्ति वा ज्ञाननिश्चयः खलु ते इति चेत् अस्य संशयस्य छेत्ता त्वमेव नान्यः ।। प्रमाणगतसंशयश्चेत् ज्ञानिनस्ते परिहरेयुः ।। अयं तु असंपूर्णो योगः किमफलः किं वा अनिष्टफलः उत जन्मांतरेषु उपयुज्यते इति प्रमेयगतः ।। अस्य परिहारस्त्वयैव कर्तुं शक्यः ।। योगेश्वरत्वात् योगप्रवर्तकत्वात् योगफलदातृत्वाच्च ।। इतरे तु यद्विषयो योगः तदिष्टानुरोधी अयं विषयः इति ब्रूयुः ।। त्वद्विषयस्यास्य योगस्य गतिं कल्पयितुं त्वमेव स्वतंत्रः ।। [२]अतोऽस्य कां गतिं संकल्पितवानसि इति त्वामेव पृच्छामि ।। वद मे परमया कृपया ।। ३९ ।।

संजयः ।। एवमर्जुनेन पृष्टो भगवान् प्रश्नस्यास्य मया परिहारे कृते श्रुत्वा विदित्वाऽमुं विषयं निस्संशया निश्चिता निर्भयाश्च ध्यानयोगे प्रवर्तेरन् इति हृष्टः हर्षादमुं कृपातिशयसूचकेन तातेति संबोधनेन प्रोत्साहयन् प्रश्नस्योत्तरमाह ।।

---

१. एतत् इत्यस्य एतमित्यर्थः ।। लिंगव्यत्ययः ।। एतत् प्रति यो मे संशयः तमित्यर्थः ।। इति केचित् ।। एतमित्येव पाठः ।। इत्यन्ये ।। २. हि शब्दो हेतौ ।। तव संशयच्छेदसामर्थ्यं योगेश्वरत्वादिकं च सर्वशास्त्रप्रसिद्धमिति प्रसिद्धयर्थो वा हिशब्दः ।।

श्रीभगवानुवाच—

पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते ।
न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति ॥ ४० ॥

पार्थेति ॥ हे पार्थ तस्य इह विनाशः नैव विद्यते ॥ अमुत्र परत्र नाशः नैव विद्यते ॥ हे तात कल्याणं करोतीति कल्याणकृत् कश्चित् कोऽपि दुर्गतिं न गच्छति ॥ हि प्रसिद्धम् ॥ ४० ॥

हे पार्थ तस्य उक्तरीत्या योग इह लोके परलोके च विनाशः नैव विद्यते ॥ [1]इह नाशः शिष्टजनगर्हानिमित्तप्रतिष्ठाभंगरूप. ॥ तिर्यग्योनिप्राप्तिरूपो वा ॥ [2]परत्रनाशः ॥ तिर्यग्योनिप्राप्तिरूपः नरकप्राप्तिरूपो वा ॥ इह नाशो न परत्र नाशो न इति नञ्द्वयोपादानमादरार्थं ॥ कुतो नेति चेत् ॥ [3]हे तात [4]कल्याणकृत् समीचीनकार्यकृत् कश्चिदपि दुर्गतिं दुष्टां गतिं उक्तरूपां न गच्छति ॥ अतः योगभ्रष्टस्य नाशो न विद्यते ॥ अयं तु कल्याणतमयोगाभ्यासकृत् तादृशकर्मयोगकृद्वा ॥ [5]अतोऽस्य दुर्गतिर्न युक्ता ॥ यः कल्याणकारी तस्य दुर्गतिर्नास्तीति [6]प्रसिद्धं हि लोके ॥ अतः छिन्नाभ्रमिव नश्येदिति मा शङ्किष्ठाः ॥ ४० ॥

अर्जुनः ॥ योगभ्रष्टस्य दुर्गतिर्नास्तीत्युक्तम् ॥ तर्हि का वा गतिरस्य भवति वद ॥

कृष्णः ॥ प्राप्य पुण्यकृतां लोकान् उषित्वा शाश्वतीस्समाः ।
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥ ४१ ॥

---

१. वि ॥ प्राकृतसुखानुभवे इष्टानवाप्तिरूपः ॥ २. वि ॥ परब्रह्मानुभवे तद्रूपः ॥' उभयत्र प्रत्यवायरूपानिष्टप्राप्तिरूपश्च ॥ ३. तनोति पुत्ररूपेणाऽऽत्मानमिति तातः पिता ॥ वात्सल्यात्पुत्रस्तेन शब्देनोच्यते ॥ शिष्योऽपि पुत्रः । ' जनिता चोपनीता च यश्च विद्यां प्रयच्छति ॥ अन्नदाता भयत्राता पंचैते पितरः स्मृताः ' ॥ इति स्मृतेः ॥ अतः शिष्यः अर्जुनः तातेति आहूतः ॥ तनोति विस्तारयति स्वदत्तां विद्यां इति तातः शिष्यः ॥ इति वा ॥ ४. कल्याणं मंगलतमं ब्रह्म करोति स्वात्मना साक्षात्करोतीति तथा ॥ ५. हिः हेतौ ॥ ६. हिः प्रसिद्धौ ॥

प्राप्येति ॥ योगात् भ्रष्टः योगभ्रष्टः पुण्यं कुर्वंतीति पुण्यकृतः तेषां पुण्यकृतां लोकान् प्राप्य शाश्वतीः बहून् समाः वर्षाणि उषित्वा शुचीनां शुद्धानां श्रीः एषां अस्तीति श्रीमन्तः तेषां श्रीमतां गेहे अभिजायते ॥ ४१ ॥

योगभ्रष्ट. अश्वमेधादिपुण्यकर्मकारिणां प्राप्यान उत्तमलोकान् पुण्यकृतान् पुण्यहेतुकान लोकानिति वा ॥ आरब्धासंपूर्णस्वल्पयोगसामर्थ्यादेव लब्ध्वा तेषु शाश्वतीः समाः बहून् संवत्सरान् उषित्वा वासं कृत्वा श्रीमतां धनिनां गृहे अभिजायते ॥ धनिनो धनमदांधा अकार्ये प्रवृत्ता नश्यंति किं तेषां कुले, जायते योगभ्रष्ट इति चेत् न तादृशानां धनिनां किं तु शुचीनां सदाचारपराणां भक्तिज्ञानवैराग्यादिसाधनसामग्रीमतां गृहे जायते ॥ यः योगभ्रंशकाले श्रद्धाभक्तिपौष्कल्यरहितः अपक्वयोगी अल्पकालाभ्यस्तयोगभ्रष्टः सः धनिनां कुले जायते ॥ भोगवासनाशेषसद्भावात् ॥ इदं च अभीत्यनेन लभ्यते ॥ अभि स्वाभिलषितभोगानुभवाभिमुख्येन जायते इत्यर्थः ॥ ४१ ॥

अर्जुनः ॥ अपक्वयोगभ्रष्टो धनिनां कुले जायते इत्युक्तं ॥ पक्वयोगश्चेत् कुत्र जायते ? वद ॥

कृष्णः ॥ अथवा योगिनामेव कुले भवति धीमताम्
एतद्धि [1]दुर्लभतरं लोके जन्म यदीदृशम् ॥ ४२ ॥

अथेति ॥ अथवा धीः एषामस्तीति धीमन्तः तेषां धीमतां योगः एषामस्तीति योगिनः तेषां योगिनामेव कुले संततौ गृहे वा भवति ॥ यत् ईदृशं जन्म एतत् लोके अत्यन्तं दुर्लभम् दुर्लभतरम् ॥ हि प्रसिद्धम् ॥ ४२ ॥

पक्वयोगिनो योगभ्रष्टस्य पक्षांतरमुच्यते ॥ अथवा पक्षांतरे ॥ ज्ञानिनां योगवतां दरिद्राणामेव गृहे जायते ॥ नतु श्रीमतां ॥ लोके ईदृशं यज्जन्म योगिनां

---

१. प्राकृतानां दुर्लभतरं ॥ एतत्तु योगमाहात्म्यकृतम् ॥

कुले एतत् लोके दुर्लभतरं ॥ पूर्वोक्तं श्रीमतां गेहे जन्म दुर्लभं ॥ यद्विरुद्धमिदं ॥ श्रीमतां गेहे जातस्य जन्मव्याद्याचार्यादुपदेष्टुर्योगाधिगमः इत्यन्यापेक्षाकृतम्-सौकर्यं ॥ योगिनां धीमतां कुले जातस्य तु तस्मादेव पित्रादेर्योगाधिगमः इति अन्यानपेक्षाकृतं सौकर्यं ॥ अतः पूर्वोक्तं दुर्लभं इदं तु दुर्लभतरमिति तस्मादस्य विशेषः । किंच श्रीमतां गेहे भोगवासनया जातस्य [1]स्रक्चंदनवनितागृहाऽऽरामधनवसनवाहनाऽऽसनपानभोजनानुभवाऽऽसक्त्या चित्तविक्षोभेन योगे प्रवृत्तिः क्षिप्रं न जायेत ॥ योगिनां धीमतां दरिद्राणां कुले जातस्य योगभ्रष्टस्य चित्तविक्षोभजनकभोगप्रसक्तेरेवाभावात् योगे प्रवृत्तिः क्षिप्रमेव जायेत ॥ अतोऽपि पूर्वस्मादस्य विशेषः ॥ किंच वा अथवा पक्वयोगो योगभ्रष्टः अथैव देहपातानंतरमेव नतु कांश्चिल्लोकान् प्राप्य व्यवधानेन, धीमतां योगिनां कुले भवति ॥ कालव्यवधानं विना यत् अनायासेन योगाधिगमानुगुणं जन्म एतद्दुर्लभतरं इति पूर्वस्मादस्य विशेषः ॥ यदीदृशं द्विविधं जन्म एतत् द्विविधमपि जन्म दुर्लभतरमिति वा ॥ ४२ ॥

कृष्णः ॥ तत्र तं बुद्धिसंयोगं लभते [3]पौर्वदेहिकम् ।
यतते च ततो [2]भूयः संसिद्धौ कुरुनन्दन ॥ ४३ ॥

तत्रेति ॥ तत्र तं पूर्वश्चासौ देहश्च पूर्वदेहः तस्मिन् भवः पौर्वदेहिकः तं बुद्ध्या संयोगः बुद्धिसंयोगः तं लभते ॥ हे कुरुनन्दन पार्थ ततः तस्मात् भूयः अधिकं संसिद्धौ यतते यत्नं करोति च ॥ ४३ ॥

यस्मिन् द्विविधेऽपि जन्मनि योगिनां कुले वा पूर्वदेहे भवं बुद्धिसंयोगं बुद्धेः मनसः सम्यक् योगं ध्येये योजनं ध्यानस्यां च लभते ॥ ध्यानयोगे समाधानं

---

१. अत्र, 'मनोहराणां भोज्यानां युवतीनां च वाससां ॥ वित्तस्यापि च सान्निध्यात् चलेच्चित्तं सतामपि ॥ तत्सान्निध्यं ततस्त्यक्त्वा मुमुक्षुर्दूरतो भवेत्' ॥ इत्यनुसंधेयम् ॥ २, भूयः इति पृथक् पदं ॥ अधिकं अधिकस्येति यावत् ॥ भूयसः अधिकस्य संसिद्धिः भूयस्संसिद्धिः इत्येकं पदं वा ॥ ३. पौर्वदेहिकं ॥ पूर्वदेहिक ॥ इति पाठाः ॥

तावत् निमित्तमात्रभूतेन पित्राद्युपदेशेन स्वयमनायासेन स्वप्रयत्नं विनैव प्राप्नोति ॥ ततोऽधिकस्य अवशिष्टांशस्य सम्यक् साधनार्थं यत्नं करोति च ॥ पूर्वदेहे यावत् ध्यानयोगे जातं तावदप्रयत्नेन लब्ध्वा यत्नेन ततोऽधिकांशं साधयितुमारभते । बुद्ध्या आत्मज्ञानेन संयोगं बुद्धिरूपं समीचीनं मोक्षोपायं वा लभते ॥ ततः तदनंतरं तेनैव स्वयमुपनतेन बुद्धिसंयोगेन हेतुना मोक्षविषये नितरां यत्नं करोति च । इति वा । एवमनेकेषु जन्मसु किंचित्किंचित्साधने योगः संपूर्णो भवति । एवमसंपूर्णो योगो जन्मांतरे सुप्तप्रबुद्धस्येव उपयुज्यते ॥ न व्यर्थो भवति । अतस्त्वं मा व्यथिष्ठाः । ४१ ॥

अर्जुनः ॥ जन्मांतरे समस्तसंस्कारतिरोधानदर्शनात्कथमिदं । वद ।

कृष्णः । पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः ॥ ४२ ॥

पूर्वेति न वश अवशः तादृशोऽपि सः योगभ्रष्टः तेन पूर्वाभ्यासो अभ्यासश्च पूर्वस्मिन् जन्मनि अभ्यासः इति वा पूर्वाभ्यासः तेनैव ह्रियते ॥ ४२ ॥

स योगभ्रष्टः जन्मांतरत्वात् पूर्वसंस्कारतिरोधानेन परवशीकृतोऽपि स्वयमप्रवर्तमानोऽपि केनापि बलवता हेतुना स्वयमनिच्छन्नपि तेनैव पूर्वजन्मकृतेन संस्कारात्मना बुद्धिस्थेन ह्रियते स्ववशीक्रियते ॥ स्वसजातीयावशिष्टांशसाधने प्रवर्त्यते' ॥ प्रसिद्धमिदं । यस्मादयं पूर्वाभ्यासेन ह्रियते तस्मात् तं बुद्धिसंयोगं लभते । ततोऽधिकं यतते च । यथा चोरेण, बहूनां रक्षिणां मध्ये विद्यमानमपि वस्तु, स्वयमनिच्छदपि सर्वांस्तान् रक्षिणोऽभिभूय स्वसामर्थ्यविशेषादेवापह्रियते ॥ एवं बहूनां प्रतिबंधकानां मध्ये विद्यमानोऽपि योगभ्रष्टः स्वयमनिच्छन्नपि अप्रयतमानोऽपि बलवता पूर्वाभ्यासेन सर्वान् प्रतिबन्धका[न]भिभूय आकृष्य स्ववशीक्रियते ॥ अकस्मादेव भोगवासनाभ्यः व्युत्थाप्य मोक्षसाधनोन्मुखः क्रियते ॥ अहो अन्यादृशमीदृशं सामर्थ्यं ध्यानयोगस्य । प्रसिद्धमिदं ॥ ध्यानयोगस्य तादृशमहिमवत्त्वात् इदमुपपन्नं ॥ यथा अवरासु परीक्षासु भागभेदमकल्पयित्वा समष्टौ संपादनीयमेकमंकं व्यवस्थाप्य ततो न्यूने नायमस्यां

परीक्षायां परभागमुपगत इति निरस्यते ॥ न तथा बह्वायाससाध्यायां बहुधनव्ययसाध्यायां महत्यां परीक्षायां ॥ किंतु तस्यां भागभेदान् कल्पयित्वा प्रतिभागं संपादनीयमेकमंकं व्यवस्थाप्य यस्मिन् भागे कल्प्तोऽको येन संपादित: स तस्यां परीक्षायां तस्मिन् भागे परभागी ॥ तेन यस्मिन् भागे कल्प्तोऽको न संपादित: स भाग: केवलं पुनरभ्यसनीय: इति परमकारुणिकै: राजभि: व्यवस्थापितं हि दृश्यते ॥ तद्वत् मयापि बह्वायाससाध्यत्वादस्य योगस्य योगेऽस्मिन् साधितोंऽश: उपयुज्यते । अवशिष्टांश: केवलमभ्यसनीय: इति परमया करुणया व्यवस्थापितमास्ति । एवमुपयुज्यते असंपूर्णोऽपि ध्यानयोग: । न व्यर्थो भवति ॥ अतस्त्वं नि:शंकं ध्यानयोगे यतस्व । त्वं पार्थ: कुरुनंदनोऽसि । त्वं योगभ्रष्ट: उक्तलक्षणे कुले जातोऽसि ॥ ४३ ॥

अर्जुन: ॥ किं योगस्य तादृशं माहात्म्यं । वद ॥

कृष्ण: । जिज्ञासुरपियोगस्य शब्दब्रह्मातिवर्तते । ४४ ।

जिज्ञासुरिति योगस्य योगं ज्ञातुं इच्छु: जिज्ञासुरपि शब्दरूपं ब्रह्म शब्दब्रह्म वेद: शब्दसंहितं ब्रह्म प्रकृति शब्दब्रह्म तत् अतिवर्तते । ४४ ॥

योगं ध्यानयोगं ज्ञातुमिच्छन्नपि ज्ञातव्योऽयं योग: इति योगज्ञाने प्रयतमानोऽपि [1]शब्दब्रह्म शब्दात्मकं ब्रह्म वेद: तं अतिवर्तते ॥ वेदो हि विधिनिषेधात्मक: तमतिवर्तते ॥ विधिनिषेधातीतो भवति ॥ मुक्तो भवति । [2]कर्मकांडात्मकं वेदमतिवर्तते । तदोक्तस्वर्गादिरूपफलापेक्षया अधिकं फलं लभते । तादृशं वेदोक्तं कर्ममार्गमतीत्य ज्ञाने अधिकारवान् भवति ॥ योजयति ब्रह्मभावं गमयति इति योग: निर्विशेषं परं ब्रह्म तत् ज्ञातुमिच्छन्नपि वेदमतिवर्तते ॥ वेदान् वेदोक्तं कर्म च संन्यस्य श्रवणादावेव प्रवर्तते ॥ [3]ब्रह्म प्रकृति: शब्दयुक्तं ब्रह्म शब्दब्रह्म तदतिवर्तते ॥ देवमनुष्यपृथिव्यंतरिक्षस्वर्गादिशब्दा-

१. है ॥ २. अ ॥ ३. वि ॥

भिलापयोग्यां प्रकृतिमतिवर्तते ॥ प्रकृतिबंधाद्विमुक्तः देवमनुष्यादिशब्दाभि-लापानर्हं ज्ञानानंदैकतानं स्वात्मानं प्राप्नोति ॥ जिज्ञासुर्योगजिज्ञासाया भ्रष्टोऽपि ज्ञानेच्छामात्रेण पुनरपि तामेव जिज्ञासां प्राप्य ईदृशं फलमश्नुते ॥ किमुत ज्ञानेच्छया कंचित्कालं योगमनुष्ठाय योगाद्भ्रष्टो मुच्यते इति ॥ योगशास्त्र माहात्म्यमीदृशम् । ४४ ॥

द्वै ॥ अर्जुनः ॥ यदि योगजिज्ञासामात्रेण मुक्तिः तर्ह्यहं मुक्तो भवेयं योगजिज्ञासावत्वात् ॥ योगस्य त्वन्मुखात् यथावच्छ्रवणाच्च । नेतःपरं मम मुक्तये कर्मयोगाद्यपेक्षा । स्यात् खल्वेवं ॥ वद ॥

कृष्णः । प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः ॥
अनेकजन्मसंसिद्धः ततो याति परां गतिं । ४५ ॥

प्रयत्नादिति " यतमानस्तु यत्नं कुर्वन्नेव यत्नात् तस्मात् प्रयत्नात् योगी सन् संशुद्धः किल्बिषेभ्यः पापेभ्यः संशुद्धकिल्बिषः सन् अनेकैः जन्मभिः संसिद्धः ज्ञानी अनेकजन्मसंसिद्धः सन् ततः तस्मात् ज्ञानात् परां गतिं मुक्तिं याति ॥

योगे यत्नं कुर्वन्नेव तस्माद्यत्नात् योगी सन् तेन किल्बिषेभ्यः पापेभ्यः संशुद्धः नितरां शोधितपापः सन् अनेकैः जन्मभिः संसिद्धः जातापरोक्षज्ञानः सन् ततः तस्मादपरोक्षज्ञानात् हेतोः परां गतिं मोक्षं याति ॥ जिज्ञासामात्रमपि क्रमेण मुक्तिं प्रापयति ॥ किमुत योगाभ्यासः इति योगमाहात्म्यसूचनाय तथोक्तं ॥ न योगजिज्ञासामात्रेण मुक्तिः सिध्येत् ॥ किंतु योगानुष्ठानलब्धा-परोक्षज्ञानेनैव ॥ अतः कर्तव्य एव योगः । ४५ ॥

अ ॥ अर्जुनः ॥ 'अयतिः श्रद्धयोपेतः' इत्युक्तरीत्या यो मंदप्रयत्नः तस्याप्येवं क्रमेण मोक्षप्राप्तौ यो योगे अधिकप्रयत्नं करोति तस्य मंदप्रयत्नात् को विशेषः ॥ ब्रूहि ।

कृष्णः ॥ प्रयत्नात् यतमानः आधिकं यतमानः योगसाधनप्रयत्नाद्योगे प्रयत्नं कुर्वन् वा यत्नात् यत्नेन यतमानः योगं कुर्वन्वा योगी तु संशुद्धकिल्बिषः

निःश्रेयसिनरूपणावसरे मातस्कार्यंकारणात्मकः सन् अनेकेषु शिवेष्वेव जन्मसु संचितः संचितसवशेषधर्मयोगज्ञानं प्राप्तवान् ततः तेन अनन्तरमेव विशेषके-वल्यं प्राप्नोति ॥ मंदप्रयत्नो बहुभिर्जन्मभिर्मोक्षं याति ॥ अधिकप्रयत्नस्तु शिवैरेव जन्मभिरिति विशेषः ॥ तु शब्दः पक्षविशेषसूचकः ॥ मंदप्रयत्नोऽप्येवं मुच्यते ॥ प्रयत्नाद्यतमानस्तु क्रमेण परां गतिं यातीति किं वक्तव्यं ॥ योगं जिज्ञासुरपि [1]मृतः वक्ररूपे विशिष्टे कुले जन्म लब्ध्वा क्रमेण मुच्यते चेत् किमुत यत्नेन योगं कृत्वा [2]मृतः ॥ पूर्वपूर्वप्रयत्नापेक्षया उत्तरोत्तरमधिकं यतमानः संशुद्धकि-ल्बिषः सन् अनेकैः जन्मभिः संसिद्धः साधनसंपूर्तिमान् ततः साधनपरिपा-कात् मोक्षं याति ॥ इति किंवाच्यं अतः यत्नाद्योगः करणीयः इति सिद्धम् ॥

वि ॥ अर्जुनः ॥ योगं जिज्ञासुरपि ततश्चलितः पुनर्योगं प्राप्य मुच्यते इत्युक्तं ॥ ततः किं ॥ वद ॥

कृष्णः ॥ यस्मादीदृशं जिज्ञासुरपीत्युक्तं योगस्यमाहात्म्यं ततः तस्मात् अनेकैः जन्मभिः संसिद्धः योगयोग्यः प्रयत्नात् योगे प्रयतमानः योगी तेन संशुद्धकिल्बिषः अनेकजन्मकृतपुण्यसंचयैः क्षीणप्रतिबंधकपापः तस्माच्चलितो-ऽपि पुनस्तत्क्रमेण योगी भूत्वा परां गतिं याति ॥ योगं तेन चात्मप्राप्त्यादिकं फलं यात्येव ॥ अत ईदृशं योगस्य माहात्म्यं इदमेवोक्तं पूर्वं ‘नेहाभिक्रमनाशो-ऽस्ति’ (२. ४०.) त्यादौ ॥ ४५ ॥

अर्जुनः ॥ ईदृशं माहात्म्यं तपःप्रभृतीनां अप्यास्ति । किं विशिष्यो-च्यते योगस्य ॥ वद ॥

कृष्णः । तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः ॥
कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ॥ ४६ ॥

तपस्विभ्य इति ॥ तपः एषां अस्तीति तपस्विनः तेभ्यः तपस्विभ्यः

---

१. ‘ यत्त्वात्मरतिरेव ’ ति श्लोकव्याख्यानोदाहृतवासिष्ठवचनोक्तभूमिकासप्तक प्रथमभूमिकायामेव मृतः २. द्वितीयायां तृतीयायां वा भूमिकायां मृतः ॥

योगी ध्यानयोगी अधिकः ॥ ज्ञानं एषां अस्तीति ज्ञानिनः तेभ्योऽपि अधिकः मतः ॥ कर्म एषां अस्तीति कर्मिणः. तेभ्यश्च योगी अधिकः हे अर्जुन तस्मात् योगी भव ॥

ध्यानयोगी कृच्छ्रचांद्रायणादितपोनिष्ठेभ्यः ज्ञानिभ्योऽपि परोक्षज्ञानरूपशास्त्रपांडित्यवद्भ्योऽपि योगज्ञानवद्भ्योऽपि अग्निहोत्रज्योतिष्टोमादिवैदिककर्मानुष्ठानविद्भ्योऽपि [1]अधिको मे मतः ॥ अपरोक्षज्ञानद्वारा मोक्षरूपमहाफलहेतुत्वाद्योगस्य तद्वानधिको मे मतः ॥ अतोऽत्र न संशयः कर्तव्यः ॥ तस्मात् योगस्य योगिनश्च उत्कर्षात्या महामाहिमवत्वात् त्वं योगी भव ॥ महता प्रयत्नेन ध्यानयोगं साधय ॥ त्वं शुद्धत्वादर्जुनोऽसि । अत एवाऽयं साध्यः ॥ अतो निःशंकं योगे तस्साधने च कर्मणि वर्तस्व ॥ ४६ ॥

अर्जुनः । किमुक्तरूपं योगमनुतिष्ठंतः सर्वेपि योगिनः समानाः उत तेषां तारतम्यमस्ति ॥ ब्रूहि ॥

कृष्णः योगिनामपि सर्वेषां मद्गतेनांतरात्मना ॥
श्रद्धावान् भजते यो मां स मे युक्ततमो मतः ॥ ४७ ॥

योगिनामिति यः श्रद्धा अस्यास्तीति श्रद्धावान् सन् मां गतः मद्गतः तेन अन्तरात्मना मनसा मां भजते ॥ सः सर्वेषामपि योगः एषां अस्तीति योगिनः तेषां योगिनां मध्ये अत्यन्तं युक्तः युक्ततमः मे मम मतः संमतः ॥ ४७ ॥

द्वै ॥ यो योगी श्रद्धाशब्दोदितभक्तिमान् सन् मद्गतेन नतु फलमभिल-

---

१. वि ॥ योगिनोऽपि तपोज्ञानकर्माणि सन्ति ॥ तेन योगी तपस्वी ज्ञानी कर्मी च भवति ॥ सति चैवं कथं तपस्विप्रभृतिभ्योऽधिकः इति युज्यत इति चेत् योगरहितकेवलतपःप्रभृतिमद्भ्यो योगी अधिकः ॥ श ॥ परोक्षज्ञानवद्भ्योऽपरोक्षज्ञानवान् योगी अधिकः ॥ अपरोक्षज्ञानवद्भ्योऽजीवन्मुक्तेभ्यो जीवन्मुक्तः 'स योगी परमो मतः' इत्युक्तलक्षणो योगी अधिकः ॥ त्वं तादृग्योगी भव ॥

यता मनसा फलापेक्षां विनेति यावत् । मां ध्यानयोगेनोपास्ते स योगी सर्वेषा-मपि योगिनां मध्य उत्तमो योगी मे मतः ॥ अतो निश्चितमिदं ॥ नास्त्यत्र संशयः । तमध्ययागात् तिस्रो भूमिकाः प्रतीयंते । युक्तः युक्ततरः युक्ततमः इति । तत्र यः श्रद्धावान् सन् यंकमपि देव भजते स युक्तः ॥ यः तादृश-स्सन् मां भजते स युक्ततरः । यः तादृशस्सन् मां फलकामनां विना भजते सः युक्ततमः ॥ अतस्त्वया श्रद्धया फलेच्छां विना मामुद्दिश्य योगः कर्त-व्यः । एतदर्थमेव तवायं योगोपदेशः । स्यादनेन तव निरर्गलं मङ्गलम् ॥

अ ॥ यः श्रद्धावान् श्रद्धा नाम विपरीतभावनाराहित्येन वक्तार्थानुवृ-त्तबुद्धिवृत्तिविशेषः तद्वान् सन् मद्गतेन मनसा फलापेक्षां त्यक्त्वा मां सगुणं निर्गुणं वा भजते । सर्वमिदमहं च ब्रह्मैवेति स्वमात्मानं जगच्च ब्रह्मात्मना साक्षात्करोति स योगी सर्वेषामपि योगिनां वसुरुद्रादित्यादिदेवतातरवि षययोगपराणां योगिना मध्ये योगिनामिति षष्ठी पंचम्यर्थे तेभ्यो योगिभ्यो ऽपि युक्ततमः ॥ अतिशयितो योगी मे मतः ॥ अतस्त्वया तादृशमद्विषययो-गवता योगिना भवितव्यं ॥ एतदर्थमेवायं तुभ्यं ध्यानयोगोपदेशः ॥ स्याद-नेन ते मंगलं । तदेवं अशुद्धस्यांतःकरणस्य शुद्धये कर्मयोगं दर्शयता तत्फ-लभूतं ध्यानयोगं सांगोपांगं प्रतिपादयता मनोनिग्रहोपायं सम्यगुपदिशता योगभ्रष्टस्य पुरुषार्थशून्यताशंकामुन्मूलयता प्रथमषट्केन त्वंपदार्थनिरूपणं कृतं । इतःपरं मद्गतेनांतरात्मनेति सूचितस्य भक्तियोगस्य भजनीयस्य भग-वतश्च निरूपणेन तत्पदार्थनिरूपणं द्वितीयषट्केन करिष्यते ॥ उक्तं वक्ष्य-माणं च भक्त्यानुसंहितमावहति परमं मंगलम् ४७ ॥

वि ॥ संजयः । एतावता प्रबंधेन जीवात्मविषयं योगमुक्त्वा तस्य सर्वस्मादाधिक्यं प्रतिपाद्य एवमस्याधिक्यप्रतिपादनेन नास्माद्योगादतिशयितो योगोऽस्तीति मन्येतायमिति मन्वानो भगवान् स्वविषयं भक्तियोग आत्मयो-गादपि मध्यमषट्केन उपदेक्ष्यन् तं प्रस्तौति ।

कृष्णः । योगिना सर्वेषामिति षष्ठी पंचम्यर्थे ॥ योगिभ्यः सर्वेभ्योपि ॥ सर्वेषां योगिनां मध्ये इति निर्धारणषष्ठी न युक्ता ॥ भगवद्योगिनो वक्ष्यमाणस्य

उक्तात्मयोगिषु वा तपस्विप्रभृतिषु वा अन्यतमत्वाभावात् ॥ वक्ष्यमाणरीत्या यः श्रद्धावान् मत्प्राप्तिप्रवृत्तो त्वरावान् सन् मद्गतेनान्तरात्मना मां भगवंतं भजन् उपास्ते सः 'सर्वभूतस्थमात्मान'मित्यादिभिश्चतुर्भिः श्लोकैरुक्तेभ्यश्चतुर्भ्यः आत्मयोगिभ्यः 'तपस्विभ्य' इति पूर्वश्लोकोक्तेभ्यः सर्वेभ्योऽपि श्रेष्ठतमः मे मतः नात्र संदेहः कार्यः ॥ एकजातीयेषु वस्तुषु अन्यतमस्य हि केनचिद्विशेषेण निर्धारणं लोके दृश्यते ॥ चतुर्णां योगिनां तपस्विप्रभृतीनां च परस्परतारतम्यसत्वेऽपि परमात्मयोगापेक्षया अवरत्वं समानं ॥ अन्योन्यतरतमभावापन्नानामपि सर्पाणां गरुडापेक्षया अवरत्ववत् ॥ अतः सामान्य निर्देशः ॥ अतः उक्ते आत्मयोगे वक्ष्यमाणे भगवद्योगे च त्वं श्रद्धया प्रयतस्व ॥ स्यादुभाभ्यां योगाभ्यां तव परमं मंगलम् ॥ ४७ ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
कृष्णार्जुनसंवादे आत्मसंयमयोगो नाम षष्ठोऽध्यायः ॥ ६ ॥

इतीत्यादि पूर्ववत् ॥ आत्मनः मनसः संयमः निग्रहः तेन साध्यः योगः ध्यानयोगः प्रतिपाद्यतया यस्मिन् सः आत्मसंयमयोगः इति नाम्ना प्रसिद्धः षष्ठाध्यायः इति संपूर्णः ॥

इति श्रीमद्भगवद्गीतोपन्यासदर्पणे लक्ष्मणाचार्यविरचिते आत्मसंयमयोगाख्ययथार्थप्रदर्शकः षष्ठः प्रतिबिंबः ॥

एषाप्रकटनपत्रिका यथानुकूलं सर्वेभ्योयुष्मन्मित्रेभ्यो बन्धुभ्यश्च मयि कृपया प्रदर्शयितव्या। किंच ये इदं पुस्तकमपेक्षेरन् तादृशानां नामादिकं मह्यं निर्दिष्टंचेत्, तेभ्योऽहमिमांप्रेषयेयम्.

अचिरादेव प्रकाशयिष्यते ॥ ॥ श्रीः ॥ अचिरादेव प्रकाशयिष्यते ॥

अनितरसाधारणया द्वैताद्वैतविशिष्टाद्वैतरूपमतत्रयसाधारण्या सुललितपदविन्यासाविचित्रतया, आत्मार्थमवबुभुत्सूनां गीतोपन्यासकानां चात्यन्तमुपकारिण्या, अतिसमीचीनदेवनागरीमुद्राक्षरमुद्रितया **गीतोपन्यास दर्पण** अभिख्यायाव्याख्यया विभूषिता ॥

इयंच व्याख्या विचित्रशतावधानी विद्वन्मणि, महाभागवत, सलक्षणवर्णक्रमघनपाटी, मतत्रयगीतोपन्यासविद्वत्प्रमुख विविध विरुदविभूषितैः **पण्डित टि. लक्ष्मणाचार्यै** विरचिता तत्पौत्रेणच टि. एन्. रघूत्तमाचार्येण प्रथम भागे पण्डितमहाशयानां भूमिकयासह संपुटत्रयेण प्रकाश्यमानाच विजयतेतमां ॥

| | | |
|---|---|---|
| प्रथम संपुटः | (१ to ६ अध्यायाः (यन्त्रस्थः कश्चिद्भागः) १९२५ एप्रेल् मासि (प्रकाश्येत ॥ | रू. ५ |
| द्वितीय संपुटः | (७ to १२) १९२५ आगस्ट् मासि ॥ | २ |
| तृतीय संपुटः | (१३ to १८) इदानीं सज्जोऽस्ति ॥ | ३ |

पुस्तकसंख्यायाः परिमितत्वात् नैराश्यपरिहाराय अचिरादेव अपेक्षापत्र प्रतीक्ष्यते ॥

१९२९ एप्रेल् मासादर्वागेव स्वापेक्षां निवेदयतां भागत्रयस्यापि देयत्वेन कल्पितं मूल्य रूप्यकाष्टकं ॥

१९२५ एप्रेल् मासादर्वागेवस्वापेक्षा निवेदितवद्भयो निवेदनानन्तरमेव तृतीयस्संपुटो वि. पी. द्वारा रूप्यकत्रयस्य प्रेष्यत ॥

१९२५ एप्रेल् मासादनन्तर प्रथमस्संपुटो रूप्यकत्रयस्य आगस्ट् मासादनन्तरं द्वितीयसंपुटो रूप्यकद्वयस्य च प्रेष्येत ॥

बन्धनं विना यथायथमेव जिघृक्षता कालानुरोधेन मूल्य किंचिन्न्यूनीक्रियेत ॥

सर्वत्रापि प्रेषणव्ययः पृथगेव ॥

एतत्पुस्तकप्रचारकाणां प्रत्येक कमिषन् दीयेत ॥

अतिदुर्लभमिदं ग्रन्थं प्रकाशयितुमुद्युक्त पण्डितमहाशयानां पौत्रं मां सर्वापिसंस्कृतभाषाभिमानिनः आस्तिकवर्याः पुस्तकग्रहणादिभिः अनुगृह्णीयुरिति सप्रश्रयमभ्यर्थये ॥

इत्थं विद्वज्जनकृपाकांक्षी

**T. N. रघूत्तमाचार्यः**

प्रकाशकः गीतोपन्यास दर्पण आपीस तिरुवादी, तञ्जावूर्—Dt.